लिखितमूलपुस्तकस्य बाम्बे रायलऐशियाटिकसोसायिटीपुस्तकालयस्थभाऊदाजीसंस्मारकपुस्तकसंग्रहे सत्त्वाच्च दाक्षिणात्यो विबुधप्रवरोऽभूदित्युक्तौ न किमप्यसामञ्जस्यम्। स च कस्मिन्समयेऽजनीति प्रश्ने च 'चतुर्थः परिच्छेदः समाप्तः संवत् १४०६ समये वैशाख वदि ११ एकादशीगुरुवासरे ॥ लिखितमात्मतत्त्वपुस्तकम्' इत्युपपरोक्तादर्शपुस्तकस्थान्तिमलेखदर्शनाच्छङ्करमिश्रसमकालीनोऽयमपि खीष्टीयचतुर्दशशताब्द्या मेवप्रादुर्बभूवेत्युत्तरं विदुषां विचाररमणीयमवश्यं भवेत्। अत एवचेदं मूलग्रन्थयथार्थार्थनिरूपकं व्याख्यानं क्वचिदप्यन्यच्छायायोनि नोपलभ्यत इति पाठकाः स्वयमेवानुभविष्यन्ति। अन्तरान्तराऽवसरविशेषेषु सौगतमतप्रक्रियातन्निरासतात्पर्यस्फोरणाच्च दार्शनिकत्वमपि नारायणचार्याणां प्रगल्भं बभूवेति निश्चिनुमः।

## ( बौद्धाधिकारविवृतिः )

यद्यपि सटिप्पणनारायणीटीकया समेत आत्मतत्त्वविवेक एव विदुषां छात्राणामध्ययनाध्यापनादौ यथाबहुपयोगित्वादादौ मुद्रयितुमारब्धस्तथापि महामहोपाध्यायैर्वाराणसेयविश्वविद्यालयीयसंस्कृतविभागस्थप्रधानाध्यापकैः महामहोपाध्याय—नैयायिकप्रवर-पं० बालकृष्णमिश्रमहोदयैः प्रदत्तं म०म० नव्य नैयायिकमूर्धन्य-गदाधरभट्टाचार्यकृतबौद्धाधिकारदीधितिविवृतिव्याख्यानपुस्तकं समुपलभ्याऽस्यापि दुष्प्रापस्य व्याख्यानस्य प्रकाशनं दार्शनिकानां प्रमोदावहं भविष्यतीत्यालोच्याऽन्ते मूलपृष्ठाङ्काङ्कितया रघुनाथशिरोमणिकृतया दीधित्या समेतं यावदुपलब्धं मुद्रयित्वा प्रकाशितम्। एतदादर्शभूतमेकमात्रमादौ विंशतिपृष्ठान्तं संशोधितमप्यशुद्धप्रायं यद्यपि यथामति परिष्कृतन्तथापि विषयस्य दुरूहत्वादालम्बान्तराभावात्स्वमतिमान्द्याच्च स्खलितानि स्वयं संशोध्य नैयायिकाप्रवरा गदाधराभिप्रायं विदित्वा यदि सन्तुष्टा भविष्यन्ति तदा स्वपरिश्रमं सफलं मंस्ये। सहकारिसमवधानासमवधानाभ्यामेव बीजादङ्कुरसम्भवे कुर्वद्रूपत्वकल्पना व्यर्थेत्यभिप्रायेण क्षणिकत्वखण्डनान्तैव विवृतिरत्रादर्शपुस्तके दृश्यतेऽन्यत्राधिकतत्सत्त्वसम्भवेऽपि निखिलात्मतत्त्वविवेकदीधितिर्व्याख्यातो गदाधरेणेत्यत्र न किमपि प्रमाणम्।

## ( आदर्शपुस्तकानि )

पुस्तकस्यास्य संशोधनार्थं त्रीण्यात्मतत्त्वविवेकमूलस्यादर्शपुस्तकान्युपलब्धानि।

(क) तत्र प्रथमं पुस्तकं नारायणीव्याख्यानुसारेण संशोधितं टीकया सह श्रीमद्भिः कारवारनिवासिभिर्मञ्जेश्वरामकृष्णतैलङ्गमहोदयैः प्रेषितं जीवानन्देन मुद्रितम्।

(ख) द्वितीयं शुद्धप्रायं पं० राजेश्वरशास्त्रिभिः संशोधितं चौखम्बासंस्कृतसीरिजपुस्तकालये मुद्रितं प्रथमपरिच्छेदान्तम्।

(ग) तृतीयं महामहोपाध्याय-भूतपूर्व-विन्ध्येश्वरीप्रसादद्विवेदिलक्ष्मणशास्त्रिद्रावि-

डाभ्यां संशोधितं कलिकातास्थऐशियाटिकसोसायिटीप्रकाशितं १ परिच्छेदान्तमेवाशुद्धिबहुलम् ।

टीकायाश्चात्रेयनारायणाचार्यकृताया एकमेवाधारभूतमादर्शपुस्तकं लेखकप्रमादात्क्वचिद्भ्रष्टपाठमशुद्धप्रायमस्माभिरासादितम् । बौद्धाधिकारविवृतेश्चैकमेव त्रिंशत्पृष्ठान्तं पूर्वोक्तमादर्शपुस्तकमस्मिन् संस्करणे उपयुक्तम् ।

टिप्पणीसङ्कलने पाठान्तरप्रदर्शने चोपरि प्रदर्शितं पुस्तकत्रयमालम्बनीकृतम् ।

## ( कृतज्ञताप्रकाशनम् )

सौगतमतोन्मूलनक्षमस्यैकमात्रस्यास्य महानिबन्धस्य संशोधनकार्यं मादृशामल्पमतीनां यद्यप्युडुपेन सागरतितीर्षेवोपहासकरन्तथापि प्रातःस्मरणीयानां गुरुवर्याणां महामहोपाध्याय पं०वामाचरणभट्टाचार्याणां, तथा म०म०पं०अम्बादासशास्त्रिणाञ्चासीमानुग्रहबलादेव यथाकथञ्चित्पूर्णतां गतमिति तेषामुपकृतीर्यावज्जीवं न कदापि विस्मरिष्यामि । येषाञ्च प्रेरणयाऽत्र दुष्करे कार्ये प्रवृत्तस्तेषां प्राच्यावाच्यदार्शनिकशिरोमणीनां महामहोपाध्याय डाक्टर पं० गंगानाथझामहोदयानां, भूमिकालिखने दार्शनिकदृष्टिकटाक्षपातेनानुगृह्णतां महामहोपाध्यायफणिभूषणतर्कवागीशानाञ्चोपकारस्मरणेनाल्हादितं चित्तं सदा तेषां कृतज्ञमेव । अथात्रैतादृशानां गम्भीराणामतियत्नसाध्यप्रकाश्यानां ग्रन्थजातानां प्रकाशनार्थमेव कृतदीक्षाणां स्वल्पेनेव मूल्येन पुस्तकविक्रयेण ग्राहकसौकर्यमादधानां चौखम्बासंस्कृतसीरीजपुस्तकालयाधिपतीनां श्रेष्ठिकुलावतंसजयकृष्णदासमहोदयानामायुरारोग्यैश्वर्यादिसर्वविधश्वःश्रेयसं प्रति च सर्वेश्वरमुमारमणं रमारमणं च प्रार्थयामः ।

## उपसंहारः ।

एवमीशकृपया संशोध्य मुद्रयित्वा प्रकाशितस्यास्य सटिप्पण–नारायणीव्याख्यया समलंकृतस्य बौद्धाधिकारापरपर्यायदीधितिव्याख्यानविवृत्तिसमेतस्यात्मतत्त्वविवेकस्य दुरूहाणां सौगतमतनिरासकविषयाणां सौकर्येण परिचयार्थं प्रासङ्गिकविषयप्रकरणसहितं विषयसूचीपत्रं यथामति सङ्कलय्यात्र निवेशितम् , येनाध्येतॄणां महानुपकारो भवितेति मन्ये । आशासे चास्य यथावदध्ययनाध्यापनादिभिः पुनरप्यस्मिन् बौद्धमतप्रचाराधिक्यसमये तन्मतखण्डनाय बद्धपरिकरा आस्तिकदार्शनिकविद्वांसो वेदप्रामाण्यं संस्थाप्य सनातनधर्मोद्धाराय यतिष्यन्ते, कर्मणा चानेन सर्वान्तरात्मा जगदुद्धरणक्षमः श्रीकाशीविश्वनाथः प्रीयतामिति ।

अगस्त्याश्रमः<br>
वाराणसी<br>
मकरसंक्रमणम्<br>
१९९६

विदुषामनुचरः<br>
**ढुण्ढिराजशास्त्री ।**

# आत्मतत्त्वविवेकस्य विषयसूचीपत्रम् ।

## प्रथमपरिच्छेदे

### सत्त्वेन क्षणिकत्वसाधननिराकरण ( १ ) प्रकरणे


| विषयः | पृ० | पं० |
|---|---|---|
| मङ्गलाचरणम् । | १ | १ |
| प्रेक्षावत्प्रवृत्तिहेतुप्रयोजनाभिधेयकथनम् । | ३ | १ |
| वादिप्रतिवादिमतेनात्मतत्त्वनिरूपणावश्यकता । | ४ | १ |
| आत्मबाधकविकल्पकथनम् । | ५ | १ |
| क्षणभङ्गात्मकबाधकनिराकरणारम्भः । | ,, | ३ |
| यत्सत्तत्क्षणिकमिति व्याप्तिखण्डनम् । | ६ | १ |
| उक्तव्याप्तिसाधकसामर्थ्यासामर्थ्यरूपविरुद्धधर्म 'संसर्गनिरासः । | ७ | २ |
| करणत्वरूपसामर्थ्यखण्डनम् । | ,, | ४ |
| विकल्पनिराकरणद्वारा योग्यतात्मकसामर्थ्यनिरासः । | १० | ६ |
| प्रातिस्विकयोग्यताविकल्पानां निराकरणम् । | १२ | १ |
| करणाकरणान्यथानुपपत्त्या बीजादिषु जातिविशेषसाधनखण्डनम् । | १३ | ४ |
| प्रसङ्गतद्विपर्ययाभ्यां भावस्याक्षेपकरणस्वभावसाधनं, तन्निरासश्च । | १४ | ६ |
| जातिभेदे कार्यजन्मनोऽप्रमाणत्वम् । | १५ | २ |
| सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वरूपयोग्यतायाः खण्डनम् । | ,, | ११ |
| समर्थव्यवहारगोचरत्वस्य करणेन व्याप्त्यसिद्धिः । | १६ | ४ |
| बीजभेदसाधनाय भावस्वभावप्रश्नः । | १७ | ४ |
| जल्पकथायां भावस्वभावनिश्चयापेक्षाभावः । | १८ | १ |
| सहकारिसमवधानासमवधानाभ्यां करणाकरणयोरेकत्र दर्शनाद्बीजवैजात्याभावसाधनम् । | १९ | २ |
| वैजात्याभावेऽपि क्षेपाक्षेपकारिभावस्वभावसाधनम् । | ,, | ९ |
| क्षणिकत्वेप्युक्तस्वभावसम्भवात्कथं स्थैर्यमित्याशङ्कासमाधिः । | २० | ३ |
| परम्पराकारणे प्रवृत्तौ सहकारिसमवधानकालसन्देहात्करणकाले सन्देह इति पूर्वपक्षसमाधानम् । | २१ | १ |
| सहकारिसमवधानवतोप्यङ्कुरानुत्पत्तिरित्याशङ्कासमाधानम् । | २२ | ७ |
| समवहितेष्वपि बीजादिषु कुर्वद्रूपत्वेनैव कार्यजननात्क्षणिकत्वमित्याक्षेपसमाधिः । | २४ | १ |

| विषयः | पृ० | पं० |
|---|---|---|
| विकल्पानुपपत्तिहेतुना जातिविशेषनिरासः । | २५ | ५ |
| विशेषस्य विशेषप्रयोजकत्वादपि वैजात्यासम्भवः । | २७ | ५ |
| अन्वयव्यतिरेकवन्न्यायेनापि बीजगतवैजात्यखण्डनम् । | २९ | ९ |
| यत्किञ्चित्कार्यं प्रति प्रयोजकत्वेनापि बीजत्वसाधनम् । | ३० | ७ |
| व्यापकानुपलब्धिप्रसङ्गहेतुना बीजत्वसाधनम् । | ३२ | ९ |
| बीजजातीयत्वेन कुशूलबीजादप्यङ्कुरोत्पाद इति व्यभिचारशङ्कासमाधानम् । | ३३ | ३ |
| सहकार्यनपेक्षं सर्वबीजाव्यभिचार्यतीन्द्रियं कार्यं भविष्यतीत्याशङ्कासमाधिः । | ३५ | २ |
| व्यतिरेकमुखेन बीजस्याङ्कुरप्रयोजकत्वाभिधानम् । | ३६ | ४ |
| जात्यभेदेऽपि कुर्वतः क्षणान्तरेऽकरणाद्व्यक्तिभेद इति क्षणिकत्ववाद्याशङ्कासमाधानम् । | ३७ | ३ |
| कालभेदेन परिणामभेदावश्यकत्वम् । | ४० | ५ |
| कालभेदेन करणाकरणयोरविरोधाशङ्कासमाधिः । | ४१ | ७ |
| कालभेदविवक्षायामेकस्य सामर्थ्यासामर्थ्यानुपपत्त्या क्षणिकत्ववाद्याशङ्काखण्डनम् । | ४३ | १ |
| भिन्नदेशार्थक्रियाभेदेन कारणभेदात्क्षणिकत्वाशङ्का तत्समाधानं च । | ४६ | ५ |
| विकल्पानुपपत्त्या देशगर्भप्रसङ्गतद्विपर्यययोर्दोषाभावनम् । | ४७ | ३ |
| परमतेन विरोधलक्षणायोगचिन्तनम् । | ४८ | ६ |
| कुसूलस्थबीजस्याङ्कुरकारिबीजाद्भेदसाधनाय पूर्वपक्षिमतेन प्रसङ्गविपर्ययान्तरावतरणम् । | ४९ | ४ |
| जात्यभिप्रायेण व्यक्त्यभिप्रायेण वा नोक्तप्रसङ्गविपर्ययाविति समाधिः । | ५० | १ |
| सत्त्वक्षणिकत्वव्याप्तिग्रहानुकूलप्रसङ्गविपर्ययान्तरदूषणम् । | ५१ | २ |
| सहकारिसमवधानासमवधानाधीने करणाकरण इति सिद्धान्ते विरोध इत्याक्षेपः । | ,, | ५ |
| विकल्पानुपपत्त्योक्तविरोधखण्डनम् । | ,, | ७ |
| संयोगाव्यापित्वनिबन्धनयोः सम्बन्धासम्बन्धयोः प्रकारान्तरेण विरोधद्वारा क्षणिकत्वसाधनम् । | ५४ | १ |
| क्षणिकपरमाणावप्यस्य विरोधस्य दुर्वारत्वाभिप्रायेण क्षणिकत्वनिरासः । | ५५ | ६ |
| क्षणिकत्वसाधकव्यतिरेकानुमाननिरासातिदेशः । | ५६ | ८ |
| व्यतिरेकिपक्षे प्रमाणाभावाद्यधिकदोषप्रदर्शनम् । | ५९ | १ |
| प्रमाणागोचरत्वात्क्षणिकत्वानुमानव्यवहाराभावे स्ववचनविरोधदोषनिरासः । | ६० | |

| विषयः | पृ० | पं० |
|---|---|---|
| अप्रामाणिकेऽर्थे मूकतानालम्बने युक्तिप्रदर्शनम् । | ६१ | ७ |
| वादकथायामप्रामाणिकस्य व्यवस्थित्यभावनियमः । | ६२ | ११ |
| जल्पवितण्डयोः स्ववचनविरोधस्यादूषकत्वम् । | ६३ | १ |
| स्ववचनविरोधभयेन व्यवहारस्वीकारे प्रतिबन्दीदर्शनम् । | ,, | ६ |
| अवस्तुनो निषेधव्यवहारविषयत्वे विधिव्यवहारापत्तिः । | ६४ | १२ |
| वन्ध्यासुतस्यावक्तृत्वेऽचेतनत्ववद्वक्तृत्वे न किञ्चित्प्रमाणमित्याद्याशङ्का समाधानं च । | ६५ | २ |
| वन्ध्यासुतो न वक्तेत्यत्र पूर्वपक्ष्युक्तविरोधस्य विकल्पानुपपत्त्या निराकरणम् । | ६७ | ७ |
| सर्वसामर्थ्यविरहिण्यवस्तुनि वन्ध्यासुते कथं वचनकर्तृत्वरूपवक्तृत्व-मित्याक्षेपसमाधिः । | ६८ | १ |
| अवस्तुत्वादिहेतूनां वन्ध्यासुते सर्वसामर्थ्यविरहसाधकत्वाभावः । | ,, | ४ |
| प्रमाणस्य व्यवहारसाधनसीमात्वोपसंहारः । | ६९ | ४ |
| प्रतीतिमात्रं व्यवहाराङ्गं न प्रमाणप्रतीतिरिति पूर्वपक्षः । | ७० | १ |
| शशविषाणप्रतीतेर्भ्रमत्वे नैयायिकपक्षपातः, असत्ख्यातित्वे कारणा-नुपपत्तिरिति परिहारः । | ,, | ४ |
| शब्दाभासादसत्ख्यातिनिराकरणम् । | ७१ | ५ |
| वासनाविशेषादसदुल्लेखिप्रत्ययनिरासः । | ७२ | ७ |
| शशविषाणादिशब्दानामसदर्थत्वेन सम्बन्धाभावादर्थक्रियाभावाच्च सङ्केतविषयत्वनिराकरणम् । | ७४ | २ |
| उच्चारयितुस्तात्पर्यमादाय शशविषाणादिशब्दानां सङ्केतग्रह इति शङ्कासमाधानम् । | ७५ | ३ |
| प्रकारान्तरेणासदर्थसमयग्रहनिराकरणम् । | ७७ | ३ |
| शशविषाणादिकल्पनानामन्यथाख्यातिरूपत्वेऽपि अवस्तुनो निषेध-व्यवहारागोचरत्वोपसंहारः । | ,, | ६ |
| असत्ख्यात्यभ्युपगमेऽपि ततो हेतोर्व्यतिरेकस्याप्रामाणिकत्वम् । | ७८ | १ |
| अप्रामाणिकेनापि व्यवहाराङ्गीकारात् स्वाभावविरहात्मकघटस्य प्रमाणसिद्धतया तदभावेनाप्रामाणिकेनापि व्यवहार इत्याद्याक्षे-पस्य समाधानम् । | ७९ | २ |
| सत्त्वक्षणिकत्वयोर्व्यतिरेकस्य कल्पनयाऽनुमानाङ्गीकारात् व्यतिरेक-स्य प्रामाणिकत्वाभावेऽपि न क्षतिरित्याक्षेपः । | ८१ | ८ |
| कल्पनायाः सर्वत्र सुलभत्वादतिप्रसङ्ग इत्यभिप्रायेण परिहारः । | ८२ | १ |

| विषयः | पृ० | पं० |
|---|---|---|
| अतिप्रसङ्गपरिहाराशङ्का । | ८२ | २ |
| काल्पनिकसम्पत्त्या हेतुवत्तदाभाससम्भवादित्याशयेन परिहारः । | ८३ | ९ |
| काल्पनिकविपत्तेर्दोषाप्रयोजकत्ववत्काल्पनिकसम्पत्तेर्गुणाप्रयोजकत्वात् सत्त्वक्षणिकत्वयोर्व्यतिरेकग्रहासम्भवात् सत्त्वहेतोः क्षणिकत्वसाधकत्वाभावोपसंहारः । | ८५ | २ |
| **विनाशित्वेन क्षणिकत्वसाधननिरास (२) प्रकरणे** | | |
| भावस्य ध्रुवभावित्वात् क्षणिकत्वमित्याक्षेपः । | ,, | ५ |
| तादात्म्यादिपञ्चरूपध्रुवभावित्वनिराकरणद्वारोक्ताक्षेपखण्डनारम्भः । | ८६ | १ |
| निषेध्यनिषेधकयोस्तादात्म्ये वैचित्र्यानुपपत्त्या तादात्म्यासम्भवः । | ,, | ३ |
| समर्थेतरस्वभावो भाव एव नास्तिता सैव च नाश इत्याशङ्कासमाधिः । | ८७ | ५ |
| अर्थक्रियाशक्तत्वं सत्त्वं कालान्तरे तदभावात्कथं सत्त्वं स्यादित्याशङ्का तत्समाधानं च | ८८ | १ |
| स्वकालेऽपि कालान्तरकार्यं प्रति बीजाद्यसदेवेति शङ्काखण्डनम् । | ,, | ५ |
| निषेधात्मकत्वानुपपत्त्या विध्यात्मक एव भाव इति तादात्म्यपक्षनिरासोपसंहारः । | ८९ | ४ |
| धर्मकीर्तिवाक्यानुसारेण भावातिरिक्तसोपाख्यनिवृत्त्यभावान्निरुपाख्या निवृत्तिरिति पूर्वपक्षः । | ,, | ६ |
| निवृत्तेर्निरुपाख्यत्वमसिद्धमित्याशयेन परिहारः । | ९० | १ |
| तुच्छत्वादहेतुकत्वमित्याशङ्कासमाधानम् । | ,, | ४ |
| तुच्छघटनिवृत्तेर्देशकालसम्बन्धनियमाभाव इति पूर्वपक्षसमाधिः । | ९१ | १ |
| निरुपाख्यपक्षोपसंहारः । | ,, | ६ |
| तत्कार्यत्वरूपतृतीयपक्षस्यार्थविवेचनद्वारा निरासः । | ९२ | २ |
| कार्यमेव विनाश इति बौद्धपक्षस्य कारणविनाशात्मकत्वव्यवहारबीजविकल्पानुपपत्त्या खण्डनम् । | ९३ | १ |
| तन्तुमालात्मक एव पटः पूर्वतन्तुमालाया विनाश इत्यस्य विकल्पानुपपत्त्या खण्डनम् । | ९६ | ३ |
| न्यायमते पटान्तराभाववतोऽपि पटस्य पटजातीयत्ववत् कार्यरूपाभावपक्षेऽपि तन्तुविनाशोऽपि तन्तुरूपः स्यादिति बौद्धाक्षेपस्तन्निरासश्च । | ९७ | ५ |
| अतिरिक्ताभावे आक्षेपः । | ९९ | ४ |
| अधिकरणबुद्ध्यनुपपत्त्याऽतिरिक्ताभावस्थापनम् । | ,, | ८ |
| ध्वंसस्य भावभिन्नत्वानुपपत्तिशङ्का तत्समाधिश्च । | १०० | ४ |

| विषयः | पृ० | पं० |
|---|---|---|
| अभावस्यातिरिक्तत्वे निरुपादानत्वरूपध्रुवभावित्वबाधकपक्षनिराकरणम् । | १०१ | १ |
| व्यापकत्वात्मकध्रुवभावित्वपक्षनिरासः । | १०२ | २ |
| विनाशस्य निरपेक्षत्वखण्डनम् । | १०३ | ३ |
| अभावत्वात्मकध्रुवभावित्वपक्षे विनाशनित्यत्वसाधकानुमानम् । | ,, | ६ |
| प्रतिबन्ध्यनुमानेनाभावोत्पादसाधनम् । | १०४ | २ |
| पूर्वपक्ष्यनुमाने हेत्वाभासवर्णनम् । | ,, | ६ |
| घटोन्मज्जनस्वीकारे दोषकथनम् । | १०५ | २ |
| क्षणिकत्वप्रमाणखण्डनोपसंहारः । | १०६ | ३ |
| **स्थैर्यसाधन ( ३ ) प्रकरणे ।** | | |
| प्रत्यभिज्ञानेन स्थैर्यसाधनम् । | १०६ | ४ |
| प्रत्यभिज्ञानाप्रामाण्यखण्डनम् । | १०७ | १ |
| निष्कम्पदीपशिखायां विरुद्धधर्मसंसर्गाभावेऽपि भेदसत्वान्न भेदप्रवृत्तेर्विरुद्धधर्मसंसर्ग इति नियम इत्याशङ्का तत्समाधिश्च । | १०८ | १ |
| सत्यप्रत्यभिज्ञानविषयेऽपि दुरूहविरुद्धधर्मसंसर्ग इति पूर्वपक्षस्य विकल्पानुपपत्त्या निरासः । | १०९ | १ |
| स्थैर्यसाधकन्यायप्रदर्शनम् । | ११० | ३ |
| अनुगतव्यवहारानन्यथासिद्धेः क्षणिकत्वानुपपत्त्या स्थैर्यसाधनम् । | १११ | ४ |
| व्यवहारस्यानुगतनिबन्धनत्वस्थापनम् । | ,, | ५ |
| अलीकानुगतरूपखण्डनम् । | ११२ | ४ |
| **अपोहखण्डन ( ४ ) प्रकरणे ।** | | |
| गोत्वं प्रत्येमीत्यनुव्यवसायाभावेऽपि गौर्गौरिति साधारणाकारस्फुरणानुरोधेन गोत्वसिद्धिवद्बौद्धनयेऽपि अगोव्यावृत्तमिति प्रतीतौ विशेषणतया व्यावृत्तिभानान्निवृत्तिबुद्धिरित्याक्षेपः । | ११३ | ११ |
| अगोपोढोऽयमिति विकल्पाभावान्नाभावाकारस्फुरणमित्याशयेन परिहारः । | ,, | ५ |
| निवृत्तेरपरिस्फुरणे गां बधानेति देशितोऽश्वमपि बध्नीयादित्याक्षेपस्तत्समाधानं च । | ११४ | ५ |
| नैयायिकाभिमतः गोत्वरूपस्वरूपभेदोऽन्यापोहरूप एव नान्यो विधिरूप इत्याशङ्कायाः समाधानम् । | ११६ | १ |
| व्यवच्छेदस्फुरणाभावे गोत्वादिविधेर्व्यवच्छेदकत्वानुपपत्त्या विधिवद्व्यावृत्तेरपि भानमिति ज्ञानश्रियो मतम् । | ११७ | १ |
| इष्टापत्त्या बौद्धज्ञानश्रीमताङ्गीकारेण विधिरूपसामान्यव्यवस्थापनम् । | ,, | ९ |

| विषयः | पृ० | पं० |
|---|---|---|
| निवृत्तिस्फुरणाभावेऽपि विधिस्फुरणे विधेरलीकत्वमित्याक्षेपसमाधानम् । | ११९ | ४ |
| भेदाग्रहाद्विधिस्फुरणमात्रमित्याशङ्कासमाधानम् । | १२१ | १ |
| प्रकारान्तरेणालीकस्य विकल्पविषयत्वनिरासः । | ,, | ७ |
| विकल्पविषयालीकानां भेदाग्रहादलीकत्वमात्रग्रह एवानुभतत्वमान-मित्याशङ्कासमाधानम् । | १२२ | ५ |
| चतुष्कोटिविनिर्मुक्तभेदग्रहे कथमभेदारोप इत्याशङ्कासमाधिः । | १२४ | ३ |
| गोत्वादीनामन्यव्यावृत्तिरूपसाधकानुमानप्रयोगौ तत्खण्डनं च । | ,, | ६ |
| उक्तन्यायप्रयोगस्य विचारासहत्वम् । | १२५ | ७ |
| आश्रयनाशानाशप्रयुक्तमस्तिनास्तिसामानाधिकरण्यमित्याक्षेपनिरासः । | १२७ | १ |
| धर्मिधर्मयोरभेदादस्तित्वादि न धर्म्यतिरिक्तमिति शङ्का तन्निरासश्च । | १२९ | १ |
| प्रकारान्तरेण गोविकल्पस्य गवविषयत्वादलीकविषयत्वसाधनं तन्नि-राकरणं च । | ,, | ५ |
| सदसत्त्वमात्रानुपदर्शकत्वहेतुना गोविकल्पस्य गोरूपानवबोधकत्वव-द्धर्मान्तरानुपदर्शनत्वहेतुना तत्साधनम् । | १३२ | २ |
| उक्तार्थे प्राचीनबौद्धसंमतिः । | १३३ | ११ |
| प्रदर्शितबौद्धमतखण्डनम् । | १३४ | १ |
| शब्दलिङ्गादीनामिव प्रत्यक्षस्यापि धर्मिमात्रविषयत्वमिति बौद्धमत-निराकरणम् । | १३५ | १ |
| प्रकारान्तरेण लिङ्गशब्दयोर्धर्मिविषयत्वप्रतिषेधाशङ्का । | १३७ | १ |
| एकस्य नीलस्य चित्रत्वाचित्रत्वप्रतीतौ प्रतिभासभेदेऽपि न विषयभेद इति बौद्धोक्तहेतोरनैकान्तिकत्वमित्याशयेन परिहारः । | १३८ | ६ |
| प्रत्यक्षस्य स्फुटप्रतिभासत्वाल्लैङ्गिकादिज्ञानस्यास्फुटप्रतिभासत्वात्कथं धर्मिण्येव स्फुटास्फुटप्रतिभासभेद इत्याक्षेपः, तत्समाधानं च । | १४० | ३ |
| सदादेरर्थक्रियाकारित्वाभावात्तत्कारणतायां प्रमाणाभावेन तद्विषय-प्रत्ययानां कथं प्रामाण्यमित्याशङ्कासमाधाने । | १४३ | १ |
| प्रत्यक्षलैङ्गिकविकल्पयोः परोक्षत्वापरोक्षत्वप्रतिभासभेदाद्विषयभेद इति चोद्यम् । | ,, | ६ |
| परोक्षत्वापरोक्षत्वयोर्विषयघटितत्वाभावान्नोक्तदोष इति परिहारः । | १४४ | १ |
| अत्यन्तविलक्षणानां स्वालक्षण्यव्यवहारहेतुत्वादन्यव्यावृत्तिरूपो विकल्पविषयीकृतोऽर्थ इति बौद्धोक्तिखण्डनम् । | १४५ | ८ |
| अपोहस्य प्रवृत्त्यादिव्यवहारनिर्वाहकत्वेऽन्यावभासादन्यत्र प्रवृत्ति-प्रसङ्गस्याध्यवसायेन निराकरणशङ्कायाः समाधानम् । | १४७ | ३ |

गोविकल्पस्याश्वव्यावृत्तिं विदधतः कथमश्वे प्रवृत्तिजनकत्वम् इत्याशङ्कासमाधिः १४८ ६

निःस्वरूपगोत्वस्याश्वापेक्षया सस्वरूपत्वात्तस्य च भिन्नत्वादश्वाद्भेदाग्रहसत्त्वाच्च तत्र प्रवृत्तिरिति चोद्यपरिहारौ । १५० ३

नीलानुभवनीलविकल्पयोर्भेदाग्रहादेव नीलविकल्पो नीलानुभवविषये नीले प्रवर्तक इत्याशङ्कासमाधानम् । १५४ १

ज्ञानश्रीमतेन भावस्यैव प्रवृत्तिनियामकत्वशङ्का तत्समाधानं च । १५६ ३

वह्निरितिज्ञानत्वावच्छिन्नस्य वह्नौ प्रवर्तकत्वाज्जातिर्वोपाधिर्वा नियामक इत्याक्षेपसमाधिः । १५९ १

आकारसारूप्यस्य नियामकत्वे आपत्तिः । ,, ७

ज्ञानज्ञेययोः सारूप्यस्यासम्भवत्वप्रदर्शनम् । १६० १

ज्ञानज्ञेययोः सारूप्याभावे हेत्वन्तरम् । १६१ ३

प्रासङ्गिकं सौत्रान्तिकमतनिराकरण ( ५ ) प्रकरणम् ।

बाह्यार्थे ज्ञानाकारस्यैवारोपात्प्रवृत्तिरिति सौत्रान्तिकमतखण्डनम् । १६२ १

आकारवादिसौत्रान्तिकमते बाह्यार्थासिद्धिदोषोद्भावनम् । १६३ २

बाह्यं वस्तु वेति वैभाषिकमते स्वलक्षणस्य विकल्पविषयत्वेप्यभिलापसंसर्गानर्हतया विकल्पायोग्यत्वादपोहविशिष्टद्वारा तदेव विषयो न तु जातिविशिष्ट इत्याशयेनापोहसाधनम् । १६४ ६

अगोशब्दार्थविकल्पानुपपत्त्योक्तमतनिराकरणम् । १६५ ३

आकाराभेद एवानुगतमतेरालम्बनमिति कीर्तिमतखण्डनम् । १६६ ६

पिण्डानामेवानुगताकारविकल्पजननशक्तिस्वीकारेण निर्वाहे किं सामान्यकल्पनयेति शङ्का । १६७ ५

उक्तशक्तेः सर्वत्रैकत्वे किमपराद्धं जात्या, प्रतिव्यक्ति भेदे मिथो व्यभिचारादननुगतविकल्पोत्पादनियामकत्वमिति समाधानम् । १६८ १

एकेनैकव्यवहारे अनेकसामान्येष्वेकव्यवहारः कथमित्याक्षेपपरिहारौ । ,, ९

अर्थक्रियाभेदाद्व्यक्तिभेद इत्याशङ्कासमाधिः । १६९ ३

आरोपव्यवहारस्यानारोपितजात्यनादरेऽसम्भवादनुगतव्यवहारसाधकसामान्यसाधनोपसंहारः । १७१ ४

जातिबाधकनिराकरण ( ६ ) प्रकरणे

वक्ष्यमाणबाधकसद्भावादपोहसिद्धिशङ्का । १७२ १

अनुगतव्यवहारस्यानन्यथासिद्धत्वान्न बाधकमिति परिहारः । ,, २

विषयः पृ०

उपकम्भसाधनात् स्वरूपतोऽनुपलम्भासम्भवात् स्वरूपतो बाधकनिराकरणम्। १७३

निर्विकल्पकमात्रस्य प्रमाणत्वेन तत्र शब्दादेरसम्भवाच्च जातौ प्रमाणविषयता विकल्पविषयस्त्ववास्तव इति कथं स्फुरणं जातेरित्याशङ्कासमाधानम्। ,,

वासनया सामान्याकारस्फुरणमित्याक्षेपपरिहारौ। ,,

सविकल्पके जातेर्भानेऽपि अनुभवाविषयत्वात्कथं जातिसिद्धिरिति चोद्यनिरासः। १७५

कार्त्स्न्यैकदेशवृत्तित्वासम्भवेन सामान्यनिराकरणातिदेशः। १७६

जातेरसाधारणविरुद्धधर्माध्यासशङ्कानिरासः। १७७

सामान्यस्य स्वरूपतस्तद्देशादिवृत्तित्वेऽपि यः पिण्डो नोत्पन्नस्तेन तत्सम्बन्धः कथं स्यान्नहि सम्बन्ध्यभावे सम्बन्ध इति पूर्वपक्षस्य समाधानम्। १७९

सामान्यतद्वतोर्गवाश्वयोरिवात्यन्तभेदे कथं सामानाधिकरण्यमित्याशयेन भेदाभेदवादिपूर्वपक्षः। १८०

अत्यन्तभेदेऽपि न सामानाधिकरण्यानुपपत्तिरिति समाधानम्। ,,

अनुगतधर्मस्यानुपलम्भ एव जातिबाधक इत्याशङ्कासमाधानम्। १८२

प्रयोजनानुरोधादपोहस्वीकारखण्डनम्। १८५

शब्दस्येत्यादिपद्यस्य बौद्धमते विषयसञ्चारणम्। १८६

शब्दस्येत्यादिगाथायां बौद्धस्य मूकतानौचित्यम्। १८७

शब्दैः किं वाच्यमित्यनुयोगे ज्ञानश्रीप्रदर्शितोत्तरस्यासम्यक्त्वम्। १८८

## द्वितीयपरिच्छेदे।

### ज्ञानज्ञेययोरभेदखण्डन ( १ ) प्रकरणे

बाह्यार्थभङ्गो वेति द्वितीयविकल्पनिराकरणाय विज्ञानवादिमतोत्थापनम्। १८९

ग्राह्यग्राहकभागयोः परमार्थसतोरभेदसाधकानां सहोपलम्भनियमादिहेतूनां विज्ञानवाद्यभिप्रेतानामाभासत्वेन निराकरणम्। १९०

तत्र सौत्रान्तिकरत्नकीर्तिसमाधिदूषणाय तन्मतोपन्यासः। १९१

विरुद्धधर्माध्यासस्य बाह्ये भेदसाधकत्वेऽपि ज्ञाने न तथात्वमित्युपसंहारः। १९५

विवेचनाभावः परमो निर्वाह इति रत्नकीर्तिवाक्यखण्डनम्। ,,

नीलधवलादिमिश्राकारमेकं ज्ञानं स्वयं वेद्यतेऽतोऽविविक्तवेदनेनैव विरुद्धधर्माध्यासो बाधित इति रत्नकीर्तिमतखण्डनम्। १९७

| विषयः | पृ० | पं० |
|---|---|---|
| नीलपीतादीनामवस्तुत्वात्तद्घटितविरुद्धधर्माध्यासः काल्पनिकः कथं ज्ञाने स्यादित्याक्षेपस्य समाधानम् । | १९८ | १ |
| एकदण्डिमतान्तर्भावेण सहोपलम्भनियमादिहेतूनामनैकान्तिकतया दोषान्तरप्रदर्शनम् । | ,, | ५ |
| भेदाप्रथनेऽपि उक्तहेतूनामसिद्धत्वादिप्रदर्शनम् । | १९९ | ४ |
| विकल्पारूढ एव भेदो व्यवहाराङ्गं नानुभवारूढ इति पूर्वपक्षस्य विकल्पपूर्वकं निरासः । | २०० | २ |
| विकल्पाद्भिन्नस्यालीकभेदस्य विषयतानङ्गीकार इति सौत्रान्तिकमतस्य खण्डनम् । | २०१ | ५ |

चित्रज्ञानखण्डन(२)प्रकरणे ।

| विषयः | पृ० | पं० |
|---|---|---|
| चित्राकारं विज्ञानमिति रत्नकीर्तिमतस्य विकल्पपूर्वकं खण्डनम् । | २०२ | ३ |
| तत्र ज्ञानश्रीमतेन समाधानाशङ्का तन्निरासश्च । | ,, | ७ |
| अनेकत्वमस्य विज्ञानस्योल्लेखो न तत्वान्तरमित्याक्षेपसमाधिः । | २०३ | ४ |
| अविद्यासमारोपिताकारो न पर्यनुयोगार्ह इति कीर्तिमताक्षेपस्य समाधानम् । | २०४ | ३ |
| अस्वरूपस्यैव प्रकाशसम्बन्धे परोक्तदोषनिराकरणम् । | २०५ | ७ |
| भेदाभेदविधुरं चित्रं चेत इत्याक्षेपस्य निरासः । | २०८ | १ |
| चतुःशिखरशून्यत्वादाश्चर्यार्थकं चित्रमित्याशङ्कासमाधानम् । | ,, | ७ |
| चतुःकोटिभानाभानविकल्पनिरासद्वारा चित्राद्वैतस्थापनम् । | २०९ | २ |
| ग्राह्यग्राहकयोरैक्यखण्डनोपसंहारः । | | |
| नीलादीनां ज्ञानभिन्नजातीयत्वनिराकरणातिदेशः । | २११ | ४ |
| ग्राह्यस्याबाह्यत्वसाधकानां प्रकाशमानत्वादिहेतूनां सन्दिग्धविपक्षव्यावृत्तिकत्वादाभासत्वोपसंहारः । | २१३ | १ |
| बाह्यस्य ग्राह्यलक्षणक्षतया ज्ञानसाजात्यं न तु वैजात्यमित्याक्षेपस्य समाधिः । | ,, | ५ |
| ग्राह्यांशस्यालीकत्वं वेति तृतीयविकल्पनिराकरणम् । | २१४ | ५ |

विश्वशून्यता(३)प्रकरणे ।

| विषयः | पृ० | पं० |
|---|---|---|
| सत्त्वेनालीकत्वेन वा विचारासहत्वमेव विश्वस्येति पूर्वपक्षस्य विकल्पद्वारा खण्डनम् । | २१६ | ८ |
| अस्तु तर्हि शून्यतैव परमं निर्वाणमिति विश्वशून्यतावादिमतस्य खण्डनम् । | २२१ | १ |
| स्वतःसिद्धशून्यतायां मायावादिमतापातः । | ,, | ६ |

| विषयः | पृ० | पं० |
|---|---|---|
| मायावादिमतेऽपि बाह्यग्राह्यत्वस्थापनम् । | २२३ | |
| विषयविषयिभावफलनिरूपणम् । | २२५ | |
| कार्यकारणभावस्यानुपेक्षणीयत्वम् । | २२६ | |
| बाह्यग्राह्यनिष्ठलक्षणविचारः । | ,, | १ |
| विज्ञानवादिमतनिराकरणम् । | २२७ | |
| असद्विशेषनिरासः । | २२८ | |
| मायावादिमते न्यायमते वा विज्ञानवादिमतस्यापातः । | २२९ | १ |
| अलीकविचारासहविचारस्य भौतिकत्ववर्णनम् । | २३० | |
| अलीकस्य विचारसहत्वेऽलीकवादानुपपत्तिः । | ,, | |
| उत्तरानर्हस्यापि लोकव्यवहारसिद्धत्वे विचारसामग्रीपरिशुद्धिरपि लोकसिद्धैव ग्राह्येति समाधानम् । | २३१ | |
| लोकसिद्धविचारसामग्रीप्रदर्शनपूर्वकं विचारे विचारसहत्वनिराकरणम् । | ,, | |
| **बाह्यार्थसाधन(४)प्रकरणे ।** | | |
| वाक्यार्थसाधनवर्णनम् । | २३४ | |
| विकल्पपूर्वकं न किञ्चिदस्तीत्यादि बौद्धीयप्रतिज्ञानिराकरणम् । | २३७ | |
| लोकव्यवहारस्य विकल्पपूर्वकं बाध्यत्वखण्डनम् । | २४० | |
| उक्तप्रतिज्ञासाधकज्ञेयत्वादिबौद्धीयहेतुनिराकरणम् । | २४२ | |
| रज्जुसर्पवदित्यादिसौगतदृष्टान्तनिरासः । | २४३ | |
| दूषणोपक्रमविचारेण वस्तुनिषेधनिराकरणम् । | २४४ | |
| भेदव्यवस्थितेरनुपपन्नत्वात्कथमिष्टत्वमित्याशयेन भेदनिषेधपूर्वपक्षः । | २४८ | |
| विकल्पपूर्वकं भेदनिषेधनिराकरणम् । | २४९ | |
| भेदज्ञानस्येतरेतराभावत्वपक्षे आत्माश्रयदोषः । | २५१ | |
| स्वरूपस्य भेदप्रतिभासविषयत्वखण्डनम् । | २५२ | |
| स्वरूपभेदेतरेतराभावधर्मान्तररूपभेदज्ञानविषयत्रयस्य घटोऽयं न घट इत्यादौ पारमार्थिकत्वप्रदर्शनम् । | २५३ | |
| त्रिविधभेदस्य परस्परविवेचनाय भेदलक्षणवर्णनम् । | २५५ | |
| यद्विधेयस्वभावं तत्कथं प्रतिषेध्यमित्याक्षेपसमाधिः । | २५७ | |
| **अवयविसाधन(५)प्रकरणे ।** | | |
| पञ्चविध-असाधारणावयविबाधकनिराकरणारम्भः । | २५८ | |
| उपलम्भानुपलम्भरूपविरुद्धधर्माध्यासवदसिद्धतयाऽऽवृतत्वानावृतस्याप्यवयविन्यबाधकत्वम् । | २५९ | |
| कम्पाकम्प-संसर्गस्याप्यसिद्धतयाऽबाधकत्वम् । | २६० | |

| विषयः | पृ० | पं० |
|---|---|---|
| पाणिकर्मणो भुजपरमाणुविभागाजनकत्वाच्छरीरनाशापत्तिवारणम्। | २६१ | ५ |
| सर्वत्र क्रियाया विभागाजनकत्वे कर्मलक्षणक्षतिदोषनिरासः। | २६२ | ६ |
| चलाचलयोरवयवावयविनोर्युतसिद्ध्यापत्तिनिराकरणम्। | २६५ | ४ |
| भ्रान्तिमूलरक्तद्रव्यसंयोगविरोधस्यावयविनि बाधकत्वनिरासः। | २६७ | ३ |
| विरोधलक्षणाभावात्तद्देशत्वातद्देशत्वरूपविरोधस्याप्यवयविन्यबाधकत्वम्। | २७१ | ५ |
| चित्रावयविविशेषे नीलानीलादिविरोधस्य बाधकत्वमिति पूर्वपक्षः। | २७३ | ३ |
| चित्रत्वस्यार्थविकल्पनिरासद्वारा समाधानम्। | २७४ | ३ |
| अचित्रपार्श्वे चित्रप्रत्ययाभावेऽपि धवलप्रत्ययः कथमित्याक्षेपसमाधिः। | २७५ | २ |
| परमाण्वपलापद्वाराऽवयव्यपलापाशङ्का। | २७६ | ३ |
| बुद्धिसमानयोगक्षेमत्वाच्छङ्कानौचित्यमिति समाधानम्। | ,, | ९ |
| बुद्धौ कार्त्स्न्यैकदेशविकल्पोत्थानासम्भवाक्षेपनिरासः। | २७७ | ११ |
| बुद्धौ तद्देशत्वातद्देशत्वविरोधप्रतिबन्दिदर्शनम्। | २७८ | ७ |
| चित्रविप्रतिपत्त्या नीलपीताद्याकारबुद्धेरेकत्वान्न प्रतिबन्दिरित्याक्षेपस्य समाधिः। | २७९ | १ |

## परमाणु(६)प्रकरणे।

| विषयः | पृ० | पं० |
|---|---|---|
| परमाणौ सावयत्वसाधकदशायां मूर्तत्वादिहेतूनां परमाणुसिद्ध्यधिद्धिभ्यां निरवकाशत्वादिदोषप्रदर्शनम्। | २८० | ३ |
| परमाणुः स्यात्सावयवः स्यादिति प्रसङ्गदशायामाश्रयासिद्ध्यादिदोषोद्घाटनम्। | २८१ | २ |
| प्रसङ्गानां कल्पिताश्रयप्रतिबन्धत्वनिराकरणम्। | २८२ | २ |
| बुद्ध्यपलापवादिमाध्यमिकमतनिरासः। | २८३ | ७ |
| हेतुफलभावानुपपत्त्या सर्वविलोप इति मतविशेषस्य खण्डनम्। | २८५ | ७ |
| अनुपलम्भस्याभावसाधकत्वेनावयविनि बाधकत्वमित्याशङ्काया निराकरणम्। | २८६ | ३ |
| परमाणूनां स्थूलत्वानुपपत्त्या प्रत्यक्षत्वानुपपत्तिः। | २८७ | १ |
| भिन्नेषु परमाणुष्वारोपितैकत्वानुपपत्तिः। | २८८ | १ |
| अनारब्धद्रव्यराशिषु स्थूल एक इति प्रतिभासनिर्वाहः। | २८९ | ७ |

## विज्ञाननिराकरण(७)प्रकरणे।

| विषयः | पृ० | पं० |
|---|---|---|
| कुर्वद्रूपवैजात्यनिराकरणम्। | २९१ | ४ |
| अवयविभिन्नस्थूलद्रव्यखण्डनम्। | २९३ | ७ |
| निरवयवविज्ञाननिरासः। | २९५ | ४ |

| विषयः | पृ० | पं० |
|---|---|---|
| विज्ञाने निरवयवत्वानुमानन्तन्निरासश्च । | २९६ | ९ |
| अवयविनि न्यायाक्षेपनिरासस्तत्साधनं च । | ३०० | १ |
| बौद्धीयबाह्यवस्तुसन्देहनिराकरणारम्भः । | ३०१ | ३ |
| भेदग्रहस्य निवर्त्तकत्वखण्डनम् । | ३०३ | ५ |
| सर्वस्यायथार्थत्वाद्यथाथायथार्थभेदेन ज्ञानविभागानुपपत्तिरिति पूर्वपक्षस्य समाधानम् । | ३०५ | ४ |
| ज्ञानं स्वयम्प्रकाशमित्यस्याक्षेपस्य खण्डनम् । | ३०६ | १ |
| अप्रत्यक्षोपलम्भस्यार्थदृष्टिर्न प्रतीयत इत्यत्र सिद्धसाधनम् । | ३०८ | २ |
| ज्ञानं स्वग्राहकेण प्रकाशत इत्याक्षेपनिरासः । | ३१० | ८ |
| स्वग्राहकात्प्रामाण्यग्रहोऽप्रामाण्यशङ्का केनाप्यपनीयत इति चोद्यस्य निराकरणम् । | ३१२ | ४ |
| स्वयमज्ञातप्रामाण्येन कथं परप्रामाण्यवेदनमित्याक्षेपस्य परिहारः । | ३१४ | १ |
| अनुव्यवसायप्रामाण्यस्य परतस्त्वव्यवस्थापनम् । | ३१५ | ७ |
| धर्मिलिङ्गज्ञानस्यैककोटिकत्वनिश्चये व्याप्तिलिङ्गापेक्षयाऽनवस्थापत्तिपरिहारः । | ३१६ | २ |
| धर्मिज्ञानादीनामेककोटिनियतत्वग्राहकप्रमाणानुग्राहकतर्कवर्णनम् । | ३१७ | ३ |
| स्वप्नजागरयोरविशेष इति सर्वमिथ्यात्ववादिमतस्य खण्डनम् । | ३१८ | १ |
| स्वप्नजागरयोर्लक्षणम् । | ३१९ | १ |


## तृतीयपरिच्छेदे

### आत्मसाधन(१)प्रकरणे ।


| | | |
|---|---|---|
| गुणगुणिनोरभेदान्नैरात्म्यमिति नैरात्म्यवादखण्डनारम्भः । | ३२० | ३ |
| दर्शनस्पर्शनाभ्यामेकार्थप्रतिसन्धानस्य एकैकविषयत्वनिराकरणम् । | ,, | ५ |
| ,, समुदायविषयत्वनिराकरणम् । | ३२१ | ४ |
| ,, भिन्नवस्तुविषयत्व–आकारविषयत्वयोर्निराकरणम् । | ३२४ | ३ |
| गुणगुणिसम्बन्धाभावस्य गुणिनि बाधकत्वमित्याक्षेपस्तत्खण्डनं च । | ३२५ | ३ |
| उक्त तिसन्धानस्यालीकविषयत्वनिरासः । | ३२६ | [illegible] |


### गुणगुण्यभेदखण्डन(२)प्रकरणे ।


| | | |
|---|---|---|
| सहोपलम्भनियमस्याभेदसाधकत्वनिराकरणम् । | ,, | [illegible] |
| गुणिनम्प्रति गुणस्य व्यापकत्वाद्गुणिनोऽसत्त्वमित्याक्षेपपरिहारः । | ३२७ | [illegible] |
| असमसहोपलम्भस्याभेदसाधकस्यानैकान्तिकत्वम् । | ३२८ | [illegible] |
| गुणवत अनुपलम्भेऽपि गुणस्योपलम्भ इति विपर्यासः कदापि न भवतीति शङ्कासमाधानम् । | ३२९ | [illegible] |

| विषयः | पृ० | पं० |
|---|---|---|
| धर्मधर्मिणोरभेदे दूरादूरग्रहणे पटुत्वपटुत्वानुपपत्तिः । | ३३१ | १ |
| विदूरप्रत्ययस्य देशालम्बनत्वनिरासः । | ३३२ | ४ |
| अनुभूतो ह्यात्मा न निश्चीयत इत्यस्याक्षेपस्य खण्डनम् । | ३३३ | १ |


## चतुर्थपरिच्छेदे ।

### स्थिरात्मसाधन(१)प्रकरणे ।


| | | |
|---|---|---|
| नैरात्म्यसाधकानुपलब्धिखण्डनम् । | ३३४ | ६ |
| आत्मसिद्धौ प्रत्यक्षप्रमाणकथनम् । | ३३६ | ४ |
| अहंप्रत्ययस्य वासनामात्रजन्यत्वनिरासः । | ३३७ | ६ |
| ,, सवस्तुकत्वसाधनम् । | ३३८ | १ |
| ,, शरीरादिवस्तुकत्वनिरासः । | ३३९ | ३ |
| बुध्यात्मवादनिराकरणम् । | ३४० | ३ |
| आलयविज्ञानसन्तानस्यात्मत्वखण्डनम् । | ३४१ | ३ |
| आत्मसाधकानुमानवर्णनम् । | ३४२ | १ |
| प्रतिसन्धानेनैककर्तृसाधनम् । | ,, | २ |


### विज्ञानात्मवादखण्डन (२) प्रकरणे ।


| | | |
|---|---|---|
| अभ्रान्तसमतैकावसायः प्रकृतिविक्रिये वा हेतुफलस्योपादानोपादेयलक्षणमिति बौद्धोक्तेः खण्डनम् । | ३४५ | ४ |
| प्रतिसन्धानयोग्यतोपादानोपादेयलक्षणमित्यस्य निरासः । | ३४७ | ३ |
| वैजात्यस्य प्रतिसन्धानयोग्यतात्वनिराकरणम् । | ३४८ | ४ |
| दहनसमवायिष्वदहनजात्यनभ्युपगमेऽपि तृणादिजाग्निष्वदहनावान्तरजातिस्वीकारे क्षत्यभावः । | ३४९ | ३ |
| सहकारिभेदादेवैककर्तृकत्वनिश्चयनियम इत्याशङ्कासमाधानम् । | ३५१ | १ |
| पूर्वापरधियामेकस्वभावत्वेऽपि उपादानोपादेयभावस्य प्रतिसन्धानेऽप्रयोजकत्वमिति समाधानान्तरम् । | ३५२ | ३ |
| प्रवृत्तिविज्ञानानां भेदाभावेऽप्यहमित्याकारालयविज्ञानानां भेदाग्रहात्प्रतिसन्धानमित्याक्षेपस्तत्खण्डनं च । | ३५४ | ६ |
| आलयविज्ञानस्य प्रवृत्तिविज्ञानभेदपक्षे दोषः । | ३५५ | २ |
| आलयविज्ञानस्य प्रवृत्तिविज्ञानान्तःपातिकादाचित्कानेकाहम्प्रत्ययरूपत्वनिरासः । | ३५७ | ६ |
| स्मृत्यन्यथानुपपत्त्याऽनुभवितृस्मर्त्रोरभेदसाधनारम्भः । | ३५९ | ५ |
| शालिप्रभवबीजस्य शालित्वप्रतिसन्धानवन्नियम इत्याक्षेपस्य खण्डनम् । | ३६० | ८ |
| अनुभवितृसन्तानवैजात्यं वेति विकल्पदूषणम् । | ३६१ | १ |

| विषयः | पृ० |
|---|---|
| सर्वज्ञानानां सर्वाकारत्वमिति बौद्धपक्षनिरासः। | ३६१ |
| स्मृतेः कालान्तरसम्बन्धात्संस्कारतदुपादानयोः स्थैर्यावश्यकत्वम्। | ३६३ |
| यागहिंसादिजन्यधर्माधर्मयोः स्थैर्यसाधनम्। | ,, |
| अतीन्द्रियसंस्कारपक्षदूषणम्। | ३६४ |
| जातिप्रत्यभिज्ञाने व्यभिचाराद्विरुद्धधर्मविरहिविषयत्वस्य प्रतिसन्धाने विशेषणत्वम्। | ३६६ |
| **आत्मधर्म(३)प्रकरणे।** | |
| भूतात्मवादखण्डनम्। | ,, |
| इन्द्रियात्मवादनिरासः। | ३६८ |
| स्थिरात्मसाधकतर्ककथनम्। | ३६९ |
| आत्माणुत्वखण्डनम्। | ३७० |
| ईदृशस्याप्यात्मनो हेयत्वमिति पूर्वपक्षनिरासः। | ३७१ |
| आत्मदर्शिनो रागद्वेषसत्त्वं न दोषाय किन्तु गुणायेति वर्णनम्। | ३७२ |
| दुःखहेतुत्वादिन्द्रियवदात्मनो हेयत्वमित्याक्षेपनिरासः। | ३७३ |
| आत्मन उपादेयत्वे युक्तिः। | ३७४ |
| मिथ्याज्ञाननाशान्मुक्तिक्रमकथनम्। | ३७५ |
| **आम्नायप्रामाण्य (४) प्रकरणे।** | |
| प्रपञ्चमिथ्यात्वादिदोषैराम्नायस्याप्रामाण्यमित्याक्षेपः, तन्निरासश्च। | ,, |
| आम्नायप्रामाण्यव्यवस्थापनम्। | ३७७ |
| **ईश्वरसिद्धि (५) प्रकरणे।** | |
| विरोधदोषनिरासपूर्वकमीश्वरस्यानुमानेन साधनम्। | ,, |
| ईश्वरानुमाने सत्प्रतिपक्षनिरासः। | ३७९ |
| ईश्वरानुमाने तर्कापरिशुद्धिनिराकरणम्। | ३८० |
| बौद्धनैयायिकमतेन सकर्तृकत्वव्याप्त्यभावाक्षेपः। | ३८२ |
| पूर्वपक्षिमतेनोपाधिविरहादिव्याप्तित्रयस्वरूपखण्डनम्। | ३८३ |
| व्याप्तित्रयस्यापि सुग्रहत्वाभिप्रायेण पूर्वपक्षनिरासारम्भः। | ३८५ |
| पदार्थचतुष्टये विरोधिबहिर्भूतयोरुपाधित्वनिराकरणम्। | ३८६ |
| देहसहवृत्तेरुपाधित्वखण्डनम्। | ३८७ |
| देहस्योपाधित्वनिराकरणम्। | ३८८ |
| शङ्कितोपाधिखण्डनम्। | ३८९ |
| उपाधिविरहस्य प्रतिबन्धत्वव्यवस्थापनोपसंहारः। | ३९१ |
| तदुत्पत्तिरूपप्रतिबन्धस्थापनारम्भः। | ,, |

| विषयः | पृ० | पं० |
|---|---|---|
| कार्यविशेषे कायविशेषापेक्षणीयत्वनिरासः । | ३९४ | ६ |
| विपक्षे बाधकरूपप्रतिबन्धसाधनम् । | ३९६ | २ |
| कारकाधीनकार्यवर्णनम् । | ,, | ५ |
| नैयायिककारकप्रक्रियायामाक्षेपः । | ३९९ | ६ |
| कर्तारमन्तरेण कार्योत्पत्तिवदुपादानं विनापि तदुत्पत्तिः स्यादित्याशयेनाक्षेपसमाधिः । | ४०० | २ |
| अन्वयव्यतिरेकोभयमुखव्याप्त्युपसंहारः । | ४०३ | ८ |
| स्वाभाविकसम्बन्धरूपप्रतिबन्धप्रतिपादनम् । | ,, | ९ |
| स्वभावार्थनिरुपधित्वघटकोपाधिलक्षणम् । | ,, | १२ |
| उपाधिप्रत्यायकनिराकर्तृवर्णनम् । | ,, | १४ |
| प्रतिबन्धप्रतिबन्दिनिरासः । | ४०५ | ३ |
| इन्द्रियादिविकारमन्तरेणैव ज्ञानत्वाभिव्यक्तौ नैयायिकस्यापि समानो दोष इत्याक्षेपस्य खण्डनम् । | ४०६ | ९ |

## सर्वज्ञसिद्धि ( ६ ) प्रकरणे ।

| विषयः | पृ० | पं० |
|---|---|---|
| केवलस्य कर्तृत्वे वैश्वरूप्यव्याघातायाक्षेपाः । | ४०८ | १ |
| उक्ताक्षेपखण्डनपूर्वकमीश्वरे सार्वज्ञ्यसाधनम् । | ४०९ | १ |
| कौटिल्यादेवेश्वरो दुःखमयजगत्कर्तेति पूर्वपक्षस्य खण्डनम् । | ४१० | १ |
| ईश्वरे वेदवक्तृत्वाक्षेपस्य समाधिः । | ४१३ | ७ |
| वेदस्य सर्वज्ञपूर्वकत्वसाधनम् । | ४१३ | ७ |
| महाजनपरिगृहीतत्वाद्वेदस्य सर्वज्ञपूर्वकत्वसाधने सुगताद्यागमे व्यभिचारशंका । | | |
| महाजनपरिगृहीतत्वरूपहेत्वर्थप्रदर्शनपूर्वकमाशङ्कानिरासः । | ४१६ | १० |
| दार्शनिकमतमात्रे गर्भाधानादिसंस्कारानुष्ठानावश्यकत्वम् । | ४१७ | ३ |
| क्वाचित्कमहाजनप्रवृत्तेः परिग्रहार्थत्वे व्यभिचारस्तन्निरासश्च । | ४१८ | ४ |
| व्याकरणे वैदिकशब्दवत्सौगतशब्दानुरोधाभावात्सौगतागमस्य महाजनपरिग्रहानर्हत्वम् । | ४१९ | ४ |
| आयुर्वेदीयशान्तिकपौष्टिकादिप्रकरणस्य प्रामाण्यम् । | ४२० | ९ |
| वेदे महाजनपरिगृहीतत्वोपसंहारः । | ४२२ | ७ |
| इदानीन्तनागमे पूर्वपूर्वागमपरिगृहीतत्वनिरासः । | ४२३ | ५ |
| ,, प्रवाहनित्यतापक्षनिराकरणम् । | ,, | ७ |
| नित्यानुमेयवेदनिरासः । | ४२४ | ६ |
| वेदशाखाह्रासानुमानन्तत्र प्रमाणं च । | ४२५ | ४ |

| विषयः | पृ० |
| --- | --- |
| भूतसर्गोच्छेदे प्रमाणकथनम् । | ४२६ |
| सर्वप्राणिनाशयौगपद्याक्षेपनिरासः । | ४२७ |
| अनादित्वे सेश्वरमीमांसापक्ष–कापिलपक्षत्वापत्तिवारणम् । | ४२९ |
| वेदे आप्तोक्तत्वोपसंहारः । | ४३० |
| बौद्धागमापरिग्रहे युक्तिः । | ४३१ |
| सौगतागममूलविचारः । | ४३३ |
| आगमप्रामाण्योपसंहारः । | ४३५ |
| मोक्षस्यानुपादेयत्वान्न फलत्वमित्याक्षेपनिरासः । | ४३७ |
| आत्यन्तिकत्वपदार्थः । | ,, |
| मोक्षस्य दुःखाभावरूपस्यापुरुषार्थत्वाक्षेपनिरासः । | ,, |
| ,, अवेद्यत्वादकाम्यत्वापत्तिनिराकरणम् । | ४३८ |
| दुःखाभावरूपापवर्गस्य पुरुषार्थत्वोपसंहारः । | ४४० |
| मुक्तेर्नित्यसुखात्मत्वनिरासः । | ४४१ |
| वेदान्तिनैयायिकमतयोरात्मस्वभाववर्णनम् । | ४४५ |
| आत्मोपासनोपसंहारः । | ४४७ |
| आत्मोपासने पूर्वोत्तरपक्षतया सकलदर्शनोपयोगित्वम् । | ४४८ |
| ग्रन्थसमाप्तिः । | ४५२ |

न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः

# आत्मतत्त्वविवेकः



ॐ नमो गणेशाय ।

स्वाम्यं यस्य निजं जगत्सु जनितेष्वादौ ततः पालनं
व्युत्पत्तेः करणं हिताहितविधिव्यासेधसम्भावनम् ।
भूतोक्तिः सहजा कृपा निरुपधिर्यत्नस्तदर्थात्मक-
स्तस्मै पूर्वगुरूत्तमाय जगतामीशाय पित्रे नमः ॥ १ ॥

---

विद्वद्वरनारायणाचार्यविरचिता

## नारायणी टीका ।

ॐ नमः श्रीवीतरागाय ।

प्रणम्य परमात्मानमात्मतत्त्वविवेचनम् ॥
आत्मज्ञानद्रढिम्नेऽहं व्याख्यास्यामि तदर्थिनाम् ॥ १ ॥

तत्र तावदात्मतत्त्वं विवेक्तुकामस्तस्याविघ्नपरिसमाप्तये विश्वेश्वरमर्वाचीनापितृसाधर्म्यवैधर्म्याभ्यां जगत्पतित्वेन शिवं नमस्यति स्वाम्यमिति(१) । यथा अर्वाचीनस्य पितुर्जनितेषु जगत्सु आदौ प्रथमं स्वाभाविकं स्वाम्यं भवति, तथा जगत्कर्तृत्वेनेष्टेनैव जनितेषु जगत्सु आदौ प्रथमं स्वाभाविकं स्वाम्यं यस्येत्यर्थः । यद्वा आदौ जगत्सु जनितेष्विति(२)

---

(१) प्रारीप्सितस्य निर्विघ्नं समाप्तिमुद्दिश्य कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति स्वाम्यमिति कल्पलता ।

(२) अनेन जनकस्यापि जनक ईश्वर इति सूचितम् ।

योजना । ततस्वाम्थानन्तरं पालनं च यस्य निजं जगत्स्वित्येवं यथापे
सर्वत्रोत्तरत्रानुवर्तते । व्युत्पत्तेः-क्रियाव्युत्पत्तिः शब्दार्थसम्बन्धव्युत्पत्तिरित्ये
वंप्रकारायाः, करणमुत्पादनमित्यर्थः(१) । हिताहितयोर्धर्माधर्मयोः स्वे
पदेशरूपाभ्यां श्रुतिस्मृतिभ्यां(२) विधिप्रतिषेधकरणम् । एवमर्वाचीनपि
तृसाधर्म्यमुक्तमिदानीं वैधर्म्यं दर्शयति-(३)भूतोक्तिर्यथार्थोक्तिस्सहजा स
मावसिद्धा, निजपदानुवर्तनेनापि सहजार्थसिद्धौ पुनरुपादानं वैधर्म्यसूच
नाय, अन्यथाऽत्रापि साधर्म्यमेवोच्यत इति भ्रान्तिः स्यात् । सहजा
च नित्यसर्वज्ञस्य द्वेषाभावेन भ्रमविप्रलम्भासम्भवात् नैवमसर्वज्ञस्याव
चीनस्येत्यभिप्रायः । एवमनुविधानादुपाधिनिरपेक्षैव कृपा परमेश्वरस्य
जगत्सु नैवमन्यस्य, तथा परमेश्वरस्य सर्वोऽपि यत्नो जगत्प्रयत्नोद्देशे
स्वार्थस्याभावात् । तदर्थ इति च वक्तव्ये **तदर्थात्मक** इत्यनेन जग
दर्थः जगत्प्रयोजनमेव प्रयत्नस्यात्मेति तादर्थ्यनिश्चयद्योतनाय कार्यका
णयोरभेद उपचर्यते । अनेनाप्यर्वाचीनाद्वैधर्म्यमुक्तम् । वैधर्म्यकथनं
व्यतिरेकालङ्कार इति तद्विदः । यथाहुः—

शब्दोपात्ते प्रतीते वा सामान्ये वस्तुनोर्द्वयोः ।
तत्र यद्भेदकथनं व्यतिरेकः स उच्यते ॥ इति ।

एवं साधर्म्यत उत्कर्षता वैधर्म्यतश्च । अर्वाचीनपूर्वगुरूत्तमाय जग
पित्र ईशाय नम इति योजनेति ॥ १ ॥

---

(१) यथा पिताऽध्ययनादिना पुत्रान्व्युत्पादयति तथेश्वरो:
प्रयोज्यप्रयोजकदेहभेदमालम्ब्य गवादिपदजाते पटादिनिर्माणे च
णिनो व्युत्पादयतीति मिश्राः ।

(२) 'स्वर्गकामो यजेत, न कलञ्जं भक्षयेदि'त्यादिहितविध्यहि
ष्यासेधरूपाभ्याम् ।

(३) ननु कथमत्र विश्वास इत्यत आह भूतोक्तिरिति । य
पितुः पुत्रान्प्रति विधिनिषेधयोः सत्योक्तिस्तथेश्वरस्यापीत्यर्थः ।
त्यत्वे मानमाह सहजेति । ननु स्वप्रयोजनाभावात्कथं हिताहिते उप
शेदित्यत आह कृपेति । निरुपधिरेव परदुःखप्रहाणेच्छाऽस्येत्यर्थ
कल्पलता ।

**इह खलु निसर्गप्रतिकूलस्वभावं सर्वजनसंवेदनसिद्धं दुःखं जिहासवः सर्व एव तद्धानोपायमविद्वांसोऽनुसरन्तश्च सर्वाध्यात्मविदेकवाक्यतया तत्त्वज्ञानमेव तदुपायमाकर्णयन्ति न ततोऽन्यम्, प्रतियोग्य-**

---

इदानीं सो नृणां स्वस्वविवेक्तुः प्रवृत्तिसिद्ध्यर्थमात्मतत्त्वविवेकस्य प्रयोजनवद्धेतुकां कर्तव्यतामाह **इहेति**(१)। इह जगतीत्यर्थः। यदि दुःखं प्रतिकूलं न स्यात् यदि वा शीतोष्णादिवदुपाधितः प्रतिकूलं स्याद्यदि वा न प्रमाणसिद्धं ततो न सर्वेषां जिहासितं स्यादित्याह **निसर्गे**त्यादि(२)। दुःखं हि निसर्गत एव प्रतिकूलस्वभावं, स्वभावशब्देन दुःखं सत्तामात्रेण प्रतिकूलं न तु किञ्चित्कारेण वस्त्वन्तरवदिति दुःखस्य लक्षणं सूचितम्, सर्वजनसंवेदनात्मकप्रमाणसिद्धञ्च। अतो निरुपाधिकप्रतिकूलस्वभावत्वेन सर्वजनसिद्धत्वेन च सर्व एव जिहासवः। एवं दुःखस्य जिहासितत्वेन तद्धानोपायो विदितश्चेत्तदनुसरणं न स्यादित्यत आह **तद्धानोपायमिति**। अत उपायाज्ञानात्तमनुसरन्तो जिज्ञासमानाः सर्वाध्यात्मविदेक(३)वाक्यतयाऽध्यात्ममात्मज्ञानमाधिकृत्य प्रवृत्तं मोक्षशास्त्रं तद्विदेकवाक्यतया तदविगानेन तत्त्वज्ञानमेव तदुपायमाकर्णयन्ति, न ततोऽन्यं कर्माद्युपायम्। उपायान्तराभावप्रतिपादनेन चोपायान्तरस्य(४) विद्यमानत्वात्कथमभिमतस्यैवोपायस्य नियमेनोपादेयता स्यादिति निरस्तम्। कस्य च तत्त्वं ज्ञातव्यमित्यपेक्षायामात्मन एवेत्यत्रापि एकवाक्यतैव सर्ववादिनामित्याह **प्रतियोगीति**(५)। प्रतियोग्य-

---

(१) प्रेक्षावत्प्रवृत्त्यर्थमभिधेयं प्रयोजनं च दर्शयति इहेतीति मिश्राः। अस्य 'तत्त्वज्ञानमेव तदुपायमाकर्णयन्ती'त्यनेन सम्बन्धो बोध्यः।

(२) भवेदेवं यदि दुःखहानमपि पुरुषार्थो भवेत् नैवं सुखेच्छया तत्र प्रवृत्तेरत आह निसर्गेति। अतः स्वरसत एव तद्धानेच्छेत्यर्थ इति कल्पलता।

(३) अनेन तत्त्वज्ञानस्य मोक्षोपायत्वं सर्वतान्त्रिकतन्त्रसिद्धमिति सूचितम्। (४) काशीमरणादेः।

(५) तत्त्वज्ञानस्य मोक्षहेतुत्वे आत्मन इति कुत इत्यत आह प्रति-

नुयोगितया चात्मैव तत्त्वतो ज्ञेयः, तथाहि यदि नैरा
स्म्यं यदि वाऽऽत्माऽस्ति वस्तुभूतः, उभयथापि नैसर्गिक
मात्मज्ञानमतत्त्वज्ञानमेवेत्यत्राप्येकवाक्यतैव वादिनाम
आत्मतत्त्वं विविच्यते ।

---

नुयोगितया विरोध्यनुकूलतया, सदसत्तयेत्यर्थः । अथवा प्रतियोगि
नैरात्म्यवादिनामप्यनुयोगितयाऽविप्रतिपत्त्येत्यर्थः(१) । ननु नैसर्गि
हंप्रत्ययेन ज्ञात एवात्मा किमत्र ज्ञातव्यमित्यत आह तथाहीति । य
शरीरादिव्यतिरिक्तस्यात्मनो नास्तित्वं यदि वाऽस्तित्वमुभयथापि शरीरा
संघातविषयो नैसर्गिकोऽहंप्रत्ययो नात्मनस्तत्त्वज्ञानं व्यतिरिक्तस्य सत्
सत्त्वयोरुदासीनत्वादात्मैव(२) तत्त्वतो ज्ञेयश्चेत्यत्राप्येकवाक्यतैवातो दुः
स्य जिहासितत्वात्तद्धानोपायस्य चात्मतत्त्वज्ञानमन्तरेणान्यस्याभावात्
च निसर्गसिद्ध्यभावाच्च तत्सिद्ध्यर्थमात्मतत्त्वं विविच्यत इत्याह
इति । नास्तित्वास्तित्वयोरस्तित्वमेव तत्त्वं विविच्यत(३) इत्यर्थः ॥

---

योगीति । प्रतियोगितयाऽनुयोगितया चेत्यर्थः । अत एवोक्तम्—

नैरात्म्यदृष्टिं मोक्षस्य हेतुं केचन मन्वते ।
आत्मतत्त्वधियं त्वन्ये न्यायवेदानुसारिणः ॥ इति ।

तथा चाऽऽत्मा नास्तीति ज्ञानस्यापवर्गहेतुत्ववादिबौद्धनयेऽ
प्रतियोगित्वेन, आत्मा शरीरादिभिन्न इति ज्ञानस्य मुक्तिहेतुत्वव
नामास्तिकदर्शनानां नयेऽनुयोगितया चात्मतत्त्वज्ञानस्यापेक्षणीयत
भयथाप्यात्मैव ज्ञातव्य इत्यभिप्रायः ।

(१) उक्तरीत्या प्रतियोगिविषयाऽऽत्मतत्त्वज्ञानस्य तेषामप्य
पेक्षितत्वेनाविप्रतिपत्त्येत्यर्थः ।

(२) गौरोऽहमित्याकारमनादिदेहाभेदवासनासंभूतमात्मज्ञानमत
ज्ञानमेव असत एवात्मनस्तत्र भानात् देहाभेदावगाहनाच्च, देहसं
नवगाहिनः कादाचित्कस्याहं सुखीत्यादेस्तत्त्वज्ञानस्य बलवता भि
ज्ञानसन्तानेन तिरस्कृतत्वाच्च कार्यक्षमत्वमिति भावः ।

(३) शरीरादिभिन्नो नित्यः सुखादिगुणवानात्मा विवेकेन
नोपदर्श्यत इति मिश्राः ।

**तत्र बाधकं भवत् क्षणभङ्गो वा(१) बाह्यार्थभङ्गो वा(२) गुणगुणिभेदभङ्गो वा(३) अनुपलम्भो(४)वेति । तत्र न प्रथमः, प्रमाणाभावात् । "यत् सत्तत् क्षणिकं, यथा घटः,**

---

इदानीं विवेकमारभमाणो नैरात्म्यमतसिद्धमात्मनि बाधकं निराकर्तुं(१) विकल्पयति तत्रेति । **तत्र बाधकं भवदिति** । सामान्यतः सिद्धस्य बाधकस्य विशेषतो विकल्पनीयत्वात्सामान्याविवक्षाहेतुर्नपुंसकलिङ्गनिर्देशः कृत इति मन्तव्यम् ।(२)तत्रशब्दश्चात्र वाक्योपक्रमे । देहेन्द्रियादिव्यतिरिक्ते कालान्तरफलोपभोक्तरि नित्य आत्मनि बाधकं भवत् क्षणभङ्गो वा, भावानां बाह्यार्थविशेषरूपे तस्मिन्बाह्यार्थभङ्गो वा, ज्ञानसुखादिगुणानां गुणिनि तस्मिन् गुणगुणिभेदभङ्गो गुणगुणिभेदभङ्गेन गुणपरिशेषो वेत्यर्थः । देहेन्द्रियादिव्यतिरिक्ते तस्मिन्ननुपलम्भो(३) वेत्यर्थः । तत्र प्रथमं कल्पं बाह्यार्थवादिसौत्रान्तिकाभिमतं निराकरोति न प्रथम

(१) सति बलवत्तरबाधकप्रमाणे साधकसहस्रस्याकिञ्चित्करत्वादित्यर्थः ।

(२) नैरात्म्यवादिनामस्मदभिमतात्मनि बाधकान्येतान्येवेति क्रमशो निरसनीयानि, वेदान्तिनोऽप्यापाततो नैरात्म्यवादिन एवेति तन्मतमपि दूष्यत एव, तथाच श्रुतिसमधिगतेऽप्यात्मनि अस्थिरतानिवृत्तये न्यायः प्रवर्तनीयः, स च बाधकनिरासं विना नाङ्गं धारयतीति प्रथमं बाधकनिरासारम्भ इति भाव इति कल्पलता ।

(३) अत्र क्षणभङ्गे नित्यत्वभङ्गः, बाह्यार्थभङ्गे ज्ञानभिन्नात्मासिद्धिः, गुणगुणिभेदभङ्गेऽपि सैव, अनुपलम्भे स्वरूपासिद्धिरिति बाधकचतुष्टयफलं पूर्वपक्षिमतेन क्रमशो बोध्यम् । एवं विचारप्रवर्तकसंशयमूलविप्रतिपत्तयश्च क्षणभङ्गे—सत्त्वं क्षणमात्रवृत्त्यनेकवृत्तिधर्मव्यापकताव्याप्यं न वा, सत्त्वमुत्पत्तिव्याप्यं नवा, कार्यं स्वोपादानसमानकालीनं न वा, भावः स्वोत्पत्त्यव्यवहितोत्तरक्षणवर्तिध्वंसप्रतियोगी न वा इत्यादयो द्रष्टव्याः । एकदेशिमतेनान्त्यशब्दे विधिकोटिप्रसिद्धिः, निषेधकोटिस्त्वलीके सौगतानां मते इति मिश्राः । स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोग्यवृत्तित्वं क्षणिकत्वमत्र विभावनीयम् । क्षणत्वं च स्वावृत्तियावत्स्ववृत्तिध्वंसप्रतियोगिकत्वम् ।

ष्टत्वप्रसङ्गात् । "व्यावृत्तिभेदादयमदोष इति चेत्" । न, तदनुपपत्तेः, व्यावर्त्यभेदेन विरोधो हि तन्मूलम् । स च न तावन्मिथो व्यावर्त्यप्रतिक्षेपाद्गोत्वाश्वत्ववत्, तथा-सति विरोधादन्यतरापाये बाधासिद्ध्योरन्यतरप्रसङ्गात् । नापि तदाक्षेपप्रतिक्षेपाभ्यां वृक्षत्वशिंशपात्ववत्, परा-

---

स्यादिति । शङ्कते व्यावृत्तीति । असामर्थ्यव्यावृत्तेरकरणव्यावृत्तेश्च भेदाद्भेदकस्याप्यर्थस्य तदुपाधिकृतभेदान्न साध्याविशिष्टता दोष इति । निराकरोति नेति । कारणमाह तदिति । तस्य व्यावृत्तिभेदस्यैवानुपपत्तेरिति । अनुपपत्तिमेव दर्शयति व्यावर्त्येति । अयमर्थः—सर्वत्र भेदे विरोध एव मूलम्, व्यावृत्त्योश्च भेदे मूलं व्यावर्त्यभेदनिबन्धनो विरोधः, स च मिथो व्यावर्त्यप्रतिक्षेपाद्गोत्वाश्वत्ववत् तदाक्षेपप्रतिक्षेपाभ्यां वा वृक्षत्वशिंशपात्ववत्(१) । न तावत्प्रथम इत्याह स चेति । अन्योन्यस्य व्यावृत्तये व्यावर्त्ये अन्योन्यं प्रतिक्षेपाद्गोत्वाश्वत्वयोरिव न तावद्विरोध इत्यर्थः । कुत इत्यत आह तथासतीति । तथासत्येकेनेतरस्य प्रतिक्षेपाद्धेतुस्वीकारे साध्यस्य तेनैव बाधात्, साध्यस्वीकारे तेनैव हेतोर्बाधादसिद्धिर्वा(२)स्यादिति । नापि द्वितीय इत्याह (३)नापीति । यथाहि वृक्षत्वशिंशपात्वयो-

---

(१) अयं भावः—यथाऽश्वत्वं गोत्वस्य व्यावर्त्यां विशिष्टगोव्यक्तिं प्रतिक्षिपति गोत्वं वाऽश्वत्वव्यावर्त्यामश्वव्यक्तिं प्रतिक्षिपतीति गोत्वाश्वत्वयोर्विरोधोऽथवा वृक्षव्यावृत्तिस्वरूपेण व्यावर्त्यस्य वृक्षस्याक्षेपादेर्शिंशपाया अव्यावृत्तेर्व्यावर्त्यायाः शिंशपाया भेदस्तथा न प्रकृत इति ।

(२) यदि कारित्वं सामर्थ्येन प्रतिक्षिप्येत तदाऽऽपाद्यबाधः स्यात्, यदि कारित्वेन सामर्थ्यं प्रतिक्षिप्येत तदाऽऽपादकासिद्धिरिति मिश्राः । असमर्थाकारिव्यावृत्त्योरेकतरसत्त्वेऽन्यतराभावनियमेन सामानाधिकरण्यविरहे प्रसङ्गविरोधो विपर्यये च व्यभिचार इति दीधितिकारः ।

(३) ननु गोत्वाश्वत्ववत्परस्परात्यन्ताभावसामानाधिकरण्यं माऽस्तु वृक्षत्वशिंशपात्ववद्व्याप्यव्यापकभाव एव व्यावृत्त्योर्भवतु तेन च भेदसिद्धिः स्यादित्यत आह नापीति । आक्षेपः संग्रहः, प्रतिक्षेपो व्यवच्छेदः,

परभावानभ्युपगमात् । अभ्युपगमे वा समर्थस्याप्यकरणमसमर्थस्यापि वा करणं प्रसज्येत । नाप्युपाधिभेदात् कार्यत्वानित्यत्ववत्, तदभावात् । न च शब्दमात्रमुपा-

स्तस्यैव पनसत्वस्याक्षेपप्रतिक्षेपाभ्यां विरोधः, नैवं सामर्थ्यकरणयोः परापरभावानभ्युपगमात्, परापरभावनिबन्धनो हि वृक्षत्वशिंशपात्वयोस्तदाक्षेपप्रतिक्षेपलक्षणविरोधः, नचैवं प्रकृते परापरभावाभ्युपगमोऽतो न विरोधः, समर्थस्य करणनियमस्वीकारात् कुर्वतश्च सामर्थ्यनियमादिति । "ननु कार्यत्वानित्यत्वयोरकार्याणां सतां नित्यानामेव व्यावर्त्यत्वाद्व्यावर्त्यभेदाभावेन स्वाभाविकभेदाभावेऽपि कृतिविनाशात्मकोपाधिभेदादेव भेदः, तथा सामर्थ्यकरणात्मकव्यावृत्त्योरपि व्यावर्त्यभेदाभावेन स्वाभाविकभेदाभावेप्यौपाधिको भेदः स्यादिति चेत्" तत्राह (१)नाप्युपाधीति । उपाधिभेदस्यैवाभावान्नैतमपि(२) सम्भवतीत्यर्थः । समर्थकरणशब्दयोस्तद्वाच्यव्यावृत्तिं प्रत्युपायत्वादुपाधित्वमिति चेत्तत्राह नापि शब्देति(३) । यदि वाचकशब्दभेदमात्रादेतदुपाधिको वाच्यभेदः स्यात्तर्हि करहस्तादिश-

---

तथाच वृक्षत्वस्य पनसत्वग्राहकत्वम् शिंशपात्वस्य च तद्व्यवच्छेदकत्वम्, न चैकस्यैतदुपपद्यते इति तयोर्भेदोऽस्तु, स च व्याप्यव्यापकभावाधीनः, प्रकृते च तथाभ्युपगमे सामर्थ्यस्य व्यापकत्वे कथमापादकत्वं व्यभिचारात्, व्याप्यत्वे तु सामर्थ्यं विनापि कारित्वं स्यादित्यनिष्टमिति कल्पलता ।

(१) ननूक्तदोषाद्वृक्षत्वाश्वत्थत्ववत्परस्परपरिहारस्य वृक्षत्वशिंशपात्ववत्सामान्यविशेषभावस्य वाऽभावेपि कार्यत्वानित्यत्वयोरिवासामर्थ्याकारित्वयोः समव्याप्तिरेव स्यात्तथाच भेदाधीनो आपाद्यापादकभावः स्यादेवेत्यत आह नापीति ।

(२) प्रागभावावच्छिन्नसत्तायोगित्वं कार्यत्वम्, ध्वंसावच्छिन्नसत्तायोगित्वमनित्यत्वमित्युपाधिभिन्नत्वं तत्रास्तु प्रकृते न तथोपाधिभेदः संभवतीति भावः ।

(३) अत्र मूलपुस्तकेषु नचेत्येव पाठः कल्पलताद्यभिमत एव मुद्रापितः ।

धिः, यथार्थशब्दोच्छेदप्रसङ्गात् । नापि विकल्पभेदः, स्वरूपकृतस्य तस्य व्यावृत्तिभेदकत्वेऽसमर्थव्यावृत्तेरपि भेदप्रसङ्गात्, विषयकृतस्य तु तस्य भेदकत्वेऽन्योन्याश्रयप्रसङ्गात् । न च निर्निमित्त एवायं व्यावृत्तिभेदव्यवहारः, अतिप्रसङ्गात् ।

नापि द्वितीयः, सा हि सहकारिसाकल्यं वा प्राति-

---

ब्दानां पर्यायतोच्छिद्येतेति(१) । ननु असामर्थ्यव्यावृत्तिकरणव्यावृत्तिरित्येवंविधविकल्पभेदोपाधिको(२) व्यावृत्तिभेद इति चेत्तत्राह नापि विकल्पेति । नापि विकल्पभेद उपाधिरित्यर्थः । कथमित्याह स्वरूपेति । विकल्पस्य स्वरूपकृतो वा भेदो व्यावृत्तिभेदकः विषयकृतो वा ? नाद्यः, असमर्थव्यावृत्तेरपि बहुविकल्पविषयीकृताया यावद्विकल्पस्वरूपं भेदप्रसङ्गात्(३) । नापि द्वितीयः, व्यावृत्तिरूपविषयभेदस्यैव विकल्पभेदोपाधित्वात् , विकल्पभेदादेव विषयभेदः विषयभेदाच्च विकल्पभेदः इति परस्पराश्रयताप्रसङ्गादित्यर्थः । एवं स्वाभाविकौपाधिकव्यावृत्तिभेदाभावान्निर्निमित्त एव व्यावृत्तिभेदव्यवहारः परिशिष्यते, स चातिप्रसङ्गादेव न युक्त इत्याह न च निर्निमित्तेति ।

एवं करणत्वमेव सामर्थ्यमिति विकल्पो निराकृतः, इदानीं तयो- र्यता सामर्थ्यमिति द्वितीयोऽपि विकल्पोऽपि न युक्त इत्याह नापीति

---

(१) भिन्नयोरभिन्नप्रवृत्तिनिमित्तकत्वं पर्यायत्वम् , तच्चात्र नास्तीति भावः । बौद्धमतेऽतद्व्यावृत्तेरेव प्रवृत्तिनिमित्तकत्वात्तद्भेदे च नैकप्रवृत्तिनिमित्तकत्वरूपपर्यायत्वमिति भावः ।

(२) समर्थत्वप्रकारकज्ञानकारित्वप्रकारकज्ञानभेदोपाधिक इत्यर्थः।

(३) तथाच व्याप्तिपक्षधर्मताज्ञानाभ्याम् विषयीकृतयोर्भेदे क प्रसङ्गवार्त्तेति । ज्ञानभेदस्य व्यावृत्तिभेदकत्वे हेतूकृताया असमर्थव्यावृत्तेरपीदृशत्वाद्विभिन्नाभ्यां व्याप्तिपक्षधर्मताज्ञानाभ्यां भेदात् कथमेकत्र हेतौ व्याप्तिपक्षधर्मताज्ञाने येन प्रसङ्गस्तद्धेतुत्वे साधकः स्यादिति दीधितिः।

स्विकी वा ? । न तावदाद्यः पक्षः, सिद्धसाधनात्, परानभ्युपगमेन हेत्वसिद्धेश्च । यत्सहकारिसमवधानवत्तद्धि करोत्येवेति को नाम नाभ्युपैति यमुद्दिश्य साध्यते, न चाकरणकाले सहकारिसमवधानवत्त्वमस्माभिरभ्युपेयते यतः प्रसङ्गः प्रवर्तेत । प्रातिस्विकी तु योग्यता अन्वय-

---

विकल्पयति सा हीति । सा हि योग्यता सहकारिवैकल्यरूपा वा स्यात् यथा बीजस्य धरणिधामपाथःपवनसङ्गमः, प्रातिस्विकी (१) वा असाकल्येऽपि कारणानां स्वस्वमात्रवर्तिनी, यथा बीजस्यैव शिलाशकलव्यावृत्ता अङ्कुरं प्रत्यनुकूलता । तत्राद्यं पक्षं दूषयति नाद्य इति । सिद्धसाधनं विवृणोति यदिति । यदा सहकारिसाकल्यरूपस्य हेतोः सिद्धिः तदा करणाभ्युपगमात्सिद्धसाधनमित्यर्थः(२) । हेत्वसिद्धिं विवृणोति न चेति । यदि सिद्धसाधनतापरिहारायाकरणकाल एव प्रसङ्गः क्रियेत तदा सहकारिसमवधानस्यास्माभिरनभ्युपगमाद्धेत्वसिद्ध्या प्रसङ्गो न (३) प्रवर्तेतेति । द्वितीयं पक्षं दूषयितुं विकल्पयति प्रातिस्विकी त्विति । बीजस्य प्रातिस्विकी तु योग्यताऽङ्कुरादिकार्यं प्रति प्रत्यक्षानुपलम्भात्मकमन्वयव्यतिरेकविषयीभूतं(४) बीजत्वं वा स्यात्तदविषयीभूतोऽतीन्द्रियो

---

[ १ ) प्रति स्वं नियता प्रातिस्विकी वा, यथा बीजेषु बीजत्वम् तन्तुषु तन्तुत्वम्, तत्तत्कारणतावच्छेदिका जातय इत्यर्थ इति मिश्राः ।

( २ ) अत्रायमाशयः—यदि कश्चिदकुर्वाणमपि कारणजातीयं सहकारिसमवहितमभ्युपेयात् तदा तं प्रति तस्याकारित्वेन सहकारिसमवधानाभावस्साधयितुमुचितः, न चैतदस्ति सहकारिसमवहिते करणनियमाभ्युपगमेनार्थतोऽकारिणः सहकारिसमवधानाभावनियमस्याभ्युपगतत्वात्, तथा चाकुर्वाणे सहकारिसमवधानाभावसाधने विपर्यये सिद्धसाधनमिति ।

( ३ ) अकुर्वतः कुशूलस्थ बीजस्य परेण नैयायिकेन सहकारिसमवधानानभ्युपगमात् तर्कस्य पराभ्युपगममादायैव प्रवृत्तेरिति कल्पलता ।

( ४ ) एतच्च बीजस्यैवाङ्कुरजनकत्वमिति मतेन, बीजे विनष्टे तदव-

व्यतिरेकाविषयीभूतं बीजत्वं वा स्यात् तदवान्तरजाति-
भेदो वा, सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वं वा । न
तावदाद्यः, अकुर्वतोऽपि बीजजातीयस्य प्रत्यक्षसिद्ध-
त्वात्, तत्रापि तत्राविप्रतिपत्तेः । न द्वितीयः, तस्य कु-

बीजत्वावान्तर(१)जातिभेदो वा परैरभ्युपगम्यते । एतदन्य(२)त्राप्युक्तं "न वैजात्यं विना तत्स्यादिति" । सहकारिवैकल्य(३)प्रयुक्तकार्याभाववत्त्वं वा । यथा बीजस्याङ्कुरजातीयकार्याभाववत्त्वं सहकार्यभावप्रयुक्तं न शिला-शकलस्येव स्वरूपप्रयुक्तमित्यर्थः । तत्राद्यं कल्पं दूषयति नाद्य इति । बीजत्वस्य हि करणनियमेन व्याप्तौ सत्यां वा ततः करणं प्रसञ्जयितुं शक्यते प्रसङ्गसाधनस्याप्युभयसिद्धव्याप्त्यपेक्षत्वं न तु व्याप्तिरस्ति, अङ्कु-रम(४)कुर्वतोऽपि बीजजातीयस्य प्रत्यक्षसिद्धत्वात्, अवान्तरजातिभेदमुपा-दाय करणमिच्छतस्तत्रापि तत्राविप्रतिपत्तेश्चेति । अवान्तरजातिभेदवि-कल्पं निराकरोति (५)नापीति । कुत इत्यत आह तस्येति ।

---

यवेभ्य एवाङ्कुरोत्पाद इति मते तु कपालादिव्यावृत्तकलमयवाद्यनुगत-जातिविशेषपरं बीजत्वमिति वदन्ति ।

( १ ) पराभ्युपगतं कुर्वद्रूपत्वमित्यर्थः ।

( २ ) न्यायकुसुमाञ्जल्याः प्रथमस्तबकस्थषोडशकारिकायाम् । अ-समर्थव्यावृत्तकुर्वद्रूपत्वं विना न तत्क्षणिकत्वं स्यादित्यर्थः । 'न तस्मि-न्ननुमा भवेत् । विना तेन न तत्सिद्धिर्नाध्यक्षं निश्चयं विने'ति पादत्रय-पूरितोक्ता कारिका क्षणिकत्वखण्डनायोद्धृता तत्रैव विशेषतो द्रष्टव्या ।

( ३ ) सहकारिवैकल्यप्रयुक्तो व्याप्यो यः कार्याभावस्तद्वत्त्वमित्य-र्थः । शिलाशकले कार्याभावो न सहकारिवैकल्यप्रयुक्तः किन्तु शिला-शकलत्वप्रयुक्त एव, बीजे सहकारिसाकल्ये कार्याभावो न भवत्येवेति कल्पलता ।

( ४ ) तथा च बीजत्वस्य करणव्यभिचारोऽकरणत्वस्य बीजत्वा-भावव्यभिचारश्चोभयसिद्ध इति न प्रसङ्गविपर्ययप्रवृत्तिरिति । यदि कुशू-लस्थं बीजं स्यात्तदा कुर्यादिति प्रसङ्गः, न च करोति तस्मान्न बीज-मिति विपर्ययश्च व्यभिचाराभ्यामनुपपन्न इति भावः ।

( ५ ) कुशूलस्थं बीजं यदि कुर्वद्रूपजातिमत्स्यात्कुर्यात्क्षेत्रपतित-

र्वतोऽपि मयानभ्युपगमेन दृष्टान्तस्य साधनविकलत्वात्, को हि नाम सुस्थात्मा प्रमाणशून्यमभ्युपगच्छेत्। स हि न तावत्प्रत्यक्षेणानुभूयते, तथाऽनवसायात्। नाप्यनुमानेन, लिङ्गाभावात्। "यदि न कश्चिद्विशेषः कथं तर्हि करणाकरणे इति चेत्"। क एवमाह नेति। परं किं जातिभेदरूपः सहकारिलाभालाभरूपोवेति नियामकं प्रमाण-

---

कुशूलस्थं बीजं समर्थं चेत्कुर्यादेव, यथा सहकारिमध्यमध्यासीनं कुर्वद्बीजमिति हि प्रसङ्गसाधनस्वरूपं, तत्र सहकारिमध्यवर्तिनि कुर्वत्यपि दृष्टान्तीभूते बीजेऽवान्तरजातिभेदरूपस्य सामर्थ्यस्य मयाऽनभ्युपगमेन दृष्टान्तस्य(१) साधनविकलत्वादित्यर्थः। किमिति नाभ्युपगम्यत इत्याह को हीति। स्वस्थात्मा-अनुन्मत्तः। प्रमाणशून्यतामेव दर्शयति स हीति। कथं नानुभूयत इत्यत्राह तथेति। कुर्वतोऽपि क्षणस्यावान्तरजातिविशिष्टतया प्रत्यक्षेणाध्यवसायाभावात् गृहीताध्यवसिते वाऽर्थे तस्य प्रामाण्यात् इतरथाऽतिप्रसङ्गादिति भावः। नाप्यनुमानं प्रमाणमित्याह नापीति। लिङ्गमाशङ्कते (२)यदीति। कदाचित्करणं हि तत्कालस्थितस्य बीजस्याकरणकालाद्विशेषमनुमापयतीत्यर्थः। निराकरोति(३) क इति। सत्यमस्ति करणकाले विशेषः, सहकारिसाकल्यरूपस्य विशेषस्यास्माभिरप्यङ्गीकरणात्ततोऽन्यस्य तु सद्भावे त्वदुपन्यस्तं लिङ्गमप्रमाण-

---

बीजवदिति प्रसङ्गं निरस्यति न द्वितीय इति कल्पलता। अत्र नारायणमतेन "नापि द्वितीयः" इति पाठो मूले द्रष्टव्यः।

(१) अङ्कुरकारिणो बीजस्य।

(२) ननु करणान्यथानुपपत्त्युन्नेय एव जातिविशेषस्तदभावश्चाकरणोन्नेयः कुशूलस्थ इत्याह यदीति मिश्राः।

(३) अर्थापत्तावन्यथोपपत्तिशङ्कामाह क एवमाहेति। सहकारिलाभाधीनं करणन्तदभावाधीनमकरणमिति यद्यपि निश्चयस्तथाप्यापाततः सन्देहादप्यर्थापत्तिर्दूषिता भवति तमेवाह परमिति कल्पलता।

मनुसरन्तो न पश्यामः। "तथापि योऽयं सहकारिमध्य-मध्यासीनोऽक्षेपकरणस्वभावो भावः स यदि प्रागप्यासीत् तदा प्रसह्य कार्यं कुर्वाणो गीर्वाणशापशतेनाप्यप-हस्तयितुं न शक्यते इति चेत्"। युक्तमेतत् यद्यक्षेपकर-णस्वभावत्वं भावस्य प्रमाणगोचरः स्यात्, तदेव तु कुतः सिद्धमिति नाधिगच्छामः। "प्रसङ्गतद्विपर्यया-याभ्यामिति चेत्"। न, परस्पराश्रयप्रसङ्गात्। एवं स्वभ-वत्वसिद्धौ हि तयोः प्रवृत्तिः, तत्प्रवृत्तौ चैवंस्वभावत्व-

---

मित्यर्थः। पुनः शङ्कते (१)तथापीति। यद्यपि सहकारिलाभोऽपि करणकाले विशेषस्तथापि विशेषान्तरमस्त्येव। तथाहि सहकारिमध्यवर्त्यविलम्बकारिस्वभावो यो भावः स यदि ततः प्रागप्यासीत्तदा प्रसह्य कुर्वाणो गीर्वाणशापशतेनापि निवारयितुं न शक्यः, अतोऽकरणकालात्करणकाले भावस्वरूपगतोऽपि विशेषोऽस्तीत्यवगम्यते इति। परिहरति (२)युक्तमेत-दिति। यद्यक्षेपकरणधर्मवत्त्वं भावस्य प्रमाणसिद्धं स्यात्तदा कुर्वतो भावस्याकुर्वतो वैजात्यं स्यात्तत्त्वेवमिति। शङ्कते(३) प्रसङ्गेति। प्रसङ्ग-तद्विपर्ययाभ्यां सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गेण भावस्य करणा-करणयोर्भेदसिद्धावविलम्बकारिस्वभावत्वासिद्धिरिति। परिहरति (४)नेति।

---

(१) बीजस्याक्षेपकरणस्वाभाव्ये साध्येऽपि पूर्वापरबीजयोरैक्ये दोषमाह तथापीति मिश्राः।

(२) वस्तुत एवाक्षेपकरणस्वाभाव्ये दोषोऽयं न त्वन्यथापीति प-रिहरति युक्तमेतदिति।

(३) वास्तवमक्षेपकारित्वस्वाभाव्यं शङ्कते प्रसङ्गेति। बीजं यदि अक्षेपकरणस्वभावं न स्यात् न कुर्यात् करोति च, तस्मादक्षेपकारि-स्वभावमिति प्रसङ्गविपर्ययाभ्यामक्षेपकारिस्वभावासिद्धिरित्यर्थः।

(४) मूले परस्परेति। अक्षेपकरणस्वाभाव्यस्य प्रतियोगिनः प्रसिद्धौ तदभावमादाय प्रसङ्गप्रवृत्तिस्तत्प्रवृत्तौ च स्वाभाव्यसिद्धिरिति कल्पलता।

सिद्धिरिति ।

"स्यादेतत्, कार्यजन्मैवास्मिन्नर्थे प्रमाणं, विलम्बकारिस्वभावानुवृत्तौ कार्यानुत्पत्तिः सर्वदेति चेत्"। न, विलम्ब स्वभावस्य सर्वदैवाकरणे तत्त्वव्याघातात् । ततश्च विलम्बकारीत्यस्य यावत्सहकार्यसन्निधानं तावन्न करोतीत्यर्थः । एवं च कार्यजन्म सामग्र्यां प्रमाणयितुं नशक्यते नतु जातिभेदे । ते तु किं यथानुभवं विलम्बकारिस्वभावाः परस्परं प्रत्यासन्नाः कार्यं कृतवन्तः, किंवा यथास्वपरिकल्पने क्षिप्रकारिस्वभावा इत्यत्र कार्यजननमजागरूकमेवेति ।

नापि तृतीयः, विरोधात्—सहकार्यभावप्रयुक्तकार्याशङ्के स्यादेतदिति । प्रसङ्गस्य सामर्थ्यलिङ्गकत्वात्सामर्थ्यस्य च जातिभेदरूपत्वात्तस्य चाविलम्बकारिस्वभावाभावे विलम्बकारित्वमेव स्वभावस्स्यात् तत्र च कार्यजन्म नोपपद्येत, अस्य कार्यजन्मैवाविलम्बकारिस्वभावत्वे प्रमाणमिति । परिहरति(१) नेति । न ह्यकर्तृत्वमेव विलम्बकारित्वं व्याघातात्, शिलाशकलस्यापि विलम्बकारित्वप्रसङ्गाच्च । किन्तु कियता कालेन कार्यकारित्वमेवेत्याह (२)ततश्चेति । एवञ्च यावत्सहकारिसमवधानमकरणे सति कार्यजन्म सहकारिसमवधानरूपायां सामग्र्यां प्रमाणीकर्तुं शक्यं नाविलम्बकारिस्वभावत्वे इत्याह एवं चेति । क्षिप्रकारिस्वभावा इति । तदैव जाता(३) इति शेषः ।

सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वं वेति कल्पं दूषयति (४)ना-

---

(१) विलम्बकारित्वेऽपि कार्यजन्मोपपद्यत एवेति परिहारार्थः।

(२) ननु विलम्बकारित्वस्वाभाव्यं चेत्तदा ध्वंसपर्यन्तं तत्स्वाभाव्यानुवृत्तौ कार्योत्पत्तिर्न स्यादेवेति विलम्बकारित्वमन्यथा समर्थयति ततश्चेति मिश्राः।

(३) एवं चाक्षेपकारित्वे कार्यजन्माप्रयोजकमिति भावः।

(४) कुशूलस्थं बीजं यदि सहकारिविरहप्रयुक्तकार्याभाववत्स्यात्,

वांश्च सहकारिविरहकार्यवांश्चेति व्याहतम्। तस्मा-
द्भाव एव यन्न करोति तत् तत्सद्भावे तत्करोत्येवेति
स्यात्, एतच्च स्थैर्यसिद्धेरेव परं बीजसर्वस्वमिति।
समर्थव्यवहारगोचरत्वं हेतुरिति निरस्तम्। तादृ-
वहारगोचरस्यापि बीजस्याङ्कुराकरणदर्शनात्। "ना-
नुरूपस्तत्र व्यवहारः, तस्य जननिमित्तकत्वात्, अ-
ात्वानियमप्रसङ्गादिति चेत्"। न, कीदृशं पुनर्जननं
समर्थव्यवहारनिमित्तम्। न तावदक्षेपकरणनिमि-

---

। विरोधमेव दर्शयति सहकारीति। सहकारिविरहिणः कुसू-
बीजस्य सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वेन सामर्थ्येन करणप्रसङ्गो
त इत्यर्थः। सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वेन सहकारिमध्यवर्ति-
करणं सिध्यतीत्याह यदिति। यत्सहकार्यभावादेव स्वसाम-
यत्कार्यं न करोति तत्तत्सद्भावे अकरणहेत्वभावे तत्करोत्येवेति तु
वेति। अस्त्वेवमिति चेत्तत्राह एतच्चेति। सहकारिलाभालाभप्रयुक्तं
करणाकरणयोगित्वं केवलं स्थैर्यसिद्धेरेव बीजसर्वस्वमिति। एवं साम-
लक्षणो हेतुर्विकल्प्य दूषितः, अनेनैव न्यायेन समर्थव्यवहारगोचरत्व-
पि परोक्तस्य हेतुत्वं निरस्तमित्याह (१)एतेनेति। कथमित्याह
र्थेति। (२)तादृगिति। समर्थव्यवहारगोचरस्यापि बीजस्यानुप-
ङ्कुराकरणदर्शनान्न व्याप्तिसिद्धिरित्यर्थः। अनियमप्रसङ्गादिति।
शकलस्यापि तद्व्यवहारविषयत्वप्रसङ्गेन बीजस्यैव तद्व्यवहारगोच-

---

न्न च करोति तस्मान्न तथेति प्रसङ्गविपर्ययौ स्यातामित्यत आह
ति।

(१) ननु कुशूलस्थं यदि बीजं समर्थव्यवहारगोचरः स्यात्तदा-
न्न च करोति, तस्मान्न समर्थव्यवहारगोचर इति प्रसङ्गविपर्ययौ
तामित्यत आह एतेनेति कल्पलता।

(२) अत्रापि प्रसङ्गे मूलशैथिल्यं विपर्ययौ च बाध इत्याह
गिति।

त्वम्, तस्यासिद्धेः॥ नियमस्य च सहकारादिसाकल्ये सत्येव करणं करणमेवेत्येवंस्वभावत्वेनाप्युपपत्तेः, ततश्च जनननिमित्त एवायं व्यवहारो न च व्याप्तिसिद्धिरिति ।

"स्यादेतत्, एतावतापि भावस्य कः स्वभावः समर्थितो भवति, नहि क्षेपाक्षेपाभ्यामन्यः प्रकारोऽस्तीति चेत्"। न, दूषणाभिधानसमये निश्चयाभावेनैव सन्दि-

---

त्त्वमित्यस्यैव नियमस्याभावप्रसङ्गादित्यर्थः(१) । अस्तु जननमेव निमित्तं तत् कीदृशमित्याह कीदृशमिति । तस्यासिद्धेरिति । सहकारिमध्यवर्तिनोऽपि तादृक्स्वभावत्वे प्रमाणाभावस्योक्तत्वादिति । अतः कदाचित्करणमेव मुख्यसमर्थव्यवहारनिमित्तं तत्रापि नियमः सिध्यत्येवेत्यभिप्रायेणाह नियमस्य चेति । अभिप्रायमाविष्करोति (२)ततश्चेति । सहकारिसमवधाने सत्येव करणं सति करणमेवेत्येवंविधजननिमित्त एवायं व्यवहारः, न च तद्व्यवहारगोचरस्य सर्वदा करणेन व्याप्तिसिद्धिरिति ।

स्यादेतत्, यद्यप्यक्षेपकारिस्वभावत्वाभावेऽपि समर्थव्यवहारगोचरत्वनियमोपपत्तेर्न समर्थव्यवहारगोचरत्वस्यैव करणेन व्याप्तिसिद्धिस्तथापि न व्याप्त्यसिद्धिप्रतिपादनमात्रेणैतावतापि भावस्य क्षेपकारिस्वभावत्वं वा निरूपितं, प्रकारान्तरमसम्भावितमेवाऽतोऽन्यतरस्वभावत्वं निरूपणीयमेवेति शङ्कते (३)स्यादेतदिति । परिहरति नेति । द्विरूपा हि कथा

---

(१) तथाच मुख्यत्वेन व्यवहारस्य विशेषणीयत्वान्नोक्तव्यभिचार इति भावः ।

(२) मुख्यसमर्थव्यवहारगोचरत्वमुपसंहरति ततश्चेति । कदाचिज्जननमेव शिलाशकलादिविलक्षणं मुख्यसमर्थव्यवहारगोचरत्वे मूलम्, तथा च यदि समर्थव्यवहारगोचरः स्यात्तदा कुर्यादिति न व्याप्तिरस्तीत्यतः प्रसङ्गे मूलशैथिल्यमित्यर्थ इति मिश्राः ।

(३) क्षेपकारिस्वाभाव्ये सर्वदैवाकरणमित्यक्षेपकरणस्वाभाव्यमेव भावानामङ्गीकार्यम्, तच्च स्वोत्पत्त्यव्यवहितोत्तरक्षण एव करणे स-

ग्धासिद्धिनिर्वाहे कथारूपपर्यवसानात्, उत्तरपक्षावसरे तु सोऽपि न दुर्वचः। तथाहि करणं प्रत्यविलम्ब इति कोऽर्थः? किमुत्पत्तेरनन्तरमेव करणम्, सहकारिसमवधानानन्तरमेव वा। विलम्ब इत्यपि कोऽर्थः? किं यावन्न सहकारिसमवधानं तावदकरणं, सर्वथैवाकरणमिति वा। तत्र प्रथमचतुर्थयोः प्रमाणाभावादनिश्चयेऽपि द्वितीयतृतीययोः प्रत्यक्षमेव प्रमाणम्। बीजजातीयस्य हि सहकारिसमवधानानन्तरमेव करणं करणमेवेति प्रत्यक्षसिद्धमेवेति, तथा सहकारिसमवधानरहितस्याकर-

---

परपक्षदूषणस्वपक्षसाधनाभ्याम्, तत्र प्रतिपक्षदूषणावसरे स्वभावविशेषनिश्चयाभावेऽपि परोक्तःस्यासिद्धेः सन्दिग्धासिद्धिनिर्वाहेणैव कथापूर्वरूपं पर्यवस्यति, अयं च दूषणावसर इति भावः(१)। साधनावसरे तर्हि भावस्य कः स्वभाव इत्युच्यतान्तत्राहोत्तरेति(२)। युक्तार्थपरिग्रहाय विलम्बाविलम्बयोरर्थं विकल्पयति करणं प्रतीति(३)। अकरणमित्यपि प्रत्यक्षसिद्धमेवेत्यनुषङ्गः। न केवलं प्रमाणतः सिद्धिः भवतोऽपि विप्रति-

---

ति स्यात्, तथाच समर्थासमर्थबीजक्षणयोर्भेदासिद्धौ सिद्धं क्षणिकत्वमित्याशयेन भावस्वाभाव्यं पृच्छति स्यादेतदिति।

(१) इदमत्र तात्पर्यम्—भावस्यैकतरस्वभावासमर्थनेन परपक्षखण्डनपूर्वकस्वपक्षस्थापनरूपजल्पे को दोषो दीयते, न तावत्परपक्षखण्डने, त्वन्मतस्य दूषणावसरसमयेऽक्षेपकारित्वरूपसाधनस्य निश्चयाभावेनैव सन्दिग्धासिद्धिनिर्वाहे जल्पस्याऽऽद्यरूपरक्षणात्तव पराजय इति।

(२) ननु जल्पे स्वपक्षसाधनमपि वक्तुमुचितमित्यत आहोत्तरेति कल्पलता।

(३) मूले प्रथमचतुर्थयोरिति। स्वोत्पत्त्यनन्तरमेव करणे प्रमाणाभावः, सर्वथैवाकरणे कार्यजातं कदापि नोपलभ्येतेति बलवद्विपक्षदण्ड इत्यर्थः। प्रमाणाभावादित्यापाततः विपरीतमेव प्रमाणमिति वस्तुगतिरिति मिश्राः। प्रथमेति। कस्यचिदुत्पत्तेरनन्तरमेव किञ्चित्कार्य-

णामित्यपि, अत्र च भवानपि न विप्रतिपद्यत एव, (१)प्रमाणसिद्धत्वात्, विपर्यये बाधकाच्च । (२)तथाहि यदि सहकारिविरहेऽकुर्वाणस्तत्समवधानेऽपि न कुर्यात् तज्जातीयमकरणमेव स्यात्, समवधानासमवधानयोरुभयोरप्यकरणात् । एवं तत्समवधानविरहेऽपि यदि कुर्यात् सहकारिणो न कारणं स्युस्तानन्तरेणापि करणात् । तथाचानन्यथासिद्धान्वयव्यतिरेकवतामप्यकारणत्वे कार्यस्याकस्मिकत्वप्रसङ्गः, तथाच कादाचित्कत्वविहतिरिति । (३)एवं च द्वितीयपक्षविवक्षायामक्षेपकारित्वमेव भावस्य स्वभावः । तृतीयपक्षविवक्षायान्तु क्षेप-

पत्तिस्तत्र नास्तीत्याह अत्रेति । अत्र द्वितीयतृतीयपक्षयोरित्यर्थः । (४)अस्त्विति चेत्तत्राह तथाचेति ।

यद्येकस्यैव भावस्य स्थिरस्य सहकारिलाभालाभाभ्यां करणमकरणं

कारित्वेऽपि न सर्वत्र तथात्वानियमः, तस्य तदानीं सहकारिसाकल्यनिबन्धनत्वादिति भाव इति दीधितिः ।

( १ ) प्रमाणेति । सहकारिषु सत्सु करणस्यासत्सु चाकरणस्य प्रत्यक्षसिद्धत्वादित्यर्थः ।

( २ ) विपर्यये बाधकं स्फुटीकुर्वन्नाह तथाहीति । यज्जातीयं सहकारिसमवधानासमवधानयोरकारणं तज्जातीयमकारणमेव शिलाशकलवत् । यत्कार्यं यद्व्यतिरेकेण यत्करोति तत्कार्यं न तस्य सहकारित्वं, यथा दण्डस्य घटे जनयितव्ये तन्तुरिति व्याप्तिद्वयोपष्टम्भार्थः । न कारणमिति । अङ्कुरे जनयितव्ये क्षित्यादयो न सहकारिणः स्यू रासभवदित्यर्थः । न चेष्टापत्तिरन्वयव्यतिरेकसिद्धकार्यकारणभावतिरस्कारे तद्व्यवस्थाविलोपः कार्यस्याकस्मिकत्वं च स्यादित्याह तथाचेति ।

( ३ ) ननु तथापि भावस्वभावः क इति प्रश्ने किमुत्तरमत आह एवञ्चेति । सहकारिसमवधानासमवधानरूपावच्छेदभेदमादायाक्षेपकारित्वक्षेपकारित्वयोरुभयोरप्येकस्मिन् बीजजातीये दर्शनान्नोभयोर्विरोध इत्यर्थ इति कल्पलता ।

( ४ ) आकस्मिकत्वप्रसङ्ग इति आदिः ।

कारित्वमेव भावस्य स्वरूपमिति नोभयप्रकार(१)नि
वृत्तिरिति ।

"तथापि किंसमर्थस्यैव सहकारिविरहः स्वरूपल
भानन्तरं कर्तुरेव वा सहकारिसमवधानमन्यथा वेति
किं नियामकम् इति चेत्"। इदमुच्यते–कुशूलस्थबीज
स्याङ्कुरानुकूलः शिलाशकलाद्विशेषः कश्चिदस्ति न वा
न चेन्नियमेनैकत्र प्रवृत्तिः अन्यस्मान्निवृत्तिश्च तदर्थिनः
न स्यात् । (२)"परम्पराऽङ्कुरप्रसवसमर्थबीजक्षणजन
नादस्त्येवेति(३) चेत्"। (४)कदा पुनः परम्परयापि तथा

चेत्येतत्सिद्धं स्याद्यदा क्षेपकारित्वमक्षेपकारित्वं चोभयमपि भावस्य स्याद
कत्वमेव सहकारिभावाभावयोर्भावस्य न तु नानात्वमिति किं नियामक
मित्याह (५)तथापीति । अन्यथा वेति । समर्थस्यैव स्वरूपला
भानन्तरमकर्तुरेव वेत्यर्थः । (६)एकत्र बीजे, अपरस्मात् शिलाशकलात

(१) 'परस्परविरोधे हि न प्रकारान्तरस्थितिरि'त्यभियुक्तोक्तेः ।

(२) प्रवृत्तिमन्यथोपपादयति परम्परयेति । असमर्थमपि कुशू
लस्थं बीजं समर्थं जनयिष्यति शिलाशकलन्तु न तथेति विशेष इत्यर्थः

(३) तदर्थिप्रवृत्तिर्विशेषो वेति कल्पलता ।

(४) समर्थं क्षणं प्रत्येवानायत्या बीजत्वेन सामर्थ्यं वाच्यन्तथ
च समर्थस्यापि सहकारिविरहादकरणमित्यायातमित्याशयेन सिद्धा
न्ती पृच्छति कदेति दीधितिः । काचिदभुक्तनष्टा व्यक्तिः समर्थलक्षण
न जनयत्येव च तत्रापि तदर्थिप्रवृत्तिरिति बीजत्वेनैव सामर्थ्यं वाच्य
मिति हृदि निधाय पृच्छति कदेति कल्पलता ।

(५) नन्वेवं स्वभावद्वयस्थितावपि न स्थैर्यम् यतः कुर्वद्रूपस्यैव
सहकारिसमवधानमतद्रूपस्यैव तद्विरह इति क्षणिकत्वेऽप्युपपद्यत इत्य
भिप्रायेणाह तथापीति मिश्राः । मूले कर्तुः कुर्वद्रूपत्वजातिमत इत्यर्थो
बोध्यः । एवमग्रेऽकर्तुरित्यत्र बोध्यम् ।

(६) अत्र मूलेऽकुर्वदपि बीजत्वालिङ्गितं समर्थमेवेत्येकस्यैव सह
कारिलाभालाभाभ्यां करणाकरणे इति स्थैर्यमेवेत्याभिप्रायेण सिद्धान्ती
पृच्छति कुशूलस्थेति ।

भूतं करिष्यतीति । (१)"तत्र सन्देह इति चेत्"(२)स पुनः किमाकारः ? किं सहकारिषु समवहितेष्वपि करिष्यति न वेति,[१]उतासमवहितेष्वपि तेषु करिष्यति न वेति, [२] अथ यदा सहकारिसमवधानं तदैव करिष्यत्येव परं कदा तेषां समवधानमितिसन्देहः[३] । न तावत्पूर्वः, सामान्यतः कारणत्वावधारणे तस्यानवकाशात्, अवकाशे वा कारणत्वानवधारणात् । नापि द्वितीयः, सहकारिणां तत्त्वावधारणे तस्यानवकाशात्, अवकाशे वा तेषां तत्त्वानवधारणात् । तृतीये तु सर्व एव तत्सन्तानान्तःपातिनो बीजक्षणाः समानशीलाः प्राप्नुवन्ति, यत्र तत्र सहकारिसमवधाने सति करणनियमात्, सर्वत्र च सहकारिसमवधानसम्भवात् ।

तदर्थिनो–ऽङ्कुरार्थिनः ।

परं कदेति । ततश्च सहकारिसमवधानकालसन्देहात्तद्द्वारेण करणकालेऽपि सन्देह इति भावः । सामान्यत इति । समवहितेष्वपीत्यपिशब्देनासमवहितेषु करणन्तावत्प्रतिक्षिप्तं, समवधानेऽपि करणसन्देहे कारणत्वमेव सान्दिग्धं स्यात्तच्च सामान्यतः करणत्वावधारणेन विरुध्यते, अनवधारिते च सामान्यतः कारणत्वे(३)नियमेन तत्र प्रवृत्तिरर्थिनां न स्यादित्युक्तमेवेत्यभिप्रायः । तत्त्वावधारण इति । नहि सहकारित्वावधारणे तेभ्यः प्रागपि कार्यस्य भवनशङ्कावकाशः, नहि सति भाव-

(१) परम्पराकारणे प्रवृत्तौ कालावच्छेदज्ञानमतन्त्रमित्याशयेनाह पूर्वपक्षी तत्रेति ।

(२) बीजं सहकारिसमवधाने करिष्यत्येव, समवधानन्तु कदेति सन्देहो वाच्यस्तथा च बीजत्वेनैवाङ्कुरं प्रति सामर्थ्यं वाच्यमित्याशयेन संशयाकारं विकल्पयति स पुनरिति ।

(३) सौगतमतेऽपीति शेषः ।

"समर्थ एव क्षणे क्षित्यादिसमवधानमिति चेत्" त मसमर्थे सहकारिसमवधानमेव नास्ति, समवधाने त्यपि वा तस्मान्न कार्यजन्म ? नाद्यः, शिलाशकल ष्वपि क्षितिसलिलतेजःपवनयोगदर्शनात् । न द्वित शिलाशकलादिव कदाचित्सहकारिसाकल्यवत बीजादङ्कुरानुत्पत्तिप्रसङ्गात् ।

(१)"एवमपि स्यात्को दोष इति चेत्"। न तावदि पलब्धम् । "आशङ्क्यत इति चेत्" । न, तत्समवधाने ऽपि अकरणवत् तद्विरहेऽपि करणमप्याशङ्क्येत ।(२)'

मात्रात्कारणत्वं किन्तु सत्येव भावादिति । (३)समर्थ एवेति सर्वत्रेति शेषः । समर्थ एवेत्येवकारेणासमर्थे बीजे समवधानस्वरूपं वा तल्लक्षिततत्कार्यभूतकार्यजन्मनिषेधो वेति विकल्पयति तत्किमि तद्विरहेऽपीति । न ह्यनुपलम्भगोचरत्व उभयोरप्याशङ्कयोः क

(१) एवमपीति । सहकारिसमवधानवतोऽप्यङ्कुरानुत्पत्तिः स स्त्यर्थः । न तावदिति । क्षेत्रेऽपि तर्हि कदाचित्सहकारिसान्निध्ये बीजा न स्यादित्युत्तरार्थः । पूर्वपक्षी पुनः शङ्कते आशङ्क्यत इति । स्व समर्थादपि कुशूलस्थाद्बीजादङ्कुरानुत्पत्तिश्चेत् तदा सहकारिसम तादपि तदनुत्पत्तिः शङ्कास्पदं स्यादेवेत्यर्थः । अनुभवातिक्रमे यदि शङ्का तदाह सिद्धान्ती तत्समवधान इति । बीजजातीयस्य कारिसमवधाने सत्येव करणं सति करणमेवेति तावन्नियतान्वयव्य रेकाभ्यामवधारितं, तत्र यद्येकस्मिन्नंशे आशङ्का स्यात् स्यादंशान्त विपरीतनिश्चयस्याकिञ्चित्करत्वादित्यभिप्रायः ।

(२) एतावतापि न क्षणिकत्वहानिरिति सौगताभिप्रायः । उ बन्धना चेच्छङ्का तदाह सिद्धान्ती तर्हीति । तथाचाङ्कुरार्थिप्रवृत्ति यमतो न स्यादिति भावः । तथाचेति परिहसति सिद्धान्ती सौ मन्वयव्यतिरेकोपस्थितकार्यकारणभावानिश्चयात्प्रवृत्तिनिवृत्त्योरभा निरीहं जगज्जायेतेति उपहासार्थः ।

(३) समर्थासमर्थयोरेव सहकारिसमवधानासमवधाने इति

शङ्क्यतामिति चेत्" । तर्हि बीजविरहेऽप्याशङ्क्येत, तथाच सति साध्वी प्रत्यक्षानुपलम्भपरिशुद्धिः ।

(१)"स्यादेतत्, न बीजादीनां परस्परसमवधानवतामेव कार्यकरणमङ्गीकृत्याशङ्क्यते येन समवधानानियमात्सर्वेषामेव तज्जातीयानामेकरसतानिश्चयः स्यात्, नापि यत्र तत्र समर्थोत्पत्तिमङ्गीकृत्य, येन विकलेभ्योऽपि कदाचित्कार्यजन्मसम्भावनायां प्रत्यक्षानुपलम्भविरोधः स्यात्, (२)किं नाम, बीजादिषु समवहितेष्ववान्तरजातिविशेषमाश्रित्यापि कार्यजन्म सम्भाव्यत इति"।

शेष इति । बीजविरह इति । सहकारितुल्यन्यायत्वादिति भावः । प्रत्यक्षेति । अन्वयव्यतिरेकपरिशुद्धिरिति ।

परस्परसमवधानवतामेवेति । अवान्तरजात्यनाक्रान्तानामेवेत्यर्थः । समवधानानियमादिति । सर्वत्र सम्भवादित्यर्थः । यत्र तत्रेति । समवधानासमवधानयोरुभयत्राप्यवान्तरजात्याक्रान्तोत्पत्तिमित्यर्थः । अवान्तरजातीति । ततश्च न सर्वेषां समानशीलता

---

स्यैव तदधीने फलापधानानुपधाने इति कथमेकशीलत्वं येन बीजत्वेनैव कारणता सिद्धान्त्यभिप्रेता निर्विवादं सिद्ध्येदित्यभिप्रायेणाह पूर्वपक्षी समर्थ एवेति । तथाच नसमानशीलत्वमिति भाव इति दीधितिः ।

(१) ननु नियतान्वयव्यतिरेकाभ्यां बीजजातीयस्याङ्कुरं प्रति सामर्थ्यमेवावधृतं तच्च न बीजत्वेन समर्थस्य क्षेपायोगात्कुशूलस्थादेरपि बीजादङ्कुरोत्पादप्रसक्तेः, परन्तु बीजत्वावान्तरकुर्वद्रूपत्वेन, समर्थानां च स्वकारणसामर्थ्याधीनः समाजनियमः प्रमाणबलादेव कल्प्यते, एकाविरहेऽपरस्मात्कार्योत्पादे तस्याकारणत्वप्रसङ्गात्, अनुत्पादे च सामर्थ्यायोगात् शिलादिमिलितास्तु बीजविरहिणः क्षित्यादयो न समर्थाः कार्याजनकत्वादित्याशयेनाशङ्कते स्यादेतदिति । आशङ्क्यत इति, क्षणिकत्वमिति शेषः । एकरसता एकस्वभावता ।

(२) किं नामेति । बीजत्वं वा कारणतावच्छेदकं कुर्वद्रूपत्वं वा तथेति सन्दिह्यत इत्यर्थ इति मिश्राः ।

(१)न, दृष्टसमवधानमात्रेणैवोपपत्तौ तत्कल्प प्रमाणाभावात्[१], कल्पनागौरवप्रसङ्गप्रतिहतत्वा अतीन्द्रियेन्द्रियादिविलोपप्रसङ्गात[३], विकल्पा सेः[४], विशेषस्य विशेषं प्रति प्रयोजकत्वाच्चेति[५]. हि उत्पत्तेरारभ्य मुद्गरप्रहारपर्यन्तं घटस्तावज्जात्य नाक्रान्त एवानुभूयमानः क्रमवत्सहकारिवैचित्र्य र्यकोटीः सरूपा विरूपाः करोति, तत्रैतावतैव सर्व न्समञ्जसे अनुपलभ्यमानजातिकोटिकल्पना(२) प्रमाणेन[१], केन वोपयोगेन, येन कल्पनागौरवप्र दोषो न स्यात्। 'यो यदर्थं कल्प्यते तस्यान्यथानि

स्यादित्यभिप्रायः। प्रथमं हेतुं विवृणोति तथा हीति।

क्रमवत्सहकारिवैचित्र्यादिति। क्रमवद्ग्रहणेन ततः र्यकरणसमर्थस्य कार्यकरणयौगपद्यपक्षो निरस्तः। वैचित्र्यग्रहणेनैक यस्यापि कारणस्य विचित्रकार्यकरणमुपपादितम्। जातिकोटिकल मिति। कार्यकोटिसिद्ध्यर्थमिति शेषः। द्वितीयं हेतुं विवृणोति वोपयोगेनेति। अतो न केवलः प्रमाणाभावः, उपयोगाभावेन नागौरवप्रसङ्गप्रतिकूलतर्कप्रतिघातोऽपि भवेदित्यर्थः। ननु कार्यवैचि जातिवैचित्र्ये प्रमाणं तत्सिद्धिरेव वोपयोग इति चेत्तत्राह यो य

(१) बीजत्वेन सामर्थ्येऽपि सहकारिविरहादेव क्षेप उपपद्यत शयवान्निराकरोति नेत्यादिना। तत्कल्पनायां-कुर्वद्रूपत्वकल्पनाय

(२) कल्पनमिति नारायणाभिमतः पाठोऽत्र द्रष्टव्यः। यतो द्रूपत्वरूपजात्यन्तरानाक्रान्त एव घट उपलभ्यते अतस्तत्सद्भावे न णमन्वयव्यतिरेकविषयीभूतबीजत्वघटत्वादिनैव कार्यसम्भवात् प्रथमहेत्वभिप्रायः। 'केन वे'त्यादिग्रन्थमारभ्य द्वितीयहेतुविवरणं रायणमते, मिश्रमते तु 'यो यदर्थमि'त्यादिग्रन्थमारभ्य 'भवानेवाह'त्य ग्रन्थेन। केचित्तु एतदन्तं प्रथमहेतुविवरणमित्याहुः। बीजत्वेनैव क्षसिद्धे नाङ्कुरकारणतावच्छेदे सम्भवति तदर्थमतीन्द्रियजातिकल्पः सम्भवतीति द्वितीयहेत्वर्थो द्रष्टव्यः।

रेव तस्याभाव' इति भवानेवाहेति[२]। दृष्टं च जाति-भेदं तिरस्कृत्य स्वभावभेदकल्पनयैव कार्योत्पत्तौ सहकारिणोऽपि दृष्टत्वात्कथञ्चित्स्वीक्रियन्ते, (१)अतीन्द्रिया-दिकल्पना तु विलीयेत मानाभावात[३]।

(२)विकल्पानुपपत्तेश्च। स खलु जातिविशेषः शा-लित्वसङ्ग्राहको वा स्यात्, तत्प्रतिक्षेपको वा? आद्ये कु-शूलस्थस्यापि शालेः कथं न तद्रूपवत्त्वम्। द्वितीये त्वभि-मतस्यापि शालेः कथं तद्रूपवत्त्वम्(३)। एवं शालित्वम-पि तस्य सङ्ग्राहकं प्रतिक्षेपकं वा? आद्येऽशालेरतत्त्व-प्रसङ्गः(४), द्वितीये तु शालेरेवातत्त्वप्रसङ्गः।

---

मिति। अनन्यथासिद्धं हि कार्यमभिमतकरणकल्पनायां प्रमाणं प्रयोजनं वा भवति, प्रकृतं त्वन्यथासिद्धं 'कल्पकस्यान्यथासिद्धिरेव कल्पनीयस्याभाव' इति च भवानेव तत्र तत्राहेति, प्रत्यासत्त्या तादात्म्योपचार इति। तृतीयं हेतुं विवृणोति दृष्टमिति। स्वभावभेदकल्पना=जाति-भेदकल्पना। अतीन्द्रियेति। इन्द्रियाण्यपि बोद्धुः सहकारिण्येव ज्ञानोत्पत्तौ, तत्र च बोद्धुः स्वभावादेव ज्ञानभेदानामुत्पत्तावतीन्द्रियाणीन्द्रियाणि किमिति कल्प्यन्त इति। चतुर्थं विवृणोति विकल्पेति। शालित्वसङ्ग्राहक इति। शालित्वस्य परसामान्यमित्यर्थः। प्रतिक्षेपकः=गोत्वाश्वत्वादिवद्विरुद्ध इति। शालित्वस्यापरसामान्यं वेति पक्ष

---

(१) बाह्यालोकादेरेव कुर्वद्रूपात् साक्षात्कारोपपत्तावान्द्रियकल्पनापि न स्यादिति तृतीयहेतुरहस्यार्थः।

(२) चतुर्थं हेतुं विवृण्वन्नाह विकल्पेति। शालित्वादिना परापरभावादिविकल्पवज्जातिविशेषस्यानुपपत्तेरिति तदर्थः।

(३) कुर्वद्रूपवत्त्वम्। एवमिति। यद्यपि परस्परप्रतिक्षेपकत्वं विकल्पितमेव तथापि शालित्वं पुरस्कृत्य विकल्प्यत इति न पौनरुक्त्यम्।

(४) अतत्त्वापत्तिरिति पाठान्तरम्। शालित्वस्य कुर्वद्रूपत्वव्यापकत्वे यवादीनामङ्कुरकारित्वं न स्यादित्यर्थः। अतत्त्वप्रसङ्ग इति। अङ्कुराकुर्वद्रूपत्वापत्तिरित्यर्थः।

विशेषः कथमबीजे भविष्यतीति चेत्" तर्हि शालेर्वि शेषः कथमशालौ स्यादित्यशालेरङ्कुरानुत्पत्तिप्रसङ्गः (१)"अशालिवदबीजेऽप्यसौ भवतु विशेषः, तथापि बी जत्वैकार्थसमवेत एवासौ अङ्कुरं प्रति प्रयोजक इति चेत न, शालित्वव्यभिचारे शालित्वैकार्थसमवायवद्बीज त्वव्यभिचारे बीजत्वैकार्थसमवायेनापि नियन्तुमशक त्वात् अविशेषात्। तस्माद्यो यथाभूतो यथाभूतमात्मनं ऽन्वयव्यतिरेकावनुकारयति तस्य तथाभूतस्यैव तथाभू सामर्थ्यम् , तद्विशेषास्तु कार्यविशेषं प्रयोजयन्ति श त्यादिवीदति युक्तमुत्पश्यामः। "कस्य पुनः प्रमाणस्य

अस्तु वा जातिविशेषः, तथापि नासावङ्कुरं प्रति प्रयोज किन्तु अङ्कुरविशेषं प्रति प्रयोजक इति । बीजस्य विशेष इति कथं बीजावान्तरजातिरबीजे स्यादिति । तर्हीति । कुश त्यशालिव्याप्त्यभावाच्छालित्वस्यापि विशेषः सन् कथमशालौ स्यादि शालेरङ्कुरानुत्पत्तिप्रसङ्ग इति । यत एव बीजत्वस्याङ्कुरं प्रत्यप्रयोज त्वेऽबीजादपि तदुत्पत्तिप्रसङ्गः, तस्मात्स्वात्मनोऽन्वयव्यतिरेकावङ्कु मनुकारयेत्, ( अतो ) बीजत्वमेवाङ्कुरसमर्थं, तद्विशेषो वा भवन्न ङ्कुरविशेषस्य प्रयोजक इत्याह तस्मादिति । यतो प्रमाणाभावा ऽर्थः कस्मिंश्च न प्रमाणान्तर्भावाय, तद्बलोत्थतया तद्व्यापारत्वेन व व्यः प्रमाणमन्तरेणार्थनिश्चयानुपपत्तेः, ततोऽयं व्यापारकलापः व प्रमाणस्येति पृच्छति कस्य पुनरिति । बीजाङ्कुरादीनां तदुत्प

---

( १ ) कुर्वद्रूपत्वं यथा शालित्वव्यभिचारी तथा बीजत्वमपि भिचरतु, न चातिप्रसङ्गः, बीजत्वैकार्थसमवेतस्यैवाङ्कुरकुर्वद्रूपत्वा ङ्कुरजनकतावच्छेदकत्वादित्याशयेन शङ्कते अशालिवदिति। य शालेरङ्कुरस्तथाऽबीजादपि भवन् केन वारणीयः, अत्र यदि बी विशेषणं तदा तस्य प्रयोजकत्वमेव स्यात्, उपलक्षणं चेत्तदा तत्रानुपलक्ष्यतावच्छेदकरूपाभावादित्याशयेनेसमाधत्ते शालित्वे

यं व्यापारकलाप इति चेत्" तदुत्पत्तिनिश्चयहेतोः प्र- त्यक्षानुपलम्भात्मकस्येति ब्रूमः । अथ न्यायेन विना न ते परितोषः, शृणु तमपि तदा-(१)यदङ्कुरं प्रत्यप्रयोजकं न तद्बीजजातीयं यथा शिलाशकलम्, अङ्कुरं प्रत्यप्रयोज- कं च कुशूलनिहितं बीजमभ्युपेतं परैरिति व्यापकानुप- लब्धिः प्रसङ्गहेतुः स्यादिति । "विपर्यये किं बाधकमिति चेत्" अङ्कुरस्य जातिप्रतिनियमाकस्मिकत्वप्रसङ्ग इत्युक्त- म् । "बीजत्वं तस्य प्रत्यक्षसिद्धमशक्यापह्नवमिति चेत्" अस्तु तर्हि विपर्ययः-यद्बीजं तदङ्कुरं प्रति प्रयोजकं, यथान्त्य-

---

निश्चयहेतोरन्वयव्यतिरेकाख्यप्रत्यक्षानुपलम्भस्य व्यापारकलाप इति ब्रूम इत्याह तदुत्पत्तीति । न्यायरुचयो वयं न्यायेनानुमानेन विना न परितुष्याम इति चेदत आह अथ न्यायेनेति । व्यापकेति । बीजजातीयस्याङ्कुरं प्रति प्रयोजकत्वं व्यापकं, तदभावस्य कुशूलनिहिते बीजे परैरभ्युपगमात्तत्र व्यापकस्याभ्युपेतानुपलब्धिस्तस्य बीजजातीय- त्वाभावं प्रसञ्जयति इति प्रसङ्गहेतुः स्यादिति ।

अङ्कुरं प्रत्यप्रयोजकस्यापि बीजजातीयत्वे विपर्यये किं बाधक(२)- मिति शङ्कते विपर्यय इति । जातिप्रतिनियमेति । अङ्कुरस्यै- वाङ्कुरत्वजातिर्न घटादेरित्येवं जातिप्रतिनियमस्याकस्मिकत्वप्रसङ्गः, कार- णगता हि जातिः कार्यगतजातिनियमस्य प्रयोजिका भवति, अतस्तदभा- वे तदभावप्रसङ्ग इति । एतच्चानन्यथासिद्धान्वयव्यतिरेकाणामप्यकारणत्वे कार्यस्याकस्मिकत्वप्रसङ्ग इत्यत्रोक्तप्रायमित्युक्तम् । एतच्चानन्तरमेव स्फु-

---

(१) सौगतमतानुसारेणैव न्यायमुपदर्शयति यदिति । बीजजा- तीयं नाङ्कुरं प्रति प्रयोजकमिति त्वयाभ्युपगम्यते तदा त्वदभ्युपगमा- नुसारेण कुशूलस्थबीजस्य बीजजातीयत्वं न स्यादित्यर्थः ।

(२) अङ्कुराप्रयोजकमपि बीजं स्यादित्येवं रूपे विपर्यये किं बाध- कमित्यर्थः ।

सामग्रीमध्यमध्यासीनं बीजम्, बीजं चेदं विवादास्पद-मिति स्वभावहेतुः। अङ्कुरस्य हि जातिप्रतिनियमो न तावन्निर्निमित्तः, सार्वत्रिकत्वप्रसङ्गात्। नाप्यन्यनिमित्तः, तथाभूतस्य तस्याभावात्। सेयं निमित्तवत्ता विपक्षान्निवर्तमाना स्वव्याप्यमादाय बीजप्रयोजकतायामेव विश्राम्यतीति प्रतिबन्धसिद्धिः।

अथवा कृतमङ्कुरग्रहेण, बीजस्वभावत्वं कचित्कार्ये

---

टं वक्ष्यत इति। (१)प्रसङ्गे विपर्ययमवतारयितुं शङ्कते बीजत्वमिति। प्रतिबन्धं साधयत्यङ्कुरस्येति(२)। सार्वत्रिकत्वेति। घटादिष्वपि तत्प्रसङ्गादित्यर्थः। (३)विपक्षाद्बीजाप्रयोजकतायाः, स्वव्याप्यं जातिप्रतिनियमम्।

अथवा नाऽवश्यं बीजत्वस्याङ्कुरं प्रति प्रयोजकत्वसाधनेनैवावान्तरजातिबहिष्कारेण सहकारिलाभालाभाभ्यां करणाकरणोपपत्तिः साधनीया, यत्किञ्चित्कार्यं प्रति प्रयोजकत्वसाधनेनापि शक्यते साधयितुमित्याहाथवेति(४)। विशुद्धेति। विवेकक्षमा भवदीया बुद्धि-

---

(१) अङ्कुरस्योक्तरीत्या निर्निमित्तप्रसङ्गे। मूले तस्य-बीजस्य, अबीजे घटादौ तदभावान्नाङ्कुरोत्पादापत्तिरिति शङ्कार्थः। पूर्वोक्तं विपर्ययमङ्गीकृत्यापि बीजत्वस्य परोक्तरीत्या स्वभावहेतुत्वं साधयति अस्तु तहीति मूले।

(२) उक्तमाकस्मिकत्वप्रसङ्गं प्रपञ्चयति अङ्कुरस्य हीति मिश्राः। निर्निमित्तत्वं-नियतजातीयकारणाप्रयोज्यत्वम्। सार्वत्रिकत्वं-अङ्कुरातिरिक्तवृत्तित्वम्, अङ्कुरत्वं यदि बीजत्वावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं न स्यादङ्कुरमात्रवृत्तिजातिर्न स्यादित्यर्थः। मूले नाप्यन्येति। कुर्वद्रूपनिमित्त इत्यर्थः। तथाभूतस्य=अङ्कुरमात्रनियामकस्य। अभावात्=अप्रामाणिकत्वात्।

(३) निर्निमित्तादिति कल्पलता। मूले प्रतिबन्धेति। यद्यद्बीजन्तत्तत्सर्वमङ्कुरप्रयोजकमिति व्याप्तिसिद्धिरिति भावः।

(४) अङ्कुरत्वावच्छिन्नकार्यं प्रति बीजानां बीजत्वेनैव कारणतेति

प्रयोजकम् न वा ? न चेत् न तत्स्वभावं बीजम्, तेन रूपेण क्वचिदप्यनुपयोगात् । एवञ्च प्रत्यक्षसिद्धं बीजस्वभावत्वं नास्ति, सर्वप्रमाणागोचरो विशेषोऽस्तीति विशुद्धा बुद्धिः । क्वचिदप्युपयोगे त्वेकस्य(१) तेन रूपेण सर्वेषामविशेषः ताद्रूप्यात्, तथा च कथं किञ्चिदेव बीजं स्वकार्यं कुर्यान्नापराणि । न च वस्तुमात्रं तत्कार्यम्, अबीजात्तदनुत्पत्तिप्रसङ्गात् । नापि बीजमात्रम्, अङ्कुरकारिणोऽपि तदुत्पत्तिप्रसङ्गात् । नाप्यङ्कुराद्यन्य-

---

रित्यर्थः । पक्कस्य बीजस्यानेन बीजरूपेण क्वचित्कार्ये उपयोगोऽस्तीति चेत्तमाह **क्वचिदिति** । **अविशेष इति** । उपयोगित्वेनाविशेषः । ताद्रूप्यात्=बीजरूपत्वादिति । सर्वाण्येव कार्यकारिणीति चेत्तत्राह **नचेति** । तदपि च कार्यं न वस्तुमात्रं वा पार्थिवमात्रं वा, मात्रशब्देन बीजमात्रान्वयव्यतिरेकानुविधाय्यङ्कुरावान्तरकार्यं व्यवच्छिनत्ति, अबीजात्तदनुत्पत्तिप्रसङ्गात(२), नहि बीजकारणकं वस्त्वादिमात्रं कार्यं कारणाभावे भवितुमर्हतीति । (३)**नापीति** । क्षणभङ्गवादिनामसमवहितसहकारिणो बीजाद्बीजान्तरमेवोत्पद्यत इति सिद्धान्तः, अतस्तन्मतेनेदमुच्यत इति । **अङ्कुरेति** । अङ्कुरकारिणः सहकारिमध्यवर्त्तिनोऽपि बीजस्यै-

---

किं विशिष्य व्यवस्थापनग्रहेण प्रकारान्तरेणापि परिशेषादिना तथैव पर्यवस्यतीति, बीजत्वेन क्वचित्कार्ये बीजं यदि प्रयोजकं न भवेत् तदा तेन रूपेण तदसत्त्वस्यादिति, तच्च कार्यं परिशेषादङ्कुरस्वरूपमेव सेत्स्यतीति प्रघट्टकार्थः ।

( १ ) क्वचिदुपयोगेप्येकस्येति क० मु० पाठः ।

( २ ) बीजासमवधाने घटपटाद्यपि न स्यादिति भावः ।

( ३ ) ननु बीजाद्बीजमेव कार्यमस्तु, सभागसन्तानस्यैव मया क्षणिकत्ववादिनाऽभ्युपगमादित्यत आह नापीति । तर्हि चरमादपि बीजाद्बीजमेवोत्पद्येत नाङ्कुरः, अङ्कुरस्योत्पादे वा समानदेशताविरोधः, बीजसन्तानानुपरमः, प्राथमिकबीजानुत्पत्तिश्चेति भावः ।

त्वमात्रम्, प्रागपि तदुत्पत्तिप्रसङ्गात्। "यदा यदुत्पन्नं सत् यत्कार्यानुकूलसहकारिमध्यमाधिशेते तदा तदेव कार्यं प्रति तस्य प्रयोजकत्वमिति चेत्" तत्किमवान्तर-जातिभेदमुपादाय बीजस्वभावेनैव वा? आद्ये स एव जातिभेदस्तत्र प्रयोजकः, किमायातं बीजत्वस्य। द्विती-ये तु समानशीलानामपि सहकारिवैकल्यादकरणमि-त्यातम्, तत्तत्सहकारिसाहित्ये सति तत्तत्कार्यम्प्रति-प्रयोजकस्य बीजस्वभावस्य सर्वसाधारणत्वादिति।

अत्रापि प्रयोगः-यद्येन रूपेणार्थक्रियासु नोपयु-ज्यते न तत् तद्रूपम्, यथा बीजं कुञ्जरत्वेन किञ्चिदप्य-कुर्वन्न कुञ्जरस्वरूपम्, तथाच शाल्यादयः सामग्रीप्रवि-ष्टा बीजत्वेनार्थक्रियासु नोयुज्यन्त इति व्या[६]पकानु-

---

वोत्पत्तिप्रसङ्गादित्यर्थः(१)। प्रागपीति। बीजवदेव सहकारिणः प्रागप्य-ङ्कुरादिकार्योत्पत्तिप्रसङ्गादिति(२)। आयातमिति(३)। तथाच तद्वा तादृग्वेति न कश्चिद्विशेषः।

व्यापकानुपलब्धिरिति। तद्रूपतां प्रति तेन रूपेणार्थक्रियां

---

(१) ननु बीजमङ्कुरो बीजानुभवश्चेति कार्याणि बीजत्वावच्छिन्नकारणाज्जायन्तामित्यत आह नापीति मूले। प्रागपीति। तदुत्पन्न-मात्रादपि बीजादेतानि कार्याणि स्युरिति मिश्राः।

(२) सहकारिसमवधानं शङ्कते मूले यदेति। अवान्तरजातिभे-दोऽङ्कुरकुर्वद्रूपत्वादि। आद्य इति। बीजत्वेन बीजानि क्वचित्कार्ये प्रयोजकानीति प्रस्तुते जात्यन्तरमतन्त्रमनुपलम्भबाधितं चेति भाव इति कल्पलता।

(३) मूले द्वितीय इति। एवं सत्यङ्कुरमपि प्रति बीजत्वेनैव का-रणत्वमायातमिति सिद्धं नः समीहितमिति मिश्राः। तदेवोक्तं ना-रायणेनापि, बीजत्वेन तदेव बीजं कारणं नतु क्षणभेदभिन्नं तत्सजा-तीयमिति।

लब्धिः प्रसङ्गहेतुः, तद्रूपताया अर्थक्रियां प्रति योग्य-
या व्याप्तत्वात् , अन्यथाऽतिप्रसङ्गात् ।

(१)"तद्रूपत्वमेतस्य प्रत्यक्षसिद्धत्वादशक्यापह्नव-
मिति चेत" अस्तु तर्हि विपर्ययः-यद्यद्रूपं तत् तेन रूपे-
णार्थक्रियासूपयुज्यते, (२)यथा स्वभावेन सामग्रीनिवे-
शिनो भावाः, बीजजातीयाश्चैते कुशूलस्थादय इति
स्वभावहेतुः, तद्रूपतामात्रानुबन्धित्वाद्योग्यतायाः, तत-

ते प्रयोजकत्वस्य व्यापकत्वात्तदभावश्चेत्प्रकृतेऽभिमतस्ततो (३)व्याप
कानुपलब्ध्या तद्रूपताभावप्रसङ्गादित्यर्थः । व्यापकत्वमेव प्रयोजकत्वस्य
र्शयति तद्रूपताया इति । अतिप्रसङ्गादिति । बीजस्यापि(४)
ङ्कुरत्वप्रसङ्गादिति ।

स्वभावेनेति । सामग्रीनिवेशिनां यः स्वभावो जातिविशेषो
ऽन्यो वा तेनेत्यर्थः । स्वभावमेव दर्शयति तद्रूपतामात्रेति ।
त्रशब्देन हेत्वन्तरं व्यवाच्छिनत्ति, तद्रूपत्वं स्वभावत एव योग्यतयाऽ-

---

(१) ननूक्तरीत्या तद्रूपताया अर्थक्रियां प्रति योग्यतया व्याप्त-
ङ्गीकारे कुशूलस्थस्यापि बीजस्य तज्जातीयताया अनुभवसिद्धत्वा-
मादपि अङ्कुरोत्पादः स्यादित्यभिप्रायेणाशङ्कते तद्रूपत्वमिति । कु-
स्थं बीजं बीजजातीयत्वेनैवार्थक्रियाप्रयोजकं बीजत्वात्, यन्नैवं
वं यथा कुञ्जर इति व्यतिरेकिप्रयोगः पूर्वपक्षिमतेनेष्टव्यः ।

(२) त्वयापि कुर्वद्रूपत्वजातेरङ्कुरप्रयोजकतायामेवं प्रयोक्तव्यमि-
ह सिद्धान्ती यथा स्वभावेनेति । कुर्वद्रूपत्वेनेत्यर्थः । तथाहि साम-
ग्र्यगतं बीजमङ्कुरकुर्वद्रूपत्वजातीयम् अङ्कुरप्रयोजकत्वाद्यन्नैवं त-
 यथा शिलाशकलमिति भावः । स्वानुमाने उपनयावयवमाह बीज-
तीयाश्चैत इति कल्पलता। कुशूलस्थबीजस्य बीजजातीयत्वेऽपि सह-
र्यसन्निधानाभावान्नाङ्कुरोत्पादापत्तिरिति समाधानाभिप्रायः ।

(३) व्यापकेति । तज्जात्यवच्छेदेनार्थक्रियाकारित्वं तज्जातीयत्व-
पकम् , तस्यानुपलब्धिस्तद्विपरीतोपलब्धिस्तदभ्युपगमेनेत्यर्थः ।

(४) अन्यथेति मूले । अन्यथा बीजमपि कुञ्जरजातीयं स्या-
ते कल्पलता ।

अस्ति किंचित्कार्यं यत्र बीजत्वेन बीजमुपयुज्यत इति। (१)"बीजानुभव एवासाधारणं कार्यं यत्र बीजत्वं प्रयोजकं तच्च सर्वस्मादेव बीजाद्भवतीति किमनुपपन्नम् इति चेत्" न, यौगिकतदनुभवस्य तदन्तरेणाप्युपपत्तेः। "लौकिक इति चेत्" सत्यमेतत् नत्विदमवश्यं सर्वस्माद्बीजाद्भवति इन्द्रियादिप्रत्यासत्तेरसदातनत्वात्, असार्वत्रिकत्वाच्च, ततश्च योग्यमपि सहकार्यसान्निधानान्न करोतीत्यर्थसिद्धम् ।

---

न्वितमित्यर्थः। बीजानुभव एवेति। एवकारेणाङ्कुरं व्यवच्छिनत्ति, तस्य जातिविशेषप्रयोज्यत्वस्येष्टत्वादिति । तदन्तरेणाप्युपपत्तेरिति। योगिनां बीजानुभवो न बीजेनैव क्रियते तेषामतीतानागतेष्वपि वस्तुषु तत्तदनुभवस्येष्टत्वात् बीजाभावेऽपि बीजानुभवोत्पत्तेरिति(२)। इन्द्रियादीति। इन्द्रियादिप्रत्यासन्नं बीजं लौकिकमनुभवं जनयति, न चेन्द्रियादिप्रत्यासत्तिः सर्वदेशकालवर्तिषु बीजेषु सम्भवति अस्या असदाभवत्वादसार्वत्रिकत्वाच्चेति। ततश्च सर्वं बीजं बीजानुभवकरणयोग्यमपि सहकार्यसन्निधाने न करोतीत्यर्थसिद्धं भवति। तथाहि सर्वबीजकार्यं बीजानुभव इत्युक्ते इन्द्रियादिप्रत्यासत्तिविकलानां तदकरणायोग्यानामपि सहकारिविकलानामकरणमित्येतत्कण्ठतोऽनुक्तमप्यर्थतः सिद्धं भवति, (३) ततश्च समर्थस्याप्यकरणोपपत्तेः सामर्थ्यासामर्थ्यलक्षणाविरुद्धधर्माध्यासो विरुद्ध इति भावः।

सहकार्यनपेक्षं सर्वबीजाव्यभिचार्यतीन्द्रियं कार्यं भविष्यतीति शङ्कते

---

(१) तदेवं सामान्यतःसिद्धौ बीजत्वेनाङ्कुरंप्रति प्रयोजकत्वसाधनाय परिशेषमुपक्रममाणः शङ्कते बीजानुभव एवेति अनुभवो निर्विकल्पकमिति मिश्राः।

(२) योगिप्रत्यक्षं न विषयजन्यमिति भावः।

(३) ननु यद्बीजमिन्द्रियप्रत्यासन्नं तन्निर्विकल्पकं जनयत्येवेत्यत आह ततश्चेति। एवमपि स्थैर्यसिद्धिरव्याहतैवेति तात्पर्यम्।

"कार्यान्तरमेवातीन्द्रियं सर्वबीजाव्यभिचारि भविष्य
ोति चेत्" तन्न तावदुपादेयम्, अमूर्तस्य मूर्तानुपादेय-
त्वात्, परिदृश्यमानमूर्तघटिततया मूर्तान्तरस्य तद्देशस्या-
पपत्तेः । नापि सहकार्यम्, मिथःसहकारिणामव्याभि-
ारानुपपत्तेः । अपि चैवंसति प्रयोजकस्वभावो नान्व-

ार्यान्तरमिति । योग्यानुपलब्धिविरोधं परिहरति अतीन्द्रिय-
ोति । ततश्च सर्वबीजाव्यभिचारात्समर्थस्यैवाकरणं न सिद्ध्येदिति
वः । तदपि कार्यमुपादेयं सहकार्यं वेति विकल्प्योपादेयत्वं निषेधति
न्न तावदिति । कथमित्याशङ्क्य, तदपि मूर्तममूर्तं वेति विकल्प्या-
र्त्वे दूषणमाहामूर्तस्येति । नह्यमूर्तस्य (१)कार्यद्रव्यस्य मूर्तबीजो-
देयत्वं सम्भवति गुणकर्मात्मकं त्वमूर्तमुपादेयं बीजमात्रसाधारणं न
िञ्चित्सम्भवतीत्यभिप्रायः । मूर्तत्वे दूषणमाह (२)परिदृश्यमानेति ।
)सहकार्यं कार्यं दूषयति नापीति । सहकार्यस्य हि तस्य बीजाव्य-
चारः स्यात्स चानुपलब्धिविरोधान्नोपपद्यते इति । अपि च दृश्यस्य
जजातीयस्यादृश्यमेव कार्यम्, दृश्यमङ्कुरादि अदृश्येनैव विशेषेणेव
ियत इति यदि स्यात्, अयमेवान्वयव्यतिरेकगोचरस्तस्य कारणत्वं
कम्, तद्गोचरस्य तु प्रमाणाभावादेव कारणत्वं न सिध्यतीत्युभयं
येदित्याह (४)अपि चेति ।

(१) एतच्च बौद्धमतेन, तेषां रूपाद्यतिरिक्तस्य द्रव्यस्याभावाद्रू-
ादेव मूर्तत्वात् इति दीधितिः ।

(२) परिदृश्यमानो मूर्तोऽङ्कुरः, तथा चाङ्कुरेण तस्य कार्यस्य
ानदेशत्वं प्रसज्ज्येतेत्यर्थः ।

(३) सहकारिसमवहितबीजत्वावच्छिन्ननिमित्तकारणजन्यम् ।
ुपलब्धीति । सकलबीजेषु सहकारिसमवधानध्रौव्याभावादिति
ः । नहि सर्वेषां सहकारिणामेकं किञ्चित्सार्वत्रिकं कार्यमिति
ामोऽस्तीत्यर्थः ।

(४) वैजात्याभ्युपगमेऽनिष्टान्तरमाहापि चेति भगीरथठक्कुरः ।

यव्यतिरेकगोचरः, तद्गोचरस्तु न प्रयोजकः, दृश्यं च कार्यजातमदृश्येनैव स्वभावेन क्रियते, दृश्येन त्वदृश्यमेवेति, सोऽयं 'यो ध्रुवाणी'त्यस्य विषयः ।

अथवा व्यतिरेकेण प्रयोगः—विवादाध्यासितं बीजं सहकारिवैकल्यप्रयुक्ताङ्कुरादिकार्यवैकल्यं तदुत्पत्तिनिश्चयविषयीभूतबीजजातीयत्वात्, यत्पुनः सहकारिवैकल्यप्रयुक्ताङ्कुरादिकार्यवैकल्यं न भवति न तदेवम्भूतबीजजातीयं,यथा शिलाशकलमिति । "न च किमुक्तसाध्यव्यावृत्तेरुक्तसाधनव्यावृत्तिरुदाहृतात्(१) किं वा पर-

---

यो ध्रुवाणि परित्यज्य अध्रुवाणि च सेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥ इति ।

एवमन्वयमुखेन बीजस्याङ्कुरप्रयोजकत्वमुक्तमिदानीं व्यतिरेकमुखेनाहाथवेति । विवादाध्या(२)सितमित्यनेनादृष्टशक्तिकं कुर्वच्च बीजं व्यवच्छिनत्ति । तदुत्पत्तिनिश्चयेत्यनेनापि तदेव व्यवच्छिद्यानैकान्तिकत्वं

---

प्रयोजकः स्वभाव इति तन्मतेन पाठः । प्रयोजकः कारणतावच्छेदकः स्वभावः कुर्वद्रूपत्वम् । तद्गोचरो—अन्वयव्यतिरेकगोचरो, बीजत्वं न कारणतावच्छेदकं, दृश्यं कार्यमङ्कुराख्यमदृश्येन वैजात्येन, दृश्येन बीजत्वेन अदृश्यं कार्यान्तरम्, तथा च वैजात्यमपि न सिद्ध्येत, दृश्यादृश्ययोः कार्यकारणभावे प्रत्यक्षाभावेऽनुमानस्याप्यभावात् । वृद्धिमिच्छतो मूलमपि नश्येदित्यर्थः ।

(१) उदाहृतादिति । शिलाशकलादित्यर्थः । बीजं परम्परयापि कुर्वद्रूपं बीजं जनयति न तु शिलाशकलं तथा च व्यतिरेकव्याप्तिसन्देह इत्यर्थः, अन्यथासिद्धेरिति भावः ।

(२) क्षेत्रपतितबीजभागबाधवारणार्थं तदिति मिश्राः । मूले सहकारीति । सहकारिवैकल्यप्रयुक्तमङ्कुरादिरूपकार्यवैकल्यं यस्येति बहुव्रीहिः । प्रयुक्तं परिपालितं तदुत्तरकालसम्बन्धीकृतं कार्यवैकल्यं कार्यप्रागभावः दण्डादीनामपि निमित्तकारणानां कथञ्चित्कार्यप्रागभावनिरूपणात् ।

न्परयापि तथाविधप्रसवसामर्थ्यविरहादिति व्यतिरेक-सन्देह इति वाच्यम्" । प्रागेव शङ्काबीजस्य निराकृततत्वादिति ।

"स्यादेतत्, मा भूत्(१) सामर्थ्यासामर्थ्यलक्षणाविरुद्धधर्मसंसर्गः, अस्तु बीजत्वमेव प्रयोजकम्, भवतु च सहकारिसमवधाने सति कर्तृस्वभावत्वं भावस्य, तथाच तदसन्निधानेऽकरणमप्युपपद्यताम्, तथापि तज्जातीयमात्र एवेयं व्यवस्था न त्वेकस्यां व्यक्तौ, करणाकरणलक्षणाविरुद्धधर्मसंसर्गस्य प्रत्यक्षसिद्धतया तत्र दुर्वारत्वादिति चेत्" ।

न, विरोधस्वरूपानवधारणात् । स खलु धर्मयोः परस्पराभावरूपत्वं वा स्यात् नित्यत्वानित्यत्ववत्, धर्मिणि

---

परिहरति, नहि नष्टशक्तिकं बीजं तदुत्पत्तिनिश्चयाविषय(२) इति भावः ।

प्रागेवेति । 'कदा पुनस्तथाभूतं करिष्यती'त्यत्र निराकृतत्वादित्यर्थः ।

इदानीं क्षणिकत्ववादी कुर्वतः क्षणान्तरवर्तिनोऽकुर्वतो जातिभेदं विहाय व्यक्तिभेदमात्रमाह स्यादेतदिति । प्रत्यक्षासिद्धतयेति । न हि सामर्थ्यासामर्थ्यवत् प्रत्यक्षागोचरत्वं करणाकरणयोः येन तत्संसर्गस्यासिद्धत्वं स्यादिति भावः ।

नित्यत्वानित्यत्ववदिति । नित्यत्वाभावो ह्यनित्यत्वमनित्यत्वाभावश्च नित्यत्वमिति भावः(३) । धर्मिणीति । यत्र धर्मिणि एक-

---

(१) कुशूलस्थस्यापि बीजत्वेन सामर्थ्यस्यैव साधनादिति भावः । अनेन कुर्वद्रूपत्वाकुर्वद्रूपत्वलक्षणविरुद्धधर्माध्यासो नात्रेति सूचितम् । भवतु चेति । तथा च क्षेपकारित्वाक्षेपकारित्वलक्षणोऽपि न विरुद्धधर्माध्यास इति मिश्राः ।

(२) कार्यकारणभावनिश्चयविषयः ।

(३) तथा करणाकरणयोः परस्परविरहरूपत्वमित्यर्थः ।

**तदापादकत्वं वा शीतोष्णत्ववत्, तद्वत्ता वा दण्डित्वकुण्डलित्ववत्। न प्रथमः, निर्विशेषणस्यासिद्धेः, यावत्सत्त्वं किञ्चित्करणात्। सविशेषणस्य तु विरोधसिद्धावप्यध्यासानुपपत्तेः। यदा यदकरणं हि तदा तत्करणस्याभावो न त्वन्यदा तत्करणस्य, न चैतयोरेकधर्मिसमावेशमातिष्ठामहे।**

तयो धर्मौ वर्तेते तत्र परस्पराभावापादकत्वं वेत्यर्थः(१)। **तद्वत्ता वेति**। परस्पराभाववत्त्वं वा इतरेतराभाववत्त्वं वेत्यर्थः। **निर्विशेषणस्येति**। अस्यास्मिन्काले देशे वा करणमिति देशकालकार्यविशेषाविशिष्टस्याकरणमात्रस्यासिद्धेरित्यर्थः(२)। मा भूदविशिष्टमकरणमुदाहरणं विशिष्टमेवोपादीयते इति चेत्तत्राह **सविशेषणस्येति**। सविशेषणस्य(३) त्वकरणस्य तादृग्विशेषणविशिष्टेन करणेन तदभावात्मकत्वलक्षणो विरोधः, न चैतयोः करणाकरणयोरेकधर्मिसमावेशमभ्युपगच्छामः, अतादृग्विशेषणविशिष्टेन तु विरोधाभावादध्यासोऽपि नानुपपन्न इति भावः। अक्षरार्थस्तु सविशेषणस्य येन सहाध्यासः न तेन विरोधसिद्धिः, येन तु विरोधसिद्धिः न तेन सहाध्यास इति। अभिप्रायं विवृणोति **यदा यदकरणमिति**। यस्मिन्काले यस्य कार्यस्य करणं तस्मिन्नेव काले तत्करणस्याभाव अतस्तयोरेव परस्पराभावरूपत्वविरोधः। न चैतयोरेकधर्मिसमावेशमेकदाऽभ्युपगच्छामः न तु कालान्तरे तत्करणं कालान्तरे तत्करणस्याभावः, अतस्तयोर्विरोधाभावादेकधर्मिसमावेशो नानुपपन्न इति।

---

(१) यथा शैत्यं जले औष्ण्याभावापादकमौष्ण्यं च तेजसि शैत्याभावापादकमित्यर्थः।

(२) अकरणत्वमात्रस्य बीजव्यक्तावसिद्धेः, तदेवाह यावदिति। अन्ततः संयोगादेरपि जननादित्यर्थ इति कल्पलता।

(३) यदा तदेति विशेषणविशिष्टस्येत्यर्थस्तदेवाह यदेति मूले। अनयोर्विरोधसम्भवेऽप्यध्यासो नास्तीत्याह न चेति। न हि यद्बीजं यदैवाङ्कुरं करोति तदैव न करोतीति सम्भवतीति भावः।

न द्वितीयः, भावाभावव्यतिरिक्तयोः करणाकरणयोरसिद्धेः, व्यापारापरव्यपदेशसहकारिभावाभावौ हि करणाकरणे कार्यभावाभावौ वेति । अतिरेकसिद्धावपि स्वकाल एव स्वाभावप्रतिक्षेपवत् अकरणाभावमाक्षिपेत् करणं न त्वन्यदा । नहि यो यदा नास्ति स

---

भावेति । भावः करणन्तदभावोऽकरणमतः स्वयमेव करणाभावात्मकं सदकरणं कथं तदभावमापादयेत्, तर्हि तदेवापाद्यमापादकं च सम्भवति, एवं करणस्याप्यकरणाभावापादकत्वं निरसनीयम्(१) । भावाभावात्मकत्वमेव कथं करणाकरणयोरित्यत्राह व्यापारेति । कार्येति । (२)लक्षणावृत्त्येत्येतदुच्यत इति । (३)अतिरेकेति । करणाकरणयोर्भावाभावव्यतिरेकसिद्धावपि स्वकाल एव करणं यथा स्वाभावं प्रतिक्षिपति तथा विरोध्यभावमपि तदानीमेवाक्षिपति, स्वाभावप्रतिक्षेपविरोध्यभावाक्षेपयोस्तुल्ययोगक्षेमत्वात्, ततः कालान्तरेऽकरणस्याभावमनाक्षिपन् करणं न कालान्तरे तदकरणं विरुन्ध्यादिति भावः । अभावप्रतिक्षेप एव कथं स्वकाल एवेति चेत्तत्राह नहीति । सर्वदा

---

(१) परस्परविरहव्याप्यत्वं विरोधिरूपयोः सम्भवत्यपि प्रकृते करणाकरणयोर्न तादृशत्वमित्यर्थ इति मिश्राः । भावाभावेति । अभेदे आक्षेप्याक्षेपकभावानुपपत्तेरिति दीधितिः ।

(२) करणपदं कार्यभावे उपचरितमिति भावः ।

(३) अभ्युपगम्याह अतिरेकेति । यथा घटः स्वावच्छिन्न एव काले स्वाभावं प्रतिक्षिपति न तु स्वानवच्छिन्नेऽपि काले, तथा करणमपि स्वावच्छिन्न एव काले स्वविरोधिनोऽकरणस्याभावमाक्षिपेन्न तु स्वानवच्छिन्नेऽपि काले, नहि नैल्यं स्वाकालेऽपि रक्तत्वाभावमाक्षिपति तथात्वे श्यामो घटः पाके सत्यपि रक्तो न स्यादित्यर्थः । मूले तथासतीति । स्वानवच्छिन्नेऽपि काले यदि स्वाभावं प्रतिक्षिपेत्तदा यदा न स्यात्तदैव स्यादित्यायातम्, यदा स्वयं न स्यात्तदा तद्विरोध्यपि न स्यादिति स्वयमेव स्यादिति विचित्रो विरोध इत्यर्थः । ततः किमित्यत आह नासत इति । तथाच क्षणिकत्वसाधने प्रवृत्तस्य तव नित्यत्वमेव भावानां पर्यवसितमिति भावः ।

तदा स्वाभावं प्रतिक्षेप्तुमर्हतीति,विरोध्यभावं वा आ-क्षेप्तुम्, तथासति न कदापि तत्र स्यात्, न वा कदापि तद्विरोधी भवेदिति 'नासतो विद्यते भावो नाभावो विद्यते सत' इत्यायातम्, न वा विरोधः ।

"नन्वेवंसति परिमाणभेदोऽपि कालभेदेन न विरुध्येत, तत्राप्येवं वक्तुं सुकरत्वात्"। न, बाधकबलेन तत्र कालभेदस्य विवक्षितत्वात्, तथाहि-नारब्धद्रव्यैरेव द्रव्यावयवैर्द्रव्यान्तरमारभ्यते मूर्त्वत्वसमानदेशत्वयोरेकदा विरोधात्,तथा चारम्भपक्षे पूर्वद्रव्यनिवृत्तिः, अनिवृत्तावनारम्भ इति । तत्र निवृत्तावाश्रयभेदादेव परि-

स्वाभावप्रतिक्षेपे सतो न कदाचिदभावः स्यात्सर्वदा स्वविरोधाभावाक्षेपेऽसतो न कदाचिद्भावः स्यादिति । न वा विरोध इति । कालान्तरे स्वभावेन स्वविरोधिना च सह विरोधो न स्यादिति ।

(१)तत्राप्येवमिति। तदा तत्परिमाणस्य तदा अतत्परिणामे न विरोध इत्येव वक्तुं सुकरत्वादिति । कालभेदस्येति । कालभेदवत्यपि परिणामभेदो धर्मिभेदाभावे विरुद्ध्यत इत्यर्थः। बाधकमाह तथाहीति। अयमर्थः-तैरेवावयवैर्द्रव्यान्तरोत्पत्तिकाले संयोगिद्रव्यान्तरोपचयकाले वा तावत्परिमाणान्तरोपलब्धिः न त्वन्यदा, तत्र द्रव्यान्तरारम्भे मूर्त्वत्वसमानदेशत्वयोरेकत्र विरोधान्नारब्धद्रव्यैरेवावयवैर्द्रव्यान्तरमारभ्यत इति पूर्वद्रव्यनिवृत्तिः तत्राश्रयभेदादेव परिमाणभेदोपलम्भः(२), अनिवृत्तौ त्वार-

(१) ननु स्थिरस्य कालभेदेनैव करणत्वाकरणत्वयोः स्वीकारे दीर्घत्वह्रस्वत्वे परिमाणे अपि कालभेदेन विरुद्धे न स्यातां तथाच कालादिप्रत्यभिज्ञापि प्रमैव स्यादित्यभिप्रायेण बौद्धः शङ्कते मूले नन्वेवमिति ।

(२) अविनष्टे पूर्वद्रव्ये यदि तेष्वेवावयवेषु द्रव्यान्तरोत्पादस्तदा मूर्तयोः समानदेशत्वापत्त्या पूर्वद्रव्यनिवृत्तावेव द्रव्यान्तरोत्पादः स्वीकार्यः इति भावः ।

माणभेदः, अनिवृत्तौ संयोगिद्रव्यानुपचये क परिमाण-भेदोपलम्भो यो विरोधमावहेत्, तदुपचये तु क परिमा-णान्तरोत्पत्तिः आश्रयानुपपत्तेः, अत एव स्थौल्याति-शायप्रत्ययोऽपि तत्र भ्रान्तः, तस्मात् कालभेदेनापि न परिणामभेद एकस्मिन्धर्मिण्युपसंहर्तुं शक्यत इत्यादि पदार्थचिन्ताचतुरैः सह विवेचनीयम् ।

"अस्तु तर्हीहापि बाधकं बलम् प्रसङ्गतद्विपर्यययो-रुक्तत्वादिति चेत्" न, तयोः सामर्थ्यासामर्थ्यविषयत्वा-

म्भाभावात्संयोगिद्रव्यान्तरोपचयादेव परिमाणभेदोपलम्भो वक्तव्यः, न च तत्र परिमाणान्तरोत्पत्त्युपपत्तिः (१)आश्रयानुपपत्तेः, न ह्यनेकद्रव्याश्रयं परिमाणं सम्भवतीति । कथं तर्हि परिमाणान्तरानुत्पादे तत्र स्थौल्याद्या-शयप्रत्ययः(२), तत्राह अत एवेति । आश्रयानुपपत्तेः परिमाणान्तरो-त्पत्त्यसम्भवादेवेत्यर्थः । पदार्थचिन्ताचतुरैः=वैशेषिकैः ।

प्रसङ्गेति । 'समर्थश्चेत्सर्वदा कुर्यादि'त्युक्तत्वान्न कालभेदेनापि करणाकरणयोराविरोधः कर्तुं शक्यत(३) इति । परिहरति न तयो-रिति । प्रसङ्गतद्विपर्ययौ सामर्थ्यासामर्थ्यमात्रसाधनतया तन्मात्रविषयौ न करणाकरणविषयाविति(४) । ननु सामर्थ्यासामर्थ्यमात्रविषयत्वेऽपि

(१) न चावस्थितद्रव्य एव संयोगिद्रव्योपचयात्पूर्वपरिमाणनाशः परिमाणान्तरोत्पादश्च स्यादिति वाच्यम् । परिमाणस्याश्रयनाशैकना-श्यत्वात्, अवयवमात्रसंयोगविशेषबहुत्वादेरेवावयविपरिमाणोत्पादक-त्वाच्च, अन्यथा धरण्यादिपातितमृत्पिण्डादेरवयवान्तरसंयुक्तावयवस्य पूर्वपरिमाणनाशः प्रकृष्टतरपरिमाणान्तरोत्पादश्च स्यादिति भावः ।

(२) य एव कृश आसीत् स एवेदानीं स्थूल इति प्रत्यभिज्ञाप्र-तीतिरित्यर्थः ।

(३) यदीदं द्रव्यं दीर्घं स्यात् ह्रस्वं न स्यादितिवत् यदि बीजं कारि स्यादकारि न स्यात्, अकारि चैतत्तस्मान्न कारीति प्रसङ्गतद्विपर्ययाविहापि स्यातामित्यर्थ इति मिश्राः ।

(४) प्रसङ्गे सामर्थ्यस्य हेतुतया विपर्यये चासामर्थ्यस्य साध्य-

तत्र चोक्तत्वात्। स्तां वा, न तथापि ताभ्यां शक्त्य-शक्त्योरविवक्षित(त्वात्)कालभेद एव विरोधः साध्य-ते, तथोपसंहर्तुमशक्यत्वात्। "यदा तदेत्युपेक्ष्य यत् समर्थं तत्करोत्येवेत्युपसंहर्तुं शक्यमिति चेत्" न, काल-नियमाविवक्षायां यत्समर्थं तत्करोत्येव कदाचिदि-ति स्यात्, तथा च सम्भवविधिरत्यन्तायोगो विरुद्धः, न त्वयोगः नीलं सरोजं भवत्येवेतिवत्।

तयोर्विरोधद्वारेण तत्फलयोरपि करणाकरणयोर्विरोधः साधयितव्य इत्याह (१)स्तां वेति। कालविशेषाविवक्षया सामर्थ्ये सति करणनियमस्योपसं-हर्तुमशक्यत्वादिति(२)। नत्वयोग इति(३)। ततश्च समर्थस्यापि कदाचित्करणं कदाचिदकरणमिति न विरोध इत्यभिप्रायः।

ननु यदा समर्थं यदाऽसमर्थमिति कालभेदविवक्षायामेकस्यैव कदा-चित्सामर्थ्यं कदाचिदसामर्थ्यं वाऽभ्युपगन्तव्यं स्यात्तच्च नोपपद्यत इत्याह

---

तथा विषयत्वम्, सामर्थ्यप्रसञ्जनीयं करणं वेह सामर्थ्यम्, तत्र च सामर्थ्यं हीत्यादिना दूषणस्योक्तत्वादिति दीधितिः।

(१) ननु सामर्थ्यासामर्थ्ये प्रति प्रसङ्गतद्विपर्ययौ नोच्येते येन पूर्वनिरस्तत्वं स्यात्, किन्तर्हि? कारित्वाकारित्वे प्रति ते च ताभ्यामन्ये एवेत्यत आह स्तां वेति कल्पलता।

(२) उक्तप्रसङ्गतद्विपर्ययाभ्यां कारित्वाकारित्वयोः कालविशेष-मनन्तर्भाव्य विरोधः साधयितुं शक्य इत्यर्थः।

(३) स्वातन्त्र्येण कालभेदो न प्रवेशनीयस्तत्प्रवेशकार्यमेवकार एव करिष्यतीत्यभिप्रायेणाशङ्कते मूले यदेति। एवकारस्य कालभेदा-दिवाचकत्वं नास्ति किन्तु क्रियासङ्गतस्यात्यन्तायोगव्यवच्छेदार्थक-त्वम्, तथा चोक्तदोषतादवस्थ्यमित्याशयेन कालनियमेत्यादि उत्तर-वादिनो मूलमत्र द्रष्टव्यम्। कालनियमः सार्वदिकत्वं क्रियासङ्गतैव-कारेण्यत्यन्तायोगव्यवच्छेदः सम्भवमात्ररूपोऽर्थक्रियासम्भवे विरु-ध्यते न तु कदाचित्सम्भवे इत्यर्थः।

"ननु यदसमर्थं प्रथममासीत् तस्य पश्चादपि सामर्थ्यं कुत आयातम्, प्रथमं समर्थस्य वा पश्चादपि कुत्र यातम्" । नैतदेवम्, (१)तत्तत्सहकारिमतस्तत्तत्कारकत्वं हि सामर्थ्यम्, अतद्वतस्तदन्यवतो वा तदकर्तृत्वमसामर्थ्यम्, इदश्चौत्पत्तिकमस्य रूपम् । ते च सहकारिणः स्वोपसर्पणकारणवशाद्भिन्नकाला इत्यर्थात्कार्याणामपि भिन्नकालतेति । "तथाप्येककालस्थ एव भावो जातनष्टस्तदा तदा तत्कार्यं करोतु, उत्पन्नमात्रस्य तत्स्वभावत्वादेकदेशस्थवत् इति चेत्" सेयमेककालस्थता

(२)नन्विति । ननु औत्पत्तिकं चेदेतद्रूपं तदुत्पत्तेरनन्तरमेव सर्वान्सहकारिणः समासाद्य युगपदेव सर्वं कार्यं कुर्यादित्याशङ्क्याह ते चेति । यद्यप्येकस्यापि कालभेदेन करणाकरणे न विरुद्ध्येते, तथाप्युत्पन्नमात्रस्यैव तत्कर्तृस्वभावत्वात्समवायिलक्षणैकदेशस्थवत्(३) एककालस्थ एव जातो नष्टः–जनित्वा ध्वस्तः, तदा तदा कार्यभिन्न एवेत्यर्थः, तदिदमाशङ्कते तथापीति । एककाल इत्येतद्विकल्प्य दूषयति सेयमिति ।

(१) सामर्थ्यं यदि योग्यत्वं विवक्षित्वा प्रोच्यते तदा सर्वदैव त्समर्थमेव, अथ कारित्वं विवक्षितं, तदा तदुभयं सहकारिलाभाभतन्त्रमित्यसकृदावेदितमित्यभिप्रायेणोत्तरमाह तत्तदिति । यदस्य ामर्थ्यं तन्न कुतोऽप्यायाति न वा कुतोऽप्यपैति, सहकारिसान्निध्ये हि ारित्वं सामर्थ्यम्, यद्वा कारणतावच्छेदकबीजत्वादिरूपमस्य सामर्थ्यं च्छून्यत्वमसामर्थ्यं तस्य च नोपगमापगमावित्याह तत्तदिति भगीरथकुरः । अतद्वतः–सहकारिरहितस्य, तदन्यवतः–सहकारिविरोधिः । तदकर्तृत्वम्–तदजनकत्वम् । औत्पत्तिकमिति । एतत्स्वभाव भावो जायत इत्यर्थः ।

(२) ननु भावानां स्वकारणजनितः स्वरूपभेदो जातिभेदो वा ामर्थ्यं तस्य च तस्यां व्यक्तौ नोपगमापगमौ सम्भवत इत्याशयेनाशङ्कते पक्षी नन्विति भगीरथठक्कुरः ।

(३) यथा स्वानवच्छिन्नेऽपि देशे स्वात्मनि इन्द्रियादिज्ञानं सुखा-

स्वरूपापेक्षया सहकारिसान्निध्यापेक्षया वा ? आद्ये न किञ्चिदनुपपन्नम् , नित्यानामप्येवंरूपत्वात् वर्तमानैकस्वभावत्वात्सर्वभावानाम् , तदेव तु क्वचित्सावधि क्वचिन्निरवधीति विशेषः । सावधित्वेऽपि व्यापारफलप्रवाहप्रकर्षाप्रकर्षाभ्यां विशेषः । द्वितीयस्तु स्यादपि यदि तेषां यौगपद्यं भवेत , क्रमिणस्तु सहकारिण इत्युक्तम् । सहकारिसहितः स्वभावेन करोतीति वक्तरि (तु)

---

अयमर्थः—कालस्य तावदवान्तरैकत्वमुक्तमुपाध्येकत्वेन वक्तव्यम् , उपाधिश्चोत्का(१)रणस्वरूपं सहकारिसन्निधिर्वा, तत्र प्रथमविवक्षायामेककालत्वं स्थिरवादिनोऽपीष्टमे(२)वेत्याह आद्य इति । तदेव त्विति । तदेव तु वर्तमानत्वं क्वचिदनित्येषु (३)सावधि, क्वाचिन्नित्येषु निरवधीति । (४)व्यापारेति । व्यापारप्रवाहफलप्रवाहप्रकर्षाप्रकर्षाभ्यामुपाधिभूताभ्यां कालस्यापि प्रकर्षाप्रकर्षलक्षणो विशेषः इति । जातनष्ट इत्येतदुपादाय सङ्गत्या दूषयति सहकारिसहित इति । सहकारिस-

---

दिकं यथा वा मृदङ्गाद्याकाशे शब्दं जनयति तथा स्वानवच्छिन्नेऽपि काले क्षणिको भावः कार्याणि जनयतु, नह्येकं वस्तु क्षणद्वयसम्बद्धं भवितुमर्हतीत्यभिप्रायो बौद्धाशङ्काया द्रष्टव्यः। नारायण्यां कार्यभिन्न एवेति । क्षणिको भाव इति शेषः।

( १ ) उपाधिश्च कारणस्वरूपमिति पाठोऽत्र समुचितः प्रतिभाति ।

( २ ) स्वरूपयोग्यस्वरूपोपाधिः क्षणिकस्य स्थिरस्य वेत्यत्रैव विवादो न त्वेककालत्व इत्यर्थः ।

( ३ ) कार्योत्पद्यमानतापूर्वकालमात्रावधि, क्वचिन्निरवधि—कार्योत्पद्यमानताकालस्थायि ।

( ४ ) नन्वेवं स्वरूपसत एव जनकत्वाङ्गीकारे यागादेः स्वर्गाद्यजनकत्वापत्तिरित्यत आह व्यापारेति । व्यापाररूपफलप्रवाहानुवृत्तेर्नोक्तदोष इत्यर्थः । ननु व्यापारसत्त्वाविशेषात्कथमेकस्यैव कर्मणः फलोपभोगो नान्यस्येत्यत आह प्रकर्षेति । सहकारिलाभालाभप्रकर्षाप्रकर्षवशादेकस्यैव फलदातृत्वं नान्यस्येत्यर्थः ।

जातनष्ट एव करोतित्वित्युत्तरप्रसङ्गो निरर्गलशैशवस्येत्य-लमनेन । तस्मात्कार्यस्य स एव कालः, कारणस्य तु स चान्यश्चेति सम्बन्धिकालापेक्षया(१) पूर्वकालताव्यवहारः । (२)अपि च यदा तदेति स्थाने यत्र तत्रेति प्रतिक्षिप्य तयोरेव प्रसङ्गतद्विपर्ययोः को दोषः। (३)"न कश्चिदिति चेत्" तर्हि देशाद्वैतं वा कारणभेदो वा आप-

हेत एव स्वभावेन करोतीति वक्तरि सिद्धान्तिनि सहकार्यसमवधान एव जातनष्टः करोत्वित्युत्तरप्रसङ्गः प्रस्तावः कया सङ्गत्या क्रियत इत्यर्थः । कार्यस्येति । सहकारिसम्बन्धाव्यवहित एव कालः कार्यस्य, कारणस्य तु स्वोपहितकालैकत्वेऽपि सहकारिभूतसम्बन्धिकालापेक्षया स चान्यश्चेति । व्यवहार इति । एवन्तावत्सर्वदा समर्थस्वभावस्यापि भावस्य सहकार्यपेक्षया करणाकरणोपपत्तेर्नावश्यमकरणकालेऽसामर्थ्यम्, सत्यपि असामर्थ्ये कालभेदेन सामर्थ्यासामर्थ्ययोर्विरोधः, तथा करणाकरणयोर्भिन्नकालवर्तिनोरि(त्यपरी)त्युक्तम्, इदानीं परमप्येनमर्थमुदाहरणान्तरे स्वीकारयितुं पृच्छति अपि चेति । यत्र समर्थं बीजं तत्र कुर्यात्तथा प्रतिपन्ने देशे करोति चैकभावस्थितं तत्र तस्मात्तत्र समर्थं इत्येवं प्रसङ्गतद्विपर्यययोः को दोष इत्यर्थः । तर्हीति । तत्कालसामर्थ्यात्तत्काल-

(१) सम्बन्धिनोः कार्यतत्प्रागभावयोर्यौ कालौ तदपेक्षया तदुपलक्षणप्रतिसन्धानेन कारणकार्ययोः पौर्वापर्यव्यवहार इत्यर्थः ।

(२) ननु कालाविवक्षयैव प्रसङ्गतद्विपर्ययाभ्यां पूर्वापरक्षणवर्तिभावस्य भेदः साध्यतामित्यत आहापि चेति । क्षेत्रस्थं बीजं यदि तत्र काले कुशूलेऽप्यङ्कुरजननसमर्थं स्यात्तदाऽङ्कुरं जनयेत् नतु जनयति तस्मान्न तदा तत्समर्थमिति क्षणिकमपि सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गेण भिन्नं स्यादिति भावः ।

(३) अत्र प्रसङ्गे दोषाभिधाने कालगर्भप्रसङ्गेऽपि दोषः स्यादित्याशयेनाह न कश्चिदिति कल्पलता। ननु बीजदेशादन्यो देशो यदि तदा तत्रतत्राजननिबन्धनमसामर्थ्यमापद्येत, तथा च सर्वदेशेऽपेमेव बीजमिति नास्माकं विरुद्धधर्माध्यास इत्यत आह तर्हीति ।

द्येत । "आपद्यताम् तदादाय योगा(१)चारनयनगरं प्रवेक्ष्याम इति चेत्" न, हेतुफलभाववादं वैरिणमनपोह्य तत्र प्रवेष्टुमशक्यत्वात् । तदपवादे वा सत्त्वाख्यसाधनशस्त्रसंन्यासिनस्तव बहिर्वादसंग्रामभूमावपि कुतो भयम् ।

"ननु यावत्योऽर्थक्रिया भिन्नदेशास्तावद्भेदं कारणमस्तु को विरोध इति चेत्" न, तेषामपि प्रत्येकं तत्प्र-

सामर्थ्ययोरिव तद्देशसामर्थ्यातद्देशसामर्थ्ययोरपि विरोधात्तत्परिहाराय देशभेद एव नास्ति, अतस्तत्रासामर्थ्यमित्येवं देशाद्वैतं वा, एकत्रैवैकदैवावस्थितस्यैव कारणस्य विरुद्धधर्माभ्यासाद्भेदो वाऽऽपद्येत, न तद्युक्तम्, देशाद्वैते वस्तूनामेकदेशत्वाद्वस्त्वेकत्वं स्यात्, तत्र च बाह्यवादव्याकोपः सौत्रान्तिकस्य, तथा क्षणिकस्यापि वस्तुनो भेदे जगत्येकस्य वस्तुतत्त्वस्याभावात्तत्समाहारात्मनोऽनेकस्याप्यभावेन न किंचित्तत्त्वं स्यादित्यभिप्रायः । आपद्यतामिति । देशाद्वैतमित्यर्थः । कथन्तर्हि सौत्रान्तिकता भवत अत आह तदादायेति । सौत्रान्तिकसिद्धान्तं त्यक्त्वा योगाचारसिद्धान्तमाश्रयाम इत्यर्थः । हेतुफलभावेति । तस्य द्वैतापेक्षत्वादिति भावः । तदपवादे वेति । हेतुफलभावापवादे हि सत्त्वसाधनमपि त्वया संन्यस्तं स्यात्तस्य हेतुरूपत्वादिति भावः । बहिरिति । नयनगराद्बहिरित्यर्थः ।

परः पुनर्देशाद्वैतं विहाय स्वाभिप्रायेण भेदपक्षं परिगृह्णाति नन्विति । सिद्धान्ती तु स्वाभिप्रेतं भिन्नानामपि प्रत्येकं भेदमापादयति न तेषामपीति । साध्वीति । कस्यचिदपि वस्तुतत्त्वस्याभावे

(१) क्षेत्रकुशूलाद्यात्मा देशोऽपि ज्ञानस्वरूप एव क्षणिकः बाह्यार्थस्तु न कश्चिदिति योगाचारनयरूपं नगरमन्यत्सुगमम् । ननु योगाचारमताश्रयणे भवता कार्यकारणभावोऽपि नेष्टव्यो देशभेदेन भेदाभावात्स्वप्रकाशज्ञानरूपस्य जगतस्तथा च मां प्रति सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माऽध्यासेन यत्सत्तत्क्षणिकमिति यत् त्वया साधयितुमुपक्रान्तं तत्सर्वं भग्नमित्याह हेतुफलेति ।

ाङ्गस्य तद्वस्थत्वात्, एवमेकस्य जगति वस्तुतत्त्वस्या· ग्राभे साध्वी क्षणभङ्गसाधनपरिशुद्धिः ।

"अस्तु तर्हि कश्चिद्दोष एवा(१)नयोरिति चेत्" । स नः कस्मिन् (२)साध्ये ? किं सामर्थ्यासामर्थ्ययोः,(३) र्के वा तद्विरुद्धधर्माध्यासेन भेदे, आहोस्वित् शक्त्य· ाक्त्योर्विरोधे । नाद्यः, सर्वत्र सामर्थ्ये हि (४)प्रसह्य ःरणात्, सर्वत्राशक्तौ क्वचिदप्यकरणात् । (५)"सर्वदेश· ामानस्वभावत्वेऽप्यस्य स्वोपादानदेश एव तत्त· कार्यं करोतीत्ययमस्य स्वभावः स्वकारणादायातो न ीयोगपर्यनुयोगावर्हतीति चेत्" । तर्हि सर्वकालसमान· व्रभावत्वेऽपि तत्तत्सहकारिकाल एव करोतीत्ययमस्य

---

भ्रादीनामप्यभावात्क्षणभङ्गसाधनपरिशुद्धिरिति ॥

शक्त्यशक्त्योः=सामर्थ्यासामर्थ्ययोरित्यर्थः । क्वचिदप्यक· णादिति । ततश्च क्वचित्करणात् क्वचिच्चाकरणात्क्वचित्सामर्थ्यं क्वचिचा· ामर्थ्यमभ्युपगन्तव्यमिति भावः । नियोगेति । अविषयेऽपि स्या·

---

(१) देशगर्भप्रसङ्गतद्विपर्ययोरित्यर्थः ।

(२) विषये, अन्यथा सामर्थ्यस्य प्रसङ्गहेतुत्वेनासङ्गतेः ।

(३) अत्र साध्ययोरिति विपरिणामेनान्वयः । यद्यप्यत्र सामर्थ्यासा· र्योभयविरुद्धधर्माध्यासाधीनो धर्मिणि भेद एव साध्यो न सामर्थ्या· ामर्थ्ये, तथापि प्रसङ्गतद्विपर्ययाभ्यां साक्षात्तयोरेव साध्यत्वमिति न षः, अत एवाह मूले किं वेति । शक्त्यशक्त्योः–करणाकरणयोः ।

(४) सामर्थ्यासामर्थ्ययोः साध्यत्वे यदि प्रसङ्गतद्विपर्ययौ दुष्टौ ाताम् तदा सर्वत्र सामर्थ्यमेव स्यात् असामर्थ्यमेव वा ? आद्ये आह ह्येति । अन्त्ये आह सर्वत्रेति कल्पलता ।

(५) यदि तु देशभेदेन सामर्थ्यासामर्थ्ये नैकस्य विरुद्धे, तदा लावच्छेदभेदेनापि न विरोध इति कुतः क्षणिकत्वमित्याक्षेपसमा· नाभ्यामाह सर्वदेशेति ।

स्वभावः स्वकारणादायात इति किं न रोचयेः। (१)न द्वितीयः, विरुद्धधर्माध्यासेनाप्यभेदे भेदव्यवहारस्य निर्निमित्तकत्वप्रसङ्गात्। अनैकान्तिकश्च हेतुः (२)कालतोऽपि न भेदं साधयेत्। (३)न तृतीयः, विरोधलक्षणयोगे बाधकसहस्रेणापि विरोधस्यापनेतुमशक्यत्वात्, अयोगे वा तदेव चिन्त्यम्। (४)"यद्विधाने यस्य निषेधो यन्निषेधे वा यस्य विधानं तयोरेकत्र धर्मिणि परस्परपरीहारस्थिततया विरोधः, स चेह नास्ति, तद्देशकार्यकारित्वं हि तद्देशकार्याकारित्वेन विरुद्धम्(५), तद्विधौ तस्यैव नियमेन निषेधात्, न पुन र्देशान्तरे तत्कार्याकारित्वेन(६) तस्यानिषेधात्, (७)न ह्यन्यत्र तदकरणमतत्करणं वा तत्र तत्करणस्याभावोऽपि तु तत्र तदकरणमिति चेत्"।

दिति प्रसङ्गो नियोगः, विषयेऽपि कथं स्यादिति पर्यनुयोगः। तदेवेति। विरोधलक्षणमेवेति।

---

(१) ननु सामर्थ्यासामर्थ्ये विरुद्धे अप्येकत्र विद्यमाने अपि न धर्मिभेदके इत्यत्राह न द्वितीय इति कल्पलता।

(२) देशभेदेन विरुद्धाभ्यामपि ताभ्यां भेदस्यासाधनात्।

(३) यदि च सामर्थ्यासामर्थ्ययोर्विरोध एव नाङ्गीक्रियते तदाप्याह न तृतीय इति। विरोधेति। परस्परविरहात्मनोर्विरोधोऽवश्यम्भावीत्यर्थः। यदि चैकदेश एव कारित्वाकारित्वयोर्विरोधो न देशभेदेनापीत्युच्यते, तदाऽप्याह अयोग इति। विरोधलक्षणस्येति शेषः।

(४) तदेव साम्यापादनाय परद्वारा चिन्तयति यद्विधान इति।

(५) यदि यद्देशे करोति तत्रैव न कुर्यात्तदा विरोधः स्यादित्यर्थः।

(६) तद्देशकारित्वं विरुद्धमित्यत्रानुषञ्जनीयम्। तस्य-देशान्तरे तदकरणस्य।

(७) नहीति। अन्यत्र यत्तदकरणं तद्विरुद्धकार्यकरणं वा न तदेव तत्र तत्करणस्याभावो येन विरोधः स्यात् अपि तु तत्रैव देशे तदाश्रमेव तदकरणम्-तत्करणस्याभाव इत्यर्थः।

१)हन्त, एवम्भूतविरोधलक्षणव्यावृत्तिर्भिन्नकालशक्त्य-
शक्त्योरपीत्युक्तप्रायम्, तत्प्रतिसन्दधीथाः । (२)तस्मा-
त्प्रसङ्गतद्विपर्ययस्थितावपि असिद्धो विरुद्धधर्माध्यासः ।

"ननु यदेकदा यत्करोति तद्यावत्सत्त्वं तत्करोत्येव,
यथा कश्चिच्छब्दः शब्दान्तरमिति प्रसङ्गोऽस्तु, विपर्य-
यस्तु यदेकदा यन्न करोति तत्सर्वदैव तन्न करोति,यथा
शिलाशकलमङ्कुरम्, न करोति चैकदा कुशूलस्थं बीज-

उक्तप्रायमिति । यदा यदकरणं तदा तत्करणस्याभाव इत्य-
त्योक्तप्रायमिति ।

पर इदानीं कुसूलनिहितस्य बीजस्याङ्कुरकारिणो भेदं प्रकारा-
न्तरेण दर्शयति (३)ननु यदेति । कश्चिच्छब्द इति । शब्दा-
न्तरं कुर्वन् शब्दो(४)यावत्सत्त्वं तत्करोत्येव तस्याशुतरविनाशित्वेना-

---

(१) साम्यमापादयन्नाह सिद्धान्ती हन्तैवमिति । तदा तदकरणं
तदा तत्करणस्य विरोधि न त्वन्यदापि तदकरणं येन विरोधः स्यादि-
त्युक्तप्रायमित्यर्थः ।

(२) पूर्वं प्रसङ्गतद्विपर्ययोरेवासिद्धिरुक्ताऽधुना तत्सिद्धावपि वि-
रुद्धधर्माध्यासाभावमुपसंहरति तस्मादिति मिश्राः । देशभेदेनेव काल-
भेदेनापि सामर्थ्यासामर्थ्ययोः करणाकरणयोश्चाभ्युपगमे विरुद्धधर्म-
संसर्गोऽसिद्ध इति भावः ।

(३) सत्त्वक्षणिकत्वयोर्व्याप्तिसाधनाय प्रसङ्गविपर्ययान्तरमवता-
रयति नन्विति कल्पलता । प्रसङ्गविपर्ययस्थितावपीत्यपिना सूचितं
प्रसङ्गविपर्ययसामान्यासम्भवमसहमानोऽन्तरा प्रसङ्गविपर्ययान्तरमा-
शङ्कते नन्विति दीधितिः ।

(४) अविनश्यदवस्थोऽनन्त्यशब्द इत्यर्थः, अन्यथा द्वितीयक्षणेऽ-
करणाद्यावत्सत्त्वं करणानुपपत्तेः । स्वमतेनैव वा दृष्टान्तः । मूले विप-
र्ययस्त्विति । यद्यावत्सत्त्वं यन्न करोति तदेकदापि तन्न करोति यथा
शिलाशकलम् , न करोति च कुशूलस्थं बीजं यावत्सत्त्वमङ्कुरम् , अत
एकदापि तन्न कुर्यादिति विपर्यये दर्शनीये एकदाऽकरणस्यापि याव-
त्सत्त्वाकरणरूपतया व्यत्यासेनैव विपर्ययो दर्शित इत्यदोषः ।

मङ्कुरमिति चेत्" । तदेतज्जात्यभिप्रायेण वा व्यक्त्यभिप्रायेण वा स्यात् ? प्रथमे द्वयमप्यनैकान्तिकम्, अनियमदर्शनात् ।

द्वितीये (१)द्वयमप्यन्यथासिद्धम्, एकान्तासामर्थ्यप्रयुक्तत्वादत्यन्ताकरणस्य, सामर्थ्ये सति सहकारिसन्निधिप्रयुक्तत्वात्करणनियमस्य । (२)एतेन—"यद्यत्करोति तत्तदुत्पन्नमात्रम्, यथा कर्म विभागम्, यदुत्पन्नमात्रं

---

करणकालाभावादिति । तदेत(३)ज्जातीति । यद्वेकदेत्यादि यच्छब्दतच्छब्दाभ्यां जातिर्वा निर्दिश्यते व्यक्तिर्वेत्यर्थः । द्वयमिति । प्रसङ्गतद्विपर्ययोर्हेतुद्वयमित्यर्थः । अनियमेति । नहि तज्जातिः सर्वदा तत्कार्यं करोति क्षणिकपक्षेऽपि बीजजातेः कदाचिदङ्कुराकरणदर्शनात्कदाचित् क्वचित्करणदर्शनाच्चेति । "ननु न बीज(त्व)जातिः कदाचिदप्यङ्कुरं करोति अवान्तरजातेरेवाङ्कुरप्रयोजकत्वेन बीजत्वस्याप्रयोजकत्वात्" नैवम्, बीजत्वस्याप्रयोजकत्वेऽङ्कुरार्थिनो नियमेन तत्र प्रवृत्त्यनुपपत्तेरित्युक्तत्वादिति ।

एकान्तेति । नहि कदाचिदकरणप्रयुक्तमकरणं शिलाशकलस्य सर्वदा किन्तु एकान्तासामर्थ्यप्रयुक्तं, तथा न कदाचित्करणनिमित्तं सर्वदा

---

(१) व्यक्तिपक्षे प्रसङ्गतद्विपर्ययद्वयमित्यर्थः । अन्यथासिद्धिमेवाहैकान्तेति । शिलाशकलादावेकदाऽकारित्वे सत्यन्यदाप्यकारित्वं स्वरूपायोग्यत्वप्रयुक्तम्, स्वरूपयोग्यस्य त्वेकदाऽकरणं सहकारिवैकल्यप्रयुक्तं यावत्सत्त्वं च करणं सहकारिलाभप्रयुक्तमित्यर्थ इति मिश्राः । सहकारिवैकल्यस्यात्यन्तिकत्वकादाचित्कत्वाभ्यामकरणस्याप्यात्यन्तिकत्वकादाचित्कत्वे इति दीधितिः ।

(२) सत्त्वक्षणिकत्वव्याप्तिग्रहानुकूलमेव प्रसङ्गविपर्ययान्तरमाशङ्क्य निराकरोति एतेनेति । पूर्ववदिति । नहि बीजजातीयमुत्पन्नमेव करोतीति जात्यभिप्रायेणानैकान्तिकता, या च व्यक्तिरुत्पत्त्यनन्तरमेव करोति तत्र तत्तत्सहकारिलाभस्तन्त्रमित्याशयेनान्यथासिद्धिरित्यर्थः ।

(३) प्रसङ्गतद्विपर्ययोपदर्शनम् ।

यन्न करोति तन्न कदाचिदपि, यथा शिलाशकलमङ्कु-रमिति"–निरस्तम्। अत्रापि पूर्ववदनेकान्तान्यथासिद्धि-दोषाविति ।

नापि तृतीयः(१), कृतकत्वानित्यत्वादेरपि परस्परा भाववत्तामात्रेण विरोधप्रसङ्गादिति । (२)"अस्तु तर्हि तस्यैव तेनैव सहकारिणा सह सम्बन्धोऽसम्बन्धश्चेति विरोधः" । न, विकल्पानुपपत्तेः । तथाहि–सम्बन्धि-नः सम्बन्ध्यन्तरे स्वाभावस्वाभाव्यं वा विरुध्येत,

करणं शब्दस्य किन्तु सामर्थ्ये सति सहकारिसन्निधिप्रयुक्तमिति। अत्रा-पि पूर्ववदिति । जात्यभिप्रायेऽनैकान्तिकत्वं व्यक्त्यभिप्रायेऽन्यथा-सिद्धत्वमिति । "ननु जात्यभिप्रायपक्षे बीजत्वजातेरपक्षीकारात् कथं पक्ष एवानैकान्तिकत्वमुच्यत इति ?" एवन्तर्हि तव बाधितविषयत्वमेव दूषण-मस्तु अनैकान्तिकत्वं तु शब्दत्वादिजात्या भविष्यति, तथाहि शब्दत्व-जातिर्हि मध्यशब्देषु वर्तमाना शब्दान्तरं करोति अन्त्यशब्दस्था तु न करोति, अतस्तस्याः कदाचित्करणेऽपि करणं कदाचिदकरणेप्यकरणं दृष्ट-मिति तत्रैवानैकान्तिकत्वमपि सिद्धमिति ।

तद्वत्त्वं वेति विकल्पं दूषयति नापि तृतीय इति । स्वाभा-स्वाभाव्यमिति । स्वस्यैव स्वाभावात्मकत्वं स्वभावत्वमित्यर्थः ।

(१) दण्डित्वकुण्डलित्ववत्तद्वत्ता वेति तृतीयविकल्प इत्यर्थः । विरोधप्रसङ्गादिति । तथाच तदुभयाभ्यासाधीनधर्मिभेदप्रसङ्गादि-त्यर्थः ।

(२) सहकारिसमवधानासमवधानाधीने करणाकरणे इति यत् समाहितं तत्रापि विरोध इत्याह पूर्वपक्षी अस्तु तर्हीति । तथाहीति । कस्य सम्बन्धिनः स्वकीयाभावतादात्म्यं सम्बन्ध्यन्तरे विरुध्यते तत्र सम्बन्धासम्बन्धयोः सत्त्वाभ्युपगमे सम्बन्धस्य स्वाभावतादा-त्म्यमेवाभ्युपेतं स्यात्, तथाच भावस्य स्वाभावप्रतिक्षेपस्वभावत्वं व्याहतमित्यर्थः

(१)अभावप्रतियोगित्वं वा, तदैवेति सहितं वा, तत्रैवेति सहितं वा, उभयसहितं वा, तथैवेतिसहितं वा?इति। न प्रथमः, अनभ्युपगमात्(२)। न द्वितीयः, (३)सत्कार्यप्रतिषेधात्। न तृतीयः, (४)प्राक्प्रध्वंसाभावयोर्भावसमानकालत्वानभ्युपगमात्।

(५)न चतुर्थः, स हि न तावत् स्थितियौगपद्यनियमेन

सत्कार्य(वादे)ति। सत्कार्यवादे हि 'नासतो विद्यते भावो नाभावो विद्यते सत' इति सतः प्रागभावप्रध्वंसाभावप्रतियोगित्वं न स्यात्, स च सत्कार्यवादो भवद्भिरस्माभिश्च प्रतिषिद्ध एवेति।

स्थितियौगपद्येति। सम्बन्धिनोः सहैव स्थितिः न त्वेकतरवियुक्तस्यैकतरस्य स्थितिरित्येवं स्थितियौगपद्यनियमेन तत्रैव देशे सम्बन्धोऽसम्बन्धश्चेति विरुद्ध्यते इत्येवं न तावत् सम्भवति, तस्य यौगपद्य-

---

(१) अभावेति। यत्र बीजादौ सम्बन्धिनि सहकारिणामभावप्रतियोगित्वं तत्रैव तत्प्रतियोगित्वं विरोधित्वमित्यर्थः। सामान्यतो विरोधं विशेषतो विकल्पयति तदैवेति। सहितमित्यत्र सर्वत्राभावप्रतियोगित्वमित्यनुषज्यते, भावकाल एवाभावप्रतियोगित्वमिति यावत्। तथैवेति। येनैव प्रकारेण सम्बन्धस्य यत्राभावस्तेनैवेति सहितं वेत्यर्थः।

(२) अनभ्युपगमादिति। सम्बन्धस्य स्वाभावतादात्म्यानभ्युपगमादित्यर्थः, भेदेन तयोरनुभवाच्चेति भावः।

(३) सत्कार्येति। नारायणमतेनाऽत्र मूले सत्कार्यवादप्रतिषेधादिति पाठो द्रष्टव्यः। करणाकरणयोरिव कालभेदेनैकत्र तत्सत्त्वेऽप्यभावप्रतियोगित्वं न विरुद्धं कालभेदेऽपि तदा विरोधः स्याद्यदि नाभावो विद्यते सत इत्याद्यभ्युपगम्येत मयेत्यर्थः।

(४) प्रागिति। संयोगिनि संयोगस्य प्रागभावध्वंसयोः कालभेदेनैव इत्युपगमात् अत्यन्ताभावस्य चावच्छेदभेदेन वृत्तौ विरोधाभावादिति भावः।

(५) यत्रैव प्रतियोगी तत्रैव तदभाव इति चतुर्थविकल्पो न, स विरोधः, यदि सहकारिणोः स्थितियौगपद्यनियमो भवेत् तदैकसहकारिदेशे सहकार्यन्तराभावो न भवेत्स च नास्तीत्यर्थः।

सम्बन्धिनोः, तदसिद्धेः । इत एव तत्सिद्धावितरेतराश्रयत्वम्—नियमसिद्धौ हि विरोधसिद्धिस्तत्सिद्धौ च भेदे सति नियमसिद्धिरिति । न चान्यतस्तत्सिद्धिः, तदभावात्, अनियतोपसर्पणापसर्पणकारणप्रयुक्तत्वाच्च सम्बन्धासम्बन्धयोः । नापि विनाशस्याहेतुकत्वादयं विरोधोऽर्थात् सिध्यति, तस्याप्यसिद्धेः । ध्रुवभावित्वे

नियमस्यासिद्धेरिति । इत एवेति । तद्देशसम्बन्धासम्बन्धविरोधादेवेत्यर्थः(१) । भेदे सतीति । तद्देशसम्बन्धासम्बन्धविरोधादसम्बद्धयोः सम्बद्धाभ्यां (२)भेदसिद्धौ, सम्बद्धयोः स्थितियौगपद्यनियमस्थितिरित्यर्थः । नान्यहेतोः स्थितियौगपद्यनियमसिद्धिः येनान्यतः परिच्छेदादितरेतराश्रयता न स्यादन्यस्य हेतोरभावादित्याह (३)न चान्यत इति । च भेदमन्तरेण सम्बन्धासम्बन्धयोः प्रयोजकान्तराभावे न सम्बन्धासम्बन्धाभ्यां तत्सिद्धिरिति वक्तव्यमित्याह (४)अनियतेति । (५)अर्थादिति । सम्बन्धविनाशस्य हेत्वन्तराधीनत्वे हि सम्बन्धासम्बन्धयोर्हेत्व-

(१) प्रतियोगितदभावयोः समानदेशत्वविरोधादिति मिश्राः ।

(२) भेदे सति=क्षणभङ्गे सति, नियमसिद्धिरित्यर्थः । क्षणभङ्गेति सहकारिणां तथोत्पादनियमाद्यौगपद्यं सिध्येत् स एवाद्यापि न सिद्ध इति भावः ।

(३) मानान्तरादेव स्थितियौगपद्यनियमः सिध्येदित्याशंक्याह चेति मिश्ररघुनाथौ । सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गात् क्षणभङ्गसिद्धौ उक्तनियमः सम्बन्धिनोः स्यादित्यत आह नचेति भगीरथठक्कुरः ।

(४) ननु सहकारिणां यौगपद्यं कुतो नेत्यत आहानियतेति मिश्राः । तथाप्येकत्र सम्बन्धासम्बन्धौ कुतस्स्यातामित्यत आहानियतेति ठक्कुरः ।

(५) ननु ध्वंसे प्रतियोगिभिन्नं कारणं न वर्तते, तथाच क्षणिकत्वे ध्वंसस्याधवहितोत्तरक्षणवृत्तित्वध्वंसप्रतियोगित्वरूपे सिद्धे पुञ्जात्पुञ्जान्तरोत्पत्तिसिद्धावर्थादेव सहकारिणामुक्तनियमः सेत्स्यतीत्यत आह नापीति मूले । तस्य-विनाशस्याहेतुकत्वस्य ।

तु वक्ष्यामः ।

नापि पञ्चमः(१), नहि तदैव तत्रैव स एव सहकार्यस्ति नास्ति चेत्यभ्युपगच्छामः ।

(२)"ननु समवधानं नाम सहकारिणां धर्मः संयोगो भवद्भिरिष्यते, स च तेभ्योऽतिरिक्तोऽव्याप्यवृत्तिश्चेत्यपि, तथाच स एव तदैव तत्रैवास्ति नास्ति चेति । (३)अनतिरेके स्थिरवादिनो व्यस्तान्यपि बीजवारिधरणिधा-

न्तरागमे कदाचिदसम्बन्धो न विरुध्यते, स्वारसिकत्वे तु सम्बन्धवद्भावस्यापि स्वारसिकविनाशेन भेदसिद्धौ सम्बन्धासम्बन्धयोरेकधर्मिसमावेशलक्षणो विरोधार्थः सिद्ध्यतीत्यर्थः । ननु ध्रुवभावित्वहेतोः साधकतममस्त्येव, तथाहि भावस्य निर्हेतुको विनाशः ध्रुवभावित्वात् , यत्सहेतुकं न तु (तन्न?) ध्रुवभावि यथा पटस्य कुङ्कुमसमागम इति तत्राह ध्रुवभावित्व इति । ध्रुवभावित्वे हि हेतौ [ दूषणं वक्ष्यते इत्यर्थः(४) ] ।

संयोगाव्याप्यत्वनिबन्धनयोस्तदैव तत्रैव सम्बन्धासम्बन्धयोरपि प्रकारभेदेन विरोध इति प्रतिपादयिष्यन् विरोधं तावच्चोदयति नन्विति । व्यतिरिक्त इति अस्य व्यतिरेके दोषमाहानतिरेक इति । अव्या-

---

(१) उभयसहितं वेति पञ्चमविकल्पः ।

(२) तथैवेति सहितं वेति षष्ठं विकल्पं परप्रतिबन्दिमुखेन समाधित्सुः प्रतिबन्दिमुत्थापयितुं पीठं रचयति नन्विति । पञ्चमपक्षखण्डनावसरे 'नहि तत्रैव तदैव स एवास्ति नास्ति चेत्यभ्युपगच्छाम' इत्युक्तम्, तत्संयोगशब्दज्ञानादावभ्युपगमेन नैयायिकमतेऽपसिद्धान्त इति पूर्वपक्षिणोऽभिसन्धिः ।

(३) संयोगस्यानतिरेकव्याप्यवृत्तित्वं क्रमेण दूषयति अनतिरेक इति ।

(४) अत्र नारायण्यां 'हेतौ' इत्यतः परमग्रिमावतरणरूपस्य-'संयोगाव्याप्यत्वनिबन्धनयो'रिति टीकाग्रन्थस्य मध्यस्थः पाठो भ्रष्ट इति प्रतिभाति । तत्र च 'हेतौ दूषणं वक्ष्यते इत्यर्थः । संयोगाव्याप्यत्वनिबन्धनयो'रिति समीचीनो भाति पाठ इति विद्वद्भिर्विभावनीयम् ।

मानि तान्येवेति तेभ्यो(१)ऽपि कार्योत्पत्तिप्रसङ्गः । अव्याप्यवृत्तित्वे च सर्वत्र (२)रक्तादिविभ्रमः, शब्दादिकार्योत्पत्तिप्रसङ्गश्च । तस्मादसंयुक्तेभ्योऽन्य एव संयुक्तस्वभावाः परमाणवो(३) जाता इत्येव न्यायः ।”

नैतदेवम्, क्षणिकपरमाणावप्यस्य विरोधस्य दुर्वारत्वात् । तथाहि—पूर्वदिगवस्थितः परमाणुर्यथा परदिगवस्थितेन परमाणुनाऽपरदिगवच्छेदेनावृतरूप उत्पन्नः, तथैव किं पूर्वदिगवच्छेदेनापि, न वा, उभयथा वा । आद्ये उभयतोऽप्यनुपलब्धिप्रसङ्गः । द्वितीये तूभयतो-

---

यवृत्तिरित्यस्य व्यतिरेके दोषमाह अव्याप्यवृत्तित्वे चेति । शब्दादीति । भेरीदण्डसंयोगाच्छब्दो भवन् संयोगस्य सर्वभेरीव्यापित्वान्न भेरीप्रदेशे भवेत्किन्तु सर्वत्र भेर्यां भवेत्, अथवा भेर्यवच्छिन्नाकाशदण्डसंयोगाच्छब्दो भवन् सर्वत्राकाशे भवेदिति । संयुक्तस्वभावा इति स्वभावशब्देनाश्रय(संयोग)स्य संयोगिव्यतिरेकं निराकरोति । अवयवस्वीकारे परमाणोर्वा स्थिरत्वस्वीकारे एकस्यैव संयुक्तस्वभावत्वमसंयुक्तस्वभावत्वं च विरुद्धमिति मन्वानस्तत्परिहारायाह परमाणवो जाता इति । जातास्तदानीमुत्पन्ना इत्यर्थः ।

नवेति । न पूर्वदिगवच्छेदेन नाप्यपरदिगवच्छेदेनेत्यर्थः । उभयथेति । आवृतानावृताभ्यामुभयथोत्पन्न इत्यर्थः ।

---

(१) सहकारिभ्यः ।

(२) रक्तादीति । शुक्लपटे रक्तत्वभ्रमनिमित्तं महारजनसंयोगः, यदि व्याप्यवृत्तिः स्यात्तदा समग्र एव पटे रक्तधीः स्यात्; तथा दण्डाकाशसंयोगस्य शब्दासमवायिकारणस्य नभोवृत्तित्वे सर्वत्र शब्दोत्पत्तिः स्याद्यावति देशे विभुकार्याणामसमवायिकारणं तावति कार्यस्यंभावादित्यर्थ इति कल्पलता ।

(३) क्षणिकपरमाणुपुञ्जरूपाः परमाणवः वारिबीजादयः कार्यविधानसमर्था जाता इति दीधितिः ।

ऽप्युपलम्भापत्तिः। तृतीये पुनः स एव दुरात्मा विरोधः, स एव तेनैव तदैवावृतोऽनावृतश्चेति। "प्रकारभेदमुपादायाविरोध इति चेत्"। कः पुनरसौ? दिगन्तरावच्छेदः। "यदि हि यद्दिगवच्छेदेनैव संयुक्तस्तद्दिगवच्छेदेनैवासंयुक्तोऽपि ततो विरोधः स्यात् इह तु नैवमिति चेत्"। हन्त, संयोगसंयोगिनोर्भेदपक्षेऽपि यद्ययं सिद्धान्तवृत्तान्तः स्यात्कीदृशो दोष इति।

(१)एतेन व्यतिरेकपक्षोऽपि निरस्तः।

एवमन्वयमुखेन क्षणिकत्वानुमानं प्रत्युक्तमन्वयखण्डनेन व्यतिरेकपक्षोऽपि निरस्त इत्याह एतेनेति। भावव्याप्तिसिद्धौ ह्यभावव्याप्तिः सिद्ध्यति, भावयोश्च सत्त्वक्षणिकत्वयोर्व्याप्तिर्निरस्ता तत इतराऽर्थात् निरस्तेत्यभिप्रायः। व्यतिरेकश्चैवं पराभिमतो द्रष्टव्यः—"यत्क्षणिकं न भवति न तस्यार्थक्रियाकारित्वलक्षणं सत्त्वमपि तद्व्यापकयोः क्रमयौगपद्ययोरभावात्, यथा शशविषाणस्येति। तथाहि—अक्षणिकं हि तां तामर्थक्रियां क्रमेण साधयेदक्रमेण वा? नाद्यः, समर्थस्वभावस्य विलम्बहेत्वभावात्। असमर्थस्य विलम्बेनाप्यकरणात्। समर्थस्यापि सहकार्यपेक्षया विलम्ब इति चेत्। अकिञ्चित्करत्वे सहकारिण अपेक्षानुपपत्तेः। नन्वस्त्वकिञ्चित्कराणामनपेक्षा, किञ्चित्कराणान्त्वपेक्षेति चेत्। तत्र पृच्छामः—किं करणस्य स्वरूपलाभार्थं सहकार्यपेक्षा उतोपकारार्थमिति। न प्रथमः, स्वरूपस्य स्वकारणाधीनस्य नित्यस्य वा पूर्वं सिद्धत्वात्। न द्वितीयः, स्वयं सामर्थ्ये वा उपकारस्यानर्थकत्वात्। असामर्थ्ये वा कार्यार्थमपि सहकार्यपेक्षायोगादिति। अनेकाधीनस्वभावतया कार्यमेवापेक्षत इति चेत्, न,

(१) सन्दिग्धासिद्धश्चेत्यादि दूषणमेवेत्याह एतेनेति। सत्त्वक्षणिकत्वयोरन्वयव्याप्तिभङ्गेनेत्यर्थ इति मिश्राः। यत् क्षणिकं तत् सत् यथा शशविषाणमिति व्यतिरेकव्याप्तिस्त्वया वाच्या, केवलान्वयिनोऽनभ्युपगमात्, व्यतिरेकव्याप्तिश्चान्वयव्याप्तिव्याप्ता, सा चेन्नास्ति तदा व्यतिरेकव्याप्तिरपि नास्तीति भावः।

तस्य स्वातन्त्र्याभावात्, कारणं हि कार्योत्पत्तौ स्वतन्त्रमतस्तदेवानुसंविधत्ते कार्यमपि, अतः कारणं चेन्नान्यदपेक्षते कथं कार्यमेव तदपेक्षेतेति । यद्यत्र कारणस्यैवास्वातन्त्र्यं स्यात्तर्हि कारणसाकल्येऽपि कदाचिन्न भवेदिति ।

अथवा केयमपेक्षा नाम? किन्तैः सहकारीत्यन्वयपर्यवसितस्वभावभेदः अथ तैर्विना न करोतीतिव्यतिरेकनिष्ठं स्वरूपमेव, आहोस्वित्तैरुपकृतः करोतीति उपकारभेदः । न प्रथमः, स्वभावस्य तादवस्थ्येन सहकार्यभावे करणप्रसङ्गात् । ननु सहकारिसाहित्येनैव कर्तृस्वभावस्य(१) कथं सहकारिविरहेऽपि करणं स्यात् । एवन्तर्हि कर्तृत्ववत्सहकारिसाहित्यस्यापि स्वभावानुप्रवेशात्सहकारिणोऽपि न कदाचिज्जह्यात् प्रत्युत पलायमानानपि गले पाशेनाकृष्याऽऽनयेत्, अन्यथा स्वभावहानिप्रसङ्गादिति । अत एव न द्वितीयः, पूर्ववत्सर्वदाऽकर्तृत्वप्रसङ्गात् । अथ तद्विरहा(२)दकर्तृस्वभावः स्यात् । तर्हि कालान्तरेऽपि स्वहेतुवशादुपसर्पतोऽपि सहकारिणः पराणुद्य न कुर्यादेव तद्विरहादकर्तृत्वस्य स्वभावत्वादिति । अथ सहकारिषु सत्सु कर्तृस्वभावः, तद्विरहेऽकर्तृस्वभाव इति स्वभावद्वयमेवेति चेत् । तर्हि विरुद्धधर्माध्यासेन वस्तुनो भेदप्रसङ्गेन स्थिरत्वहानिः । न चायं विरोधः कालभेदेन परिहर्तव्यः, स्वभावयोर्धर्मिणोऽनतिरेकात्, अतिरेके वा धर्मिणो निःस्वभावत्वेनाकिञ्चित्करत्वप्रसङ्गादिति । तृतीयपक्षस्तु(३) बहुमुखानवस्थादुःस्थः । तथाहि उपकारेऽपि सर्वदोपकारहेतुत्वप्रसङ्गपरिहाराय सहकार्यपेक्षायामनवस्थापातः उपकारपरम्पराकल्पनाप्रसङ्गात् । तथोपकारस्या(४)प्यपेक्षणीयमुपकारान्तरमन्तरेण न स्यादिति तत्राप्यनवस्था । तथा कर्तव्यस्य चोपकारस्य धर्म्यभेदे धर्म्येव क्रियेत, भेदे तु धर्मिणः किमायातम् । अथ भिन्नेनापि (५)तेन धर्मिणि कि-

(१) अङ्गीकारादिति शेषः । (२) सहकारिविरहात् ।
(३) सहकारिभिरुपकृतः करोतीति उपकारभेदपक्षः ।
(४) उपकारस्यापीत्यत्रोपकारोऽपीति पाठः समुचितः ।
(५) तेन—उपकारेण ।

श्चिदुपकारान्तरमाधेयमिति चेत् । तर्हि तेनापि तत्रान्यदाधेयं स्यादिति तृतीयानवस्था स्यात् । (१)एतत्क्षणिकोऽपि भावः किञ्चिदपेक्षः सापेक्षो वा ? न प्रथमः, केवलात्संवत्सरसहस्रेणापि कार्यानुत्पत्तेः । न द्वितीयः, अनुपकारकापेक्षायामतिप्रसङ्गात् । तथा पुञ्जात्पुञ्जोत्पत्तौ बीजमपि पवनपाथस्तेजोऽङ्कुरान् करोतीति यदा पक्षः, तदा किं येन स्वभावेनाङ्कुरं करोति बीजं तेनैव पवनादीनन्येन वा ? नाद्यः, एकस्वभावाधीनत्वेन कार्याणामभेदप्रसङ्गात् । न द्वितीयः, एकस्यापि क्षणस्य स्वभावभेदेन भेदापत्तेरिति । (२)तदिदमाशिक्षितोत्त्रासनम् । तथाहि न तावत्सहकारित्वं कारणानां किन्तु सहितकारित्वेन परस्परोपकृतानि कार्यं कुर्वन्ति,—संहितानि सन्त्येकं कार्यं कुर्वन्तीत्यर्थः । एवं च सहकारित्वलक्षणापेक्षाऽस्त्येव, न तु तैरुपकार्यत्वं स्थिरपक्षवत् , स्थिरस्य हि तैर्विनापि विद्यमानस्य समर्थस्याकरणे उपकारापेक्षत्वमन्तरेण हेत्वभावात् , क्षणिकस्य तु समर्थस्य तैर्विनाऽसत्त्वेनैवाकरणोपपत्तेस्तथाचैकस्यैवानेककार्यकारिस्वभावस्य स्वकारणादुपपत्तेः कार्यभेदेन स्वभावभेदापादनस्यापि दूरनिरस्तत्वात् , अतः सिद्धं न क्रमेण कार्यकारित्वम् । नाप्यक्रमेण, युगपदेव सर्वार्थक्रियाकरणेन द्वितीयकरणे तत्प्रसङ्गेन(३) स्थिरत्वासम्भवादिति । तस्मात्क्रमयौगपद्ययोर्व्यावृत्तेरक्षणिकाद्व्यावर्तमानाऽर्थक्रिया क्षणिके विश्राम्यतीति प्रतिबन्धसिद्धिरिति” ।

उच्यते—अयन्तु व्यतिरेकमुखः प्रतिबन्धोऽन्वयमुखप्रतिबन्धखण्डनेनैव खण्डित इत्युक्तम् । अपि च व्यापकव्यावृत्तिरसिद्धा, क्रमेणैवार्थक्रियाकारित्वोपपत्तेः । यत्तु समर्थस्य किं व्याक्षेपेणेत्युक्तम्, तत्र सहकार्यसन्निधेरिति वदामः । तथाहि सहकारिषु सत्सु करोति तैर्विना न करोतीत्ययमस्य स्वभावो दर्शनबलादेवाभ्युपगम्यते, एवंविधस्य स्वभावस्य

( १ ) नैयायिकः शङ्कते एतत्क्षणिकोपि इति । क्षणिक इत्यर्थः ।
( २ ) उक्ताशङ्काद्वयं निराकुर्वन्नाह बौद्धस्तदिदमिति ।
( ३ ) तत्प्रसङ्गेन–युगपत्सर्वार्थक्रियाकरणप्रसङ्गेन ।

अधिकश्च तत्राश्रयहेतुदृष्टान्तसिद्धौ प्रमाणाभावः, अवस्तुनि प्रमाणाप्रवृत्तेः, प्रमाणप्रवृत्तावलीकत्वाविरोधाभावादुभयवादिसिद्धत्वाच्च,—क्षणिकोऽपि हि कुर्वद्रूपो भावो सहकारिभिः सहैव करोतीति स्वभावो भवद्भिरभ्युपगन्तव्यः, इतरथा सहकारिणामसहकारित्वप्रसङ्गात् । ननु नैते सहकारिणः किन्तु सहितकारिणः इति, तर्हि सहितकारित्वमेव न भवेदिति प्रसङ्गोऽस्तु, अतः सहैव करोतीति नियमे सत्यसाहित्ये न करोतीति विपर्ययनियमोऽपि स्यादतः सहकारिसन्निधिविलम्बो युक्त एव । यत्त्वत्रोक्तं—"सह करोतीति स्वभावाभ्युपगमे सहकारिणो न जह्यादि"ति, तत्तवापि समानम्, तथाहि व्यतिरेकनियमे सहकारिणः स्वकारणादापततोऽपि निवार्य न कुर्यात्, तैर्विना हि न करोतीत्ययमस्य स्वभाव इति । तस्माद्धेतुपबन्धेन यदि सहकारिणः स्वकारणादागच्छेयुस्तदा कुर्याद्यदि नागच्छेयुस्तदा न कुर्यादित्येवंविधे तु स्वभावे न कश्चिद्दोष इति । "(१)स्यादेतत्तैः सह करोति तैर्विना न करोतीति योऽस्य स्वभावः स पश्चादस्ति न वा ? प्रथमे पश्चादपि न कुर्यात्, द्वितीये तु अस्मन्मतापात इति" । (२)अथ तवापि मते तैः सह कुर्वतोऽस्य तैर्विना न करोतीति स्वभावः स यदास्ति तदा न कुर्यादेव, नास्ति चेद्व्यतिरेकव्याप्तावन्वयव्याप्तिरिति स्वरूपहानिप्रसङ्गः । "(३)स्वरूपमस्त्येव तैर्विना भावमात्रं तु नास्तीति चेत" । ममाप्युत्तरकालं स्वरूपमस्ति तत्साहित्यमात्रन्तु नास्तीति समः समाधिः । यच्चोक्तं-"किं समर्थस्य सहकार्यपेक्षेति" । तत्रोच्यते-स्वरूपमेव कुर्वद्रूपं सहकार्यपेक्षं एव च रूपं सामर्थ्यशब्देनाप्युच्यते, अतः सहकारिसहितस्यैव समर्थत्वान्न पूर्वोक्तदोष इति । अतः क्रमेणाप्यर्थक्रियोपपत्तेः स्थिराव्यापकव्यावृत्तेरसिद्धेति सिद्धम् ॥

अन्वयपक्षाद्व्यतिरेकपक्षस्याधिकोऽपि दोष इत्याह अधिकश्चेति ।

---

(१) बौद्धः शङ्कते स्यादेतदिति ।

(२) प्रतिबन्द्योत्तरयति नैयायिकः अथेति ।

(३) पुनरपि बौद्ध आक्षिपति स्वरूपमिति ।

नुपपत्तेः । (१)"एवन्तर्ह्यव्यवहारे स्ववचनविरोधः स्यादिति चेत्" । (२)तत्किं स्ववचनविरोधेन तेषु प्रमाणमुपदर्शितं भवेत्, व्यवहारानिषेधव्यवहारोऽपि वा खण्डितः स्यात्, अप्रामाणिकोऽयं व्यवहारोऽवश्याभ्युपगन्तव्य इति वा भवेत् । न तावत्प्रथमः, नहि विरोधसहस्रेणापि स्थिरे तस्य क्रमादिविरहे वा शशशृङ्गे वा प्रत्यक्षमनुमा-

(३)आश्रयस्य हि स्थिरस्य तद्धर्मस्य क्रमाक्रमविरहस्य हेतोर्दृष्टान्तस्य च शशविषाणस्य च सिद्धाविति । एवन्तर्हीति । प्रमाणागोचरत्वाद-नुमानव्यवहाराभावे अवस्तुन्येव व्यवहारनिषेधव्यवहारकरणात् स्ववचनेनैवावस्तुन्यपि व्यवहारनिषेधस्य विरोधः स्यादिति । प्रत्यक्षमनुमानं

(१) बौद्धः शङ्कते एवन्तर्हीति । प्रमाणसाध्य एव व्यवहारश्चेत्तदाऽलीके कोऽपि व्यवहारो न भवति इति व्यवहारनिषेधव्यवहारोऽपि न स्यादिति भावः । तथा चाश्रयादौ प्रमाणाप्रवृत्तावपि नोक्तदोष इति तात्पर्यम् ।

(२) नैयायिकः समाधत्ते तत्किमिति । नहि अलीके प्रामाणिको व्यवहारस्सम्भवति तेषामकारणतया प्रत्यक्षाविषयत्वात्, व्याप्तिग्राहकतादात्म्यतदुत्पत्त्योरभावेऽनुमानासम्भवात् । व्यवहारनिषेधेति । अवस्तुविषयकव्यवहारस्य निषेधरूपो यो व्यवहारः सोऽपि खण्डितस्तथाच व्यवहारनिषेधोऽपि तत्र न कर्त्तव्य इत्यर्थः । अप्रामाणिक इति । अप्रामाणिकोऽपि व्यवहारश्चेत्त्वया नेष्यतेतदा तथापि स्ववचनविरोधो भवेदित्यर्थः ।

(३) अधिकदूषणान्तेवाहाश्रयेत्यादिना । अत्राश्रयपदं साध्याभावपरं तदाश्रित्य व्यतिरेकव्याप्तिप्रवृत्तेः, हेतुपदं साधनाभावपरन्तद्विपर्ययस्य हेतुत्वोपगमात्, दृष्टान्तपदं स्फुटार्थमेव, तथाच शशविषाणादौ न साध्याभावो न साधनाभावो न वा शशविषाणादि प्रमाणगम्यमित्यर्थः । अथवा अक्षणिकमसत् क्रमयौगपद्याभ्यामर्थक्रियारहितत्वात् कूर्मरोमवदित्याश्रयासिद्धिः सन्देहसिषाधयिषयोरभावात्, अत एव हेत्वसिद्धिः, व्याप्तिपक्षधर्मताविशिष्टस्यैव हेतुत्वात्, दृष्टान्तासिद्धिरप्यत एव साध्याप्रसिद्ध्या साध्याभावव्यापकाभावप्रतियोगित्वग्रहस्यलाभावात् इति भगीरथठक्कुरः ।

नं वा दर्शयितुं शक्यम्(१), तथात्वे वा कृतं मौनकलहेन। द्वितीय(२)स्त्विष्यत एव प्रामाणिकैः। "अवचनमेव तर्हि तत्र प्राप्तम्" किं कुर्मो यत्र वचनं सर्वथैवानुपपन्नं तत्रावचनमेव श्रेयः, त्वमपि परिभावय तावत् निष्प्रामाणिकेऽर्थे मूकवावदूकयोः कतरः श्रेयान्।

(३)"एवं विदुषापि भवता न मूकीभूय स्थितम्, अपि तु व्यवहारः प्रतिषिद्ध एवासतीति चेत्"। सत्यम्, (४)यथा अप्रामाणिकः स्ववचनविरुद्धोऽर्थो मा प्रसाङ्क्षी-

वेति। प्रमाणद्वयवादिबौद्धमतेनेदमुक्तम्। अन्यत्वे स्थिरपक्षस्वीकारात् कृतमुन्मत्तकलहेनेत्याह तथात्वे वेति। द्वितीये कल्पे सम्प्रतिपत्तिरेवोत्तरमित्याह द्वितीयस्त्विति। परस्त्वाह अवचनमेवेति। सिद्धान्ती पृच्छति किं कुर्म इति।

परस्त्वाह एवं विदुषेति। सिद्धान्ती तु परापराधनिमित्तोऽयमस्माकमपराधः, यदि नापराध्येत परः वयमपि नापराध्येम इत्याह सत्यमिति। यथा प्रामाणिकत्वं स्थिरस्य तन्निषेधं कुर्वतः स्ववचनविरोधः

(१) इन्द्रियसन्निकर्षाभावात्प्रत्यक्षस्य व्याप्त्यभावादनुमानस्य चानुपपत्तिरक्षणिकमसत् क्रमयौगपद्यविरहादित्यनुमाने पक्षसाध्यहेतुदृष्टान्तेष्वित्यर्थः। तथात्वे–प्रमाणसत्त्वे असत्त्वानुपपत्तिरिति भावः।

(२) उक्तहेतौ दृष्टान्ते चालीके मानाभावाद्विधिवन्निषेधस्यापि व्यवहारो नेष्यते, शशशृङ्गं नास्तीति व्यवहारस्य च शशे शृङ्गं नास्तीत्यर्थ इति भावः।

(३) अप्रामाणिकेऽर्थे मूकतैव शरणमिति जानतापि भवताऽलीकव्यवहारो निषिध्यते न तु मूकत्वमालम्ब्यते इति पूर्वपक्षाभिप्रायः।

(४) यथेति। सत्त्वं क्षणिकत्वव्याप्यमित्यस्माकं स्ववचनव्याहतोऽर्थः सत्त्वेऽसत्यपि शशविषाणादौ न क्षणिकत्वमिति, विपक्षगामित्वप्रसङ्गात, स माभूदेतदर्थं क्षणिकत्वव्यावृत्त्या सत्त्वव्यावृत्तिरप्रामाणिकीति यथा त्वया व्यवह्रियते, तथास्माभिरपि क्षणिकत्वे किं प्रमाणमिति चिन्तायां त्वदुपदर्शितः शशविषाणादौ व्यतिरेकग्रहव्यवहारो मा भूदित्येतदर्थं स्वाशिष्यादय एवं बोध्यन्त इत्यर्थ इति कल्पलता।

दिति मन्यमानेन त्वया च अप्रामाणिक एवासति व्यवहारः स्वीकृतस्तथास्माभिरपि प्रमाणाचिन्तायामप्रामाणिको व्यवहारो मा प्रसाङ्क्षीदिति मन्यमानैरप्रामाणिक एव स्ववचनविरोधः स्वीक्रियते। (१)यदि तूभयत्रापि भवान् समानदृष्टिः स्यादस्माभिरपि तदा न किञ्चिदुच्यत इति।

(२)तृतीये त्वप्रामाणिकश्चाप्यवश्याभ्युपगन्तव्यश्चेति कस्येयमाज्ञेति भवानेव प्रष्टव्यः। "व्यवहारस्य सुदृढनिरूढत्वादिति चेत्"। अप्रामाणिकश्च सुदृढनिरूढश्चेति व्याघातः। "कथञ्चिदपि व्यवस्थितत्वादिति चेत्"। अप्रामाणिकश्चेन्न कथञ्चिदपि व्यवातिष्ठते, प्रामाणिकश्चेत् तदेवोच्यतामिति (३)वादे व्यवस्था।

स्यात्, स मा प्रसाङ्क्षीदिति मन्यमानेन त्वया प्रामाणिक एवासति अनुमानव्यवहारः स्वीकृतः, व्यवहारसमानाधिकरणो वा प्रामाणिकशब्दस्तथास्माभिरपि क्षणिकत्वे प्रामाणिकार्थविषयत्वादप्रामाणिकोऽनुमानव्यवहारो मा प्रसाङ्क्षीदिति मन्यमानैरप्रामाणिक एवासति व्यवहारनिषेधस्यापि व्यवहारस्य सुदृढत्वादेवंविध एव व्यवहारोऽवश्याभ्युपगन्तव्य इति।

व्याघात इति। प्रामाणिकत्वमेव सुदृढनिरूढत्वमित्यभिप्रायः। तदेवेति। तदेव प्रमाणमेवोच्यतां न च तद्वक्तुं शक्यमिति भावः। इति वाद इति। कथायामेवमर्थव्यवस्थेत्यर्थः।

---

(१) यदि त्विति। त्वं चेत्तत्र व्यतिरेकव्याप्तिं न दर्शयसि तदा तत्र व्यतिरेकभङ्गाय मयापि न यतनीयमित्यर्थः।

(२) अप्रामाणिकव्यवहारस्यावश्यमभ्युपगन्तव्यपक्षे।

(३) ननु जल्पवितण्डयोः परस्परजयार्थमप्रमाणेनापि व्यवह्रियत एव तत्कथं व्याघात इत्यत आह वाद इति। वाद एव भवता सहायमुपक्रान्तः स्थिरं वा विश्वं क्षणिकं वेति तत्त्वनिर्णीषया तत्र कथमप्रमाणेन व्यवहरिष्यसीत्यर्थः। अथवा वादे स्ववचनविरोधो न निग्रह

(१)जल्पावितण्डयोस्तु पक्षादिषु प्रमाणप्रश्नमात्रप्रवृ-त्तस्य न स्ववचनाविरोधः । तत्र प्रमाणेनोत्तरमनिष्टमश-क्यं(२) च, अप्रमाणेनैव तूत्तरे स्ववचनेनैव भङ्गः, मदु-क्तेषु प्रश्नादिषु प्रमाणं नास्तीति स्वयमेव स्वीकारात्, अनुत्तरे त्वप्रतिभैवेति ।

यदि च (३)व्यवहारस्वीकारे विरोधपरिहारः स्यात् असौ स्वीक्रियेतापि, नत्वेवम्-न खलु सकल(४)व्यवहा-

प्रमाणप्रश्नमात्रेति । अयमर्थः—जल्पावितण्डयोर्न वस्तुनि व्य-वहारः कर्त्तव्य इति न व्यवहारो निषिध्यते तत्त्वपरत्वाभावात् किन्तु स्व-युक्तेषु पक्षादिषु किं प्रमाणमिति प्रश्नमात्र एव प्रवृत्तिः, तत्र च न स्व-वचनविरोधः । एतस्मिन्पक्षे उत्तरोपादानानुपादानयोरुभयत्रापि दोष इत्याह तत्रेति । अशक्यं चेति । अशक्यत्वं च पूर्वमेवोक्त'मुन्मत्तप्रसङ्गादि'-ना । पुनरपि तृतीयकल्पमभिप्रेत्याह यदि चेति । व्यवहारनिषेधे विरो-धप्रसङ्गाद्व्यवहारः स्वीक्रियेतापि यदि तत्स्वीकारे विरोधो न स्यान्न त्वेवमित्य-र्थः । सर्वेति । सर्वव्यवहाराभाजनत्वमसत्त्वम् , अतः सर्वव्यवहाराभा-

---

स्थानं नाप्यप्रतिभा किन्तु न्यूनाधिकापसिद्धान्तहेत्वाभासपञ्चकाना-मेव तत्रोद्भावनीयत्वमित्यर्थः ।

( १ ) ननु न त्वया समं तत्त्वनिर्णयार्थमहं प्रवृत्तः किन्तु विजयार्थं-तत्र च स्ववचनविरोधेनाप्रतिभया वा निगृहीत एवासीत्यत आह जल्पेति मिश्राः । नापि जल्पावितण्डयोः क्षणिकत्वसिद्धिरित्याह जल्पेति भ० ठक्कुरः । जल्पे विपक्षखलीकारमात्रमुद्दश्यं वादे तु तत्त्वनिर्णय उद्देश्य इति स्ववचनाविरोधाङ्गीकार इति ।

( २ ) क्रमयौगपद्यविरहस्यालीके प्रमाणेन ग्रहणमशक्यमित्यर्थः ।

( ३ ) नन्वलीके स्ववचनविरोधभयेन मूकत्वं स्वीकृत्याप्रतिभाऽङ्गी-कृता, व्यवहार एव कथं नाङ्गीकृतस्तत्राह यदि चेति मिश्राः । स्ववचन-विरोधेनालीके व्यवहारोऽभ्युपेतव्य इत्यपि न, तत्र निषेधव्यवहाराङ्गी-कारेऽपि विरोधादित्याह यदि चेति भ० ठक्कुरः ।

( ४ ) अत्र 'सर्वेति' नारायणाभिमतः पाठः ।

राभाजनं च तन्निषेधव्यवहारभाजनं चेति वचनं परस्परमविरोधि ।

"विधिव्यवहारमात्राभिप्रायेणाभाजनत्ववादे कुतो विरोध इति चेत्" हन्त, सकलविधिनिषेधव्यवहाराभाजनत्वेन किञ्चिद्व्यवह्रियते न वा, उभयथापि स्ववचनविरोधः, उभयथाऽप्यवस्तुनैव तेन भवितव्यम्, वस्तुनः सर्वव्यवहारविरहानुपपत्तेः । नेतिपक्षे सकलविधिनिषेधव्यवहारविरहीत्यनेनैव व्यवहारेण विरोधात्, अव्यवहृतस्य निषेद्धुमशक्यत्वात् । व्यवह्रियत इति पक्षेऽपि विषयस्वरूपपर्यालोचनयैव विरोधात्, नहि सर्वव्यवहाराविषयश्च व्यवह्रियते चेति

यदि चावस्तुनो निषेधव्यवहारगोचरत्वम्, विधि-

जनस्य निषेधव्यवहारभाजनत्वाविरोध इति । सकलव्यवहाराभाजनत्ववादस्य सकलविधिव्यवहाराभाजनत्वाभिप्रायत्वे न विरोध इति शङ्कते विधीति । प्रकारान्तरेण वस्तुनि व्यवहारस्वीकारप्रतिषेधयोरुभयत्रापि विरोधमापादयति हन्तेति । अवस्तुनि व्यवहारस्वीकारेऽपि विरोधपरिहारस्य किमायातमिति चेत्तत्राह उभयथेति । कथमवस्तुनेति चेत्तत्राह वस्तुन इति । "ननु अभाजनत्वेन व्यवह्रियत इति पक्षे स्यादवस्तुता, नेतिपक्षे सकलविधिनिषेधव्यवहारभाजनाभ्युपगमात् कथमवस्तुता" । नैष दोषः, नेतिपक्षेप्यभाजनत्वव्यवहृतस्यैव निषेधादभाजनत्वव्यवहारादेवावस्तुता सिद्ध्यति, तदेतत् स्वयमेव वक्ष्यति 'अव्यवहृतस्य निषेद्धुमशक्यत्वादिति' । नेतिपक्षे व्यवह्रियत इति च विषयपर्यालोचनयैव विरोधात्, नहि सर्वथा न व्यवह्रियते व्यवहारविषयश्चेति सम्भवति ।

किञ्चावस्तुनो निषेधव्यवहारगोचरत्वमङ्गीकुर्वता विधिव्यवहारगोचरताप्यङ्गीकार्येत्याह (१)यदि चेति । प्रमाणाभावस्येव विधिव्यवहारवाधि-

(१) यथा चालीके सत्त्वं क्षणिकत्वं च व्यतिरेकसिद्ध्यर्थं निषिध्यते

व्यवहारगोचरतापि किं न स्यात् प्रमाणाभावस्योभय-
ापि तुल्यत्वादिति । "वन्ध्यासुतस्यावक्तृत्वेऽचेतन-
वादिकमेव प्रमाणं वक्तृत्वे तु न किञ्चिदिति चेत्" न,
(१)तत्रापि सुतत्वस्य विद्यमानत्वात्, नहि वन्ध्यायाः
सुतो न सुतः, तथासति स्ववचनविरोधात् । "वचनमा-
ात्रमेवैतत् न तु परमार्थतः सुत एवासाविति चेत्" न,
अचैतन्यस्याप्येवंरूपत्वात्, चेतनादन्यत् स्वभावान्तर-
व ह्यचेतनमित्युच्यते । "(२)चैतन्यनिवृत्तिमात्रमेवेह
विवक्षितम्, तच्च सम्भवत्येवेति चेत्" न, (३)तत्राप्य-

ाव्यवहारेऽपि प्रमाणाभावस्तुल्य इत्यर्थः । निषेधव्यवहारे प्रमाणास्तित्वं
धिव्यवहारे तन्नास्तीति शङ्कते वन्ध्यासुतस्येति । वन्ध्यासुतो
क्ता न भवति अचेतनत्वाद्घटवदिति प्रयोगो द्रष्टव्यः । अचेत-
चात्र चैतन्याभावमात्रं विवक्षितं न तु तदितरस्वभावत्वमिति न
वासिद्धिरिति। वचनमात्रमिति । वन्ध्यासुत इति वचनमात्र-
त्र त्वर्थः येन स्ववचनविरोधः स्यादिति(४) । एवंरूपत्वादि-
। वचनमात्ररूपत्वादित्यर्थः । कथं वचनमात्रमित्यत्राह चेतना-

॥ तयोर्विधिरेव कथं न क्रियते विधिवन्निषेधस्यापि प्रमाणाधी-
वादिति कल्पलता ।

(१) अत्राश्रयासिद्धिः स्वरूपासिद्धिश्च द्वयोरपि प्रमाणाविषय-
ादिति यद्यपि, तथापि परपरिहासाय सत्प्रतिपक्षमाह तत्रापीति ।
तृत्वेऽपीत्यर्थः । स्वरूपासिद्धिं निरस्यति नहीति । तथासति-असुतत्वे
ते, वन्ध्यासुतो न वक्तेति वदता त्वयैव तत्सुतत्वाभ्युपगमादिति
वः ।

(२) प्रसज्यप्रतिषेधाभिप्रायेणाशङ्कते चैतन्येति । तथाचाभावस्या-
तुच्छत्वात्तुच्छत्वे च तत्सम्भवान्न स्वरूपासिद्धिरिति भावः ।

(३) तत्रापीति । अस्मत्प्रयोगेऽपीत्यर्थः । त्वन्मतेऽन्यापोहस्यैव प-
र्थत्वादिति भावः ।

(४) भवता तु साधनत्वेनोपात्तं सुतरां न वचनमात्रं भवितुमर्ह-
ते स्वरूपासिद्धिरिति भावः ।

सुतत्वनिवृत्तिमात्रस्यैव विवक्षितत्वात्।

"(१)असुतत्वनिवृत्तिमात्रस्य स्वरूपेण कृतिज्ञप्त्योर-सामर्थ्ये समर्थमर्थान्तरमध्यवसेयमनन्तर्भाव्य कुतो हेतुत्वमिति चेत्" न, (२)अचैतन्येऽप्यस्य न्यायस्य समानत्वात्। "व्यावृत्तिरूपमपि तदेव गमकं यदतस्मादेव(३), यथा शिंशपात्वम्, वन्ध्यासुतस्त्वसुतादिव घटादेः सुतादपि देवदत्तादेर्व्यावर्तते, अतो न हेतुरिति चेत्" नन्वचैदिति। नामयोगिनो नञः (४)पर्युदासत्वेनान्यवचनत्वादिति भावः।

कृतिज्ञप्त्योरिति। अनुमितिं प्रति हेतोः कारकत्वात्तद्विषये कृतिरनुमेयं प्रति ज्ञापकत्वात्तद्विषये ज्ञप्तिरिति अवसेयमिति। यद्यपि सुतशब्दस्यान्यनिवृत्तिमात्रवचनत्वान्न वस्तुस्पर्शस्तथाप्यध्यवसेयं वस्तस्त्येवेति बौद्धानां समय इति। ननु (न) व्यावृत्तिरूपमात्रेण वन्ध्यासुतस्यागमकत्वमुच्यते किन्त्वतस्मात्तु वेदाविशेषादिति (?) शङ्कते व्यावृत्तीति। अस्यैवंरूपमिति। वन्ध्यासुतस्याचैतन्यमप्येवंरूपमिति। एवं विधिनिषेधव्यवहारयोर्हेतुगतोऽपि विशेषो निरस्तः।

---

(१) असुतत्वनिवृत्तेरलीकरूपतया वक्तृत्वसाधनायोग्यत्वेनाध्यवसेयमालोचनीयं वस्तुस्वरूपं विना हेतुत्वमसम्भवीत्याशङ्कतेऽसुतत्वेति।

(२) परिहरति अचैतन्येऽपीति। व्यावृत्तिरूपतया द्वयोरपि हेत्वोरविशेष इत्यर्थः। अस्य न्यायस्य—व्यावृत्तिरूपतया तुच्छस्वरूपस्य।

(३) अतस्माद्विपक्षान्न तु सपक्षात्, यथा शिंशपाऽशिंशपात एव व्यावर्तते न तु शिंशपातोऽपि, वन्ध्यासुतस्तु विपक्षाद्घटादेरिव सुतादपि सपक्षाद्व्यावर्तत इत्यसाधारणतया न गमकोऽलीकानलीकव्यावृत्तेरेकस्य धर्मस्याभावात् इत्याभिप्रायः पूर्वपक्षिणः।

(४) प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता।

पर्युदासः स विज्ञेयो क्रियया सह यत्र नञ्॥

इति पर्युदासलक्षणे क्रियापदस्य भावपरत्वाद्चेतनपदेन चेतनविलक्षणं पदार्थान्तरं ग्राह्यमिति पूर्वपक्षिणोऽभिप्रायः।

न्यमेवंरूपमेव(१), नहि वन्ध्यासुतश्चेतनादिव देवदत्ता-रचेतनादपि काष्ठादेर्न व्यावर्तते । "वक्तृत्वं वस्त्वैक-यतो धर्मः स कथमवस्तुनि साध्यो विरोधादिति चेत्" । पुनरयं विरोधः कुतः प्रमाणात् सिद्धः—किं वक्तृत्व-विविक्तस्यावस्तुनो नियमेनोपलम्भात् आहोस्विद्वस्तु-विविक्तस्य वक्तृत्वस्यानुपलम्भादिति ।

(२)न तावद्वस्तु केनापि प्रमाणेनोपलम्भगोचरः, थात्वे वा नावस्तु । नाप्युत्तरः, समानत्वात्, नहि वक्तृत्वमिव अवक्तृत्वमपि वस्तुविविक्तं कस्यचित्प्रमा-स्य विषयः । "(३)तद्विविक्ताविकल्पमात्रं तावदस्तीति त्" । तत्संसृष्टविकल्पनेऽपि को वारयिता ।

"(४)ननु वक्तृत्वं वचनं प्रति कर्तृत्वम् , तत्कथमवस्तु-

दानीं साध्यधर्मगतं विशेषमाशङ्कते वक्तृत्वमिति(५) । तत्सं-

(१) असाधारणानैकान्तिकमित्यर्थः । न व्यावर्तत इति । अनेन क्षादिव सपक्षाद्व्यावृत्तिः प्रदर्शिता, काष्ठादिसाधारणाचैतन्यस्य णिकस्यालीके वृत्त्यभावात् तन्मात्रवृत्त्यचैतन्यं हेतूकर्तव्यन्तत्र साधारणत्वमेवेति भावः । अत्र 'अस्यैवंरूप'मिति नारायणसंमतः ऽत्र द्रष्टव्यः ।

(२) पूर्वपक्षिणा दत्तस्य वन्ध्यासुतो न वक्तेत्यत्र विरोधस्य-किं तृत्वशून्यस्यालीकस्य नियमेनोपलंभाद्विरोध, उत वस्तुत्वशून्ये वक्तृ-स्यानुपलंभाद्विरोध इति विकल्पद्वयमभिधायाऽऽद्ये आह न तावदिति । ानत्वादिति । अत्रापि प्रमाणापेक्षाया आवश्यकत्वादित्यर्थः ।

(३) शङ्कते तद्विविक्तेति । वन्ध्यासुतो न वक्तेति वस्तुविवेकेनाव-त्वं गृह्यत एवेत्यर्थः ।

(४) प्रत्यनुमाने बाधकमाशङ्कते नन्विति । पर्युदासपक्षे बौद्धस्या-तुल्यमित्याशयेन समाधत्तेऽवक्तृत्वमपीति ।

(५) स्वरूपासिद्धिं निरस्य बाधमाशङ्क्य साम्यापादनेन निराक-ते वक्तृत्वमिति कल्पलता । विविक्तस्य शून्यस्य यदलीकं तन्न तु इति तावन्न केनचित्प्रमाणेनोपलभ्यते यतो विरोधः स्यादित्यर्थः ।

नि, तस्य सर्वसामर्थ्यविरहलक्षणत्वादिति चेत्"। अव- क्तृत्वमपि कथन्तत्र तस्य वचनेतरकर्तृत्वलक्षणत्वादि- ति। "सर्वसामर्थ्यविरहे वचनसामर्थ्यविरहो न विरुद्ध इति चेत्"। अथ सर्वसामर्थ्यविरहो वन्ध्यासुतस्य कुतः प्रमाणात् सिद्धः। "अवस्तुत्वादेवेति चेत्" नन्वे- तदपि(१) कुतः सिद्धम्। "सर्वसामर्थ्यविरहादिति चेत्" सोऽयमितस्ततः केवलैर्वचनैर्निर्धनाधमर्णिक इव साधून् भ्रामयन् परस्पराश्रयदोषमपि(२) न पश्यति।

(३)"क्रमयौगपद्यविरहादिति चेत्" न तद्विरहसिद्धावपि

---

सृष्टेति। वक्तृत्वस्यावस्तुसंसृष्टे विकल्पेऽ(४)पीत्यर्थः। वचनेत- रेति। पर्युदासवृत्तित्वान्नञ इति भावः। वचनसामर्थ्यविरह इति(५)। वचनसामर्थ्यविरहमात्रमेव(६) विवक्षितमस्माभिः न तु वच- नेतरकर्तृत्वमिति भावः।

क्रमयौगपद्येति। अर्थक्रियाकारित्वलक्षणस्य सत्त्वस्य व्या- पकीभूतक्रमयौगपद्यविरहादेव तद्व्यावृत्तावस्तुत्वे सिद्धे नेतरेतरा- श्रयदोष इति भावः। न केवलं क्रमयौगपद्यविरहे प्रमाणाभावः, विरो-

---

(१) अवस्तुत्वमपि।

(२) अवस्तुत्वात् सामर्थ्यविरहस्ततश्चावस्तुत्वमित्यन्योन्याश्रय दोषमपीत्यर्थः।

(३) क्रमादिविरहादवस्तुत्वसिद्धिरित्यभिप्रायेणाशङ्कते क्रमेति। समाधत्ते नेति। क्रमयौगपद्यविरहात् सर्वसामर्थ्यविरहः ततश्चावस्तु- त्वमवस्तुत्वाच्चक्रमयौगपद्यविरह इति चक्रकमिति मिश्राः।

(४) एतन्मतेन मूले 'विकल्पे' पीति पाठो बोध्यः। वन्ध्यासुतो वक्तेति वक्तृत्वसंसृष्टवेदनमप्यसत्ख्यातिरूपं बौद्धमते स्यादेवेतिभावः।

(५) स्वसाध्ये प्रसज्यप्रतिषेधमाशङ्क्याह सर्वेति मूले। तथाच मोक्षविरोध इत्यभिप्रायः।

(६) साध्यत्वेनेत्यादिः।

प्रमाणानुयोगस्यानुवृत्तेः, सुतत्त्वे च परामृष्यमाणे तद्‌विनाभूतसकलवक्तृत्वादिधर्मप्रसक्तौ कुतः क्रम यौगपद्यविरहसाधनस्यावकाशः, कुतस्तरां चावस्तुत्वसाधनस्य, कुतस्तमां चावक्तृत्वादिसाधनानाम्(१)। तस्मात् प्रमाणमेव सीमा व्यवहारसाधनस्य, तदतिक्रमे त्वनियम एवेति। नह्यप्रतीते देवदत्तादौ स किं गौरः कृष्णो वेति वैयात्यं विना प्रश्नः। तत्रापि यथैकोऽप्रतीतपरामर्षविषय एवोत्तरं ददाति 'गौर' इति, अपरोऽपि किं न दद्यात् 'कृष्ण' इति। नचैवंसति काचिदर्थसिद्धिः, प्रमाणाभावविरोधयोरुभयत्रापि तुल्यत्वादिति।

योऽप्यस्तीत्याह सुतत्त्वे इति(२)। उपसंहरति(३) तस्मादिति। प्रमाणमेव सीमा=नियामकं व्यवहारस्य निषेधरूपस्य विधिरूपस्य वा, तदतिक्रमे त्वनियमः निषेधव्यवहारवद्विधिव्यवहारोऽपि स्यादित्यर्थः। प्रमाणातिक्रमे व्यवहारानियमं दृष्टान्तेन दर्शयति न ह्यप्रतीत इति। ननु कामं दद्यात् तथापि कुतश्चिदेव विशेषात्कश्चिदेवार्थः सिद्ध्यति तत्राह नचैवमिति। नहि प्रमाणागोचरविषयत्वे समाने न कस्यचित्कश्चिद्विशेषः सम्भाव्यत इति भावः।

इदानीं कश्चित्प्रतीतिमात्रमेव व्यवहाराङ्गं न प्रमाणप्रतीतिरिति

---

(१) आदिपदात्सामर्थ्यवस्तुत्वक्रमादीनां परिग्रहः, क्रमादिविर[ह]ावस्तुत्वसामर्थ्यविरहावक्तृत्वादीनां पूर्वपूर्वस्यासिद्ध्या तत्साध्यो[त्त]रोत्तरासिद्धिरित्यर्थः।

(२) सुतत्त्वेनैव हेतुना वक्तृत्वं क्रमयौगपद्यं वस्तुत्वं च सर्वमेक[प्रक]ारं मया साधनीयमिति त्वत्साधनानामनवसरपराहतत्वमित्याह सुत[त्त्वे] चेति कल्पलता।

(३) एवं प्रतिबन्दिमुखेन बौद्धमतं दूषयित्वा स्वमतमुपसंहरतीत्यर्थः।

"नन्वप्रतीते व्यवहाराभाव इति युक्तम्, कूर्मरोमादयस्तु प्रतीयन्ते एव, नह्येते(१)विकल्पाः कञ्चिदर्थभेदमनुल्लिख्यन्त एवोत्पद्यन्ते, नच प्रमाणास्पदमेव व्यवहारास्पदमिति"(२)। तन्न युक्तम्, तथाहि शशविषाणमिति ज्ञानमन्यथाख्यातिर्वा स्यात्, (३)असत्ख्यातिर्वा? न तावदाद्यस्ते रोचते, तथासति किञ्चिदारोप्यं किञ्चिदारोपविषय इति स्यात्, तथाचारोपविषयस्तत्रैवास्ति आरोपणीयस्त्वन्यत्रेति जितं नैयायिकैः। नापि द्वितीयः, (४)कारणानुपपत्तेः, इन्द्रियस्य ज्ञानजनने विष-

मन्वानः प्रत्यवतिष्ठते नन्विति(५)।

कथं न रोचते तत्राह तथासतीति। कश्चिदारोप एवान्यथाख्यातिरिति भावः। स्तामारोप्यारोपविषयौ ततः किमित्यत आह तथाचेति। तत्रैव यस्मिन्देशे ज्ञानमुत्पद्यते तत्रैवास्ति यथा शुक्तिः, आरोपणीयमन्यत्र देशान्तरे यथा रजतमिति(६) जितं नैयायिकैः ना-

(१) कूर्मरोमशशशृङ्गादिविषया इत्यर्थः।

(२) ज्ञानत्वापेक्षया प्रमात्वस्य गौरवादिति भावः।

(३) अत्र भ्रमविषयत्वं प्रमाविषयत्वव्याप्यं नवेति विप्रतिपत्तिः। व्याप्यत्वव्यतिरेको निरधिकरण आकाशादौ प्रसिद्धः सामानाधिकरण्यविशेषस्य व्याप्तित्वादिति मिश्राः।

(४) अलीकस्य प्रतीतिरेव नास्ति तत्कारणाभावादिति कुतो व्यवहार इत्याह कारणेति। परिशेषेण कारणाभावमेव व्यवस्थापयति इन्द्रियस्येति। प्रत्यक्षस्येन्द्रियार्थसन्निकर्षजन्यत्वादारोप्यस्यासन्निकर्षेऽपि कश्चित्सन्निकर्षो वक्तव्य एवेति भावस्तथात्वोपगमेऽलीकत्वव्याघात इति तात्पर्यम्।

(५) ननु लाघवाज्ज्ञात एव व्यवहारोऽस्तु किं प्रमितत्वपर्यन्तेनेत्याशङ्कते नन्विति मिश्राः। तथाव्यवहारे ज्ञानत्वेनैव प्रयोजकत्वं न तु प्रमात्वेन गौरवात् त्वयापि भ्रान्तेस्तथात्वोपगमादित्याशयेनाह नन्विति शिरोमणिः।

(६) बौद्धानामक्षणिको घट इति धीर्यद्यन्यथाख्यातिस्तदाऽऽरो-

याधिपत्येनैव व्यापारात्, (१)लिङ्गशब्दाभासयोरप्यन्यथा-ख्यातिमात्रजनकत्वात्, अपहस्तितस्वार्थयोश्चासत्ख्या-तिजनकत्वे शशविषाणादिशब्दात् कूर्मरोमादिविक-ल्पानामप्युत्पत्तिप्रसङ्गात् नियामकाभावात् ।

(२)स हि सङ्केतो वा स्यात् शब्दस्वाभाव्यं वा ।

---

सत् ख्यायत इति वदद्भिरिति शेषः । अथवा प्रमाणप्रतीतमेव व्यवहा-राङ्गं वदद्भिरिति । लिङ्गशब्दाभासयोरिति । अनाभासयोर्लि-ङ्गशब्दयोर्मिथ्याज्ञानहेतुत्वासम्भवात् कूर्मरोमादिज्ञानस्य च मिथ्यात्वात्तस्य चाऽऽभासजन्यत्वाल्लिङ्गशब्दाभासयोरित्युक्तमिति । लिङ्गाभासस्तावद्धू-मायमानबाष्पादिरनग्निमति पर्वतादावग्निमत्ताज्ञानं जनयन्नन्यथाख्याति-हेतुः, शब्दाभासोपि कूर्मरोमादिशब्दो रोमरहिते कूर्मे रोमवत्ताज्ञानं जनयन्न-न्यथाख्यातिहेतुरिति(३) । ननु शब्दलिङ्गाभासयोर्व्यापकावयवार्थरूपस्वा-र्थद्वारेण प्रवर्तमानयोरन्यथाख्यातिहेतुत्वं स्यादपहस्तितस्वार्थयोस्त्वस-त्ख्यातिजनकत्वमिति चेत्तत्राह अपहस्तितेति । नियामकेति ।

---

प्यस्याक्षणिकत्वस्य क्वचित्सिद्ध्यापत्तेरिति भाव इति भगीरथठक्कुरः ।

( १ ) ननु प्रत्यक्षाभासाभावेऽपि लिङ्गाभासाच्छब्दाभासाद्वाऽस-ख्यातिः स्यादत आह लिङ्गेति । ननु स्यादेवं यदि व्याप्तिबलात्सङ्केत-बलाद्वा भानं स्यान्न त्वेवमित्यत आहापहस्तितेति । तिरस्कृतव्यापक-सङ्केतविषयस्वार्थयोर्लिङ्गशब्दयोरसत्ख्यातिजनकत्वे शशविषाणादि-शब्दात्कूर्मरोमादिविकल्पोत्पत्तिः स्यान्नियामकाभावादित्यर्थः ।

( २ ) उपलक्षणविधया शब्दाभासमेव तन्त्रं कृत्वा विकल्पयति स हीति । नियामक इत्यर्थः । सङ्केतश्च शशविषाणपदसमुदायस्य वा प्रत्येकं वा ? प्रथमे आद्यस्तादिति । तत एवेति । तत्र सङ्केतग्रहे शश-विषाणादिपदात् तत्प्रतीतिः तत्पदादेव तत्प्रतीतौ तत्र सङ्केतग्रह इत्य-न्योन्याश्रयत्वमित्यर्थः । ननु यथा सुभ्रूपदे प्रत्येकगृहीतसङ्केतपदस्या-र्थमुपजीव्य वाक्यार्थे सङ्केतग्रहस्तथा शशविषाणादिपदेऽपि स्यादिति प्रत्येकपक्षमाशंक्याह पदेति ।

( ३ ) धूलीपटले धूमारोपादसन् वह्निः पर्वते भासेत, तत्र च धूम-स्य धूलीपटलस्य वह्नेश्च प्रमितत्वं क्वचिद्वाच्यमेवेत्यन्यथाख्यातिपर्यवसा-नम् । एवमनाप्तोदीरितशब्दात्पदार्थो वाक्यार्थो वा प्रतीतचर एवावभा-सेत इत्यन्यथाख्यातिपर्यवसानमेवेति भावः ।

आद्यस्तावत्सङ्केतविषयाप्रतीतेरेव पराहतः। तत एव तत्प्रतीतावितरेतराश्रयत्वम्। पदसङ्केतबलेनैव प्रतीतौ स्वार्थापरित्यागात्, (१)तथा चानन्विताः पदार्था एवान्विततया परिस्फुरन्तीति विपरीतख्यातिरेवानुवर्तते, स्वार्थपरित्यागे तु पुनरप्यनियमः, असामयिकार्थप्रत्यायनात्। शब्दस्वाभाव्यात्तु नियमे व्युत्पन्नवदव्युत्पन्नस्यापि तथाविधविकल्पोदयप्रसङ्गादिति। "वासनाविशेषादेति चेत्"। अथासदुल्लेखिनः प्रत्ययस्य वासनैव कारणम्, तत वासनापि। न तावदाद्यः, शशविषाणादिप्रत्ययानां सदातनत्वप्रसङ्गात्। "कदाचित्प्रबोधात्

अवयवार्थस्वीकारे हि कूर्मरोमशशविषाणादिशब्दानामवयवार्थभेदान्तर्द्वारेण नियतविकल्पोपपत्तिः स्यात्तदभावे तु नियामकाभावाद्विकल्पानामव्यवस्थयोत्पत्तिः प्रसज्येतेति।

(सङ्केतेति ?) सङ्केतविषयस्यापि सतोऽप्रतीतेरेव पराहत इत्यर्थः। तत एवेति। शब्दादेवेत्यर्थः। पदसङ्केतबलेनेति। अवयवसङ्केतबलेनेत्यर्थः। कश्चिच्छब्दः स्वभावादेव काश्चिद्विकल्पमुत्पादयतीति चेत्तत्राह शब्दस्वाभाव्यादिति। अयमर्थः—सङ्केतबलेन हि प्रवर्तमानः शब्दः सङ्केतज्ञानापेक्षया बोधयन्नव्युत्पन्नं बोधयेत्, चक्षुरादिवत्तु स्वभावादेव बोधयन्नव्युत्पन्नमपि बोधयेत् इति। वासनाविशेषादिति(२)। वासनाविशेषाद्विशिष्टविकल्पोत्पत्तिरित्यर्थः। सदा-

(१) पदानां प्रत्येकपदार्थमुपजीव्य संसर्गबोधकत्वमनुपजीव्य वा, आद्येऽन्यथाख्यातिरेवेत्याह तथाचेति। अन्त्ये प्रत्येकपदार्थानुपजीवनं प्रत्येकपदार्थपरित्यागे सत्येवेति पूर्वोक्तानियमप्रसङ्ग एवेत्याह स्वार्थेति।

(२) नियमः स्यादिति शेषः। संस्कारविशेषाद्विशिष्टविकल्पोत्पत्तिनियम इति पूर्वपक्षाभिप्रायः।

कदाचिदिति चेत्"। न प्रबोधोऽपि सहकार्यन्तरं वा अतिशयपरम्परापरिपाको वा। आद्ये वासनैवेति पक्षानुपपत्तिः।

द्वितीयेऽपि यद्यर्थान्तरप्रत्यासत्तेः, तदा पूर्ववत् (१)। स्वसन्ततिमात्राधीनत्वे तु बाह्यवादव्याघातः, नीलादिबुद्धीनामपि वासनापरिपाकादेवोत्पादात्। वासनापीति पक्षे तु तदन्योऽपि हेतुः कश्चिद्वक्तव्यः, स च

---

तनस्वेति। वासनाया आसंसारमनुवृत्ते(२)रिति भावः। उद्बुद्धाया एव वासनायाः कारणत्वादुद्बोधस्य च कादाचित्कत्वाच्छशविषाणादिप्रत्ययानामपि कादाचित्कत्वमिति शङ्कते कदाचिदिति(३)। अतिशयेति। वासनैवातिशयशब्देनोच्यते(४)।

अर्थान्तरप्रत्यासत्तेरिति। अर्थान्तरप्रत्यासत्तेः परिपाक इत्यर्थः। पूर्ववदिति। वासनैवेतिपक्षानुपपत्तिरित्यर्थः। कथं व्याघात अत आह नीलादीति। सौत्रान्तिकमते हि नीलादिप्रत्ययानां कादाचित्कत्वात् कादाचित्केन स्वस्वरूपेण कारणेन भवितव्यमित्येवं बाह्यार्थः कल्प्यते, तत्र केवलवासनापरिपाकक्रमेण शशविषाणादिविकल्पोपपत्तौ

---

(१) परिपाकोऽपि वासनाया यद्यर्थान्तरप्रत्यासत्त्यधीनस्तदा वासनैवेति पक्षानुपपत्तिरित्यर्थः। ननु स्वसन्ततिमात्राधीन एव तत्परिपाको ननु तत्र सहकार्यन्तरापेक्षेत्यत आह स्वसन्ततीति। वासनासततीत्यर्थः।

(२) अनादिवासनासन्ततेः सदाऽनुवृत्तेस्तन्मात्रप्रभवं ज्ञानं सदोत्पद्येतेत्यर्थः।

(३) कारणस्य कादाचित्कत्वात्कार्यस्यापि कादाचित्कत्वं स्यादित्याशङ्कार्थः।

(४) तत्तत्कार्यानुकूलः स्वभावविशेष इति शिरोमणिः। कुर्वद्रूपजातिविशिष्टोत्पत्तिरिति भगीरथठक्कुरः। वासनापरम्परायाः श्चित्परिपाकविशेषो येन शशविषाणादिप्रत्ययोत्पत्तिरिति भावः।

विचार्यमाणः पूर्वन्यायं नातिवर्तत इति(१)। न च शशविषाणादिशब्दानामसदर्थैः सह सम्बन्धावगमोऽपि। (२)तथाहि-परबुद्धीनामनुल्लेखात् तद्विषयस्याप्यनुल्लेख एव। (३)न चार्थक्रियाविशेषोऽप्यस्ति, यतो विषयविशेषमुन्नीय तत्र सङ्केतो गृह्यताम्। (४)न च सङ्केतयितुरेव

---

नीलादिप्रत्ययानामपि तथैवोत्पादात् बाह्यार्थो न सिद्ध्येदिति। पूर्वन्यायमिति। सङ्केतशब्दस्वाभाव्यादिकं नातिवर्तते इति। एवन्तावदसत्ख्यात्युत्पत्तौ कारणं नास्तीत्युक्तम्, इदानीं शशविषाणादिशब्दानामसदर्थत्वेनैतेषां सम्बन्धावगमोऽपि न सम्भवतीत्याह (५)नचेति। शशविषाणादिशब्दार्थविदां हि परेषां हि सकाशात्सम्बन्धो ग्रहीतव्यः, न च बुद्धिमात्रविलसितस्यासदर्थस्य परबुद्धीनामनुल्लेखेऽनुल्लेखात्(६) तेन सह शब्दस्य सम्बन्धावगमः सम्भवतीति। न चाऽसदर्थेनाविनाभूतः कश्चिदर्थक्रियाविशेषोऽस्ति यतो विषयविशेषमुन्नीय तेन सङ्केतो गृह्यतामित्याह न चार्थक्रियेति।

---

(१) इन्द्रियादीनां ज्ञानजनकत्वानुपपत्त्या कारणत्वाभावादित्यर्थः।

(२) ननु स्वातन्त्र्येणेन्द्रियाणामलीकशशविषाणादिज्ञानाजनकत्वेऽपि ज्ञानावच्छेदकतया मानसप्रत्यक्षेऽलीके सङ्केतग्रहः स्यादित्यत आह तथाहीति।

(३) नचेति। नयनानयनादिरूपार्थक्रियाविशेषो नास्ति, अलीकत्वव्याघातादित्यर्थः। उन्नीय=परबुद्धिविषयमिति शेषः।

(४) ननु सङ्केतयितृवचनादेव सङ्केतविषयोपस्थितिः स्यादत आह नचेति। सङ्केतयितृवाक्यं शब्दविधया लिङ्गविधया वा तमुपनयेदिति विकल्प्याद्ये आह तद्विषयाणामिति।

(५) पूर्वं सङ्केतविषयाप्रतीतौ सङ्केतासम्भवात् कारणाभावेनासत्ख्यात्यभाव उक्तः, सम्प्रति तत्सत्त्वेऽप्यलीकस्य ज्ञानं न संभवतीत्याह नचेति भगीरथठक्कुरः।

(६) प्रत्यक्षेणाग्रहणे तद्विषयस्यापि अनुल्लेखाच्छिष्यानिर्वाहाच्च तेन सह सम्बन्धावगम इति भावः।

ाचनात् तदवगतिः, तद्विषयाणां सर्वेषां वचनानामप्र-
ीतिविषयत्वेनागृहीतसमयतया अप्रतिपादकत्वात् ।

(१)"न च शशविषाणादिशब्दमुच्चारयतः कश्चिद-
भिप्रायो वृत्त इति तद्विषयोऽस्य वाच्य इति सुग्रहः
समय इति वाच्यम्" । न ह्येवमाकारः समयग्रहः, 'गां
बधाने'त्युक्ते अप्रतीतशब्दार्थस्याप्यभिप्रायमात्रप्रतीतौ
समयग्रहप्रसङ्गात् । "न च विशेषान्तराविनाकृतः कल्प-
नामात्रविषयोऽस्य वाच्य इति साम्प्रतम्" । घटकूर्मरो-

---

कश्चिदभिप्राय इति । कञ्चिदर्थमभिप्रेत्य हि शब्दोच्चारण-
मेति भावः । तद्विषयः=अभिप्रायविषयः । न ह्येवमाकार इति ।
अयमर्थोऽस्य शब्दस्य वाच्य(२) इत्यर्थः । विशेषप्रतियोगितया हि समयग्र-
हस्सम्भवति न तु सामान्यतः कस्यचिदर्थस्यायं शब्दो वाचक इत्येव-
माकार इति; कथमित्याह गां बधानेति । अप्रतीतशब्दार्थस्याप्रतीत-
शब्दार्थविशेषस्येत्यर्थः । अभिप्रायमात्रप्रतीतौ अभिप्रायमात्रं प्रतीत्य सा-
मान्यतस्तद्विषयमात्रादेवेत्यर्थः । नन्वस्तु विशेषग्रहे सत्येव समयग्रहः
किन्तु विशेषान्तराविनाभाव एवास्य शशविषाणशब्दार्थस्य विशेषः अतो
युज्यते समयग्रह इत्याशङ्क्याह(३) नचेति । घटकूर्मरोमादीनामपि(४)

---

(१) ननु शशविषाणादिशब्दमुच्चारयितुर्यत्र तात्पर्यं तदेव तदर्थ
इति सङ्केतग्रहः स्यादित्याशङ्क्याह नचेति । पूर्वं परबुद्धीनामित्यत्र ज्ञा-
नविषयाशङ्केह तु तात्पर्यविषयतयेत्यपौनरुक्त्यमिति मिश्राः ।

(२) इति सङ्केतग्रहः शब्दव्यवहारोपयोगीति भावः । प्रवृत्तिनि-
मित्तौपयिक इति भगी० ठक्कुरः ।

(३) सङ्केतग्रहस्य न विषयपर्यन्तमवगाहनं किन्तु व्यावर्तकधर्म-
मिति तत्कल्पनामात्रविषयोऽलीकस्तद्विषयस्तथाच भ्रमविषयत्वेनैवोप-
स्थिते तत्र सङ्केतग्रहः स्यादित्यत आह न चेति । कल्पनामात्रोपधानेन
सर्वेषामलीकानां शशविषाणपदवाच्यता स्यादित्यर्थ इति भगीरथ-
ठक्कुरः ।

(४) घटरोमकूर्मरोमादीनामिति कल्पलता ।

मादीनामपि तदर्थत्वप्रसङ्गात् । "न च सर्वे प्रतिपत्तारः स्वस्ववासनयाऽसदर्थशब्दसम्बन्धप्रतिपत्तिभाज इति साम्प्रतम्" । परस्परवार्तानभिज्ञतया अपरार्थत्वप्रसङ्गात(१), नहि स्वयं कृतं समयमग्राहयित्वा परो व्यवहारयितुं शक्यते । (२)न च व्यवहारोपदेशावन्तरेण ग्राह-

विशेषान्तरविनाकृतकल्पनामात्रविषयत्वाविशेषात्तेषामपि शशविषाणशब्दार्थत्वप्रसङ्गात । एतदुक्तं भवति-उक्तरूपो विशेषो न प्रतिनियतसमयप्रतीत्यौपयिक इति । ननु मा भूच्छशविषाणशब्दमुच्चारयतः परस्याभिप्रायमात्रात्समयग्रहः, सर्वे प्रतिपत्तारोऽप्युत्पादकावगतार्थविशेषमतन्त्रीकृत्य स्ववासनावशादेवासदर्थशब्दसम्बन्धप्रतिपत्तिभाज इत्याशङ्क्याह न च सर्वे इति। द्वितीयागोचरे स्वमात्रपर्यवसायिनि समयग्रहे प्रतिपत्तॄणां परस्परवार्तानभिज्ञतया शब्दानामसार्थकत्वप्रसङ्गात इति । अस्तु समयं ग्राहयित्वा व्यवहारस्तत्राह (३)नचेति । नचायमिति(४) । न हि सन्निहितवर्तमानवाचिना यच्छब्देन शशविषाणं परामृश्य सम्बन्धो ग्राहयितुं शक्यत इति । उपदेशस्यैव प्रकारान्तर(५)माशङ्क्य निराकरोति न च

---

(१) वक्तृश्रोत्रोः समानसङ्केताज्ञानात्परार्थे तत्प्रयोगो न स्यादिति भावः ।

(२) तर्हि परोऽपि सङ्केतं ग्राह्यतामित्याशङ्क्य सङ्केतग्रहोपायाभावमाह नचेति । उपदेशशब्देनात्रोपलक्षणातिदेशप्रसिद्धपदसामानाधिकरण्ययोरपि सङ्ग्रहः । सङ्केतग्राहकोपायान्तरस्यापि व्यवहारोपजीवकत्वात्तदभावमाह न च गामिति । प्रयोजकवृद्धवाक्यश्रवणानन्तरं प्रयोज्यवृद्धप्रवृत्तिदर्शनात्तद्धेतुज्ञाने बालेन शक्तिर्गृह्यते, न चालीके प्रवृत्तिर्यद्दर्शनात तद्धेत्वलीकज्ञाने सङ्केतो गृह्येतेत्यर्थः ।

(३) तर्हि तदर्थे श्रोतापि व्युत्पाद्यताम, तथाच तदर्थे प्रयोगः स्यादत आह न च व्यवहारेति । तर्हि व्यवहारादेव परो व्युत्पाद्यतामत उक्तं प्रपञ्चयति न च गामिति मिश्राः ।

(४) साक्षादुपदेशाभावमाह नचायमिति भगीरथठक्कुरः ।

(५) शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्यवहारतश्च ।

ग्यितुमपि। न च 'गां बधान' इतिवत् शशविषाणपदार्थे व्यवहारः, न चायमसावश्व इतिवदुपदेशः, न च यथा गौस्तथा गवय इतिवदुपलक्षणातिदेशः, नचेह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीतिवत्प्रसिद्धपदसामानाधिकरण्यम्।

तदमूः शशविषाणादिकल्पनाः नासत्ख्यातिरूपाः, तथात्वे कारणाभावात्, (१)मूकस्वप्नवदसांव्यावहारिकत्वप्रसङ्गाच्च। तस्मादन्यथाख्यातिरूपा एवेति नैतदनुरोधेनाप्यवस्तुनो निषेधव्यवहारगोचरत्वमिति।

(२)भवतु वाऽसत्ख्यातिः, तथापि न ततो व्याति-

थेति। असन्निहितस्यापि गवयादेर्यथा सन्निहितगोगतोपलक्षणभूतसादृश्यातिदेशेन समयभाजनत्वं न तथेह सम्भवति, असतः केनचित्सादृश्याभावेनोपलक्षणानुपपत्तेरिति। पुनरपि समयग्रहे प्रकारान्तरं निराकरोति (३)नचेति। यथेह विदितपदान्तरार्थोऽविदितमधुकरशब्दार्थो मधुपातुरेव मधुकरशब्दो वाचकशब्द इति व्युत्पद्यते, न चेह तथा सम्भवति पानक्रियावस्तुरिवावस्तुनः प्रत्यक्षेणादर्शनादिति।

उपसंहरति (४)तदमूरिति। नैतदनुरोधेनेति। (५)अस-

---

वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥ इत्यादिनाऽभियुक्तोक्तमुपमानरूपं प्रकारान्तरमित्यर्थः।

(१) न च सर्वे प्रतिपत्तारः स्वस्ववासनयेत्यादावुक्तं दूषणं सिंहावलोकितन्यायेन प्रकारान्तरेण स्मारयति मूकेति। एवमसत्ख्यातित्वाभावमुपसंहृत्यान्यथाख्यातिमुपसंहरति तस्मादिति।

(२) ननु सत्त्वक्षणिकत्वयोः प्रमितत्वात्तद्व्यतिरेकावपि प्रमितावेव, तथाचाप्रामाणिकव्याश्रये व्यतिरेकग्रहोऽस्तु, अथवा नैयायिकैरपि ज्ञेयत्वकेरजततादात्म्यस्यासत एव भानमङ्गीक्रियते इत्यत आह भवतु वेति। असत्ख्यातिराश्रयांशे भवत्वित्यर्थः। ततः—तत्र।

(३) अनुमानद्वारकोपदेशाभावमाह नचेहेति भगी० ठक्कुरः।

(४) प्रकृतमुपसंहरति तदमूरिति मिश्राः।

(५) शशविषाणादिप्रत्ययानुरोधेनापीति मिश्राः। न केवलं प्रमा-

रेकः प्रामाणिकः, तथाहि–कोऽयं व्यतिरेको नाम? यद्यतो व्यतिरिच्यते तस्य तत्राभावो वा, तदभावस्वभावत्वं वा। तत्र (१)न तावत् क्रमयौगपद्ययोः शशविषाणे अभावः प्रमाणगोचरः, वृक्षरहितभूभृत्कटकवत् क्रमयौगपद्यरहितस्य शशविषाणस्य प्रमाणागोचरत्वात्। (२)नापि क्रमयौगपद्याभावरूपत्वं शशविषाणस्य प्रामाणिकम्, घटाभाववच्छशविषाणस्य प्रमाणेनानुपलम्भात्। "घटाभावोऽपि न प्रमाणगोचर इति चेत्" न, तस्य तद्विविक्तेतरस्वभावस्यापि प्रमाणत एव सिद्धेः,

---

त्स्यात्स्यनुरोधेनेति। प्रामाणिक इति। प्रामाणिके हि व्यतिरेके हेतोरनाभासत्वं भवति, अप्रामाणिकस्य तदाभासेऽपि सुलभत्वादिति। (३)तदभावस्वभावत्वं वेति। व्यतिरिच्य भावाभावस्वभावत्वं वेति। तत्रेति। (४)घटाभावोऽपीति। तस्यापि तुच्छत्वेन प्रमाणाविषयत्वादिति। न तस्येति। यद्यपि च घटाभावो ऽपि पृथग्भूतः कश्चिन्नाऽस्ति भवन्मते, तथापि घटविविक्तभूतलादिस्वभावत्वाभ्युपगमात्तस्यापि प्रमाणत

---

णाभावादपि तु शशविषाणादिविकल्पार्थबोधादपि तस्य शशविषाणारोपरूपत्वमिति भगी० ठक्कुरः।

( १ ) न तावदिति। पर्वतनितम्बे योग्यानुपलब्ध्या वृक्षाभावस्येव प्रकृते व्यतिरेकग्रहो न सम्भवतीत्यर्थः।

( २ ) द्वितीयं निरस्यति नापीति।

( ३ ) यथा भूतलाद्भिन्नस्य घटस्याभावो भूतले इति स्वमतेन व्यतिरेकस्वरूपं दर्शयित्वा प्राभाकरमतेन तत्स्वरूपप्रदर्शनाय विकल्पान्तरं प्रदर्शयति तदभावेति। तथाच भूतलादेरधिकरणस्यैव घटाभावरूपत्वमित्यर्थः। व्यतिरिच्येति। व्यतिरिक्यभावो भूतलभिन्नो घटस्तदभावस्वभावत्वमित्यर्थः। तथाचाधिकरणभिन्नोऽभावोऽधिकरणस्वरूपो वेति विकल्पार्थ इति भावः।

( ४ ) ननु यथा प्रमाणागोचरस्यापि घटाभावस्य व्यवहारः सर्वजनीनस्तथा क्रमयौगपद्याभावव्यवहारोऽपि स्यादित्यभिप्रायेणाशङ्कते घटाभावोऽपीति।

असिद्धौ वा तत्राप्यव्यवहार एव ।

(१) "घटस्तावत् स्वाभावविरहस्वभावः प्रमाणसिद्धः, ताद्रूप्येण क्वाचिदप्यनुपलम्भात्, एतावतैव तदभावोऽपि घटविरहस्वभावः सिद्ध इति चेत्" । न, (२) घटाभावस्य तदभावविरहस्वभावत्वानभ्युपगमात् । न चान्यस्य स्वभावे प्रमाणगोचरे तदन्योऽपि सिद्धः स्यादतिप्रसङ्गात्(३) । "एवम्भूतावेव घटतदभावौ यदेकस्य

---

एव सिद्धिरिति । न तद्विविक्तेतरस्वभावत्वमभावस्य किन्तु तुच्छ एवासौ अतो न तस्य प्रमाणसिद्धिरिति चेत्तत्राह (४)असिद्धाविति ।

स्वाभावविरहस्वभावत्वानभ्युपगमादिति । नहि त्वन्मते अभावस्य तुच्छत्वात्तद्विरहिस्वभावत्वं भावस्याभ्युपगम्यत इति । किञ्च घटस्तावत्स्वाभावविरहस्वभावः सिध्यति किन्तु स्वप्रमाणेन, तदभावस्य तु तद्विरहस्वभावत्वं कुतः सिद्ध्येदित्याह नचेति । (५)एव-

---

(१) नन्वप्रामाणिकेनापि व्यवहारः, न चातिप्रसङ्गः, यः स्वाभावविरहस्वभावः प्रामाणिको भवति तदभावेनाप्रामाणिकेनापि व्यवहार यस्य नियामकत्वादित्याह घटस्तावदिति । ताद्रूप्येण-प्रतियोग्यात्मत्वेन । एतावतैवेति । यदि घटाभावो घटविरहस्वभावो न स्यात् दा घटस्यापि स्वाभावविरहस्वभावत्वं न स्यादित्यर्थः ।

(२) घटो न घटाभावविरहरूपो विरहस्य बौद्धनयेऽलीकतया टस्य तद्रूपत्वेऽलीकत्वप्रसङ्गादित्याशयेनोत्तरमाह घटाभावस्येति । टरूपो भावो घटभावस्तस्य स्वाभावविरहत्वानभ्युपगमादित्यर्थः, तियोगिनः स्वाभावविरहात्मत्वे प्रामाणिकेऽभावप्रामाणिकताया आवश्यकत्वादिति भावः। अत्र घटाभावस्येत्यपि पाठोऽन्यटीकाकृतां सम्मतो रायणेन व्याख्यात इति स एव मुद्रितः ।

(३) तथाच स्तम्भे प्रवर्तमानं प्रमाणं कुम्भमपि साधयेदित्यर्थः ।

(४) ननु भूतले घटो नास्तीति प्रतीतिरप्यसत्ख्यातिरेवेत्यत हासिद्धाविति । प्रमितस्यैव व्यवहार्यत्वादिति भावः ।

(५) अतिप्रसङ्गं निराकुर्वन्नाह पूर्वपक्षी एवंभूताविति । प्रतियोगिनि प्रवृत्तं प्रमाणमनुयोगिनमपि विषयीकरोतीति प्रतियोग्यनुयोगि-

परिच्छित्तिरपरस्य व्यवच्छित्तिरिति चेत्" । न, घटव-
द्घटाभावस्यापि प्रामाणिकत्वानभ्युगमे स्वभाववादा-
नवकाशात् । प्रमाणसिद्धे हि वस्तुनि स्वभावावलम्बनम्,
न तु स्वभाववादावलम्बनेनैव वस्तुव्यवस्थितिरिति हि
भवतामेव तत्र तत्र जयदुन्दुभिः ।

(१) "तत्किमिदानीं स्वाभावविरहस्वभावो घटः
प्रमाणान्नैव सिद्धः" ।(२) तव दृष्ट्या एवमेतत्, घटो हि

---

मिति । अतोऽन्योन्यविरहात्मकत्वमन्योन्यस्य स्वभावादेव सिद्धमिति ।
परिहरति (३)न घटवदिति । अयमर्थः—सत्यमेवंस्वभावावेव घटतद-
भावौ, एतच्चाभावस्य प्रामाणिकत्वाभ्युपगमे वक्तुं शक्यते, प्रमाणसिद्धे
हि कस्यचित्किञ्चिद्रूपत्वे कथमेतस्यैवंरूपत्वमित्यनुयोगे, स्वभावोऽयमस्येति
स्वभाववादो, तेन त्वेवंस्वभावत्वादेवंरूपं वस्त्विति स्वभाववादालम्बनेनैव
वस्तु व्यवस्थाप्यत इति भवन्त एव कस्मिंश्चिद्विषये वदन्त आत्मनो
विजयमुद्घोषयन्तीति(४) ।

(५)कथमित्यत आह—घटो हि यादृशः तादृशस्वभावः दैवगत्या

---

भाव एवात्र नियामक इति नातिप्रसङ्गो न वाऽभावस्य स्वतन्त्रप्रमा-
णविषयत्वमिति भावः ।

( १ ) पर आक्षिपति तत्किमिति । तथासति घटः स्वाभावाभावा-
त्मको नैव स्यादित्याक्षेपतात्पर्यम् ।

( २ ) समाधत्ते तवेति । भवद्दर्शने यदि न प्रामाणिकोऽभावस्तदा
तद्विरहस्वभावो घटोऽपि न प्रामाणिकः स्यादिति समाधानाशयस्तमेव
विवृण्वन्नाह घटो हीत्यादिना । यादृक्तादृक्स्वभाव इति । अवयवी
परमाणुस्वरूपो वेत्यर्थः ।

( ३ ) व्यतिरेकी दृष्टान्तोऽयम् , स्वभावो हि स्वरूपम्, तच्च निः-
स्वरूपस्य-'प्रमाणपथानवतीर्णस्य' न संभवतीत्यर्थः इति कल्पलता ।

( ४ ) प्रमाणसिद्ध एव स्वभावावलम्बनमङ्गीकर्तव्यमित्यभिप्रायः ।

( ५ ) बौद्धनये घटस्य स्वाभावाभावात्मकत्वं 'तव दृष्ट्या एवमेतत'
इत्यनेनोक्तं कथमित्याशयेनाकाङ्क्षापूरकं वाक्यमवतारयति कथमिति ।

यादृक्ताद्दक्स्वभावस्तावत्प्रमाणपथमवतीर्णः, तस्य तु यदि परमार्थतोऽभावोऽपि कश्चित्स्यात्, स्यात्परमार्थतस्सोऽपि तद्विरहस्वभाव इति तथैव प्रमाणेनावेदितः स्यात्। न चैतदप्य(१)भ्युपगम्यते भवता। (२)तस्माद्घट-तदभावस्यापि प्रामाणिकत्वेनैवानयोः परस्परविरहलक्षणव्यतिरेकासिद्धिः, अप्रामाणिकत्वे त्वनयोरपि न तथाभाव इति। (३)शशविषाणादिष्वपीयमेव गतिः।

"ननु काल्पनिकरूपसम्पत्तिरेवास्त्वनुमानाङ्गम्" ।

---

स स्वभावस्तावत्प्रमाणपदवीमवतीर्ण एव, स च स्वभावः स्वाभावविरहात्मक इति स्वीक्रियेत एवं चेदित्याह तस्य त्विति। तद्विरहस्वभावः=अभावविरहस्वभाव इति। तथैव-अभावविरहस्वभावत्वेन परमार्थतः प्रमाणेनावेदितः स्यात्। न चैतदभ्युपगम्यत इति। परमार्थतोऽभावानभ्युपगमेन न परमार्थतस्तद्विरहस्वभावत्वं,(४) त्वयाऽनभ्युपगमात् इत्यर्थः(५)। नन्विति(६)। न पारमार्थिकव्यतिरेकरूप-

---

(१) पारमार्थिकव्यतिरेकस्वरूपम्, तदधीनं भावस्वरूपं वा।

(२) उभयोः प्रामाणिकत्वमुपसंहरति तस्मादिति। अनयोः-घटतदभावयोः, न तथाभावः-नान्योन्यविरहस्वभावत्वम्।

(३) शशविषाणादिष्वपीति। शशविषाणादीनां प्रामाणिकत्वे परस्पैकासिद्ध्यौगपद्यविरहनिरूपणं नान्यथेत्यर्थः, तथाच प्रमाविषयस्यैव व्यवहारविषयत्वादिति यदुपक्रान्तं तत्सिद्धमित्यर्थ इति मिश्राः।

(४) घटस्येति शेषः।

(५) नन्वेवमनयोः प्रामाणिकत्वेन परस्परविरहरूपत्वे परस्पराप्रतीतिकतया नैकस्यापि प्रतीतिः स्यादन्योन्याश्रयादिति चेत्। न, त्वेन घटे गृह्यमाणे तद्विरहानपेक्षणात्, एवं तद्विरहस्यापि प्रमेयविना ज्ञाने घटानपेक्षणादिति नान्योन्याश्रयो दोषः।

(६) ननु सत्त्वक्षणिकत्वयोर्व्यतिरेकः कल्पनया तावदुपनीत एताव तदनुमानं प्रवर्ततां किं व्यतिरेकस्य प्रामाणिकत्वग्रहेणेत्याह वति कल्पलता।

तत्र, तस्याः सर्वत्र सुलभत्वात् ।

“(१)ननु पक्षसपक्षविपक्षास्तावद्वस्त्ववस्तुभेदेन द्विरूपाः, तत्र ये कल्पनोपनीतास्तत्र काल्पनिका एव पक्षधर्मत्वान्वयव्यतिरेकाः, प्रमाणोपनीतेषु तु प्रामाणिका एवेति विभागः । (२)तदिह काल्पनिकास्त्रिरग्रेर्यद्यपि

सम्पत्तिरनुमानाङ्गम् ; येन व्यतिरेकस्य प्रामाणिकस्यावश्यम्भावः स्यात् किन्तु काल्पनिकी (३)रूपसम्पत्तिरेवेति भावः । सर्वत्रेति(४) । लिङ्गाभासेष्वपीति ।

(५) अतिप्रसङ्गपरिहारमाशङ्कते ननु पक्षेति । अयमर्थः-यत्रावस्तुरूपा एव पक्षादयस्तत्र काल्पनिक्येव रूपसम्पत्तिर्यत्र वस्तुरूपा एव भवन्ति तत्र वास्तव्येव रूपसम्पत्तिरङ्गम्(६), न च प्रमेयत्वादेर्वस्तु-

(१) ननु निरग्निकात् कूर्मरोमादेर्विपक्षात् प्रमेयत्वव्यावृत्त्या विपक्षाद् व्यावृत्तिः, काल्पनिके शब्दे चाक्षुषत्वसत्त्वेन पक्षसत्त्वं, काल्पनिकेऽनित्ये गगनारविन्दे कृतकत्वसत्त्वादन्वयो नित्यत्वकृतकत्वयोरिति काल्पनिकी रूपसम्पत्तिर्यथा त्वयोच्यते, तथा हृदे विपक्षे प्रमेयत्वस्य सत्त्वाद्विपक्षवृत्तित्वं, वास्तवे शब्दे चाक्षुषत्वस्यासत्त्वादपक्षवृत्तित्वं, नित्ये वस्तुनि कृतकत्वस्यावृत्तेर्विरुद्धत्वमत उक्तानां हेतूनां कथं गमकत्वं स्यादित्याशङ्कते नन्विति मिश्राः ।

(२) बौद्धानामनैकान्तिकासिद्धविरुद्धास्त्रयो हेत्वाभासास्तत्र क्रमेण काल्पनिकरूपसम्पत्तेरगमकत्वमाह तदिहेति भगीरथठक्कुरः ।

(३) रूपं सपक्षसत्त्वादि ।

(४) पर्वतो वह्निमान् प्रमेयत्वात् महानसवत्, शब्दोऽनित्यश्चाक्षुषत्वाद्घटवत्, नित्यः शब्दः कृतकत्वादित्यत्र व्यभिचारासिद्धिविरोधानां यथाक्रमं हेत्वाभासतयाऽसाधकत्वं बौद्धेनाङ्गीक्रियते तदपि न स्यात्काल्पनिकरूपसम्पत्तेः सर्वत्रोदाहृतेषु सुलभत्वादिति भावः ।

(५) सव्यभिचारासिद्धविरुद्धानामपि काल्पनिकरूपसम्पत्तिमादायानुमितिजनकत्वरूपातिप्रसङ्गपरिहारमित्यर्थः ।

(६) तथाचासत्त्वे साध्ये काल्पनिकयोः पक्षसपक्षयोः स्थिरभावशशशृङ्गयोः काल्पनिकमेव क्रमयौगपद्यविरहस्य हेतोः सत्त्वम् , क्षणि-

प्रमेयत्वादेर्व्याप्तिः काल्पनिकी सिद्धा, तथापि प्रामा· णिकाज्जलहृदादेः प्रामाणिक्येवैषितव्या, सा च न सि· द्धेति कुतस्तस्य हेतुत्वम् । एवं प्रामाणिके शब्दे पक्षी· कृते प्रामाणिक एव हेतुसद्भावो वक्तव्यः, न चासौ चाक्षुषत्वस्यास्तीति सोऽपि कथं हेतुः । एवं कृतकत्व· स्यापि वस्त्वेकनियतस्य धर्मस्य वास्तव एवान्वयो व· क्तव्यः, वस्तुनो विपक्षाच्च वास्तव एव व्यतिरेकः, न च ास्य तौ स्तः, तत्कथमसावपि हेतुरिति" ।

(१)प्रलपितमेतत्, नहि नियामकमन्तरेण सम्पदं ति कल्पना स्वरते, विपदं प्रति (तु) विलम्बत इति ाक्यं वक्तुम, तथाच निरग्निकमपि कूर्मरोम सधूम·

---

पा एव विपक्षादयोऽवस्तुरूपा अपि कूर्मरोमादयो विद्यन्ते ततस्तत्र वास्त· व रूपसम्पत्तिरङ्गं, सा चन सिद्धेति कथं तस्य हेतुत्वमिति । एवमनै- न्तिकस्याभावस्य हेतुत्वप्रसङ्गो निराकृतः(२), असिद्धस्यापि निरा- ोति एवामिति । अनित्यः शब्दः चाक्षुषत्वादित्युक्ते प्रामाणिके ्दरूपे पक्षे चाक्षुषत्वस्य प्रामाणिक एव सद्भावो वक्तव्यः, न चासा· ीति कथं हेतुत्वमिति ।

सिद्धान्ती तु यथा काल्पनिकया सम्पत्त्या हेतुत्वं तथा काल्पनिकया· सम्पत्त्या तदाभासः स्यादिति प्रतिपादयिष्यन् परोक्तं निन्दति प्रलपि

---

च साध्ये सत्त्वस्य काल्पनिके शशशृङ्गादौ विपक्षे काल्पनिक व्यतिरेको गमकतौपयिकं रूपमिति भावः ।

(१) अर्थशून्यं त्वदभिधानमित्यर्थः । तदेव दर्शयति नहीति । काल्पनिकी रूपसम्पत्तिर्गमिका तथा तादृश्येव लिङ्गरूपविपत्ति ाका स्यादित्यर्थः । क्षणिकत्वसत्त्वयोरलीके व्यतिरेकासिद्धिः का· की बौद्धस्य सम्पत्, सद्धेतोरप्यसद्धेतुत्वापत्तिर्विपत्, तामेव ति तथा चेति ।

(२) पर्वतो वह्निमान् प्रमेयत्वादित्यत्र ।

मिति कल्पनामात्रेण विपक्षवृत्तित्वात् धूमोऽपि नाग्निं गमयेत्। "वास्तव्यां रूपसम्पत्तौ किमनेन काल्पनिकेन दोषेणेति चेत्"। तर्हि वास्तव्यामसम्पत्तौ किं काल्पनिक्या तयेति समानम्। "विरोधाविरोधौ विशेष इति चेत्" कुत एषः(१)। "उभयोरेकत्र वस्त्ववस्तुत्वात्, अन्यत्रावस्तुत्वादिति चेत्"। (२)तत् किं काल्पनिकोऽपि धूमो वस्तुभूतो येन कूर्मरोम्णस्तेन सह विरोधः स्यात्।

---

तमिति। परस्त्वाशङ्कते (३)वास्तव्यामिति। धूमस्येति शेषः। सिद्धान्ती त्वाह (४)तर्हीति। वास्तव्यामसम्पत्तौ क्षणिकत्वसाधनस्येति (वि)शेषः किमनया काल्पनिक्या सम्पत्त्येत्यर्थः। शङ्कते (५)विरोधेति। विपत्तौ विरोधः सम्पत्तौ चाविरोधो विशेषः, काल्पनिकत्वे समानेऽपीत्यर्थः। कुत एतत्—त्वदुक्तमित्यर्थः। हेतुमाह(६) उभयोरपीति। एकत्र विपत्तौ, उभयोर्धूमकूर्मरोम्णोर्वस्त्ववस्तुत्वेन विरोधात्सहभावानुपपत्तिरिति विशेष इति। तत्किमिति। काल्पनिकस्य हि धूमस्य काल्पनिकेन कूर्मरोम्णा निरग्निकेन संसर्गात् काल्पनिक-

(१) विशेषः—विरोधोऽविरोधश्चेति। अत्र नारायणमते 'कुत एतदिति' पाठ उक्तविशेषनियामकं किमित्यर्थसङ्गत्या योजितो द्रष्टव्यः।

(२) तत्किमिति। अवस्तुभूतस्यैव धूमस्यावस्तुनि निरग्निके गतत्वेन व्यभिचारस्य मयोक्तत्वात् क्व विरोध इत्यर्थः।

(३) ननु वस्तुनो विपक्षात् धूमस्य वस्तुनो व्यावृत्तिरस्त्येवेति धूमो वह्निं कथं न गमयेदित्याह वास्तव्यामिति मिश्राः।

(४) सत्त्वक्षणिकत्वयोरपि त्वदुपदर्शिता व्यतिरेकसम्पत्तिरवास्तव्येवेत्याह तर्हीति कल्पलता।

(५) ननु कल्पनापि विरुद्धं न विषयीकरोति, धूमस्य हि वस्तुनः कूर्मरोम्णाऽलीकेन विरोधोऽक्षणिकत्वकूर्मरोम्णोश्चोभयोरप्यलीकत्वान्न विरोध इति नियामकं स्यादित्याह विरोधेति भगी० ठकुरः।

(६) बौद्ध इति शेषः। धूमकूर्मरोम्णोः एकत्र धूमानुमानस्थले वस्त्ववस्तुत्वात् अन्यत्र त्वदुपदर्शिते व्यतिरेके अवस्तुत्वात् इति विरोधाविरोधावित्यर्थ इति मिश्राः।

**"(१)क्वचिद्वस्तुभूत इति चेत्"। निर्धूमत्वमपि क्वचिद्व-स्तुभूतमिति तेनापि विरोध (२)एव। तस्माद्यथा काल्प-निकी विपत्तिर्न दोषाय, तथा काल्पनिकी सम्पत्तिरपि न गुणायेति व्यतिरेकभङ्गः(३)।**

**"(४)अस्तु तर्हि ध्रुवभावित्वेन विनाशस्याहेतुक-**

व्यभिचारलक्षणा विप्रतिपत्तिः सिध्यतीति भावः। **क्वचिद्वस्तुभूत इति**। क्वचिद्भूमौ वस्तुभूतावित्यर्थः। **निर्धूमत्वमिति**। धूमेतर-स्वभावत्वात्मकमपि निर्धूमत्वं वस्तुभूतमिति तेनापि सह कूर्मरोम्णा विरोध एवेति कथं सम्पत्तिरिति उपसंहरति **तस्मादिति**।

एवं क्षणभङ्गे सत्त्वसाधनं निरस्तमिदानीं तत्रैव साधनान्तरं परः प्रस्तौति **अस्तु तर्हीति**। यदा हि ध्रुवभावित्वाद्विनाशस्याहेतुकत्वं(५)

(१) क्वचिदिति। हेतुत्वेनोपात्तो धूमो वस्तुभूत एव स च नाव-स्तुनीति न व्यभिचार इत्यर्थः।

(२) इदादौ निर्धूमत्वस्य वस्तुत्वात् कूर्मरोम्णि तत्कथं वर्तेत तथाच निरग्निकेऽलीके न धूमवत्त्वं न निर्धूमवत्त्वमिति विरोध एवेत्यु-पराथः।

(३) तथाच बौद्धनये सत्त्वक्षणिकयोर्नान्वयव्यतिरेकग्रहोऽपीति भावः।

(४) यदुक्तं पूर्वं 'ध्रुवभावित्वे तु वक्ष्यामि' इति तदाह अस्तिव-त्। ध्रुवमवश्यं भावोऽस्यास्तीति ध्रुवभावी विनाशः, एतावता सत्त्व-क्षणिकत्वयोर्व्याप्तिः सेत्स्यतीति हृदयम् इति मिश्राः। सन्मात्रस्योत्प-त्तिमत्त्वादुत्पत्तिमतां च विनाशध्रौव्यस्योभयवादिसिद्धतयाऽत्रायं प्र-योगः—यद्यस्य ध्रुवभावि तत्र न तद्धेत्वन्तरापेक्षं यथा जलपरमाणौ पम्। वस्तुतो भावोत्पत्त्यव्यवहितोत्तरक्षणः ध्वंसाधारः भावोत्पत्त्य-व्यवहितोत्तरक्षणत्वात् उभयसिद्धतदाधारक्षणवदिति भगी० ठक्कुरः। भावोत्पत्तिमतां क्षणिकत्वे सिद्धेऽपि परैरङ्गीकृतेषु नित्येषु परमाणुषु कथं त्सिद्धिरित्याक्षेपेऽनित्यत्वेन विरुद्धव्याप्तिकेन सत्त्वेन तेषां विनाशित्वं क्षणिकत्वं वा साधनीयमित्याशङ्काभिप्रायो व्याख्यातः शिरोमणिना।

(५) अहेतुकत्वं च तदुत्पत्त्युत्तरभाविहेत्वनपेक्षत्वम्। अत्रायमनु-मानप्रयोगः—भावविनाशोऽहेतुकः ध्रुवभावित्वात्, यद्यस्य ध्रुवभावि तदहेतुकम् इति।

त्वसिद्धेः क्षणभङ्गः" । न, विकल्पानुपपत्तेः(१) । ताद्धि तादात्म्यं वा[१], निरूपाख्यत्वं वा[२], तत्कार्यत्वं वा[३], व्यापकत्वं वा[४], अभावत्वमेव वेति[५] । [१]न पूर्वः, (२)निषेध्यनिषेधयोरेकत्वानुपपत्तेः, उपपत्तौ वा विश्वस्य वैश्वरूप्यानुपपत्तेः । "ननु कालान्तरेऽर्थक्रियां प्रत्यशक्तिरेवास्य नास्तिता, सा च कालान्तरे समर्थेतरस्व-

सिद्धं भवति तदा विनाशस्य सर्वानुवृत्तेर्भावस्य क्षणभङ्गस्सिद्धो भवतीत्यभिप्रायः । तद्धीति । तत्-ध्रुवभावित्वम् । निषेधेनाभावेन निषेध्यस्य भावस्य तादात्म्यं वा(३), भावस्वरूपातिरिक्तस्य विनाशस्य निरुपाख्यत्वं (४)वा, तत्कार्यत्वं वा भावकार्यत्वं (५)वा, निरुपादानत्वं वा उपादानशून्यत्वं वा, भावं प्रति व्यापकत्वं (६)वा अभावत्वं वेति । यद्यप्येते सर्वे विकल्पा न ध्रुवभावित्वशब्दस्य मुख्यार्थतया वर्णयितुं शक्यन्ते, तथापि विनाशस्याहेतुकत्वसाधनतया संभाव्यमानत्वात्तच्छब्दविवक्षिततया वर्णयितुं शक्यन्ते इत्युपन्यस्ता इति न दोष इति । विश्वस्येति । विश्वस्य हि स्वाभावतादात्म्ये अभावमात्रपरिशेषाद्विश्वस्य वैश्वरूप्यानुपपत्तिरिति । अविरोध(७)माशङ्कते नन्विति । अशक्तिरेव नास्तितेति ।

(१) विकल्पे क्रियमाणे त्वदभिमतपक्षानुपपत्तेरित्यर्थः ।

(२) निषेध्येति । नहि घट एव घटाभाव इति कस्यचिदनुभव इति भावः । वैश्वरूप्येति । सर्वेषां घटपटादीनामभावैकस्वभावत्वाद्वैचित्र्यानुपपत्तिर्निषेध्यनिषेधयोस्तादात्म्याङ्गीकारे इति भावः ।

(३) विनाशस्य प्रतियोगितादात्म्यमित्यर्थः ।

(४) अलीकत्वम् । (५) प्रतियोगिकार्यत्वम् ।

(६) प्रतियोगिव्यापकत्वमिति मिश्राः । एतन्मतेनात्र मूले निरुपादानत्वं वेति षष्ठो विकल्पोऽपि द्रष्टव्यः ।

(७) निषेध्यनिषेधयोरिति शेषः। प्रकारान्तरेण विनाशस्य प्रतियोगितादात्म्यं शङ्कते नन्विति मिश्राः। समर्थेतरस्वभावो भाव एव नास्तिता सैव च नाश इति शङ्कार्थः ।

भावत्वमेवेति चेत्" । (१)नन्वयमेव क्षणभङ्गः, तथाचा-सिद्धमसिद्धेन साधयतः कस्ते प्रतिमल्लः । (२)अपि च देशान्तरकालान्तरानुषङ्गिण्यस्य नास्तिता यद्ययमेव, नूनमनक्षरमिदमुक्तं 'यदयमेव देशान्तरकालान्तरानुष-ङ्गी'ति । यदि वा स्वदेशकालवत् कालान्तरदेशान्तरयो-रपि नास्तितानुषङ्गोऽस्तित्वप्रसङ्गः । "(३)अशक्तेः कथ-

---

अर्थक्रियां प्रति अशक्तिरेवासत्त्वमिति अभिप्रायः । (४)समर्थतरेति । अतः समर्थतरस्वभावात्मकत्वादभावस्य भावात्मकत्वेऽपि न विरोध इति । नन्वयमेवेति । कालान्तरे समकालान्तरे समर्थतरस्वभावत्वमेव उत्तरक्षणवर्तिनः समर्थादन्यस्वभावत्वमेव क्षणिकत्वम् , तथा चासिद्धं क्षणिकत्वमसिद्धेनैव क्षणिकत्वेन साधयतः कस्ते प्रतिभटः, असिद्धं तु सिद्धेनैव साधयन्त्यन्ये मल्लाः त्वन्तु तेनैव तत्साधयन्नसिद्धेनैवासिद्धं साध-यसीति न ते प्रतिमल्लः कश्चिदस्तीति । अभावस्य भावतादात्म्ये दोषा-न्तरमाहापि चेति । यद्देशकालवर्ती यो भावस्तस्य नास्तिता तद्देशका-

---

(१) प्रथमक्षणे सामर्थ्यमग्रिमक्षणे चासामर्थ्यमिति विरुद्धधर्मा-ध्यासेन भेद एव तव विवक्षितः, तथाच क्षणभङ्ग एवानया वचनभ-ङ्ग्या त्वयोच्यते, स च पूर्वोक्तसामर्थ्यासामर्थ्यप्रयोजकप्रसङ्गतद्विपर्य-याधीनः, तौ च दूषितावेवेत्याह नन्वयमिति । तथाचेति । तथाच प्रकारान्तरेण समर्थतरस्वभावत्वमसिद्धमसिद्धेन क्षणभङ्गेन साधय-तस्ते कः प्रतिवादी स्यादित्यर्थः ।

(२) यदि घटनास्तिता घटात्मिका देशान्तरकालान्तरानुवर्तिनी तदा तद्रूपतया घटस्यैवानुवृत्तिः, अथ नानुवर्तते तदा स्वरूपत एव घटानुवृत्तिरिति घटादेः क्षणिकतां साधयितुमुद्यतस्य नित्यत्वं विभुत्वं च प्राप्तमित्युभयतः पाशारज्जुरित्याह अपिचेति । अयमेव-भाव एव । भावाभेदे भावाभावस्य हेत्वन्तराधीनत्वसिद्धौ स्थैर्य एव पर्यवसान-मिति भावः ।

(३) नन्वर्थक्रियाशक्तत्वं सत्त्वं कालान्तरे च तदभावात् कथं सत्त्वं स्यादित्याशङ्कते अशक्तेरिति ।

मस्तु शक्तेः सत्तालक्षणत्वादिति चेत्"। अथ कालान्तरकार्यं प्रति स्वकालेऽशक्तिरसत्त्वम्, किं वा स्वकार्यमपि प्रति कालान्तरेऽशक्तिरसत्त्वम्। (१)आद्ये स्वकालेऽप्यसत्त्वप्रसङ्गः, तदानीमपि तस्य ताद्रूप्यात्। "(२)कालान्तरकार्यं प्रति एवमेतदिति चेत्" (३)किमयं मन्त्रपाठः, नहि यो यत्राशक्तः स तदपेक्षया नास्तीति व्यवह्रियते, नहि रासभापेक्षया धूमो जगति नास्ति, तत्कस्य हेतोः? न ह्यशक्तस्य स्वरूपं निवर्तेत

काभ्यां देशान्तरकालान्तरानुषङ्गिणी वा न वा? आद्ये तदभिन्नो भाव एव देशान्तरकालान्तरयोरपि सत्त्वप्रसङ्ग इति(४)। एवमेतदिति। असदेवेत्यर्थः। मन्त्रपाठ इति। मन्त्रपाठो हि युक्त्यनुभवाभावेऽप्याद्रियेतेति भावः। युक्तिश्च शब्दार्थनिरूपणे लोकव्यवहारः, न चासावस्तीत्याह नहीति। रासभापेक्षयेति। रासभकरणे धूमस्याशक्तेस्तदपेक्षया धूमो जगति नास्तीति। व्यवह्रियत(५) इति। स्वकार्यम्प्रति कालान्तरेऽशक्तिरिति (६)कालान्तरमाधारतया निर्दिश्यते विषयतया वा? आद्ये कालान्तराधाराऽशक्तिः, द्वितीये बीजादिवस्त्व-

(१) कालान्तरकार्यं प्रति अशक्तिर्भावस्यासत्त्वमिति पक्षे, बीजादेः स्वकालेऽपि असत्त्वं स्यात्तदानीमपि बीजादेः कालान्तरकार्यं प्रत्यशक्तत्वादित्यर्थः।

(२) बौद्धः शङ्कते कालान्तरेति। स्वकालेऽपि कालान्तरकार्यं प्रति बीजाद्यसदेवेति शङ्कार्थः।

(३) समाधत्ते किमयमिति। सदपि किञ्चिदपेक्षयाऽसदिति विरोधपरिहारो मन्त्रपाठं विनाऽनुपपन्न इति भावः। व्यवहारविरोधमाह नहीति।

(४) अत्र कश्चित्पाठो भ्रष्ट इति प्रतिभाति।

(५) नहीत्यादिः।

(६) द्वितीयपक्षे इति शेषः

इति । (१)द्वितीये तु यदि कालान्तराधाराऽशक्तिः, कथं तदात्मिका । (२)तदाधारा चेत्, तदैवासत्त्वप्रसङ्गः, कालान्तरे तु विपर्ययः । (३)तस्मात्—

विधिरात्माऽस्य भावस्य निषेधस्तु ततः परः ।
सोऽपि चात्मेति कः प्रेक्षः शृण्वन्नपि न लज्जते ॥

"अस्तु तर्हि भावस्वरूपातिरिक्ता निवृत्तिर्नास्तीति

धारा, तत्र प्रथमे दूषणमाह यदि कालान्तरेति । कथ तदात्मिका=न ह्यन्याधाराया अन्यात्मता सम्भवति । द्वितीयमाशङ्क्य दूषयति तदाधारेति । तदैव=यदा स्वयमिति, तदैव नास्तितारूपाया अशक्तेराधारत्वान्नास्तिताप्रसङ्गः, कालान्तरे तु स्वस्याधाररहितस्याभावो, नास्तिताया अप्यभावे नास्तित्वप्रसङ्ग इति विरुद्धमापद्यत इति भावः(४)। एवं निषेधात्मकत्वानुपपत्तेर्विध्यात्मक एव भाव इति श्लोकेनाह तस्मादिति ।

निरुपाख्यं वेतिविकल्पं परिगृह्णन्नाह अस्तुवेति । अस्तु वा भावस्वरूपातिरिक्ता निवृत्तिर्न तु तदात्मिका, कथं तर्हि नास्तीतिवाक्यं तत्राह नास्तीत्यस्येति(५) । सोपाख्या भावस्वरूपातिरिक्ता निवृत्तिर्नो-

(१) स्वकार्यमपि प्रति कालान्तरेऽशक्तिरसत्त्वमिति पक्षे । कथं तदात्मिका=कथं प्रतियोगिस्वरूपा, प्रतियोगिनः क्षणमात्रवृत्तितया द्वितीयक्षणेऽसत्त्वादित्यर्थः । भावस्य भिन्नकालीनाशक्तितादात्म्याङ्गीकारे स्थैर्यापत्तिरिति भावः ।

(२) प्रतियोगिकालाधारा चेत्तदानीमसत्त्वं भावस्य स्यादित्यर्थः । कालान्तर इति । स्वकालाधारैव चेदशक्तिरसत्त्वं तदा स्वकालातिरिक्ते काले भावस्य सत्त्वप्रसङ्गात्स्थैर्यावर्तनमिति भावः ।

(३) उपसंहरति तस्मादिति । स्वभावाभावयोर्विधायकनिषेधप्रमाणयोस्तादात्म्यं सर्वथाऽनुपपन्नमिति श्लोकार्थः ।

(४) सत्त्वप्रसङ्गो विपर्यय इत्यन्यैर्व्याख्यातत्वाच्चिन्त्यमिदं व्याख्यानम् ।

(५) एतन्मतेनात्र मूले 'अस्तु वेति' 'नास्तीत्यस्य वाक्यस्येति' इ पाठो द्रष्टव्यः ।

वाक्यस्य सोपाख्येति शेषः"। (१)नन्वयमपि क्षणभङ्गस्योद्गारः, स च कफोणिगुडायितो वर्तते। भवतु वा निवृत्तिरसमर्था, तथाप्यहेतुकत्वे तस्याः किमायातम्। "(२)तुच्छस्य कीदृशं जन्मेति चेत्" यादृशः कालदेश-

स्तीति वाक्यस्येत्यर्थः। ततश्च निरुपाख्याऽतिरिक्तानिवृत्तिरस्त्येवेत्यभिप्राय इति। अथवा भावस्वरूपातिरिक्ता निवृत्तिर्नास्तीत्यस्य वाक्यस्यैकग्रन्थतेति। अयमपि चेति। अयमपि चेत्यनेन नन्वयमेव क्षणभङ्ग इत्यनेन समुच्चिनोति। अयमर्थः—अतिरिक्ता निवृत्तिर्निरुपाख्येत्युक्तेऽप्यर्थतो भावस्वरूपैव निवृत्तिरित्युक्तं भवति, ततश्च भावस्वरूपस्यैव निवृत्तेः=रसत्त्वात्क्षणभङ्ग एवोक्तो भवतीति। अस्तु क्षणभङ्गस्योद्गारको दोष इति चेत्तत्राह स चेति। हस्तमूलं=कफोणिः, तत्रस्थगुडायमानो वर्तते यथा तल्लेहनमशक्यं तथा क्षणभङ्गोऽपि प्राप्तुं न शक्यत इति। एतदुक्तं भवति—अद्यापि क्षणभङ्गो न सिद्धः, कथं स एव साधनपक्षे निक्षिप्यत इति। असमर्थेति(३)। निरुपाख्येत्यर्थः। यादृश इति। अस्मिन्कालेऽस्या-

---

(१) 'भावस्वरूपातिरिक्ता निवृत्तिर्नास्तीति' कीर्तिबौद्धाचार्यवाक्यं 'सोपाख्ये'ति शेषं पूरयित्वा भावाभावयोस्तादात्म्यानुपपत्त्या व्याख्यातम्। तेन च भावातिरिक्ता सोपाख्या निवृत्तिर्नास्तीत्यर्थान्निरुपाख्या निवृत्तिरिति पूर्वपक्ष्याशयः। दूषयति नन्वयमपीति। निरुपाख्यनिवृत्तेरहेतुकत्वेनोत्पन्नमात्रभावस्य सा भवेदिति क्षणभङ्गसिद्धिर्वक्तुं शक्या किन्तु निवृत्तेः सोपाख्यत्वसाधनान्निरुपाख्यत्वमेवासिद्धमिति भावः। अक्षरार्थस्तु—स च क्षणभङ्गश्च कूर्परपर्यन्तगतस्य गुडस्य लेहनमिव बहुधा निरस्तस्य क्षणभङ्गस्य पुनरवष्टम्भोऽनुपपन्न इति।

(२) तुच्छत्वादेवाहेतुकत्वमित्याशङ्कते तुच्छस्येति। यथा भावस्य जन्म कालादिनियमगम्यं तथा तुच्छस्यापीत्यभिप्रायेण परिहरति यादृश इति।

(३) असमर्थेतीति। निवृत्तेरलीकत्वं ध्रुवभावित्वं तेन तस्या अहेतुकत्वसाधनमनुपपन्नमित्यर्थः।

नियमः । "सोऽपि तस्य कीदृश इति चेत्" एवन्तर्हि न घटनिवृत्तिः क्वापि कदापि वा सर्वत्रैव सदैव वेति स्यात् । "भवतु प्रथम (१)एवेति चेत्" सो ऽयं भावनास्तितास्वरूपप्रतिषेधो वा, भावप्रतिषेधेन निवृत्तिस्वस्वरूपनिरुक्तिर्वेति । आद्ये भावस्यैव सदातनत्वप्रसङ्गः । द्वितीये तु निवृत्तेरेवेति ।

---

भावः, अस्मिन्देशेऽस्याभाव इति यादृशोऽभावस्य कालदेशनियमः तादृशमस्य जन्मेति । सोऽपीति । सोऽप्यसिद्ध एवास्माकमिति(२) । एवन्तर्हीति । देशकालनियमाभावो ह्यभावस्य द्विविधः सर्वथा देशकालसम्बन्धाभावाद्वा सर्वदेशकालसम्बन्धाद्वेति(३) । सोऽयमिति । न क्वापि कदापि निवृत्तिरिति नास्तितास्वरूपप्रतिषेधो वा स्यात् भावप्रतिषेधे, न क्वापि कदापि भाव इति भावप्रतिषेधेन निवृत्तिस्वरूपनिर्वचनं वेति(४) । एतदुक्तं भवति—न क्वापि कदापीत्यत्र नञ् निवृत्त्या सम्बध्यते भावेन वेति । भावस्यैवेति । निवृत्तेः सर्वथा निषेधादिति भावः । निवृत्तेरेवेति । भावस्य सर्वथा निषेधादिति भावः(५) । सदातनत्वप्रसङ्गः इत्यैतस्यार्वत्रिकत्वप्रसङ्ग इत्यस्याप्युपलक्षणमिति ।

---

(१) न क्वापि कदापि निवृत्तिरिति प्रथमपक्ष इत्यर्थः ।

(२) तुच्छस्य घटनिवृत्तेर्देशकालसम्बन्धनियमो नास्तीत्यभिप्रायः पूर्वपक्षिणः ।

(३) घटनिवृत्तेर्देशकालसम्बन्धाभावनिषेधे हि किं [illegible] सम्बन्धाभावस्य निषेधः, किं वा विशेषस्य [illegible] [illegible] निवृत्तेरपि न [illegible] युक्ते । द्वितीये स्यात् [illegible] । [illegible] [illegible]रित्यनुपपद्यते इति शिरोमणिः ।

(४) निवृत्तेरलीकत्वं देशकालसम्बन्धेन विरुध्यत इत्यर्थः ।

(५) भावानाधारकालवत् तदाधारकालेऽपि निवृत्तिस्तुल्येति कदापि भावो न स्यादित्यभिप्रायः ।

(१)"अस्तु तर्हि तत्कार्यत्वमेव ध्रुवभावित्वम्"। न, तस्यापि कार्यं इति पक्षे विरोधात्, तस्यैव कार्यं इत्यसिद्धेः। "(२)यत् किञ्चिदुत्पन्नमात्रस्य कार्यम्, स एव तस्य नाश इति चेत्"। ( एवं ) तर्हि यस्याः सामग्र्या यत्कार्यं तत् तदतिरिक्तानपेक्षमिति साधनार्थः, तमिमं को नाम नानुमन्यते। कार्यमेव विनाश इति तु (३)के-

---

तत्कार्यत्वमित्येतदपि द्विधा विकल्प्य दूषयति नेति। तस्यापीति। तस्यापि भावस्य कार्यत्वात्तदतिरिक्तहेतुनिरपेक्ष इति पक्षे अपिशब्देनातिरिक्तस्यापि हेतोरुक्तत्वाद्धेतुसाध्ययोर्विरोध इति। असिद्धेरिति। हेत्वन्तरानिरपेक्षसिद्धावेव हि तस्यैव कार्यत्वं सिद्ध्यतीति भावः। स एव तस्येति। ततश्च यदुत्पन्नमात्रस्य कार्यं तत्तस्यैव कार्यमिति सिद्ध एव हेतुरिति भावः। (४)एवन्तर्हीति। यदुत्पत्त्यनन्तरं यद्भवति सैव तस्य सामग्रीति भावः। कार्यमेव विनाश इत्येतद्दूषयति कार्यमेव

---

( १ ) तत्कार्यत्वं ध्रुवभावित्वमिति तृतीयं कल्पं दूषयितुमुत्थापयति अस्त्विति। एतद्घटध्वंस एतदव्यवहितोत्तरक्षणोत्पत्तिक एतत्कार्यत्वादेतद्घटस्वरूपवदित्यनुमानं बौद्धस्याभिप्रेतम्तत्र यदि तस्यापि कार्यमिति विवक्ष्यते चेत्कारणान्तरस्यापिशब्देन समुच्चयात् तद्विलम्बेन ध्वंसविलम्बे तदुत्पत्त्यव्यवहितोत्तरक्षणोत्पत्तिकत्वं विरुद्धमित्याह न तस्यापीति। तन्मात्रकार्यत्वहेतूकरणे स्वरूपासिद्धिरित्याह तस्यैवेति। असिद्धेः मुद्गरादेरपि घटादिनाशं प्रति हेतुत्वादित्यर्थः।

( २ ) ननु समुच्चयनियमौ न विवक्षितौ किन्तूत्पन्नमात्रस्य यत्कार्यं तदेव तस्य विनाश इति बौद्धस्याभिप्रेतं तदतिरिक्ते ध्वंसे मानाभावादिति शङ्कते यत्किञ्चिदिति। नारायणेन तूक्तस्वरूपासिद्धिपरिहारपरोऽयं शङ्काग्रन्थो व्याख्यातः।

( ३ ) कार्यमेव विनाश इति प्रौढिवादेन यदि बौद्धः स्वीकुर्यात्तत्राह केनेति। कार्यस्य कारणविनाशात्मकत्वव्यवहारबीजं विकल्पयति किमिति। तद्विरहवत्त्वात्-कारणान्योन्याभाववत्त्वात्, तद्विरहरूपत्वात्-कारणविरहात्मकत्वात्।

( ४ ) यस्य यत्कार्यंतत्तदितरकारणानपेक्षमित्यत्र व्यभिचार एव

नानुरोधेन व्यवहर्तव्यम्? किं तद्विरहवत्त्वात्कार्यस्य किं वा तद्विरहरूपत्वात्। न तावत् पूर्वः, सहकारिष्वपि तथाप्रसङ्गात्, विरहस्वरूपानिरुक्तेश्च। न द्वितीयः, स हि कार्यकाले कारणस्य योग्यानुपलम्भनियमाद्वा भवेत्, व्यवहारानुरोधाद्वा अतिरिक्तविनाशे बाधकानुरोधाद्वेति।

न प्रथमः, उपलभ्यन्ते हि पटकाले वेमादयः। "न ते त इति चेत्" (१)किमत्र प्रमाणम्। "अभेदेऽपि किं प्रमाणमिति चेत्" (२)मा भूत तावत् सन्देहास्थिता-

विनाश इति। सहकारिष्वपीति। सहकारिणामपि बीजादि-भावविरहित्वादिति(३)। विरहस्वरूपेति। कार्यमेव विनाश इति पक्षे कार्यव्यतिरेकेण (४)विरहस्वरूपानिरुक्तेरिति। व्यवहारेति। कार्यस्यैव विनाशव्यवहारानुरोधाद्वा, कार्यातिरिक्तविनाशे बाधकानुरोधाद्वेति(५)।

न ते त इति। पटकारणीभूतास्तन्तुवेमादयो विनष्टा एव पट-काले तु तदुत्पन्ना अन्य एवेति क्षणभङ्गवादिनां सिद्धान्त इति। मा भूत्तावदिति। प्रत्यभिज्ञानमेवाभेदे प्रमाणमिति तावच्छब्दं प्रयु-ञ्जानस्याभिप्रायः। सन्देहेति। भेदाभेदसन्देहेऽप्यनुलम्भबलावलम्बन-

सामग्रीतः कार्योत्पत्तेरिति यत्सामग्रीजन्यं यत्कार्यं तत्तदितरसामग्र्यपे-क्षमिति साध्यपर्यवसाने सिद्धसाधनमित्याह तर्हीति भगीरथठक्कुरः। तद्व्यक्तिकार्यत्वस्य सन्दिग्धव्यतिरेकतया तत्सामग्रीकार्यत्वं हेतूकार्यं, परामर्शनीया च तदा तद्व्यक्तिसामग्री, तत्र च व्याप्तिमनुमन्यामहे न तु पक्षधर्मतामित्याह तर्हीत्यादिनेति शिरोमणिः। एवन्तर्हीति नारा-यणसम्मतः पाठोऽत्र मूले द्रष्टव्यः।

(१) क्षणभङ्गे सत्येवं स्यात् स चाद्यापि न सिद्ध इत्यभिप्रायेणाह सिद्धान्ती किमत्रेति।

(२) यद्यपि प्रत्यभिज्ञाऽभेदे प्रमाणमस्ति तथापि तदनुपदर्शने-ऽपि न क्षतिरित्याह माभूदिति। सन्देहास्थितावपि=भेदाभेदसन्देहेऽपि।

(३) वेमादावपि तन्तुविनाशव्यवहारप्रसङ्गात् तदन्योन्याभावव-त्त्वस्य सत्त्वादिति वा।

(४) विरहोऽभावः स चालीक एवेति तद्वत्ता कार्यस्य स्वलक्षण-स्य कथं स्यादित्यर्थः। (५) कार्यमेव कारणविनाश इति शेषः।

वपि अनुपलब्धिबलावलम्बनविलयात् ।

न द्वितीयः, (१)नहि पटो जात इत्युक्ते तन्तवो नष्टा इति कश्चिद्व्यवहरति ।"(२)पटस्यानतिरेकात् तन्तुमात्रजन्मनि च भेदाग्रहादव्यवहार इति चेत्" न तर्हि व्यवहारबलमपि । "विसभागसन्ततौ तावद्व्यवहारब-

---

विलयादिति(३) । पटस्यानतिरेकादिति । पटस्य तन्तुभ्योऽनतिरेकात् पटकाले तन्तुमात्रस्य जन्म, अतः पूर्वतन्तुभ्यो भेदाग्रहान्न पूर्वं तन्तुविनाशव्यवहार इति । (४)विसभागेति । विसभागसन्ततिः= विसदृशसन्ततिः । एतदुक्तं भवति-यद्यपि सदृशसन्ततौ भेदाग्रहान्न विनाशव्यवहारः, तथापि यदा विलक्षणहेतुसन्निधानेन विसदृशकार्यसन्ततिः तदा विनाशाभिव्यक्त्या तद्व्यवहारोऽस्त्येव, तदुक्तम्--

यदा विलक्षणो हेतुः पतेदसदृशसन्ततौ ।
विलक्षणेन कार्येण स्थूलोऽभिव्यज्यते तदा ॥ इति ।

यद्यपि तन्तुमालायां पटनिवृत्तिव्यवहारस्तथापि स व्यतिरिक्ताभाव-

---

(१) व्यवहारानुरोधात्कार्यस्य तद्भिन्नरूपत्वरूपः । हेतुमाह नहीति ।

(२) ननु तन्तुभिन्ने पटेऽवयविनि मानाभावात् तन्तव एव तथोत्पन्नाः पटत्वेन व्यवह्रियन्ते, तथाच पूर्वापरतन्तूनां मिथस्तन्तुत्वसाजात्येन भेदाग्रहात्पूर्वतन्तुविनाशत्वेनोत्तरतन्तवो न व्यवह्रियन्ते इत्याह पूर्वपक्षी पटस्येति भगठक्कुरः । येन परीक्षकेण भेदो गृह्यते तस्य तथा व्यवहारोऽस्त्येवेति भाव इत्यधिकं कल्पलतायाम् । व्यवहारो हि लौकिकपरीक्षकसाधारणः प्रमाणं, स च प्रकृते नास्तीत्याह न तर्हीति । परीक्षकस्य विपरीत एव व्यवहारो न कथमत्रेति भावः ।

(३) कार्यकाले कारणानुपलम्भः सन्दिग्ध इति तद्बलं तव भग्नमेवेत्यर्थः ।

(४) ननु पटे नष्टे तन्तुमालालक्षणं कार्यं यत्र जायते तत्र पटनाशप्रतीतिव्यवहारौ स्त एवेत्याह विसभागेति मिश्राः । सभागसन्ततावप्येतदृष्टान्तेन तथोन्नेयमिति हृदयम् ।

लमर्हतीति चेत्"। नैतदेवम्, (१)यदि हि तन्तुमालैव पटनिवृत्तिः, तर्हि कथं तदाश्रयस्तदात्मको वा पटः प्राक्। "(२)अन्यैवासाविति चेत्" (३)न तावज्जातिकृतमन्यत्वमुपलभ्यते। व्यक्तिकृतं तु नाद्यापि सिद्ध्यति। (४)इत एव तत्सिद्धावितरेतराश्रयत्वम्।

"तथापि यद्येवं स्यात् कीदृशो दोष इति चेत्" न

---

निबन्धन इत्यभिप्रेत्य तन्तुमालाया एव पटनिवृत्तित्वे दोषमाह नैतदेवमिति। तदाश्रयः–समवायिकार्ययोर्भेदपक्षे, तदात्मको वा अभेदपक्षे वा पटविनाशयोः, अन्यैवेति। पटाधारभूतायास्तन्तुमालाया अन्यैवासौ या तदुत्तरकालवर्तिनीत्यर्थः। इत एवेति। तन्तुमालायाः पटनिवृत्तित्वादेव हेतोर्व्यक्त्यन्यत्वसिद्धावितरेतराश्रयता स्यात्–व्यक्त्यन्यत्वादेव तन्तुमालायाः पटनिवृत्तिरूपत्वं तत एव च व्यक्त्यन्यत्वमिति।

तथापीति। इतरेतराश्रयत्वेन पटनिर्णयाभावेऽपि (५)तन्निवृत्तित्वे

---

(१) यदि हीति। तन्तुमालायां पटस्तावद्वर्तत इत्यनुभवसिद्धम्, सा चेत्तन्तुमाला पटनिवृत्तिः स्यात् तदा स्वध्वंस एव पटो वर्तत इत्यायातमिति स्वमते, परमते त्वाह तदात्मको वेति। पटोऽपि तन्तुमाला पटनिवृत्तिरपि तन्तुमाला, तथाच प्रतियोग्यात्मिकैव निवृत्तिः स्यादिति विरोध इत्यर्थ इति मिश्राः।

(२) ननु पूर्वतन्तुमालाया उत्तरतन्तुमाला भिन्नैव, तथाच कथमयं विरोध इति शङ्कतेऽन्यैवेति।

(३) परिहरति न तावदिति। तन्तुषु जातिभेदस्य योग्यानुपलब्धिबाधितत्वादित्यर्थः। व्यक्तिकृतं त्विति। सिद्धौ वा तत्साधनाय हेत्वभिधानवैयर्थ्यमित्यर्थः।

(४) इत एवेति। वर्तमानतन्तुमालायाः पूर्वकालीनतन्तुमालाव्यावृत्ते पटनाशात्मकत्वे सिद्धे भेदसिद्धिः सिद्धे च भेदे तत्सिद्धिरेत्यर्थः।

(५) उत्तरतन्तुमालायाः पूर्वतन्तुनिवृत्तित्वे, यदि कार्यमेव विनाशः स्यात्तदा को दोष इति भगीरथठक्कुरः।

कश्चित्, केवलं प्रमाणाभावः, (१)व्यवहारानतुरोधश्च, तदसिद्धावपि सिद्ध्यतस्तस्य निमित्तान्तरापेक्षणात् ।

(२)अपि च तन्तुविनाशः सामान्यतस्तन्तुविरहस्वभावो वा स्यात्, तद्विपरीतो वा ? आद्ये कथं तन्त्वन्तरं, नहि सामान्यतो नीलमनीलविरुद्धस्वभावमनीलान्तरम् । द्वितीये कथं तद्विरोधी, नहि नीलं सामान्यतोऽपि नीलान्तरविरोधि । "(३)विशेषमात्र एवायं विरोध इति चेत्" तत् किं सामान्यतोऽ(४)नुभयस्वभाव एव विना-

---

कोऽहशो दोष इति । तदसिद्धावपीति । तन्तोः पटनिवृत्तित्वानिर्णयाभावेऽपि सिद्ध्यतो व्यवहारस्य(५) तन्तुमालाव्यतिरिक्ताभावनिमित्तान्तरापेक्षणात्तन्तुमालायाः पटनिवृत्तित्वे व्यवहारानुरोधो न लभ्यत इति । सामान्यत इति । तन्तुमात्रस्वभावविरहो वा तन्तुमात्रविपरीतो वेति ।

---

(१) प्रमाणाभाव इति । उत्तरतन्तुमालायाः पूर्वतन्तुनिवृत्तित्वे तद्भिन्नत्वे च प्रमाणाभाव इत्यर्थः । नवेदृशो व्यवहार इत्याह व्यवहारेति।

(२) तन्तुमालात्मक एव पटः पूर्वतन्तुमालाया विनाश इत्यत्र दूषणान्तरमाहापिचेति । आद्य इति । तन्तुरूपो विनाशस्तन्त्वन्तरस्य तन्तुत्वावच्छिन्नस्यैव यदि विरोधी तदा तन्त्वन्तरं कथं स्यात्, नहि सामान्यत एवानीलविरुद्धस्वभावं नीलमनीलं भवतीत्यर्थः । द्वितीय इति । तन्तुः सामान्यतो न तद्विरोधीति यदि, तदा तन्तुः सामान्यतस्तन्तुविरोधी कथं भवेत्, नहि नीलं नीलत्वेन कदाचिन्नीलविरोधीत्यर्थः।

(३) ननु तन्तुत्वेनाविरुद्धत्वेऽपि विशेषतो विरोधः स्यात्तत्कारणस्य तन्तोरेव तत्कार्यतन्तुविरोधस्तथाच तन्तुजातीयोऽपि तन्त्वन्तरविरोधी स्यादित्याह विशेषेति ।

(४) अनुभयेति । न विरोधी नाप्यविरोधीति । सामान्यतो विरोधित्वे तन्तुरेव न स्यात्, अविरोधित्वे तन्तुस्तन्तुनिवृत्तिरूपो न स्यादित्यर्थः ।

(५) पटनिवृत्तिव्यवहारस्य । निमित्तेति। निमित्तान्तरम् कार्यभिः ध्वंसरूपं तदपेक्षणात । यत्राश्रयनाशादेव पटनाशस्तत्र तन्तुमालाय असिद्धावपि पटनाशव्यवहारो निमित्तान्तरात्पटध्वंसरूपादेव वक्तव्यर्थः ।

शः। ओमितिब्रुवतोऽन्यतरदुपादाय विनाशव्यवहारानुपपत्तिः। "(१)सामान्यस्यालीकत्वात्तत्र विरोधोऽपि किं करिष्यतीति चेत्" विलीनमिदानीं विरुद्धधर्माध्यासेन भेदप्रत्याशया, तस्य तदाश्रयत्वात्।

(२)"नन्वतिरिक्ताभावपक्षे यथा पटः पटान्तराभाववांश्च तज्जातीयश्च, अभावो वा पटविरोधी पटान्तरस-

---

अन्यतरदुपादायेति। सामान्यतस्तन्तुविरहस्वभावं तद्विपरीतं चेति। (३)किं करिष्यतीति। न विनाशव्यवहारं करिष्यतीत्यर्थः। तस्य तदाश्रयत्वादिति। तस्य(४) विरोधसामान्याश्रयत्वादिति। वास्तवा-लीकितयोरेव हि धर्मयोर्विरोधाध्यवसायेन तदध्यासाद्भेदव्यवहारः कर्तुं शक्यते, इतरथा व्यवहारयोरेव धर्मव्यञ्जकयोर्विरोधोऽध्यवसितः ताभ्या-मन्यत्वात्परामृश्यमाणधर्मव्यञ्जकयोः कथं तदध्यासाद्भेदो व्यवहर्तुं शक्यत इति। किञ्च विरोधस्य जातिरेव प्रयोजिका, अन्यथा यज्जातीययोर्विरो-धस्तज्जातीययोरेव क्वचिदविरोधसम्भवात् शीतोष्णयोरपि क्वचिदविरोधः सज्येत, रोगविषादिपरिहारार्थानामौषधवादिनामपि तज्जातीयत्वे सत्यपि चित्तैः सहाविरोधसम्भवेन तदर्थं सकलमेवायुःशास्त्रमप्रमाणमापद्येतेति।

---

(१) ननूक्ता सामान्यतो विरोधाविरोधचिन्ता सामान्याश्रिता, तच्च तु नास्तीत्याह सामान्यस्येति।

(२) बौद्धः शङ्कते नन्विति। यथा न्यायमते पटः पटान्तराभाववानपि पटजातीयस्तथा तन्तुरपि तन्तुनिवृत्तिर्भवेत्, यथाच पटविरोध्यपि पटाभावः पटान्तरसमानाधिकरणो नैयायिकैरङ्गीक्रियते तथा तन्तुरूपाभावपक्षेऽपि तन्तुविनाशोऽपि तन्तुरूपो बौद्धैरिष्यत इत्याशयः अभिप्रायः।

(३) विरोधमादाय तन्तुव्यवहारानुपपत्तिरित्यविरोधपक्ष एवाश्रयस्तथा च विनाशव्यवहारानुपपत्तिरिति मिश्राः।

(४) भेदस्य। भेदसिद्ध्युपयोगिनो विरोधस्य सामान्याश्रयणा शिरोमणिः।

हवृत्तिश्चेति न कश्चिद्विरोधः, तथा कार्याभावपक्षेऽपि भ-
विष्यतीति" । (१)नैतदेवम्, प्रतियोगिना हि तादात्म्य-
संसर्गैकजातीयत्वानि नेष्यन्ते, अप्रतियोगित्वप्रसङ्गात्,
भिन्नकालत्वात् , (२)सामान्यतो विरुद्धधर्मसंसर्गाच्च ।
अप्रतियोगिना तु संसर्गे को दोषः, नहि भेदविजातीय-

---

तथा कार्याभावेति । तन्तुविनाशरूपस्य तन्त्वन्तरस्य तन्तु-
तादात्म्यम् , पटविनाशरूपस्य तन्तोः पटसहवृत्तित्वं पटतादात्म्यं वा,
पटसमवायो वा न विरुद्ध्यत इति, कथमित्यपेक्षायां पूर्वोक्तेषु साध्येषु
हेतुनाह अप्रतीति । तादात्म्ये हि प्रतियोगित्वं न स्यात्(३), संसर्गे
प्रतियोगितदभावयोर्भिन्नकालीनत्वं न स्यात्(४), एकजातीयत्वे सामा-
न्यतो विरुद्धधर्मसंसर्गो न स्यात् , भावाभावयोर्हि सामान्यत एव विधि-
प्रतिषेधप्रत्ययगोचरत्वलक्षणो विरुद्धधर्मसंसर्गः न विशेषतः, अतः कथ-
मनयोरेकजातीयत्वमिति । अप्रतियोगिनेति । अप्रतियोगिना पटा-
न्तरेण पटान्तराभावस्य संसर्गे को दोषः(५), कथं न दोषस्तत्राह
नहीति । पटान्तराभावेन पटान्तरस्येति शेषः । किन्तर्हि विरुद्धमि-

---

(१) प्रतियोगिना सह तादात्म्य-संसर्गैकजातीयत्वानभ्युपगमा-
न्नोक्तं युक्तमित्याशयेन समाधत्ते नैतदेवमिति ।

(२) अभावस्य प्रतियोग्यैकजात्याभावे हेतुमाह सामान्यत इति ।
प्रतियोग्यभावयोः सामान्यतो विरुद्धधर्मसंसर्ग एवानुभूयते, स चैक-
जात्ये न स्यादित्यर्थः । प्रतियोगितावच्छेदकानुयोगितावच्छेदकयोर
भेदे प्रतियोग्यनुयोगिभाव एव न स्यादित्यवश्यं तयोर्विरुद्धधर्मसंसर्गो
वाच्य इति भगीरथठक्कुरः ।

(३) प्रतियोग्यनुयोगिभावस्य भेदनियतत्वादिति भावः ।

(४) प्रागभावप्रध्वंसयोः प्रतियोग्यसमानकालीनत्वादित्यर्थः ।

(५) नहि नीलघटसंसर्गिणः पीतघटाभावस्य नीलघट एव प्रति
योगी येन तत्संसर्गो न स्यादिति कल्पलता । नहीति । भेदवैजात्यैक
कालीनत्वे सति संसर्गस्यानुभवसिद्धत्वादित्यर्थः ।

त्वैककालताः संसर्गविरोधिन्यः, तादात्म्यं हि संसर्गित्वे विरुद्धं विरोधित्वं (१)च, ते च नेष्येते एव ।

नापि बाधकानुरोधः, तदभावात् ।

"ननु घटाभावे घटोऽस्ति न वा ? आद्ये घटवति तदभावः, कपाले घटोऽस्तीति तान्यपि तद्वन्ति प्रसज्येरन्, नास्तीति पक्षेऽनवस्थाप्रसङ्गः, अभावान्तरमन्तरेण तत्र नास्तिताव्यवहारे भावान्तरेऽपि तथाप्रसङ्गः(२)" । न(३), भावान्तरस्य सजातीयत्वेनाविरुद्धजातीयत्वात्,

---

त्याह (४)तादात्म्यमिति । ते चेति । पटान्तराभावेऽपि पटान्तरस्येति शेषः ।

अतिरिक्ताभावपक्षे बाधकानुरोधाद्वेति विकल्पं दूषयति नापीति । परस्तु बाधकमाह नन्विति । अभावान्तरमन्तरेणैवाभावे पटो नास्तीति व्यवहारः, अतो नानवस्थेति चेत, तत्राह अभावेति । भावान्तरेऽपि=भूतलादिभावान्तरेऽपि, ततोऽभाव एव न स्यादित्यभिप्रायः । परिहरति नेति । भावान्तरस्य भावान्तरेणाविरुद्ध-

---

(१) विरुद्धमित्यत्राप्यनुषञ्जनीयम् । नेष्येत एव-मयेति शेषः ।

(२) अयमत्राभिप्रायः पूर्वपक्षिणः—घटध्वंसतत्प्रागभावयोः प्रतियोगिसमानदेशतया घटसमवायिनि कपाले तयोर्वृत्तितादशायां कपालानि घटवन्ति स्युः, तथाच घटध्वंसादिकालेऽपि घट उपलभ्येतातो घटाभावे घटास्तित्वं वक्तुं न शक्यते, घटाभावे घटो नास्तीति पक्षे चाभावेऽभावान्तरमेवं तत्र तत्रापीत्यनवस्थाऽभावान्तरं विनैवाभावव्यवहारे तु भूतलादावपि घटाभावव्यवहारोऽधिकरणस्वरूपेणैव स्यादिति कथमतिरिक्ताभावसिद्धिरिति ।

(३) परिहरति नेति । भूतलादेर्भावान्तरस्य भावजातीयत्वेनाविरुद्धजातीयत्वात्—भावप्रतिक्षेपकतया भानासम्भवात्, विरुद्धजातीयत्वे भावजातीयत्वानुपपत्त्याऽधिकरणबुद्धिः कथं स्यादिति भावः ।

(४) ननु त्वत्पक्षवन्मत्पक्षेऽपि स्यादभावसंसर्ग इत्यत आह तादात्म्यं हीति । त्वया प्रतियोगितादात्म्यमभावस्येष्यते प्रतियोग्यविरुद्धत्वं च, तच्च मया नेष्यते इति न [illegible]

विरुद्धजातीयत्वे वा समानजातीयत्वानुपपत्तेः, अन्य-त्वमात्रेण तथाव्यवहारे तद्वत्यपि प्रसङ्गात्। अभावस्य तु विरुद्धस्वभावतयैवाभावान्तरानुभवतर्कयोरभावादिति।

(१)"भिन्नाभावजन्मनि घटतादवस्थ्यं दोष इति चेत्"। न, घटतादवस्थ्यं हि यदि घटत्वमेवाभिमतम्, एवमेतत्, न ह्यभावजन्मनि घटोऽघटतामुपैतीत्यभ्युपगच्छामः(२)। "तत्कालसत्त्वं चेत्" न तर्ह्यभावो जातः, कालान्तरे घटानवस्थानस्वभाव एव हि तदभावः(३)।

---

जातीयत्वात्कथमभावान्तरेण नास्तिताव्यवहारहेतुत्वं स्यादिति। नावश्यं नास्तिताव्यवहारहेतुना विरुद्धजातीयेन भवितव्यम्, (४)त-दन्यत्वमात्रेणापि नास्तिताव्यवहारहेतुत्वं भवत्येवेति चेत् तत्राह अन्यत्वेति। तद्वत्यपि=घटवत्यपि भूतले नास्तिताव्यवहारप्रसङ्गा-त् (५), (६)अभावस्य तु भावविरुद्धजातीयत्वेन तेनैवानुभवसिद्धेर-भावान्तरानुभवो वा अनिष्टप्रसङ्गादिरूपतर्को नास्तीति।

---

(१) शङ्कते भिन्नेति। घटध्वंसस्य घटाद्भेदे पट इव ध्वंसे जाते घटस्तदवस्थः स्यादतो न ध्वंसो भावाद्भिन्न इत्यर्थः।

(२) एतेन घटतादवस्थ्यं घटजातीयत्वं न सम्भवतीत्युक्तम्।

(३) ध्वंसस्य प्रतियोग्यसमानकालीनत्वात् ध्वंसानन्तरकाल-स्थायित्वरूपं घटतादवस्थ्यमपि नैव वक्तुं शक्यमिति भावः।

(४) प्रतियोगिभिन्नत्वमात्रेणैव भूतलस्य घटाभावव्यवहारप्रवर्त-कत्वं स्यात्किमतिरिक्ताभावेनेति पूर्वपक्षतात्पर्यम्।

(५) घटवद्भूतलान्तरस्यापि भावस्वात्तेनाप्यभावव्यवहारापत्ते-रिति सिद्धान्त्यभिप्रायः।

(६) ननूक्तदोषपरिहारायाभावेऽप्यभावान्तरं स्वीकार्यमत आ-हाभावस्य त्विति। भावविरुद्धजातीयत्वेनैवाभावानुभवस्य सिद्धतयाऽ-भावेऽभावान्तरस्वीकारो निर्युक्तिकः, एवं यदि घटाभावो घटाभाववा-न् स्यादिति तर्कोऽपि नात्र प्रभवति, प्रतियोगिविरुद्धस्वभावतया प्रथ-माभावादेव घटो नास्तीति व्यवहारोपपत्तौ द्वितीयाभावकल्पनाय अनवकाशादिति भावः।

"(१)अस्तु तर्हि निरुपादानत्वं बाधकं जन्मन उपदानव्याप्तत्वादिति चेत्"। न, धर्मिग्राहकप्रमाणबाधात्,(२)भावावच्छेदाच्च व्याप्तेः। (३)एतेन निरुपादेय-

---

(यत इति) निरुपादानत्वं वेति कल्पं(४) दूषयितुं प्रकृतेन सङ्गतं प्रस्तौति अस्तु तर्हीति। अभावजन्मनीति शेषः। जन्मन इति। अतो व्यापकनिवृत्त्या व्याप्यजन्मनिवृत्तिरित्यभिप्रायः। दूषयति नेति। (५)प्रध्वंसग्राहकेण हि प्रमाणेन भावकाले प्रादुर्भावोऽपि गृह्यते तस्य तथारूपत्वात्, अभूतप्रादुर्भावश्च जन्मेति धर्मिरूपप्रध्वंसग्राहकेण प्रमाणेन तस्य जन्मनोऽपि गृहीतत्वात्तस्य तदभावं साधयतो धर्मिग्राहकप्रमाणविरोध इति। भावावच्छेदाच्चेति। यद्भावत्वे सति जायते तत्सोपादानमिति हि व्याप्तिरिति। यज्जायते तत्सोपादेयमिति व्याप्तेर्निरुपादेयत्वादभावस्य जन्मनिवृत्तिरिति। अपि च धर्मिग्राहकप्रमाणविरोधो न व्याप्तेर्भावावच्छेदेन गृहीतत्वादिति परास्तमित्याह एतेनेति।

---

(१) अतिरिक्ताभावपक्षे बाधकान्तरमाशङ्कते अस्त्विति अभिप्रायः। अत्र जन्मनः समवायिकारणव्याप्तत्वात् ध्वंसस्य चासमवेतत्वेन तदभावात् जन्म नास्त्यतो ध्वंसो न जायते निरुपादानत्वाद्गगनवदिति पूर्वपक्षिमतेनानुमानप्रयोगो द्रष्टव्यः।

(२) निरुपाधेर्बाधानवकाशादुपाधिमाह भावेति। यद्यपि भावत्वस्यात्यन्ताभावेऽसत्त्वात्साध्याव्यापकोऽयमुपाधिस्तथापि ध्वंसेतरत्वमुपाधिरिति द्रष्टव्यम्।

(३) ननु ध्वंसो न जायते निरुपादेयत्वात् गोत्वादिवदित्यनुमानेन ध्वंसानुत्पादः साध्यतेऽत आह एतेनेति। अत्रापि धर्मिग्राहकप्रमाणबाधोऽभीतपक्षेतरत्वमुपाधिरिति भगीरथठक्कुरः।

(४) नारायणेन स्वयं कल्पितोऽयं षष्ठः कल्पोऽभावस्यातिरिक्तत्वे बाधक इति अन्यव्याख्यातृवैचित्र्यं द्रष्टव्यम्।

(५) प्रध्वंसेति। इदानीं घटो नष्ट इति प्रत्यक्षप्रमाणेन तात्कालिकघटनाशकाले ध्वंसजन्मग्रहणात् तदभावमनुमानेन साधयतो बौद्धस्य धर्मिग्राहकप्रमाणविरोध इत्यर्थः। ध्वंसस्य प्रतियोगिजन्याभावतया तद्ग्राहकमानेन जन्यत्वस्यापि विषयीकरणाद्धर्मिग्राहकमानबाधितमनुमानमिति भगीरथठक्कुरः।

त्वं व्याख्यातम् । गुणादिसिद्धौ चानैकान्तिकत्वादिति ।

(१)"अस्तु तर्हि व्यापकत्वं ध्रुवभावित्वमिति चेत्" न, अतादात्म्यात् अतत्कारणत्वाच्च। अस्मद्दिशापि व्याप्तिग्रहो न साहित्यनियमेन,विरोधितया विषमसमयत्वात्(२)। नापि जन्मानन्तर्यनियमेन, तदसिद्धेः, सिद्धौ वा तत एव क्षणभङ्गसिद्धेः किमनेन। (३)"भविष्यत्तामात्रेण

---

(४)गुणादीति। गुणादीनां निरुपादेयत्वेऽपि जन्मनोऽभ्युपगतत्वेन तत्रैव हेतोरनैकान्तिकत्वाच्चेति।

व्यापकत्वं वेतिविकल्पं दूषयितुमाशङ्कते अस्तु तर्हीति। तादात्म्यतदुत्पत्तिभ्यां हि भवदुक्तदिशा व्याप्तिः, तदुभयमपि भावस्याभावं प्रति नास्तीत्याह अतादात्म्यादिति। (५)नापि जन्मानन्तर्येति। भावजन्मानन्तर्यमभावस्य नियमेन, तदसिद्धेस्तं प्रति तस्य व्यापकत्वं नास्तीत्यर्थः। किमनेनेति। ध्रुवभावित्वानुमानेनेति। न

---

(१) चतुर्थं व्यापकत्वरूपं ध्रुवभावित्वं निराकर्तुं शङ्कते अस्तु तर्हीति। व्यापकत्वं प्रतियोगिव्यापकत्वं विनाशस्येत्यर्थः। तथाचाहेतुकत्वं विनाशस्य सिद्धमिति भावः।

(२) नैयायिकमतेनापि साहित्यनियमेन कालिकदैशिक (यदा प्रतियोगी तदा ध्वंसः,यत्र प्रतियोगी तत्र ध्वंस इति) नियमेन न व्याप्तिग्रहः, ध्वंसप्रतियोगिनोर्विभिन्नकालत्वनियमात आश्रयनाशजन्यद्रव्यादिध्वंसे व्यभिचाराच्चेत्यभिप्रायः।

(३) ननूत्पन्नस्य विनाशो भविष्यतीत्यपि नियम एवेत्याशङ्कते भविष्यत्तेति।

(४) गुणकर्मादेश्च गुणिभिन्नत्वेन सिद्धौ तत्रानैकान्तिकं कार्यानाश्रयत्वरूपं निरुपादेयत्वमित्याह गुणादीति।

(५) न च प्रतियोग्यव्यवहितोत्तरक्षणभावितया ध्वंसस्य व्याप्तिग्रहस्तस्य साध्यत्वेनासिद्धेरित्याह नापीति। व्याप्तिग्रह इत्यनुषङ्गः। व्याप्तिग्रहाभावे हेतुमाह तदसिद्धेरिति मूले। तत एव-एतन्नियमबलादेव, तथाच ध्रुवभावित्वादहेतुकत्वमहेतुकत्वाच्च ध्वंसस्याग्रिमक्षण

व्यापकत्वमस्तीति चेत्"। अस्तु, न त्वेतावतापि हेत्व- न्तरानपेक्षत्वसिद्धिः, अद्यतनघटस्य ध्वस्तनकपालमा- लयैवानैकान्तिकत्वादिति।

(१)एतेन "सापेक्षत्वे विनाशस्य व्यभिचारोऽपि स्यात्, विनाशहेतूनां प्रतिबन्धवैकल्यसम्भवात्" इति परास्तम्। कपालसन्ततितुल्ययोगक्षेमत्वाद्विनाशस्येति।

"अस्तु(२) तर्हि चरमः पक्षः, तथाहि विनाशो न

---

त्वेतावतापीति। न हि भावमात्रहेतुकत्वे भावस्य तदनन्तरमेव तद्भावप्रसङ्गः, यदाकदाचिद्भवनात्मकं भविष्यत्त्वं हि सम्भवति, अतो भविष्यत्त्वं न तावन्मात्रहेतुकत्वं साधयति(३)। ध्वस्तनकपालेति। सा हि मुद्गरप्रहारादिहेत्वन्तरापेक्षिणी दृष्टा (विविष्यत्वे भावः) (४)।

प्रतिबन्धेति। प्रतिबन्धस्य वा वैकल्यस्य वा सम्भवादिति। अभावत्वं वेति पक्षमवतारयति अस्तु तर्हि चरम इति।

---

एवोत्पाद इति प्रक्रिया किमिति स्वीक्रियते उक्तव्याप्तिबलादेव क्षण- भङ्गसिद्धेर्भवितुमर्हत्वादिति भावः।

(१) ननु यदि विनाशस्य हेत्वन्तरापेक्षा तदा कदाचिदुत्पन्नोऽपि भावो न नश्येत् हेतुसाकल्ये सत्यपि प्रतिबन्धसम्भवात् हेतूनां वैक- ल्यस्यैव वा सम्भवादित्याह एतेनेति। एवंसति उक्तहेतुद्वयादेव कपालमालापि कदाचिन्न भवेदित्यपि स्यादित्युत्तरार्थः।

(२)ध्रुवभावित्वविकल्पस्याभावत्वं वेति पूर्वोक्तपक्षः स्यादित्यर्थः। ध्रुवभावित्वं विनाशस्याभावत्वं, तथाच तेनैवाहेतुत्वमहेतुत्वे च बौद्धा- भिमतं प्रदर्शयति तथाहीति। प्रागभाववद्विनाशोऽहेतुक इत्यर्थः। अत्र विपक्षे बाधकमाह जातोपि वेति। तथाच विनाशस्य सहेतुकत्वेनो- त्पत्तिस्वीकारे घटवद्विनाशावश्यम्भावाद्घटध्वंसनिवृत्तौ पुनः स एव घटो भवेदित्यर्थः।

(३) एतादृशध्रुवभावित्वेनाहेतुकत्वं वा प्रतियोगिभिन्नहेत्वनपे- क्षत्वं वा साधयितुं न शक्यत इत्यर्थः। कुतो नेत्यत्राह ध्वस्तनेति। ध्वस्तनकपालमालाया अवश्यंभाविन्या अपि मुद्गरप्रहारादिरूपहेत्वन्त- रापेक्षित्वेनानैकान्तिकत्वादिति भावः।

(४) अत्र कश्चित्पाठो आदर्शपुस्तके भ्रष्ट इति प्रतिभासते।

जायते अभावत्वात्प्रागभाववत्, जातोऽपि वा निव-र्तते जातत्वात् घटवदिति"। (१)नैतदेवम्, प्रागभावो जायते अभावत्वाद्विनाशित्वाद्वा ध्वंसवत्, घटवद्वा, अजातो वा न निवर्तते अजातत्वादाकाशवत्(२), शश-विषाणवद्वेतिवदसाधनत्वात्। "किमेतेषां दूषणमिति चेत्" भावत्वावच्छिन्नव्याप्तिकत्वादप्रयोजकत्वम्, प्रा-क्प्रध्वंसाभावग्राहकप्रत्यक्षबाधः, प्राक्पश्चाच्च कार्यो-

---

प्रध्वंसवादीति दृष्टान्तद्वयं क्रमेण हेतुद्वयस्य द्रष्टव्यम्। (३)भावत्वा-वच्छिन्नव्याप्तिकत्वादिति। भावत्वे सति जातत्वं निवृत्तिव्याप्तम्, अतो व्याप्यैकदेशस्याप्रयोजकत्वम्, तथा भावत्वे सति विनाशित्वं जाय-मानत्वेन व्याप्तम्, अतस्तत्रापि केवलस्य विनाशित्वस्याप्रयोजकत्वम्, तथा भावत्वे सत्यजातत्वं निवृत्त्यभावेन व्याप्तम् तत्रापि केवलस्याजात-त्वस्याप्रयोजकत्वम्, तथाऽभावत्वस्याजातत्वेन विपक्षे बाधकाभावाद-प्रयोजकत्वमिति सर्वेषामप्रयोजकत्वमिति। (४)प्राक्पश्चाच्चेति।

---

(१) प्रतिबन्दिमुखेनोत्तरमाह नैतदिति। एवं च यथा प्रागभाव-स्य जातत्वेऽभावत्वमप्रयोजकन्तथा ध्वंसस्याजातत्वेऽपि तदप्रयोजक-मिति भावः। अत्रापि विपक्षे बाधकमाहाजातो वेति। प्रागभावो यदि न जायते न निवर्तेत निवर्तते च तस्माज्जायते इत्यर्थः।

(२) स्वमतपरमतयोर्दृष्टान्तद्वयमाकाशवदित्यादीति मिश्राः।

(३) भावत्वेति। जातो वा निवर्तते जातत्वादित्यत्र अजातो वा निवर्तते अजातत्वादित्यत्र च साधनधर्मावच्छिन्नसाध्यव्यापकं भावत्व-मुपाधिरतो विपक्षबाधकद्वयस्य आभासत्वात् ध्वंसप्रागभावपक्षकानु-मानयोरप्रयोजकत्वमित्यर्थः। अत्र च तर्कयोर्भावत्वावच्छिन्नव्याप्तिक-त्वाद्धेत्वोरप्रयोजकत्वमिति अपव्याख्यानमन्यत् इति कल्पलतामतेन नारायणोक्तं दीधितिमतानुसारि द्रष्टव्यम्।

(४) इहेदानीं नष्ट इति इह तन्तुषु पटो भविष्यतीति ध्वंसप्राग-भावग्राहकप्रत्यक्षाभ्यां क्रमशो ध्वंसप्रागभावयोरजन्यत्वजन्यत्वानुमाने बाधिते इति स्फुटत्वादुपेक्ष्य दोषान्तरव्याख्यानमवतारयति प्रागिति।

न्मज्जनप्रसङ्गलक्षणप्रतिकूलतर्कश्च ।

(१)"अथोन्मज्जने को दोष इति चेत्" कालविच्छेद-प्रत्ययस्यानुभयात्मकत्वप्रसङ्गः । (२)अयथार्थत्वे तस्य द्विचन्द्रदर्शनकाले चन्द्रदेशाविच्छेदवत् तत्त्वतः कालाविच्छेदे भावस्य प्राक्प्रध्वंससहवृत्तित्वेनाविरोधप्रसङ्गात् । यथार्थत्वे तु भेदस्थितौ तदुन्मज्जनानुपपत्तेः । (३)एप्रागभावस्योत्पत्तौ प्राक्कार्योन्मज्जनप्रसङ्ग इति प्रतिकूलतर्कश्चेति ।

कालविच्छेदेति । प्रागभावकाले कार्यस्य विच्छेदः तथा प्रध्वंसाभावकालेऽपि कार्यस्य विच्छेद इत्येवं कालविच्छेदप्रत्ययस्य यथार्थत्वायथार्थत्वलक्षणोभयात्मकत्वं न स्यादिति(४) । भेदस्थिताविति । प्रागभावस्योत्पत्तिस्वीकारे प्राक्कार्योन्मज्जनवत् प्रध्वंसस्य नाशे पश्चात्कार्योन्मज्जनप्रसङ्ग इति प्रतिकूलतर्कश्च दोषो बोध्य इति भावः ।

(१) ननु पूर्वमपि घट आसीदेव कुतश्चिन्निमित्तान्नोपलभ्यते, एवं ध्वंसानन्तरमपि घटः स्यात् कुतश्चिन्निमित्तान्नोपलभ्यत इत्यपि कुतो न स्यादित्यभिप्रायेण शङ्कते अथेति ।

(२) अनुभयात्मकत्वमेव विवृण्वन्नाहायथार्थत्वे इति । यथैक एव चन्द्रो मध्ये विच्छिन्नत्वेनानुभूयते स मध्येऽपि यथा वस्तुतोऽस्त्येव विच्छेदप्रतीतेरयथार्थत्वात्, एवं मध्येऽपि घटः स्यादेव नास्तिप्रतीतेरयथार्थत्वादित्यर्थः । एवमेव प्रागभावकालीनोऽपि घटनास्तिताप्रत्ययो ऊहनीय इति मिश्राः ।

(३) ननु घटप्रागभावसमये यदि न घटश्चेत्तदा तद्विरोधी ध्वंस एव भवेत्, एवं घटध्वंसकाले न घटश्चेत्तदा प्रागभाव एव भवेत्, एकविरोधिविरहस्य विरोध्यन्तरनियतत्वादित्यत आह एतेनेति । भाववदिति । यथा घटस्य प्रागभावप्रध्वंसौ विरोधिनौ तथा प्रागभावस्य घटतद्ध्वंसौ, ध्वंसस्य च घटतत्प्रागभावाविति न प्रागभावध्वंसयोः सत्त्वे ध्वंसप्रागभावयोरुन्मज्जनापत्तिरिति भावः ।

(४) घटध्वंसानन्तरमिदानीं घटो नास्तीति यः कालविच्छेदप्रत्ययस्तस्यायथार्थत्वे तदानीमपि घटसत्त्वे ध्वंससत्त्वे चोभयोर्विरोधो न स्यात् द्वयोरेककालीनत्वात्, यथार्थत्वे तु घटध्वंसस्यैव तदानीमनुभवात् कुतो घटोन्मज्जनप्रसङ्ग इति भावः ।

तेन प्रागभावकाले प्रध्वंसोन्मज्जनं तत्काले च प्राग-भावोन्मज्जनमपास्तम्। भाववदभावयोरपि उभयवि-रोधिस्वभावत्वादिति।

"कुतः पुनः स्थिरसिद्धिः"? प्रत्यभिज्ञानात् (१)क्षणि-कत्वानुपपत्तेश्च। "लक्षणाभेदेन व्यभिचारिजातीय-

पूर्वापरयोर्घटयोर्भेदस्थितौ तस्यैवोन्मज्जनानुपपत्तेरिति(२)। एतेनेति। प्रध्वंसस्यानादित्वे प्रध्वंसकाले उन्मज्जनं प्रागभावस्य तु विनाशित्वे प्रध्वंसकाले उन्मज्जनं चोक्तेनैव दोषेणापास्तमिति। इममेव दोषं दर्शयति भाववदिति। अभावयोरपि कालविच्छेदप्रत्य-यस्यायथार्थत्वसहवृत्तित्वेनाविरोधप्रसङ्गः, विरोधश्च भावस्याभावेनेवाभाव-योरप्यस्ति, यथार्थत्वे वा भेदस्थितौ तदुन्मज्जनानुपपत्तिरिति द्रष्टव्यम्। (३)अथवा परस्परकाले परस्परोन्मज्जनं परस्परविरोधादेव न युक्तमित्यर्थः।

क्षणिकत्वे प्रमाणं निरस्तमिदानीं परोऽक्षणिकत्वे प्रमाणं पृच्छति (४)कुतः पुनरिति। लक्षणाभेदेनेति। पूर्वापरयोरेकत्वग्राहि-

(१) स एवायं घट इति प्रत्यक्षमेव पूर्वापरकालयोरभेदग्राहकं प्रमाणं प्रदर्श्य प्रमाणान्तरं स्थैर्यसाधकमाह क्षणिकत्वेति। अपोहवाद-खण्डनेन देशकालानुगतानां गोत्वादिसामान्यानां क्षणिकत्वं सर्वथा-नुपपन्नमिति तद्ग्राहकमानादेव स्थैर्यसिद्धिरित्यर्थः। अनेनार्थापत्तिः स्थैर्ये प्रमाणं क्षणिकत्वेऽनुगतगवादिव्यवहारस्यानुपपत्तेरिति दीधितिकाराः।

(२) पूर्वापरकालवर्तिनोर्मध्यकालेऽपि सत्त्वेन स्थैर्यापत्त्या तयो-र्भेदासिद्धौ स्वीकृतोन्मज्जनाभावापत्तिरिति भगीरथठक्कुरः।

(३) स्वमतेनोक्तदूषणातिदेशं विधायाऽन्यव्याख्यात्राभिमतं दोषं दर्शयन्नाहाथवेति। परस्परविरोधादेव—घटस्य तत्प्रागभावध्वंसयो रिव प्रागभावस्य घटतद्ध्वंसाभ्यां ध्वंसस्य च घटतत्प्रागभावाभ्यां विरोधादेव।

(४) एवं स्थैर्ये यथा बाधकं प्रमाणं नास्ति तथा साधकमपि नास्ति, एवं च साधकबाधकमानाभावात्संशयः स्यादित्यनुशयेन पृच्छति कुतः पुनरिति मिश्राः।

त्वात्प्रत्यभिज्ञानमप्रमाणमिति चेन्न"। (१)अवान्तरलक्षणभेदेनाऽव्यभिचारनियमात् । (२)"किं तदिति चेत्" विरुद्धधर्मासंसृष्टविषयत्वम्, सिद्धं च तदत्र । (३)"एवम्भूतमपि कदाचिद् व्यभिचरेदिति चेत्"। न, विरुद्धधर्मसंसर्गानास्कान्दितस्यैकत्वप्रत्ययस्य व्यभिचारे सर्वत्रैकत्वोच्छेदप्रसङ्गात्, तथाचानेकत्वमपि न स्यादिति भव निष्किञ्चनः । (४)तस्माद्भेदप्रवृत्ताववश्यं विरुद्धधर्मसंसर्गः, तदसंसर्गे वाऽवश्यं भेदव्यावृत्तिरिति भेदाभेदव्यवहारमर्यादा ।

---

ज्ञानं संस्कारप्रत्युत्पन्नकारणकत्वे सति इति लक्षणस्याभेदेन ज्वालाप्रत्यभिज्ञानादिव्यभिचारिसजातीयत्वात् प्रत्यभिज्ञानं न प्रमाणमिति । **विरुद्धधर्मेति** । अल्पमहापरिमाणादिसंस्पृष्टविषयं ज्वालादिप्रत्यभिज्ञानमिति भावः । (५)**सिद्धं च तदिति** । सामर्थ्यासामर्थ्यादिविरुद्धधर्मासंसर्गस्योक्तत्वादिति भावः । **सर्वत्रेति** । एकस्मिन्नपि क्षणे एकत्वाभावप्रसङ्गादिति भावः(६) । **तथाचेति** । एकत्वसमाहारात्मकमनेकत्वमपि न स्यादिति निःस्वभावतेति ।

---

(१) प्रत्यभिज्ञानमात्रं न प्रमाणमपि तु प्रत्यभिज्ञानविशेष इति परिहरति अवान्तरेति मिश्राः । प्रत्यभिज्ञानमात्रं न तथापि तु विरुद्धधर्मासंसृष्टविषयविशेषितमित्याहावान्तरेति भगीरथठक्कुरः ।

(२) अयथार्थप्रत्यभिज्ञानव्यावर्तकं किं लक्षणमित्यर्थः ।

(३) विरुद्धधर्मासंसृष्टविषयमपि प्रत्यभिज्ञानम् ।

(४) व्यभिचाराभावमुपसंहरति तस्मादिति ।

(५) ननु सर्वत्र सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गस्य दर्शितत्वाद्विशिष्टप्रत्यभिज्ञानमसिद्धमेवेत्यत आह सिद्धमिति । तत्साधकप्रसङ्गतद्विपर्ययनिरासेन सिद्धमेव तादृशप्रत्यभिज्ञानमित्यर्थः ।

(६) बौद्धाभिप्रेतं क्षणिकमप्येकं न स्यादिति भावः । मा भूदेकत्वं ततः किमित्यत आह तथाचेति । एकत्वपर्युदासात्मकत्वादनेकत्वस्येत्यर्थः ।

(१)"निष्कम्पप्रदीपकुड्मलेषु निपुणं निभालयन्तोऽपि न विरुद्धधर्मसंसर्गमीक्षामहे अथ च प्रत्यभिज्ञानमवधूय तत्र भेद एव पदं विधत्त इति चेत्" (२)कस्य प्रमाणस्य बलेन। "आश्रयनाशस्य हुताशननाशहेतुत्वेन विज्ञातत्वात् तस्य चात्र प्रतिक्षणमुपलब्धेः, वर्तितैलयोरुत्तरोत्तरमपचीयमानत्वात् पूर्वस्य नाश उत्तरस्योत्पादश्च न्यायसिद्ध इति चेत्"। नन्वयं प्रत्यनीकधर्मसंसर्ग एव, नष्टत्वानष्टत्वयोराश्रयनाशानाशयोर्वा एकत्र तेजस्यनुपपत्तेः। (३)सोऽयं शतं शिरश्छेदेऽपि न ददाति

(४)आश्रयनाशस्येति। आश्रयशब्देन दाह्य(५)मुच्यते। तस्य चाश्रयविनाशस्य च। कथमित्याह-वर्तीति। पूर्वस्येति। पूर्वस्य प्रदीपस्य विनाश (६)उत्तरस्योत्पादश्च न्यायसिद्ध इति(७)। नष्टत्वानष्टत्वयोरिति। आश्रयनाशान्नष्टत्वं दृश्यमानत्वादनष्टत्वम्। (८)अपि च यद्दर्शनादाश्रयनाश इदानीं प्रदीपस्य दर्शनादेव आश्रयवि-

(१) ननु भेदप्रवृत्तेरवश्यं विरुद्धधर्मसंसर्ग इत्येव नियमो नास्ति, निष्कम्पप्रदीपे भेदे सत्यपि विरुद्धधर्मसंसर्गाभावादित्याह निष्कम्पेति मिश्राः। ननु वास्तवविरुद्धधर्मासंसृष्टविषयत्वमसिद्धमिति दर्शनं हेतूकर्तव्यं तच्च व्यभिचारीत्याह निष्कम्पेति। यद्वा विरुद्धधर्मसंसृष्टत्वं व्यभिचरतीत्याह निष्कम्पेति भगीरथठक्कुरः।

(२) केन प्रमाणेन प्रदीपे भेदसिद्धिरिति नैयायिकप्रश्नः।

(३) सोऽयमिति। विरुद्धधर्मसंसर्गं साक्षादस्वीकृत्य प्रकारान्तरेण स्वीकरोति यथा शिरश्छेदेऽपि शतं न दास्यामि विंशतिपञ्चकं तु दास्यामीत्युक्तिरिति परिहासोक्तिर्नैयायिकस्येयम्।

(४) भेदसाधकं प्रमाणमाह बौद्ध आश्रयनाशस्येत्यादिना।

(५) इन्धनादि। (६) प्रदीपस्य।

(७) दीपो नाशप्रतियोगी नष्टाश्रयत्वादित्यनुमानप्रयोगसिद्ध इत्यर्थः।

(८) तथा च पूर्वस्य नाश उत्तरस्योत्पत्तिं स्वीकुर्वता बौद्धेन नष्टत्वानष्टत्वलक्षणविरुद्धधर्मसंसर्गः स्वीकृत एवेति भावः। एवं नष्टाश्रय-

विंशतिपञ्चकं तु प्रयच्छतीति किमत्र ब्रूमः । "भविष्यति तर्हीहापि(१) विरुद्धधर्मसंसर्गो दुरूह इति चेत्"। अथ स एवायं स्फटिक इत्यत्र प्रमाणप्रतीतसंसर्गाणां(२) विरोध आशङ्क्यते, तत्प्रतीतविरोधानां(३) संसर्गः, अथाप्रतीत(४)स्वरूपविरोधसंसर्गा एव केचिद्विरुद्धतया, संसृष्टतया वेति ।

न प्रथमः, प्रागेव निराकृतत्वात्। न द्वितीयः, (५)योग्यानामनुपलम्भबाधितत्वात्, अयोग्यानामपि कारणा-

---

नाशः, एवमुभयसिद्धयोर्विरुद्धधर्मयोर्दर्शनादेव भेदसिद्धिरत्रापीति । इहापीति । स्थिरत्वेनाभिमते स्फटिकादावपीति ।

प्रागेवेति । प्रमाणप्रतीतससंर्गाणां करणाकरणादिना(६) विरोधस्य प्रागेव निराकरणादिति । अयोग्यानां संसर्गे का वार्तेति चेत् , तत्राह अयोग्यानामपीति । (७)अयोग्यानामपि कारणादिरूपव्याप्यव्यापकभाव-

---

स्यानष्टाश्रयस्वरूपविरुद्धधर्मसंसर्गोऽपीति । 'अपिच'त्यादिनारायणीग्रन्थस्तु उत्तरप्रदीपस्येदानीं दर्शनात्पूर्वस्य नष्टाश्रयत्वमुत्तरस्यानष्टाश्रयत्वमिति योजनया व्याख्येयः ।

(१) सत्यप्रत्यभिज्ञानविषयेऽपि ।

(२) सत्त्वद्रव्यत्वस्फटिकत्वादीनाम्। (३) गोत्वाश्वत्वादीनाम् ।

(४) अप्रतीतेति । कौचिद्धर्मौ इहापि विरुद्धौ स्यातामिति शङ्कामात्रमित्यर्थः ।

(५) योग्यानामिति । प्रमाणप्रतीतयोग्यविरोधानामनुपलब्ध्या बाधितत्वात्तत्संसर्गः कथमाशंक्येतेत्यर्थः ।

(६) सामर्थ्यासामर्थ्यमादिपदग्राह्यम् ।

(७) मनस्त्वात्मत्वचक्षुष्ट्वप्रभृतीनामिति मिश्राः । अत्र कारणादीत्यादिपदेन कार्यस्यापि सङ्ग्रहः तस्यापि चरमसामग्रीमिवाशिकारणव्यापकत्वात्,व्याप्यं समानियतं, यथा स्नेहादेर्जलत्वादि, व्यापकं विषमव्यापकं यथा तस्यैव द्रव्यत्वादीति शिरोमणिः। एवं च कार्यादिव्यतिरेकेण चरमसामग्रीनिविष्टकारणादिव्यतिरेकदर्शनादयोग्यविरोधानामपि संसर्गः कथमाशंक्येतेति भावः।

दिव्याप्यव्यापकविगमविलोकनव्यावर्तितत्वात् । न तृतीयः, तस्यातिप्रसञ्जकतया सर्वत्रैकत्वोच्छेदप्रसङ्गादिति । एतेन प्रत्यभिज्ञानादेव लक्षणभागमाकृष्या(१)नुमानेन स्थैर्यसिद्धिः, तथाहि—विवादाध्यासितो भावः (२)कालभेदेऽपि न भिद्यते, तद्भेदेऽपि विरुद्धधर्मासंसृष्टत्वात्, (३)यो यद्भेदेऽपि न विरुद्धधर्मसंसृष्टो नासौ तद्भेदेऽपि भि-

---

विगमविलोकेनन व्यावर्तितत्वादिति । सर्वत्रेति । (४)एकत्रापि क्षण इति । (५)एतेनेति । एतेन विरुद्धधर्मासंसर्गप्रतिपादनेन । प्रत्यभिज्ञानादेव विरुद्धधर्मासंसृष्टत्वस्य स्फटिकादिधर्मता साधितैवेति(६) ।

---

( १ ) विरुद्धधर्मासंसृष्टत्वरूपं विशेषणांशमात्रमादायेत्यर्थः । यद्यपि विरुद्धधर्मासंसृष्टविषयकप्रत्यभिज्ञानस्यापि धूमप्रागभाववद्वैयर्थ्यात्तद्धेतुत्वेऽपि न कापि क्षतिस्तथापि तन्मात्रस्य व्यभिचारितया विशिष्टस्योपादेयत्वे प्रथमोपस्थितत्वाद्विशेषणांशस्यैव हेतुत्वमुचितमिति भावः ।

( २ ) ननु क्षणिकोऽपि भावः स्वस्मान्न भिद्यत एवेति सिद्धसाधनदोषः स्यादत आह कालभेदेऽपीति । ननु कालभेद एव विरुद्धधर्मसंसर्गः स्यादित्यसिद्धोऽयं विरुद्धधर्मासंसृष्टत्वादितिहेतुरत आह तद्भेदेऽपीति । क्रमिककालभेदस्याविरुद्धत्वान्नासिद्धत्वमित्यर्थः ।

( ३ ) इदमुपलक्षणम्—विवादाध्यासितो घटो भाविकपालमालापर्यन्तं न विनश्यति विनाशकारणासमवहितत्वात्, सभागसन्तानतया विवक्षितो घटो न नाना एकत्वेन प्रत्यभिज्ञायमानत्वात् क्षणिकपरमाणुवत्, प्रातर्दृष्टो घटो मध्यन्दिनस्थायी तदन्तरालकाले विनाशकारणासमवहितत्वादित्याद्यप्यनुमानं स्थैर्यसाधकं द्रष्टव्यम् । वस्तुतः प्रत्यक्षमेव स्थैर्ये प्रमाणं स्वोत्पत्त्यव्यवहितोत्तरक्षणवृत्तिध्वंसप्रतियोगित्वस्य सकलप्रमाणबाधितत्वादिति मिश्राः ।

( ४ ) कौचिद्धर्माविहापि स्यातामिति तृतीयपक्षस्य तु सर्वत्रैकस्मिन्नपि क्षणिकभावे आशङ्कितुमर्हत्वात् तस्याप्येकत्वोच्छेदप्रसङ्गरूपातिप्रसङ्गापादकत्वमित्यर्थः ।

( ५ ) अनुमानमात्रेणापि प्रत्यभिज्ञानं प्रमाणयति एतेनेति भगीरथठक्कुरः ।

( ६ ) अनेन नानाक्षणस्थायिनां विरुद्धधर्मसंसृष्टत्वं हेतुरेवासिद्ध इति निरस्तम् ।

यते यथा(१)प्रतिसम्बन्धि परमाणुभेदेऽपि एकः परमाणुः, तथा चायं विवादाध्यासितो भावः, तस्मात् कालभेदेऽपि न भिद्यत इति। (२)अत्र च व्याप्तौ न कश्चित् विप्रतिपद्यते, पक्षधर्मता तु प्रसाधितैव । (३)क्षणिकत्वानुपपत्तिश्च अनुगतव्यवहारानन्यथासिद्धेः। (४)शब्दलिङ्गविक-

---

क्षणिकत्वानुपपत्तेश्चेति हेतुं साधयति क्षणिकत्वानुपपत्तिश्चेति। अनुगतव्यवहारस्य गवादीनां देशकालानुगमनिबन्धनस्य व्यवहारस्यानुगत(रूप ?)मन्तरेणानुपपत्तेः क्षणिकत्वानुपपत्तिरिति । व्यवहारस्यानुगतनिबन्धनत्वमेव कथमिति चेत्तत्राह शब्देति । (५)शब्दलिङ्गजनिता विकल्पाः। एतच्चेन्द्रियविकल्पस्याप्युपलक्षणम्। अथवा शब्दो लिङ्गं विक-

---

(१) प्रतिसम्बन्धीति । षट्केन युगपद्योगेऽप्येक एव परमाणुर्यथेत्यर्थः ।

(२) अत्र व्याप्यत्वासिद्धिस्वरूपासिद्धी निवारयति अत्र चेति न कश्चिदिति । अन्यथैकस्मिन्नपि क्षणे भावो भिद्येतेति विपक्षबाधिकत्वथापीयं व्याप्तिरभ्युपगन्तव्येति मिश्राः ।

(३) प्रत्यभिज्ञानरूपं प्रथमं प्रमाणं स्थैर्यसाधकं निरूप्य द्वितीयं क्षणिकत्वानुपपत्तिरूपमाह क्षणिकत्वेति । ननु गोत्वादिकमपि क्षणिकमेवाऽऽस्तां को दोष अत आहानुगतेति । देशकालानुगतधर्मं विनाऽनुगतव्यवहारो न स्यादित्यर्थः ।

(४) ननु देशकालानुगतधर्मस्य प्रतीतिपथगोचरत्वे तस्य स्थैर्यचिन्ता स्यात्तत्राह शब्देति । सङ्केतग्रहव्याप्तिग्रहाद्यर्थं साधारणरूपमानमवश्यमङ्गीकर्तव्यमित्यर्थः। न तृणेति । अनुगतरूपावच्छेदं विना व्याप्तिग्रहाद्यधीनानुमित्याद्यसम्भवात्तदधीनप्रवृत्तिनिवृत्ती न स्याताम्। इष्टतावच्छेदकधर्मज्ञानं विना जलादिविकल्पानां प्रवर्तकता च न स्यादिति भावः । ज्ञानरूपः साधारणधर्मस्तु नैव सम्भवति बाह्यार्थस्य व्यवस्थापनीयत्वादित्याशयेनाह बाह्यार्थेति ।

(५) शब्देन लिङ्गेन च विकल्प इत्यर्थं इत्यपि कश्चिदिति शिरोमणिव्याख्यातमतेनेदम्। शब्दादिजन्यतयैव विकल्पत्वलाभात्तदुपादाने वैयर्थ्यमित्यत्र कश्चिदित्यनेनारुचिः प्रदर्शिता गुणानन्दटिप्पणीकाराभ्याम् ।

ल्पा हि साधारणं रूपमनुपस्थापयन्तो न तृणकुब्जीकरणेऽपि समर्था इत्यविवादं, बाह्यार्थस्थितौ स्थिरास्थिरविचारात् । तच्चालीकं वा, आकारो वा, बाह्यं वस्तु वेति त्रयः पक्षाः। तत्र न प्रथमः पक्षः, (१)तद्धि न तावदनुभवादेव तथा व्यवस्थाप्यं, तस्यालीकत्वेनानुल्लेखात्, तथात्वे (२)वा प्रवृत्तिविरोधात्, न ह्यलीकमेव तदित्यनुभूयाप्यर्थक्रियार्थी प्रवर्तते। "अन्यनिवृत्तिस्फुरणान्नैष दोष इति चेत्" एतदेवासत्, विधिरूपस्यैव स्फुरणात्(३), नहि शब्दलिङ्गाभ्यामिह महीधरोद्देशे अनग्निर्न भवतीति स्फुरणम्, अपि त्वग्निरस्तीति ।

"यद्यपि निवृत्तिमहं प्रत्येमीति न विकल्पः, तथापि निवृत्तपदार्थोल्लेख एव निवृत्त्युल्लेखः, न ह्यनन्तर्भावि-

---

ल्पश्चेति शब्दलिङ्गविकल्पाः । तृणेति । क्षुद्रेऽपि व्यापारे इत्यर्थः । अथ न विवादः बाह्यपदार्थसिद्धौ हि तत्रासामर्थ्यमविवादसिद्धं भवति तत्राह बाह्यार्थस्थिताविति । बाह्यार्थस्य स्थिरास्थिरविचारो बाह्यार्थसिद्धावेव भवितुमर्हति । तथा व्यवस्थाप्यमिति । अलीकतया व्यवस्थाप्यमिति । (४)अन्यनिवृत्तीति । अगोव्यावृत्तिरेव स्फुरति गोविकल्पे(५) न त्वलीकोऽयमिति स्फुरतीति ।

शङ्कते यद्यपीति। अनुव्यवसायः विकल्पस्य परामर्शोऽनुव्यवसाय इति।

---

(१) तदनुगतस्वरूपम्। (२) अलीकत्वेनोल्लिख्यमानत्वे वा ।

(३) अनुव्यवसायेन भानात्, नहीति । व्यवसाये हि विषयव्यवस्थाऽनुव्यवसायाधीना, अनुव्यवसायश्च वह्निमिह पर्वते अनुमिनोमीत्याकारो न त्वनग्निमनुमिनोमीत्याकार इति भावः ।

(४) अन्यनिवृत्तिरूपतया स्फुरणमेवालीकस्फुरणं न त्वलीकत्वेन स्फुरणम्, तथाच नेदं रजतमिति ज्ञात्वैव रजतार्थी प्रवर्तते इति को दोष इत्याशयेन शङ्कामूलमवतारयति अन्येति ।

(५) गोज्ञाने।

तविशेषणा विशिष्टप्रतीतिर्नाम, ततो यथा सामान्यमहं प्रत्येमीत्यनुव्यवसायाभावेऽपि साधारणाकारस्फुरणात् विकल्पधीः सामान्यबुद्धिः परेषां, तथा निवृत्तप्रत्ययाक्षिप्ता निवृत्तिबुद्धिरस्माकमिति चेत्"(१)।

हन्त, साधारणाकारपरिस्फुरणे विधिरूपतया यदि सामान्यबोधव्यवस्था, किमायातमस्फुरदभावाकारे चेतसि निवृत्तिप्रतीतिव्यवस्थायाः। न ह्यगोपोढोऽयमिति विकल्पः, किन्तु गौरिति, ततोऽन्यनिवृत्तिमहं प्रत्येमीत्येवमाकाराभावेऽपि निवृत्त्याकारस्फुरणं यदि स्यात् को निवृत्तिप्रतीतिमपह्नुवीत, अन्यथा त्वतत्प्रतिभासे तत्प्रतीतिव्यवहृतिरिति गवाकारे चेतसि तुरगबोध इत्यस्तु। न च निवृत्तिमात्रप्रतिभासेऽपि प्रवृत्तिसम्भवः, न ह्यघटो नास्तीत्येव घटार्थी प्रवर्तते अपि तु

हन्तेति। विधिरूपतया साधारणाकारस्फुरणे सामान्यस्य तथारूपत्वाद्यदि सामान्यबोधव्यवस्थाऽस्माभिः स्वीकृता किमायातमस्फुरदभावाकारे चेतसि निवृत्तिप्रतीतिव्यवस्थाया इति। अभावाकारास्फुरणमेव दर्शयति नहीति। अन्यथेति(२)। निवृत्ताकारणाभाव इत्यर्थः (?)। तुरगबोध इति। तुरगबोधव्यवहारोऽस्त्वित्यर्थः। यथा चाऽलीकस्फुरणे प्रवृत्त्यसम्भवस्तथा निवृत्तिमात्रस्फुरणेऽपीत्याह नचेति(३)। (४)न ह्यघट इति। न ह्यघ-

(१) नैयायिकमते यथा गोत्वसामान्यं प्रत्येमीत्यनुव्यवसायाभावेऽपि गौर्गौरिति साधारणाकारस्फुरणानुरोधेन गोत्वसामान्यसिद्धिस्तथा बौद्धनयेऽपि अगोव्यावृत्तमिदमिति भाने विशेषणतया व्यावृत्तिभानमावश्यकमिति यद्यपीत्यादिपूर्वपक्षतात्पर्यम्।

(२) अतज्ज्ञानविषयस्यापि तज्ज्ञानविषयताकल्पने विपक्षे बाधकमाह अन्यथेति। तथाच सर्वज्ञानं सर्वविषयं स्यादिति भावः।

(३) निवृत्तिस्फुरणे दोषान्तरमाह नचेतीति मिश्राः। अघटस्य पटादेरभावज्ञानेऽपि घटार्थी न प्रवर्तते अघटस्याप्यभावसम्भवात्, किन्तु घटज्ञानादेवेति विशिष्टज्ञानादप्रवृत्तिप्रसङ्गः इत्यर्थः।

(४) प्रवर्तकानुभववैलक्षण्यमाह नहीति।

घटोऽस्तीति(१)।

"(२) अघटस्यैव निवृत्तिरिति प्रतीतौ नायं दोष इति चेत्"। न, घटनिवृत्त्यप्रतिक्षेपे नियमस्यैवासिद्धेः। तत्प्रक्षेपे तु कस्ततोऽन्यो विधिः, निषेधप्रतिक्षेपस्यैव विधित्वात्। "निवृत्तेरपरिस्फुरणे गां बधानेति देशितोऽश्वमघटनिवृत्तौ घटनियमः, घटाभावेऽप्यघटनिवृत्तिसम्भवादिति।

अघटस्यैवेति। न तु घटस्यापीत्यर्थः(३)। न घटनिवृत्तीति। घटनिवृत्तिर्नास्ति किन्तु अघटस्यैव निवृत्तिरित्येवं घटनिवृत्तिप्रक्षेपे हि नियमः सिद्ध्यतीति। कस्तत इति। घटनिवृत्तिप्रतिक्षेप एव घटविधिरिति घटविधेरेव स्फुरणमिति भावः। (४)निवृ(त्त्य)त्तेरपरि·

(१) यथा गौरित्यत्र विशिष्टज्ञाने विधिरूपतया विशेषणं गोत्वमनुगतत्वेन भासते न तथा व्यावृत्तिर्भासते, किन्तु वस्तुतो यद्व्यावृत्तं तद्भासते, तथाच निवृत्तपदार्थोल्लेखेऽपि न निवृत्तत्वेनोल्लेख इति उत्तरार्थाभिप्रायः।

(२)ननु घटो नास्तीतिप्रतीतेः प्रवर्तकत्वे भवन्मतेनात्र घटनिवृत्तिरपि स्फुरति घटान्तरापेक्षया घटस्याप्यघटत्वात्, अघटस्यैव निवृत्तिरिति प्रतीतेः प्रवर्तकत्वे तु नायं दोष इत्याह पूर्वपक्षी अघटस्यैवेति। समाधत्ते नेति। अघटस्यैवेति नियमार्थो घटनिवृत्तिप्रतिक्षेप एवान्यथा पूर्वदोषतादवस्थ्यात्, घटनिवृत्तिप्रतिक्षेपश्च घटोऽयमितिज्ञानपर्यवसायी, तत्र च घटत्वमेव विधिरूपं स्फुरेत्, तन्मते सविकल्पकेन स्वलक्षणासंस्पर्शादित्यर्थ इति मिश्राः। अघटः पटादिर्घटाभावश्च, तथाच घटाभावस्यापि निवृत्तिः प्रतीयते न वा? अन्त्ये अघटस्यैवेति नियमासिद्धिः, आद्ये विधिभानमेव पर्यवस्यतीत्याह घटनिवृत्तीति भगीरथठक्कुरः।

(३) एवकारार्थ इत्यर्थः।

(४)ननु यदि गौरयमिति शाब्दं ज्ञानमश्वव्यावृत्तिविषयकं न स्यात् अश्वज्ञानमिवाश्वे प्रवर्तकं स्यात्, तथाचाश्वे प्रवर्त्तकत्वमनुपपद्यमानमस्याश्वव्यावृत्तिविषयतामाक्षिपत्येवेत्यभिप्रायेणाशङ्काग्रन्थमवतारयति निवृत्त्यस्फुरण इति। एतन्मतेन मूलेऽत्र निवृत्त्यस्फुरण इति पाठो द्रष्टव्यः।

पि बध्नीयादिति चेत्" । न, (१)भवेदप्येवं, यद्यश्वोऽपि गौः स्यात्, किन्तु गौर्गौरश्वोऽश्व इति । अन्यथा निवृत्तावपि कुतस्ते समाश्वास इति, निवृत्त्यन्तरापेदनवस्था, निवर्त्यनिवृत्तितदधिकरणानां स्वरूपसाङ्कर्ये प्रवृत्तिसङ्करः स्यात्, स्वरूपभेदेनैव नियमे विधिमात्रप्रतिभासेऽपि तथा किं न स्यात् ।

(२) "स्वरूपभेद एवान्यापोहः, अन्यापोहस्वरूपस्फुरण इति । अगोरश्वस्य निवृत्तेरपरिस्फुरण इति । निवृत्तावपीति(३) । अगोनिवृत्तिस्फुरणेऽपि कथमगोरश्वस्य बन्धनाभाव इति । अगोनिवृत्तेरपि निवृत्त्यन्तरापेक्षेत्समाश्वासः ततोऽनवस्था स्यादित्याह निवृत्त्यन्तरापेति । निवर्त्यनिवृत्तितदधिकरणानामगोऽश्वनिवृत्तेर्गोऽश्वस्वरूपसाङ्कर्ये(४)प्रवृत्तिसङ्करः स्यादतः स्वरूपभेदेनैव प्रवृत्ति नियम इति चेत्तर्हि विधिमात्रप्रतिभासेऽपि तुल्यमेतदित्याशङ्क्या सहाह निवर्त्येति ।

---

(१) अश्वविषयप्रवृत्तिजनकत्वेऽश्वविषयत्वं प्रयोजकमिति तदभावेनान्यथोपपन्नतां नाक्षिपतीति समाधत्ते भवेदेवमिति । किन्त्विति । गौर्गौरेव गोत्वविशिष्टः, अश्वस्त्वश्वत्वविशिष्टो न तु गोत्वविशिष्टः, तथाच गोपदार्थस्याश्वत्वाभावान्न गां बधानेतिदेशितोऽश्वं बध्नीयादित्यर्थः ।

(२) बौद्धः शङ्कते स्वरूपेति । गोस्वरूपो यः स्वरूपभेदो नैयायिकैरङ्गीक्रियते स एवान्यापोहोऽतद्व्यावृत्तिस्वरूपः, यस्तु विधिः सोऽन्यापोहोऽस्य एव तज्ज्ञानं शब्दान्न जायत इत्याशङ्कार्थः ।

(३) निवृत्तिप्रतियोगिनिवृत्त्यधिकरणादिभ्यो यदि निवृत्तिः स्फुरेत्तदाऽनवस्था, तदस्फुरणेऽश्वव्यावृत्तिग्रहेऽपि गोपदादश्वे प्रवृत्तिः स्यादेव निवृत्तेः साधारण्येनैव स्फुरणादिति भावः ।

(४) प्रतियोग्यादिसाधारण्येनैव निवृत्तेः स्फुरणात्, निषेध्योऽश्वो निषेधाधिकरणं गौरिति तथापि मते गोशब्दादतद्व्यावृत्तिपदाद्यतद्गोचरप्रवृत्त्यापत्तेरित्यर्थः ।

त्वाद्विधेरिति चेत्"। न, अलीकपक्षे तदभावात्, तस्य (१)स्वरूपविधावनलीकत्वप्रसङ्गात्, स्वलक्षणस्य च विकल्पानारोहात्। अपि च गां बधानेति देशितो गवि प्रवृत्तो नाश्वे, तदप्रतीतेः। (२)यदा त्वश्वमुपलप्स्यते तदा तत्र प्रवृत्त्युन्मुखोऽपि गोरभावं प्रतीत्यैव निवर्त्स्यतीति किमनुपपन्नम्।

---

अलीकपक्ष इति। विकल्पविषयस्यालीकत्वपक्षे स्वरूपभेदाभावादिति(३)। स्वलक्षणस्यानलीकत्वात्तस्य स्वरूपभेदोऽस्तीति चेत्तत्राह (४)स्वलक्षणस्य चेति। ततश्च विकल्पाविषयस्य न स्वरूपभेदः सम्भवति भवत्पक्ष इति। इतश्चापि निवृत्त्यस्फुरणेऽपि गोविकल्पाश्वे प्रवृत्तिरित्याह (५)अपि च गामिति। गोरभावमिति। शब्दा-

---

(१) तस्य=अन्यापोढत्वेनाभिमतस्य गोत्वादेः, स्वरूपतो विधावलीकत्वाभावप्रसङ्गादित्यर्थः।

(२) ननु गोपदादश्वव्यावृत्तिस्फुरणाभावे गां बधानेतिदेशितो गवाश्वमेकत्र पश्यन्नश्वं बध्नीयात्, नहि तत्र नाश्वप्रतीतिरित्यत आह यदा त्विति। प्रवृत्त्युन्मुखोऽपि निवृत्तिप्रयत्नरहितोऽपि गोरभावमन्योन्याभावं प्रतीत्य निवर्तते, यदा त्वयं गौरिति भ्राम्यति तदा प्रवर्तत एवेति शिरोमणिः।

(३) अन्यापोढलक्षण इत्यनेनाभिमतं गोत्वादि स्वरूपभेदो बौद्धैर्नोच्यते, तच्चेदलीकं तदा कथं स्वरूपभेदः नहि निःस्वरूपमलीकं सस्वरूपं भवतीत्युत्तरार्थः।

(४) गोत्वमन्यापोहरूपं यदि विधिस्वरूपं भवेत् तदा स्वलक्षणतामासादयेत्, तथाच वस्तुनस्तस्य सविकल्पकविषयता न स्यादित्याह स्वलक्षणस्येति मिश्राः। भवत्पक्ष इति। स्वलक्षणस्य निर्विकल्पकमात्रवेद्यताया बौद्धैः स्वीकृतत्वादित्यर्थः।

(५) नन्वगोज्ञानाद्गवि प्रवृत्तिवदश्वे निवृत्तिरप्यनुभवसिद्धा, तदन्यथानुपपत्त्या तस्यानुभविकगोविषयकत्ववदश्वव्यावृत्तिविषयत्वमपि कल्प्यत इत्यत आहापिचेति भगीरथठक्कुरः। पूर्वमदृष्टव्यावृत्तेर्गोशब्दादश्वेऽपि नाश्वे प्रवर्तत इति 'यद्यन्योऽपि गौःस्यादि'त्यनेनोक्तमधुनाश्वाप्रतीत्यैव नाश्वे प्रवर्तत इत्युच्यत इत्यपौनरुक्त्यमिति मिश्राः।

"(१)स्यादेतत्, न ह्यनुभवमवधूय भवितुं क्षममिति को विधिस्फुरणमपह्नुताम्, तदुपसर्जनीभूतस्तन्निषेधोऽपि स्फुरत्येव, अन्यथा विधेरवच्छेदकत्वानुपपत्तेः,न ह्यन्यतो विशेष्यमव्यावर्तयतो विशेषणत्वं नाम, न चान्यतो व्यावर्तनं व्यवच्छित्तिप्रत्यायनादन्यत्, ततो यथेन्दीवरपुण्डरीकादिशब्देभ्यो गुणीभूतनीलधवलादिविधिशेखरा प्रतीतिस्तदन्यव्यवच्छेदस्तु तद्धर्मिकायमाणस्तथा सर्वत्रेति चेत्" ।

(२)अस्तु तावदेवं, विधिस्तु स्फुरतीत्यत्र सम्प्रति नो

---

दन्येन प्रत्यक्षेण (३)प्रतीत्येति । अन्यथा विधेरिति । अस्मिन्प्रकरणे विधिशब्देन भाववस्त्वेवोच्यते । अवच्छेदकत्वानुपपत्तेः=विशेषणत्वानुपपत्तेरिति । कामं व्यावर्तयतु किमायातं व्यावृत्तिप्रतीतेरित्याह न चान्यत इति । व्यवच्छित्तिप्रत्यायनात्=व्यावृत्तिप्रत्यायनात् । (४)गुणीभूतेति । विपरीतो वाऽर्थः (!) ।

---

( १ ) कीर्तिदिङ्नागादिमते गौरयमित्यादौ विधिस्फुरणाभावेऽपि ज्ञानश्रिया निषेधवद्विधिरपि तत्र स्फुरतीति 'यत्रापोहस्तद्गुणत्वेन गम्यत, इत्यत्रोक्तं तदपि दूषयितुं तन्मतेनाशङ्कते स्यादेतदिति । क्षममिति शक्यमिति शेषः। तदुपसर्जनीभूतः=विधिविशेषणीभूतः,अन्यथा=व्यवच्छेदस्फुरणाभावे, गोत्वादेर्विधेर्व्यवच्छेदकत्वं न स्यादित्यर्थः । तदेवाह नहीत्यादिना ।

( २ ) एवमुक्तं ज्ञानश्रीमतमिष्टापत्त्या परिहरति अस्तु तावदिति । स्फुरितस्य विधेरलीकत्वरूपेणापि स्वीकारो तावत्पदार्थः ।

( ३ ) प्रत्यक्षेणेन्द्रियसन्निकर्षात् अश्वे गवान्योन्याभावं ज्ञात्वेत्यर्थः ।

( ४ ) स्फुटतरव्यावृत्तिप्रत्ययस्थले दृष्टत्वेन गवादिप्रत्ययानामपि व्यावृत्तिविषयत्वमाह यथेति मूले । यथा इन्दीवरादिशब्देभ्यो विशेषणं नीलादिविधिमादायैव कमलादिविशेषस्य प्रतीतिः, रक्तकमलादिव्यावृत्तिस्तु तत्क्रोडवर्ती तथा सर्वत्र गोमहिषमातङ्गादिप्रतीतावपीति बौद्धाभिप्रायः ।

निर्बन्धः, अन्यथाऽवच्छेद्यावच्छेदकयोरप्रतीतेरवाच्छि-त्तिरपि न स्यात्,(१) यथोत्पलादावेव नीलत्वाद्यप्रतीतौ । च निषेध्यमस्पृशती प्रतीतिर्निषेध्यं स्प्रष्टुमर्हति, तस्य तन्निरूपणाधीननिरूपणत्वात् । न च निषेधान्तरमेव निषेध्यम्, इतरेतराश्रयप्रसङ्गात्(२) । (३)परानपेक्षनिरू-तु विधौ नायं दोषः । ततः प्रतीतावितरेराश्रयत्व-

---

निर्बन्धे कारणमाहान्यथेति । विधेरस्फुरणेऽवच्छेद्यावच्छेदकयोर्वि-शेष्यविशेषणयोर्विधिरूपयोरस्फुरण इति(४) ।

एवं विशेष्यविशेषणयोर्विध्योः स्फुरणं पराभ्युपगतमेव स्वाच्छ-न्द्यनिवृत्तये निगडबन्धेन स्थिरीकृतम्, इदानीं गर्भीभूयमाणनिवृत्ति स्फुरणं निषेधति (५)नच निषेध्यमिति । भवन्मते तु निषेधान्तरमेव निषेध्यं न च तस्य निषेध्यत्वं सम्भवतीत्याह (६)न च निषेधान्तर मेवेति । तदुक्तं-'गव्यप्रसिद्धे त्वगौर्नास्ति तदभावे तु गोः कुत' इति । तत इति । यत एव निवृत्तिरूपप्रतीतावेवायमितरेतराश्रयदोषोऽभिहितः

---

( १ ) विशेष्यविशेषणयोरस्फुरणे सति इतरव्यावृत्तिबुद्ध्यभावे दृष्टान्तमाह यथेति । नीलनीलत्वयोरुत्पलोत्पलत्वयोर्भानाभावेऽनीलानु-त्पलत्वाभ्यां व्यावृत्तिर्यथा नीलोत्पलमित्यादौ न भासते इति भावः ।

( २ ) यद्यगोव्यावृत्तिर्गोपदस्यार्थः तर्ह्यगोरूपप्रतियोगिनिरूप्यत्वा-द्गोरगोश्च गोनिषेधात्मकतया गोनिरूप्यत्वादन्योन्याश्रयो दोष इत्यर्थः। अत एवोक्तमभियुक्तैः—

सिद्धश्चागौरपोह्येत गोनिषेधात्मकस्तु सः ।
तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते ॥ इति ।

( ३ ) ननु भावस्यापि स्वाभावाभावात्मकत्वात्तत्राप्युक्तदोषः स्या-स्यादत आह परानपेक्षेति । स्वाभावाभावात्मकत्वेन भावभाने उक्त दोषसत्त्वेऽपि गोत्वादिना भावरूपेण भाने नोक्तदोषापत्तिः स्वरूपतो भा वभानसंभवादित्यर्थः ।

( ४ ) अवाच्छित्तिरपि इतरव्यावृत्तिबुद्धिरपि न स्यादिति शेषः ।

( ५ ) ननु निषेधमात्रमेव भासतां किं निषेध्यस्योत्पलादेरपि भाने-नेत्यत आह न चेति मिश्राः ।

( ६ ) ननु चागवि माहिष्यादौ वा गोव्यावृत्तिः गवि च धवलादे

मुक्तं सङ्केते सञ्चार्य यत्परिहृतं ज्ञानश्रिया, तदेतत् ग्राम्यजनधन्धीकरणं गोलकादिवत् स्थानान्तरसञ्चारात्(१) ।

"स्फुरतु विध्यलीकमिति चेत्" । न,(२) व्याघातात् । किञ्चिदिति हि विध्यर्थो न किञ्चिदिति चालीकार्थः ।

---

तत एव, प्रतीतिगतमितरेतराश्रयदोषं गोशब्दसङ्केते अगोशब्दसङ्केतः अगोशब्दसङ्केते गोशब्दसङ्केत इत्येवं सङ्केते सञ्चार्य तत्रोक्तमित्यध्यारोप्य (३)नागोशब्दसङ्केतापेक्षो गोशब्दसङ्केतः प्रमाणान्तरेण गोशब्दतोऽर्थमवगम्य तत्र सङ्केतसम्भवादिति यज्ज्ञानश्रिया परिहृतं, तदे(व)तत् ग्राम्यजनधन्धीकरणं व्यामोहकरणं गोलकादिवत् स्थानान्तरसञ्चारात्, गोलकादिकं वञ्चकानामुपकरणविशेष इति ।

एवं निवृत्तिस्फुरणं निषिद्धं परस्त्विदानीं विधिस्फुरणमेवाङ्गीकृत्य

---

पाऽगोव्यावृत्तिस्तयोरेव परस्परं विशेष्यविशेषणभावोऽस्तु किं विधेर्निषेधपरत्वेनेत्यत आह न चेति कल्पलता ।

(१) यच्च ज्ञानश्रिया बौद्धेनान्योन्यज्ञानाधीनमन्योन्यज्ञानामिति नैयायिकोक्तमन्योन्याश्रयमन्योन्यसङ्केतग्रहणामिति छलतः सञ्चार्य (अगौर्महिषादिर्महिषादिपदसङ्केतग्रहाधीनः गौश्च गोपदसङ्केतग्रहाधीन इति प्रतिबन्दिं कृत्वा) समाहितं तत्साधारणजनव्यामोहनं न परीक्षकाणां यथेन्द्रजालिको गुटिकान्तरस्थाने गुटिकान्तरं निवेशयति पृथग्जनास्तु तादूप्येणैव प्रतिपद्यन्त इति भावः ।

(२) विध्यलीकमिति अत्र कर्मधारयसमासविवक्षणे विधित्वालीकत्वयोः किञ्चित्त्वाऽकिञ्चित्त्वरूपयोर्विरुद्धयोरेकत्रासम्भवादित्याशयेन परिहारमाह नेति ।

(३) एवं विधिपक्षेऽन्योन्याश्रयदोषं दत्त्वा ज्ञानश्रिया गवादिरूपार्थग्रहाधीनो गोपदसङ्केतग्रहो न तु महिषादिपदसङ्केतग्रहस्तत्रोपयुज्यते येनान्योन्याश्रयो दोषः स्यादिति, तथाच कल्पितदूष्यदूषणत्वान्नान्योन्याश्रयो दोष इति परिहृतं तत्प्रकारमाह नागोशब्देत्यादिना ।

(१)अतद्रूपपरावृत्तिमात्रेणालीकत्वे स्वलक्षणस्याप्यलीकत्वप्रसङ्गात् । (२)स्वरूपमात्रपरावृत्तौ तु कथं विधिर्नाम । (३)"विध्यंशस्यारोपितत्वादयमदोष इति चेत्" न स्वलक्षणविधेर्विकल्पासंस्पर्शात्, सामान्यविधेरनुपगमात्, परिशेषादलीकविधौ विरोधस्यैव स्थितेः ।

"(४)भेदाग्रहाद्विधिव्यवहारमात्रमेतदिति चेत्" ।

---

तस्य विधेरलीकत्वमाह(५)स्फुरत्त्विति । अतद्रूपेति । स्वरूपसत्त्वेऽपि विधेः सामान्यस्यातद्रूपपरावृत्तिमात्रेणालीकत्व इति(६) । विध्यंशस्येति । विध्यंशस्यारोपितत्वान्नालीकत्वविरोधदोष इति । नेति । स्वलक्षणात्मको वा विधिरारोप्येत सामान्यात्मको वा, तयोरसम्भावादलीकात्मको वा ? नाद्यः, तस्य विकल्पासंस्पर्शनात् । नापि द्वितीयः, तस्याम्कत्राप्यनभ्युपगमेनारोपासंभवात् । क्वचित्सिद्धं हि क्वचिदारोप्यत इति भावः । नापि तृतीयः, विरोधस्यैव स्थितेरिति ।

---

(१) ननु गोत्वमगोव्यावृत्तिरूपमित्यलीकमास्तां व्यवहारानुरोधेन तु तद्विधिरेवातो विध्यलीकत्वं न विरुद्धमत आहातद्रूपेति ।

(२) ननु स्वलक्षणे न स्वरूपमात्रव्यावृत्तिः स्वतोऽपि स्वरूपत्वात् गोत्वे तु स्वरूपमात्रव्यावृत्तिरिति वैषम्यमत आह स्वरूपमात्रेति । एतावता स्वलक्षणाङ्गेऽपि पूर्वोक्तो व्याघातस्तदवस्थ एवैकस्य निःस्वरूपत्वसस्वरूपत्वासम्भवादिति भावः ।

(३) ननु विध्यलीकशब्दार्थौ वास्तवालीके विधिस्त्वारोप एवास्तु, तथाच नोक्तविरोधः स्यादित्यभिप्रायेण शङ्कते विध्यंशस्येति ।

(४) ननु स्वलक्षणविधेरारोपं न ब्रूमो येन विकल्पे तत्स्फुरणं स्यादपि तु तद्भेदाग्रहमात्रमित्यभिप्रायेण शङ्कते भेदाग्रहादिति । समाधत्ते सम्भवेदित्यादिना । विध्यलीकयोर्भेदाग्रहस्तदा स्याद्यदि विधिर्विधित्वेन न स्फुरेत् अलीकं वा तत्त्वेन, एवन्तु न सम्भवति द्वयोस्तत्त्वेन भानात्, न हि शुक्तित्वेन भासमानाया शुक्ते रजतभेदाग्रहः सम्भवति व्यवहारोपयोगी चेति परिहाराभिप्रायः ।

(५) तदत्र धर्मोत्तरस्य मतं शङ्कते स्फुरत्त्विति कल्पलता ।

(६) बौद्धानामभिप्रेतं स्वलक्षणस्याप्यलीकत्वं प्रसज्येतेति शेषः ।

सम्भवेदप्येतत्, यदि स्वलक्षणमपि विधित्वमपहाय स्फुरेत्, यदि चालीकमपि निषेधरूपतां परिहृत्य प्रकाशेत, न चैवम्। उभयोरपि निरंशतया प्रकारान्तरमुपादायाप्रथनात्, अप्रथमानरूपासम्भवाच्च। काल्पनिकस्याप्यंशांशिभावस्यात एव मूल एव निहितः कुठारः।

(१)साधारणं च रूपं विकल्पगोचरः, न चालीकं

---

(२)सम्भवेदप्येतदिति। विधिनिषेधात्मकस्वलक्षणभेदग्रहे कथं भेदग्रह इति आहेत्यर्थः। (३)निरंशतयेति। भवन्मते स्वलक्षणस्यांशानभ्युपगमादलीकस्यालीकत्वादेवांशासम्भवादिति भावः। अस्तु प्रकारान्तरेणाप्रथनं विधिनिषेधरूपतया तु प्रथनं कुतः सिध्यतीत्यत आह अप्रथमानेति। विधिनिषेधरूपतया स्वलक्षणालीकयोरप्रथने तद्रूपत्वासंभवाच्चेति। अथवाऽलीकस्याप्रथमानरूपासंभवाच्चेति योज्यम्, तस्य प्रधानमात्रानिष्ठत्वादिति। काल्पनिकमंशभेदमुपादाय प्रथतामिति चेत्तत्राह काल्पनिकस्येति(४)। अत एव=अप्रथनादेव। कल्पना हि प्रथनं, अतः कल्पनाधीनोंऽशांशिभावः प्रथनाभावे न भवेदिति।

इतश्च नालीकस्य विकल्पविषयत्वमित्याह (५)साधारणश्चेति।

---

(१) साधारणं चेति। अनुगतप्रत्ययोऽनुगतधर्माधीनः, न चालीकमनुगतमिति भावः।

(२) अत्र आरोपितं विधित्वं स्वलक्षणरूपं सामान्यरूपं वा? आद्ये स्वलक्षणविधेर्विकल्पासंस्पर्शदोषः, अन्त्ये सामान्यविधिर्बौद्धेन नाङ्गीक्रियते, परिशेषादलीकविधौ पूर्वोक्तो विरोध इति कल्पद्वयमेवाम्यटीकाकारैर्लिखितं नारायणेन तु परिशेषगृहीतस्तृतीयकल्पोऽप्युपात्त इति विशेषो द्रष्टव्यः।

(३) निर्धर्मतया।

(४) आरोपमूलभेदाग्रहनिरासे काऽऽरोपसम्भावनेति।

(५) प्रकारान्तरेण विधिस्फुरणं साधयति साधारणं चेति मिश्राः।

तथा भवितुमर्हति। (१)तस्य हि देशकालानुगमो न स्वाभाविकः,(२)तुच्छत्वात्। न काल्पनिकः, तस्याः क्षणिकत्वात्। (३)नारोपितः, अन्यत्राप्यप्रसिद्धेः।

(४)"भेदाग्रहादेकत्वमात्रमनुसन्धीयत इति चेत्"। न, भाविकस्य भेदस्याभावात्, भावे वा काल्पनिकत्व-

---

देशकालानुगमः साधारण्यमित्यर्थः। **तस्या इति**। **तस्याः**=कल्पनायाः, [५]क्षणिकत्वाद्देशकालानुगमाभावात्कथं तदधीनोऽलीकस्यानुगम इति। **एकत्वमात्रमिति**। मात्रशब्देन देशकालानुगमो व्यवच्छिद्यत इति। परमार्थसतो वा भेदस्याग्रहः, परमार्थासतो वा आरोपितासत्त्वस्य वेति विकल्प्य दूषणमाह न (६)भाविकस्येति। परमार्थसत इत्यर्थः। **काल्पनिकत्वेति**। अंशांशिभावस्य काल्पनिकत्वादलीकस्य भेदांशोऽ-

---

(१) अलीकस्य।

(२) अत्र भाविकः स्वाभाविक इति व्याख्यानाभिमतमते भाविक इति पाठो द्रष्टव्यः। तुच्छत्वान्निःस्वभावत्वात्। ननु संवृत्तिरूपायाः कल्पनायाः गोत्वादावलीके स्वकीयोऽनुगमः स्यादत आह न काल्पनिक इति।

(३) ननु गोत्वादि यद्यप्यलीकमननुगतं च तथाप्यन्यत्र दृष्टं देशकालानुगमं तत्रारोपयिष्यतीत्यत आह नाप्यारोपित इति। बौद्धेनान्यत्र तादृशस्य कस्याप्यनभ्युपगमादारोपितोऽप्यलीकस्य देशकालानुगम इति भावः।

(४) ननु विकल्पविषयाणामलीकानां भेदाग्रहादलीकत्वमात्रग्रह एवानुगतत्वमानमित्यभिप्रायेणाशङ्कते भेदाग्रहादिति।

(५) संवृत्तिरूपकल्पनायाः ज्ञानत्वेन क्षणिकत्वादित्यर्थः।

(६) अलीकानां भेदः पारमार्थिको वा, परमार्थासत्ताको वा, आरोपितो वा, आरोपितासत्ताको वा अलीको वा, व्यधिकरणो वा? आद्ये भाविकस्येति षड्विकल्पाः प्रदर्शिता दीधितिकृता भगीरथठक्कुरेण च। पारमार्थिकालीकभेदाभावात्कथं तद्ग्रहणमिति प्रथमविकल्पखण्डनार्थः।

(स्य)व्याघातात् । (१)परमार्थासतः परमार्थाभेदपर्यवसायित्वात् ।(२)आरोपितस्याग्रहानुपपत्तेः, अभेदारोपानवकाशाच्च । (३)आरोपितासत्त्वस्य परमार्थसत्त्वप्रसङ्गात् । चतुःकोटिनिर्मुक्तस्य चातिप्रसञ्जकत्वात् । तदग्रहस्य त्रैलोक्येऽपि सुलभत्वात् ।

"अन्यत्र पारमार्थिकभेदप्रतीतौ कथमभेद आरोप्य-

---

पि काल्पनिक इ[४]ति । अथवा काल्पनिकशब्देनालीकमुच्यत इति । परमार्थासत इति । भेदस्य परमार्थतोऽलीकविषयस्यासत्त्वे परमार्थतस्तत्राभेद एव स्यात्स चानिष्ट इति । अग्राहेति । ग्रहणविशेषो ह्यारोप इति । अभेदारोपानवकाशाच्च । नहि भेद आरोपिते तद्विपरीताभेदोऽप्यारोपयितुं शक्यत इति । उक्तरूपचतुष्प्रकारनिर्मुक्तस्यैव भेदस्याग्रह इति चेत्तत्राह [५] चतुष्कोटीति। अतिप्रसङ्गमेव दर्शयति तदग्रहस्येति । ततश्च सर्वेष्वपि पदार्थेष्वभेदारोपप्रसङ्ग इति भावः ।

तत्र शङ्कते (६)अन्यत्रेति । घटपटादौ पारिमार्थिकस्य भेदस्य

---

(१) द्वितीये आह परमार्थेति । रजतस्येव कल्पनाविषयाणामपि परमार्थाभेदाङ्गीकारात् सिद्धकल्पनाविषयाणामपि देशकालानुगमो विरोधित्वं चेत्यर्थः ।

(२) तृतीये त्वाहारोपितस्येति । आरोपस्यैव तद्ग्रहरूपत्वात् भेदग्रहे चाभेदारोपानवकाशात् आरोपितभेदस्य पारमार्थिकाभेदपर्यवसायित्वात् आरोप्यारोपविषयपारमार्थिकत्वमन्तरेणारोपानुपपत्तेरिति दीधितिः ।

(३) चतुर्थे आरोपितासत्त्वस्येति । भेदस्य पारमार्थिकत्वे प्रतियोग्यनुयोगिनोरपि पारमार्थिकत्वान्नालीकत्वमिति भावः ।

(४) अलीकविकल्पविषयाणां पारमार्थिकत्वे काल्पनिकत्वव्याघातादिति भावः । अलीकत्वव्याघात इति द्वितीयकल्पार्थः ।

(५) पञ्चमे आह चतुःकोटीति भगीरथठक्कुरः । कोटिः प्रकारः, अलीकभेदाग्रहस्याभेदारोपहेतुत्वे तस्य सार्वत्रिकतया सर्वत्रैवाभेदारोपः स्यादिति भावः ।

(६) नन्वलीकभेदाग्रहस्य सर्वत्र सम्भवेऽपि यत्र घटपटादौ पा-

नामिति चेत्" । (१)एवन्तर्हि यस्य प्रतिभासे यन्नारोप्यते नियमेन तस्यैवाप्रकाशो तदारोप्यम्, न तु तन्नामकमात्रस्य, अतिप्रसङ्गकत्वात् । (२)अत एव न व्यधिकरणस्यापि सतोऽसतो वा भेदस्याग्रहोऽभेदारोपोपयोगीति । नापि न्यायादन्यापोहसिद्धिः, तदभावात् । "यद्भावाभावसाधारणं तदन्यव्यावृत्तिनिष्ठं ' यथाऽमूर्तत्वम्, यच्चात्यन्तविलक्षणानां सालक्षण्यव्यवहारहेतु-

---

प्रतीतत्वाचतुष्कोटिविनिर्मुक्तस्य भेदस्य ग्रहेऽपि कथमभेद आरोप्यत इत्याशङ्क्याह-अत एवेति । अतिप्रसङ्गादेवेति । इदं नानुभवादेव विकल्पविषयस्यालीकत्वमित्युक्तम्, नापि न्यायादनुमानादन्यापोहस्यालीकस्य विकल्पविषयतया सिद्धिरित्याह नापीति । (३)यद्भावेति । यद्भावाभावसाधारणं तदन्यव्यावृत्तिनिष्ठं यथाऽवसायेन घटोऽवसीयमानो भावाभावसाधारणोऽन्यव्यावृत्तिनिष्ठः, तथाऽवसायेनापि घटोऽवसीयमानोऽस्ति साधारण्याद्भावाभावसाधारण इति । यच्चात्यन्तविलक्षणानां सालक्षण्यव्यवहारहेतुस्तदन्यव्यावृत्तिरूपम्, यथा पटनिवृत्तिः,

---

रमार्थिकभेदस्य ग्रहस्तत्रैवाभेद आरोप्यतेऽतो यत्र तद्ग्रहस्तत्र नाभेदारोपः स्यादित्याहान्यत्रेति भगीरथठक्कुरः ।

(१) एवंसति पारमार्थिकभेदस्यैवाग्रहो भेदारोपहेतुरित्यलीकभेदाग्रहेऽप्यभेदारोपो न स्यादित्याह एवन्तर्हीति । यत्-तादात्म्यम् ।

(२) षष्ठं निराकरोति अत एवेति । घटपटयोः पारमार्थिको भेदः शशशृङ्गकूर्मरोम्णोश्च काल्पनिको यो भेदस्तदनयोरग्रहोऽपि नाभेदारोपहेतुः अन्यभेदाग्रहादन्यत्रारोपेऽतिप्रसङ्गादेवेत्यर्थः ।

(३) गोत्वादीनामन्यव्यावृत्तिरूपत्वे प्रमाणं शङ्कते यदिति कल्पलता । अस्तिनास्तिप्रत्ययाविषयत्वं आश्रयनाशानाशयोरविनाशित्वं वा भावाभावसाधारण्यम्, अन्यव्यावृत्तिर्निष्ठा स्वरूपं यस्येत्यर्थः, तथा च गोत्वमन्यव्यावृत्तिरूपं भावाभावसाधारणत्वात्, अत्यन्तविलक्षणानां शबलधवलादीनां सालक्षण्यव्यवहारहेतुत्वाच्चेति प्रयोगद्वयाकार इति मिश्राः ।

स्तदन्यव्यावृत्तिरूपम्, इति न्यायौ स्त इति चेत्"। न,(१) कालात्ययापदेशात्, नहि प्रथमानस्य निष्ठा न्यायसाध्या नाम, प्रथनशरीरन्तु चिन्तितमेवेति निष्फलः प्रयासः। (२)यदा चानलीक एव ध्रुवं न्यायस्यानुभवाभासः, तदा कैव कथाऽलीके। नहि तस्याप्रतीयमानमपि किञ्चिदस्ति यन्न्यायेन साध्यमित्युक्तम्।

(३)किञ्चेदं भावाभावसाधारण्यं न तावदुभयरूपत्वम्, विरोधात्।(४)नतद्धर्मत्वम्, अनभ्युपगमात्। नहि

---

सा हि पटादीनां सालक्षण्यव्यवहारहेतुः अघटात्मानः पटादय इति। तथा पटत्वमप्यत्यन्तविलक्षणानां पटव्यक्तीनां सालक्षण्यव्यवहारहेतुरिति न्यायौ स्त इति। प्रथनशरीरमिति। विधेरेव प्रथनमिति चिन्तितमिति। विशेषतस्त्वलीकविषये न्यायस्यानवकाश इत्याह यदा चेति। विशेषमाह नहि तस्येति। उक्तमिति। प्रथमानरूपाच्चेत्यत्रोक्तमिति।

---

(१) उभयत्रापि प्रयोगे बाधदोषमाह नेति। बाधमेव विवृणोति नहीत्यादिना। यद्यद्रूपेण प्रथते तस्य सैव निष्ठा, प्रथनं च विधित्वेनैवेति ताद्रूप्यमेव तस्येति निषेधरूपतासाधनं धर्मिग्राहकप्रमाणबाधितमित्यर्थः। यदि च निषेधरूपतया प्रथनं तदा तत एव ताद्रूप्यसिद्धौ किमनुमानेनेति भावः।

(२) यदेति। अनौष्ण्यसाधकमप्यनुमानमौष्ण्यग्राहिप्रत्यक्षं बाधते चेत् तदाऽलीकसाधकं सुतरां तद्विरोधि प्रत्यक्षं बाधिष्यत इत्यर्थ इति मिश्राः। ननु प्रत्यक्षमपि स्वविषये न्यायं बाधतां विषयान्तरेऽलीके न्यायप्रवृत्तिः स्यादेवेत्यत आह नहीति।

(३) किञ्च न्यायोऽपि विचारसहो नेत्यभिप्रायेणाह किञ्चेति। उभयरूपत्वं भावभावस्वरूपत्वम्, कुत इत्यत आह विरोधादिति। एकस्य भावाभावात्मकत्वासम्भवादित्यर्थः।

(४) न तद्धर्मत्वमिति। न च गोत्वादेर्भावाभावोभयधर्मत्वमस्माभिरभ्युपेयते, भावधर्मत्वेऽपि तस्याभावधर्मत्वानभ्युगमादिति भावः।

गोत्वमभावस्यापि धर्म इत्यभ्युपगम्यते। न तद्धर्मित्वम्, अनेकान्तात्। (१)व्यक्तिरपि भावाभावधर्मशालिनी न निषेधैकरूपेति। न तदुभयसादृश्यम्, असम्भवात्। अतन्निवृत्त्यैव तथात्वे साध्याविशेषात्। नाप्यस्तिनास्ति· सामानाधिकरण्यम्(२), विरोधात्, अन्यथासिद्धेश्च। नहि यदस्ति तदेव नास्तीतिप्रत्ययगोचरः स्यात्। "प्रका·

(३)तद्धर्मित्वमिति। भावाभावधर्मित्वमिति। न तदुभ· येति। भावाभावात्मकोभयसादृश्यमिति। असम्भवात्कथं विधिसादृश्यं निषेधसादृश्यं चैकस्य सम्भवेदिति(४)। अथ गोत्वस्यातद्व्यावृत्तिरूप· त्वाद्भावाभावयोरप्यतद्व्यावृत्तत्वात्तेन रूपेण तत्सादृश्यमिति चेत्तत्राह (५)अतदिति। गोत्वस्यातद्व्यावृत्तिरूपत्वमेव साध्यं कथं तदेव हेतु· शरीरे तु प्रविशेदिति। सामानाधिकरण्यमिति। भावाभावसाधा· रण्यमिति शेषः। विरोधं दर्शयति नहीति(६)। प्रकारान्तरमि· ति(७)। एकस्यैव पदार्थस्यैकत्रास्तित्वमन्यत्र नास्तित्वमिति प्रकारभे·

---

(१) अनैकान्तिकत्वमेवाह व्यक्तिरपीति। विधित्वस्यापि व्य· क्तौ सत्त्वात्स्वाभावनिषेधात्मकव्यक्तेरपि न निषेधैकस्वभावत्वमिति व्यभिचार इति भावः।

(२) अस्तिनास्तिप्रत्ययविषयत्वं, तदुभयपदवाच्यत्वं वेति क· ल्पलता।

(३) ननु जातित्वगुणात्यन्ताभावोभयधर्मिगोत्ववदुभयधर्मित्वमेव भावाभावसाधारण्यं स्यादत आह न तद्धर्मित्वमिति।

(४) भावाभावयोर्हि सादृश्यं तदुभयवृत्तितायां गोत्वादेर्भवेत् न चैतत्सम्भवतीत्यर्थः।

(५) ननु भावे चाभावे चातद्व्यावृत्तिरस्त्येवेति तत्स्वरूपं गोत्वं कथं तदुभयसादृश्यं न भवेदित्यत आह अतद्व्यावृत्त्यैवेति मिश्राः। गोत्वादेरतद्व्यावृत्तिरूपतायां सिद्धायां तथा स्यात्तद्रूपता च न सि· द्धेत्यर्थः। (६) एकस्य विधिनिषेधप्रत्ययागोचरत्वादित्यर्थः।

(७) अन्यथासिद्धिं विवरीतुमाशङ्कते प्रकारान्तरमिति। आश्रय· नाशानाशप्रयुक्तमस्तिनास्तिसामानाधिकरण्यमिति मिश्राः।

रान्तरमाश्रित्य स्यादेवेति चेत्" । (१)एवन्तर्हि तमेव प्रकारभेदमुपादाय विधिव्यवस्थायां को विरोधो येन प्रतिबन्धः सिद्ध्येत् । (२)"तस्य विधिरूपतायामास्तिना किमधिकमुपनेयमिति चेत्" । (३)निषेधरूपत्वेऽपि नास्तिना किमधिकमपनेयमिति समानम् । "(४)अत एव साधारण्यमिति चेत्" । तथापि किं तदुभयात्मकमुभय-

---

देनोभयसामानाधिकरण्यं स्यादेवेति । एतदन्यथासिद्धिं विवृण्वन् परिहरति एवन्तर्हीति । सामान्येऽपि विधिरूपसामान्येऽपि प्रकारभेदेनास्तिविधिव्यवस्थायां को विरोधः, अतो विपक्षे साधकाभावादन्यथासिद्ध्यभावेन प्रतिबन्धे न सिद्ध्येदिति। तस्य सामान्यस्य विधिरूपत्वे सद्रूपत्वे गोशब्देनैवास्तिप्रतीतेरस्तिपदेन किमधिकमुपनीयत इति शङ्कते तस्येति । अत एवेति । नहि गोत्वस्य निषेधात्मकत्वमेव रूपं किन्तु विधिनिषेधसाधारण्यमिति। किमेतदिति। किमेतदुभयसाधारण्यमुभयात्म-

---

(१) तदुक्तप्रकारान्तरेणैव विधेरपि गोत्वस्यास्तिनास्तिसामानाधिकरण्यं नान्यव्यावृत्तिरूपतासाधनायालमन्यथासिद्धेरित्याह तर्हीति। प्रतिबन्धः—यद्भावाभावसाधारणं तदन्यव्यावृत्तिनिष्ठमिति प्रतिबन्धः ।

(२) शङ्कते तस्येति । तथाच गौरेतावतैवास्तित्वे लब्धेऽस्तीतिपुनरुक्तमिति शङ्कार्थः । नास्तीति विरुद्धमित्यपि द्रष्टव्यमिति मिश्राः ॥

(३) निषेधेति । नास्तीति पुनरुक्तमस्तीति विरुद्धमिति समानमित्यर्थः ।

(४) अस्मादेव विरोधपौनरुक्त्यभयादेव भावाभावसाधारण्यात्मकं गोत्वं न निषेधात्मकमात्रमित्याक्षेपाभिप्रायः । समाधत्ते तथापीति । उभयात्मकत्वं—भावाभावात्मकत्वम् , उभयपरिहारः—न भावत्वं नाप्यभावत्वम् । अशक्यमिति । परस्परविरोधे हि न प्रकारान्तरस्थितिरिति न्यायादेकैकव्यपदेशायोग्यत्वेनैकैकान्यात्मकत्वमेकैकात्मकत्वविरहो वा सिद्ध्येत् भावाभावात्मकत्वे भावाभावात्मकत्वविरहे वा पर्यवस्येत् तन्न सम्भवति विरोधादिति भावः । अत्र नारायणमतेन किमेतादिति पाठो मूले द्रष्टव्यः ।

परिहारो वेत्यशक्यमेतत् । तस्मादस्तिनास्तिभ्यामुपाध्यन्तरोपसम्प्राप्तिः, प्राप्तोपाधिनियमो वेति सार्थकत्वमनयोः । तदेतद्विधावपि तुल्यम् । (१)शान्ताशेषविशेषत्वादलीकपक्षे कोपाध्यन्तराविधिस्तन्नियमो वेति विशेषदोषः । ततो गोशब्दो गोत्वविशिष्टव्यक्तिमात्राभिधायी पर्यवसितः, तास्तु विप्रकीर्णदेशकालतया नार्थक्रियार्थिप्रार्थनामनुभवितुमीशत इति प्रतिपत्ता विशेषाकाङ्क्षः । सा च तस्याकाङ्क्षा 'अस्ति गोष्ठे कालाक्षी धेनुर्घटोध्नी महाघण्टा नन्दिनी'त्यादिभिर्नियामकैर्विधायकैर्वा निवार्यत इति विधौ न कश्चिद्दोषः ।

---

कस्वं वा उभयपरिहारो वेति निरूपयितुं न शक्यमुभयत्रापि विरोधादिति, तस्मादेवं परिहर्तव्यं भवतेत्याह (२)तस्मादिति । देशकालाद्युपाध्यन्तरोपसम्प्राप्तिः=अप्राप्तस्यैवोपाध्यन्तरस्य(३)प्राप्तिः, प्राप्तस्यैव नियमो वेति सामान्यविशिष्टव्यक्तिपदार्थत्वपक्षे नियमः, सामान्यमात्रपदार्थत्वपक्षे विधिरिति उपसंहरन्नेव विधौ तु न दोष इत्याह तत इति ।

---

(१) बौद्धपक्षे उपाध्यन्तरोपसंक्रान्तेरसंभवं प्रदर्शयति शान्तेति । अलीकत्वेनैवोपाधिवैशिष्ट्यमसम्भवीति तात्पर्यम् । स्वपक्षेऽस्तिनास्तिसामानाधिकरण्यं समर्थयति तत इति । तास्त्विति । ताः=गोव्यक्तयः । विप्रकीर्णदेशकालवृत्तितया दोहनाद्यर्थिनामुपादित्सां प्राप्तुं नेशते सर्वासां गवां दानादेरशक्यतयोपादित्सोत्पादासंभवात्, अतस्तत्र गोविशेषबोधनायाप्राप्तविधिः, सामान्यतः प्राप्तानां देशादीनां विशेषबोधश्च नियमनेनेति भावः । अत्र वाकारो व्यवस्थितविकल्पार्थ इति मिश्राः ।

(२) निषेधरूपत्वेऽस्तिनास्तिसामानाधिकरण्येन विरोधपौनरुक्त्ये बौद्धेन समाधेये, तथा विधित्वे नैयायिकेनापीत्युपसंहारव्याजेनाह तस्मादिति मिश्राः ।

(३) अप्राप्तस्येति शेषः । देशकालविशेषसत्त्वासत्त्वारूपान्तस्याप्राप्तौ प्रापणं प्राप्तौ तु नियमनमिति दीधितिः । अस्मिन्देशे गौरस्ति अस्मिन्देशे नास्तीत्यादिरूपविधिनियमयोर्बौद्धपक्षेऽसम्भव इति भावः । एतच्चाग्रे स्फुटीभविष्यति ।

(१)"गोत्वविशिष्टसदसद्व्यक्तिमात्रप्रतीतेस्तद्वेवा-स्त्यादिपदप्रयोगवैफल्यमिति चेत्"। तावन्मात्रप्रतिप-त्त्यर्थमेवमेतत्, अधिकप्रतिपत्त्यर्थन्तु तदुपयोगः, तस्य प्रागप्रतीतेरित्युक्तम् ।

यस्तु निपुणम्मन्यो विकल्पमेव पक्षयति स्म—"(२)

---

अधिकप्रतिपत्त्यर्थमिति । गोत्वास्तित्वकालाद्यधिकप्रति-पत्त्यर्थमिति ।

एवं गोत्वं पक्षीकृत्य तस्या निवृत्तित्वसाधनं निरस्तम्, साधार-ण्यस्य हेतोर्निरूपयितुमशक्यत्वात्(३) इदानीं तत्परिहाराय निपु-णंमन्येन(४) केनचिदुपन्यस्तं पक्षं दूषयितुमुपन्यस्यति यस्त्विति ।

---

(१) अस्तित्वादिकं न धर्म्यतिरिक्तं धर्मधर्मिणोरभेदादित्याशये-नाशङ्कते गोत्वेति । धर्मधर्मिणोर्भेदाभिप्रायेणोत्तरयति तावन्मात्रेत्यादि । धर्मधर्मिणोर्भेदाद्धर्मस्य बोधयितुमशक्यत्वादसतोऽपि पौनरुक्त्यं नेत्यर्थः । अस्त्यादिपदानामपि यदि गोत्वविशिष्टपिण्डप्रतिपत्तिमात्रं फलं तदा भवत्येव पौनरुक्त्यं तदेव तु नास्तीत्यर्थः इति कल्पलता ।

(२) यादृशं ज्ञानं यस्य भावेऽभावेपि सति जायते तस्य स न वि-षय इत्यर्थः । यथा गोज्ञानमश्वे सत्यसत्यपि जायते तत्राश्वाविषयत्व-रूपसाध्यमपि वर्तते, प्रकृते च गवि सत्यसत्यपि च गोज्ञानं जायतेइति तस्य स्वलक्षणगवाविषयत्वसिद्धौ अलीकाविषयत्वमेवायाति, तथाचा-लीकेन भावरूपं गोत्वमिति सिद्धमतद्व्यावृत्तिरूपगोत्वविषयत्वं गोविक-ल्पस्येत्यभिप्रायो बौद्धस्यात्र ज्ञेयः ।

(३) किञ्चेदं भावाभावसाधारण्यमित्यादिग्रन्थेन तस्य दुर्वचत्व-प्रतिपादनादित्यर्थः ।

(४) ज्ञानाभियां बौद्धेन गोत्वमन्यव्यावृत्तिरूपमित्याद्यनुमाने वि-धिरूपतया प्रतीयमानस्य गोत्वस्य पक्षीकरणे बाधोऽन्यस्याप्रतीयमा-मानतयाऽऽश्रयासिद्धिरिति नैयायिकेन दूषिते तत्परिहाराय विकल्पमेव पक्षयति स्म ज्ञानभीरित्यस्य नैपुण्यम् । विकल्पस्यापि विषयानिरूप्य-तया विधिविषयत्वे पुनरपि बाधस्तदवस्थ एवेति न वास्तविकी निपुण-ता किन्तु अवास्तविकीति मन्यमाने स्वप्रयोगाभिप्रायः ।

यज्ज्ञानं यद्भावाभावसाधारणप्रतिभासं न तेन तस्य विषयित्वम्, यथा गोज्ञानस्याश्वेने"त्यादि। (१) तद्यदि गोविकल्पस्याश्वाविषयत्वमेव तद्भावाभावसाधारण्यं गव्यपि बाह्ये तथा, ततः साध्याविशिष्टत्वम्।

"अथाऽस्त्यादिविशेषाकाङ्क्षा, तदाऽसाधारण्यम्।

---

विकल्पमेव न तदर्थमित्यर्थः। (२)यज्ज्ञानं यस्य भावाभावसाधारणप्रतिभासं गोज्ञानमिति न तेनापि विषयवत्त्वं, यथा गोज्ञानस्याश्वेन तद्भावाभावसाधारणप्रतिभासस्य, तथा गोत्वस्यापि बाह्यस्य भावाभावप्रतिभासं गोज्ञानमिति न तेनापि विषयवत्त्वं तस्येत्यर्थः। दृष्टान्ते हेतोर्यादृशं रूपं सम्भाव्यते तादृशमेव रूपं पक्षे विवक्षितं चेत्, (३)ततः साध्याविशिष्टत्वादसिद्धता स्यादित्याह तत इति।

अथ यथाविधं पक्षे सिद्धं तदेव विवक्ष्येत तदाऽसाधारण्यं स्यादित्याहाथेति(४)। यथा हि गवादिवस्तुविषयत्वेन सम्प्रतिपन्नान्निर्विकल्पका-

---

(१) अत्र यदि गोभावाभावसाधारण्यं गवाविषयत्वमेव तदा साध्याविशिष्टत्वमित्याह तद्यदीति। गोज्ञानस्याश्वभावाभावसाधारण्यादश्वाविषयत्वमिव बाह्यगवादिभावाभावसाधारण्याद्गोऽविषयकत्वं बौद्धेनाङ्गीकर्तव्यम्तत्र च भावाभावसाधारण्यं यदि तदाविषयत्वं तर्हि साध्याविशिष्टत्वादसिद्धो हेतुरित्यभिप्रायः।

(२) गोज्ञानं न गोविषयं गोभावाभावसाधारणत्वात् अश्वज्ञानवत्, अयं गौरिति विकल्पो न गोविषयकः तद्भावाभावसाधारणत्वात् गां बधानेति गोविकल्पवदिति वा मानार्थ इति मिश्राः।

(३) दृष्टान्ते गोज्ञानस्याश्वाविषयत्वरूपे, हेतोः अश्वभावाभावसाधारण्यरूपस्य यादृशं रूपं अश्वाविषयत्वं संभाव्यते, तादृशं रूपं गवाविषयत्वं पक्षे गोज्ञाने विवक्ष्यते चेत्तत इत्यर्थः।

(४) ननु यो विकल्पो यत्रास्त्यादिविशेषाकाङ्क्षामुत्थापयति स तेन विषयेण विषयी (न) भवतीति व्याप्तिर्विवक्षितेत्यत आहाथास्त्यादीति मिश्राः। गोविकल्पस्याश्वगोचराकाङ्क्षोत्थापकत्वेनाश्वाविषयत्वं यथा तथा गोगोचराकाङ्क्षोत्थापकत्वेन गवाविषयत्वं साध्यं, तत्र गोविकल्पस्याश्वगोचराकाङ्क्षोत्थापकत्वमेव नास्ति येनाश्वाविषयत्वं प्रसाध्य तद्दृष्टान्तेन गवाविषयत्वं सेत्स्यतीत्यर्थः।

न ह्युदाहृतो गोविकल्पोऽश्वास्त्यादिविशेषमाकाङ्क्षति। (१)नियमविधौ तु विरोध एव। न ह्यतद्विषयस्य तद्विशेषनियमाकाङ्क्षा नाम, गोज्ञानस्याश्वविशेषनियमाकाङ्क्षाप्रसङ्गात्। (२)"तदीयसदसत्त्वानुपदर्शनं चेत्" तद्यदि स्वरूपमेव ततोऽसिद्धिर्दोषः। नहि गोविकल्पो गोस्वरूपं नोपदर्शयतीति मम कदापि सिद्धम्, तव चाद्यापि। "उपाध्यन्तरं चेत्"(३) अनैकान्तः। नहि यो

द्विपक्षादस्त्यादिविशेषाकाङ्क्षालक्षणस्य हेतोर्व्यावृत्तिस्तथा सपक्षादपीत्यसाधारण्यमिति। नियमविधौ त्विति। यदाऽस्त्यादिशब्दा नाप्राप्तविधयः, किन्तु नियमविधायका भवन्ति तदा नियमस्य पक्षप्राप्त्यपेक्षत्वाद्गोविकल्पेन गोस्वरूपेऽवगते तद्विशेषास्तित्वादौ च पाक्षिकतयाऽवगते नियमविध्यवसरात्तद्विशेषनियमाकाङ्क्षायास्तद्विषयत्वलक्षणविवक्षाया एव विरुद्धत्वमिति। तद्यदीति। सदसत्त्वं यदि स्वरूपलक्षणमित्यर्थः(४)। अन्योऽपि विचारसमाप्तेः प्रागपीति(!)(५)। उपाध्यन्तर-

(१) ननु तद्धर्मनियामकत्वं तदविषयत्वे हेतूकर्तव्यमित्यत आह नियमेति। गेहे गोष्ठे वा गौरिति तद्धर्मनियामकत्वं तद्विषयतया व्याप्तमतो विरोधात्तदविषयतां न साधयतीत्यर्थः। विरोधमेवाह नहीत्यादिना। अतद्विषयस्यापि तद्विशेषनियमाकाङ्क्षायामश्वाविषयत्वेनैवोभयसिद्धस्य गोविकल्पस्याश्वविशेषनियमाकाङ्क्षा स्यात्तच्च विरुद्धमित्यर्थः।

(२) ननु गोविकल्पस्य गोस्वलक्षणसदसत्त्वानुपदर्शकत्वाद्गोत्वलक्षणाविषयत्वं सेत्स्यतीत्यभिप्रायेणाशङ्कते तदीयेति। मम=नैयायिकस्य, मत इति शेषः। तव=बौद्धस्य मते, अधुनापि बौद्धेन यत्ने क्रियमाणेऽपि गोज्ञानस्य गोस्वरूपानुपदर्शकत्वं न साधितमित्यभिप्रायः।

(३) ननु सदसत्त्वं न वस्तुरूपं येनासिद्धिः स्यात्, अपि तु सत्त्वासत्त्वयोस्तद्गतधर्मयोरनुपदर्शकत्वं हेतुः क्रियत इत्याशंकयाहानैकान्त इति। धर्मानुपदर्शकमपि धर्म्युपदर्शकं भवतीत्यनैकान्त इत्यर्थः।

(४) तदा तदनुपदर्शकत्वं हेतुः स्वरूपासिद्ध इति भावः।

(५) अत्रादर्शपुस्तके कतिपयपाठो भ्रष्ट इति प्रतिभाति।

यस्योपाध्यन्तरं नोपदर्शयेत् नासौ तदपीति नियमः।

(१)"ननु नियम एव, तथाहि यन्न यत्समवेतधर्मबोधनं न तत् तत्स्वरूपबोधनं, यथा गोविकल्पशब्दौ तुरगे। तथाच तौ गव्यपि नीलत्वापेक्षयेति व्यापकानुपलब्धिः।

---

मिति। सत्तासामान्यरूपं वा देशकालादिविशेषसम्बन्धरूपं वेति। नहीति। (२)धर्मिगतरसाद्यनुपदर्शकस्यापि चक्षुरादेर्धर्मिग्राहकत्वं दृष्टमित्यभिप्रायः।

(३)नीलत्वापेक्षयेति। तद्धर्मानुपदर्शनं नीलादिधर्मापेक्षयोपदर्श्यत इत्यर्थः। केचित्तु कुतो नीलाद्यनुपदर्शकत्वमित्यपेक्षायां हेतुरुच्यत इति व्याचक्षते, नीलाद्यपेक्षया नीलादिजिज्ञासादर्शनाज्जिज्ञासायाश्चाज्ञानविषयत्वादित्यर्थः। ननु तद्धर्मानुपदर्शकत्वस्य तदुपदर्शकत्वे विपक्षे किं बाधकं तदभावे वा कुतः प्रतिबन्धसिद्धिस्तत्राह (४)धर्मिबोध इति।

---

(१) सदसत्त्वमात्रानुपदर्शकत्वहेतुना गोविकल्पस्य गोरूपानवबोधकत्ववत् धर्मान्तरानुपदर्शकत्वहेतुना तत्साधयितुमाशङ्कते नन्वित्यादिना। तथाच यद्यत्समवेतं धर्मं नोपदर्शयति इति नियम एव, एवं च गौरिति विकल्पः शब्दो वा गोगतं नीलादि नोपदर्शयत्यतो गामपि नोपदर्शयति, तत्समवेतधर्मविषयतया व्याप्या तद्विषयता च गोविकल्पशब्दाभ्यां निवर्तमाना तद्विषयतामादाय निवर्तत इत्यभिप्रायः।

(२) धर्मानुपदर्शकस्यापि धर्म्युपदर्शकत्वे दृष्टान्तमाह धर्मिगतेति।

(३) ननु गोशब्दविकल्पयोर्गोत्वात्मकधर्मोपदेशकत्वाद्धेत्वसिद्धिरत आह नीलत्वादीति। तद्बोधनेऽपि नीलत्वादेरबोधनमस्त्येवेति यावत्तद्गतधर्मानुपदर्शकत्वं हेतुरित्यर्थ इति भ०ठक्कुरः। तन्निष्ठयावद्धर्माग्राहकत्वं हेतुरिति गुणानन्दः। नारायणेन तु तद्धर्मानुपदर्शनरूपहेतोर्नीलाद्यपेक्षया न तु गोत्वाद्यपेक्षयाऽत्र तद्धर्मानुपदर्शकत्वमित्यर्थः कुतोऽन्यथाऽसिद्धिः स्यादिति तत्तात्पर्यम्। व्याख्यान्तरे तु जिज्ञासितधर्मानुपदर्शकत्वं हेतुस्ततो गोत्वस्य च ज्ञातत्वेन जिज्ञासाविषयत्वाभावान्न तदुपदर्शकत्वमादाय सिद्धसाधनमिति भावः। अत्रास्वरसबीजं स्वयमेव सुधीभिर्विभावनीयम्।

(४) व्याप्तिमेव दृढयति धर्मिबोध इति मिश्राः। मूले धर्माणा-

धर्मिबोधेऽपि हि धर्माणां कस्यचिद्बोधः कस्यचिदबोधश्चे त्युपकारभेदान्नियमः स्यात्, उपकारभेदश्च शक्तिभेदाद्भवेत् । नचैवं प्रकृते, अनवस्थाप्रसङ्गात् । ततः शक्तेरभेदादुपकाराभेदे सर्वोपाधिसहितबोधोऽबोधो वेति द्वयी गतिरिति प्रतिबन्धासिद्धिः(१) ।"

---

उपकारभेदात्तद्बोधः तद्बोधव्यवस्थापकस्य प्रतिविषयं क्रियमाणस्योपकारस्य भेदादिति । अनवस्थाप्रसङ्गादिति । शक्त्युपकाररूपधर्मबोधव्यवस्थासिद्ध्यर्थमप्युपकारान्तरशक्त्यन्तरकल्पनायामनवस्थाप्रसङ्गादिति । शक्तेरभेदादिति । शक्तेः स्वतः शक्तिमतश्चाभेदादिति व्याख्येयम् । उपकाराभेद इत्यत्राप्येवं, तथाचोक्तं परैः--

यस्यापि नानोपाधेर्धीर्ग्राहिकाऽर्थस्य भेदिनः ।
नानोपाध्युकाराङ्गशक्त्यभिन्नत्वमन्यथा ॥
सर्वात्मनोपकार्यस्य को भेदः स्यादनिश्चितः ।
एकोपकारके ग्राह्ये नोपकारास्ततोऽपरे ॥

---

मिति निर्धारणे षष्ठी । धर्मिज्ञानेऽपि कश्चिद्धर्मो गृह्यते कश्चिन्नेत्युपकारभेदान्नियमः स्यात, एवमुपकारेऽपि कर्तव्ये उपकारान्तरस्य शक्तावपि शक्त्यन्तरापेक्षायामनवस्थेत्युपकारशक्त्योरभेदो वाच्यस्तथाचैकोपाधिविशिष्टधर्मिग्रहे सकलोपाधिविशिष्टतद्ग्रहः स्यादित्यर्थः । तथाचात्र विकल्पानां स्वलक्षणविषयत्वमात्रं परस्योद्देश्यं न तु व्यावृत्तिविषयत्वमपि तत्र मानानुपदर्शनादिति कल्पलता ।

(१) इदमत्र पूर्वपक्षतात्पर्यम्—ज्ञायमाने धर्मिणि धर्मज्ञानं यदि धर्मिणि सत्तामात्रेण तदा युगपत्सर्वधर्मग्रहणं प्रसज्ज्येत, यदि च धर्मिजनितज्ञानानुकूलोपकारशालित्वेन तदाप्युपकारजननं स्वरूपेण चेद्विरोधात्सर्वत्रोपकाराधानाद्युगपत्सर्वग्रहणापत्तिः, तदनुकूलशक्तिशालित्वेन चेदुपकारजननन्तदा सा शक्तिरेकाऽनेका वा, आद्ये सर्वधर्मग्रहणप्रसङ्गः, अनेका चेत्तज्जननायानेकशक्त्यन्तराभ्युपगमेऽनवस्था, शक्तीनां धर्मिस्वरूपमात्राधीनत्वे धर्मिकारणाधीनत्वे वा शक्तिभेदानुपपत्तिः, शक्तिभेदेऽपि तद्यौगपद्यादुपकारस्य ज्ञानस्य च यौगपद्यमिति पूर्वोक्तदूषणप्रसङ्गादबोध एव धर्मिण इति ।

(१)दुष्प्रयुक्तमेतत्, उपाधितद्वतां भेदे प्रतिनियत- सामग्रीबोध्यत्वस्यापि स्वभाववैचित्र्यनिबन्धनत्वात्, तस्यापि स्वकारणाधीनत्वात्, तस्याप्यन्वयव्यतिरेक- सिद्धत्वात्, तस्यापि कार्योन्नेयत्वात् इति ।

यत्तु 'शक्तेरभेदादि'त्यादि, तत्तदा शोभेत यदि

---

दृष्टे तस्मिन्नदृष्टा ये तद्ग्रहे सकलग्रहः(२) ॥ इति ।

धर्मव्यतिरेकेण धर्मिणोऽस्मद्दर्शनेऽभावाद्धर्मिदर्शनेऽपि रसादेरदर्शनं दृष्टमित्येतदपि नास्त्येवेत्याभिप्रायः । ननु अभाववैचित्र्यस्याप्रत्यक्षस्य कथं कारणान्वयेऽन्वयः तद्व्यतिरेके व्यतिरेको वाऽवगन्तुं शक्यत इत्याश- ङ्क्याह (३)तस्यापीति । तस्याप्यन्वयस्य व्यतिरेकस्य वा कार्येण बोधाबोधव्यवस्थालक्षणेन स्वभाववैचित्र्यमुन्नीय तद्द्वारेणोन्नयनं सम्भ- वतीत्यर्थः ।

श्लोकार्थमनुभाष्य दूषयति (४)यदिवाति । सर्वोपाधिबोधस्य ध-

---

( १ ) उत्तरमाह दुष्प्रयुक्तमिति । धर्मधर्मिणां भेदस्य साधितत्वा- द्यवस्थितसामग्रीबोध्यत्वादेव धर्मिग्रहधर्मग्रहसामग्र्योरयौगपद्ये बोधा- बोधव्यवस्थोपपत्तेः, समानशक्तिकत्वेऽपि स्वभाववैचित्र्याधीनस्य प्रति- नियतसामग्रीवेद्यत्वस्य सम्भवात्तथैव कारणान्वयव्यतिरेकयोः कार्य- वैचित्र्योन्नेयत्वेन कल्पनात् इति समाधानतात्पर्यम् ।

( २ ) उक्तपूर्वपक्षार्थे प्राचीनबौद्धाचार्यसंमतिमाह यस्यापीति । य- स्य नैयायिकस्यापि मते नानाधर्मवतो धर्मभिन्नस्याऽर्थस्य धर्मिणो ग्रा- हिका बुद्धिः स्वीक्रियते, तन्मतेऽपि नानाधर्मोपकाराङ्गभूतशक्त्यभेदोऽनव- स्थाभिया स्वीकर्तव्य एवान्यथा सर्वात्मनोपकार्यस्य धर्मिणो भेदः कथं स्याद्युगपदनेकधर्मज्ञानान्युत्पद्येरन्नित्यर्थः। यदि तु ग्राह्यधर्माणामेक एव बोधानुकूलोपकारकः स्वीक्रियते ततो नापरे उपकारास्तदा तु यस्मि- न्निद्धर्मे दृष्टे येषां दर्शनं न जातं तेषामपि तद्धर्मदर्शनाद्ग्रहः स्यादिति कारिकार्थो वेदितव्यः ।

( ३ ) सिद्धे बोधकसामग्रीप्रतिनियमे तन्नियामकस्वभाववैचित्र्य- मास्थेयं तदेव तु कुत इत्यत आह तस्यापीति दीधितिः ।

( ४ ) शक्तेरभेदादुपकाराभेदे सर्वोपाधिसहितबोधोऽबोधो वेत्यादि

धर्मिमात्राधीनस्तद्बोधमात्राधीनो वा तावन्मात्रबोधसा-
मग्र्यधीनो वा यावदुपाधिभेदबोधः स्यात्, न चैवम् ।

(१)एतेन भेदाद्धर्मिणः प्रतीतावपि शब्दलिङ्गद्वारा धर्माणां चेदप्रतीतिः, इन्द्रियद्वारापि मा भूदित्यादिकं तु कर्णस्पर्शे कटिचालनमपास्तम् । (२)तत्तदुपाध्युपलम्भ-सामग्रीविरहकाले प्रसञ्जितस्येष्टत्वात् । विचित्रशक्ति-

---

र्मिमात्राधीनत्वपक्षे हि कारणाभेदेऽपि कार्यव्यवस्थाश्रयणमुपकारभेदशक्ति-भेदप्रसञ्जनं कृत्वा तत्रानवस्थाप्रसङ्गेन(३) यावदुपाधिबोधः सर्वाबोधो वा प्रसञ्जयितुं शक्यते, यावदुपाधिबोधः सर्वोपाधिबोध इत्यर्थः । **नचैवमिति** । (४)प्रतिनियतबोधस्येष्टत्वादिति भावः । उपलम्भसा-मग्रीसद्भावकाले तर्हि प्रसङ्ग इति चेत, तत्राह (५)**विचित्रशक्ति-**

---

दूषयति यत्विति मिश्राः । यद्यपि धर्मिमात्राधीनत्वे तद्बोधाधीनत्वे च यौगपद्यबोधनियमो न भवति तथापि तदपि नेष्यत इति भावः ।

( १ ) एतेन धर्माणां भिन्नसामग्रीबोध्यत्वव्युत्पादनेन, धर्मधर्मिणो-र्भेदात् धर्मिणो वन्ह्यादेर्ज्ञानेऽपि शब्दलिङ्गाभ्यां यथा वन्ह्यादेः रूपपरि-माणादीनां न ग्रहणं किन्तु वह्निस्वरूपमात्रस्य, तथा प्रत्यक्षमपि धर्मि-मात्रविषयं स्यात् प्रमाणानां तुल्यप्रतिभाससामान्यादिति बौद्धकथनं तु कर्णस्पर्शे कटिचालनमिवेत्युपहासः, तद्बीजन्तु एकस्य प्रमाणस्य धर्मविशेषाबोधकत्वेनान्यस्यापि तस्य तदबोधकत्वभ्रमः । एवं च शब्द लिङ्गस्वाभाव्यं कर्णस्पर्शः, तद्वत्प्रत्यक्षस्वाभाव्यापादनं कटिचालनमि-ति । यद्वा यावद्धर्माग्रहणं कर्णस्पर्शः,धर्मिणोऽपि तद्वदग्रहणापादनं कटि-चालनमिति मिश्राः ।

( २ ) निरस्यति तत्तदिति । तत्तद्धर्मोपलब्धिसामग्र्यभावकाले प्रत्यक्षेणापि धर्मग्रहणापादनस्येष्टत्वादिति भावः ।

( ३ ) उपकारेऽपि उपकारान्तरं शक्तावपि शक्त्यन्तरमित्येवं पूर्वोक्त रीत्याऽनवस्थाप्रसङ्गेनेत्यर्थः । (४) नचैवमित्यत्र हेतुमाह प्रतिनियतेति

( ५ ) प्रमाणानां धर्मिबोधकत्वाविशेषे धर्मबोधकत्वाबोधकत्वल क्षणो विशेषः कुतस्त्य इत्यत आह विचित्रेति । शक्तिवैचित्र्यान्न तुल्य प्रतिभास नियम इत्यर्थः ।

**त्वाच्च प्रमाणानाम्, लिङ्गस्य प्रसिद्धप्रतिबन्धप्रतिस-न्धानशक्तिकत्वात्, शब्दस्य (१)समयसीमाविक्रम-त्वात्, इन्द्रियस्य त्वर्थशक्तेरप्यपेक्षणात्। (२)ननु सम्ब-द्धोऽर्थ इत्येव प्रमाणैः प्रमाप्यते, अतिप्रसङ्गात्। यस्य तूपाधेरुपलम्भ एव येन धर्म्युपलभ्यते तस्यानुपलम्भे स तेन नोपलभ्येत इति परं युज्यते, सर्वोपाध्यनुपलम्भे वा, तथाच सिद्धसाधनमिति सङ्क्षेपः।**

**त्वादिति।** अत इन्द्रियस्य दर्शनस्य(३) च तद्धर्मधर्म्युभयग्रहणे सामर्थ्यं युक्तमित्यभिप्रायः। शक्तिवैचित्र्यमेव प्रपञ्चयति **लिङ्गस्येति। प्रतिसन्धानशक्तित्वात्**= (४)प्रतिसन्धानरूपसहकारिशक्तित्वादि-त्यर्थः। **अर्थशक्तेरपी**त्यनेनार्थसम्बन्धादिरूपसहकारिशक्त्या सह स-मुच्चिनोति(५)। **अतिप्रसङ्गादिति।** चक्षुषा सम्बन्धाविशेषाद्रूप-वद्रसादेरपि ग्रहणप्रसङ्गादित्यर्थः। एवं धर्म्युपलम्भे सर्वोपाधिसहितबोधो भवेदित्येतन्निरस्तम्, तदबोधे तद्वतोऽप्यबोध इत्येतदपि प्रतिनियतसामग्री-बोध्यत्वेनैव तावन्निरस्तम्, इदानीमेतदपि क्वचिद्विषयविशेषे सिद्धसाधन-मित्याह **यस्येति।** उपाधेः=रूपादेः, येन चक्षुरादिनेत्यर्थः।

---

(१) समयः सङ्केतः सैव सीमा मर्यादा तदायत्तो विक्रमः प्रवृत्ति-र्यस्येत्यर्थः।

(२) ननु रूपस्पर्शसंख्यापरिमाणादिविशिष्टस्यैव वह्नेर्व्याप्यो धूमः शब्दश्च वस्तुगत्या तावदुपाधिविशिष्ट एव सङ्केतित इति तावदु-पाधिविशिष्टधर्मिग्रहः स्यादित्यत आह नन्विति मिश्राः। तावदुपाधि-वैशिष्ट्येन न व्यापकता न वाच्यता वेत्यर्थः।

(३) दर्शनस्येति ज्ञानप्रामाण्यमतेन बोध्यम्।

(४) प्रतिसन्धानं पक्षधर्मतानिश्चय इति दीधितिः।

(५) एतन्मतेनार्थशक्ती रूपे चक्षुर्ग्रहणयोग्यतादिरूपाऽपीन्द्रि-यार्थसम्बन्धस्य समुच्चयात्। मिश्रमते त्वर्थशक्तिरिन्द्रियसन्निकर्ष-स्तथा चान्द्रियार्थसन्निकर्षादिजन्यं ज्ञानं प्रत्यक्षमतो यावद्धर्मैः सन्निकर्ष-स्तावद्भिर्धर्मैर्धर्मिणो ग्रहणं स्यादेवेत्यर्थः।

"स्यादेतत्, यदीन्द्रियेण समानविषयावेव लिङ्ग-शब्दौ, ततः प्रतिभासभेदोऽनुपपन्नः । एकविषयत्वं हि प्रतिभासाभेदेन व्याप्तं सव्येतरनयनदृष्टवत् दृष्टम्, न चेह तथा, (१)यथा हि प्रत्यक्षे चेतसि देशकालावस्था-नियतानि परिस्फुटरूपाणि स्वलक्षणानि प्रतिभान्ति, न तथा शब्दे लैङ्गिकविकल्पेऽपि । (२)तत्र हि विजा-तीयव्यावृत्तमिव परस्परासङ्कीर्णमिवास्फुटमिव प्रत्य-क्षापरिचितं किञ्चिद्रूपमाभासमानमनुभवविषयः, न चोपायभेदमात्रेण प्रतिभासभेद उपपद्यते, नहि प्रति-पत्त्युपायाः प्रतिपत्त्याकारं परिवर्तयितु(३)मीशते,

सम्प्रति प्रकारान्तरेण लिङ्गशब्दयोर्धर्मिविषयत्वप्रतिषेधं शङ्कते(४)स्या देतदिति । पक्षे व्यापकव्यावृत्तिमाह नचेति । तथा=प्रतिभासाभेद इत्यर्थः । अन्यथासिद्ध्या प्रतिबन्धासिद्धिस्तां(५) परिहरति नचो-पायेति । प्रतिपत्त्याकारमिति । प्रतिपाद्याकारो देशकालनिय-

(१) प्रतिभासभेदमेव स्पष्टयति यथेत्यादिना । चेतसि=ज्ञाने ।

(२) तत्र—शब्दे लैङ्गिकविकल्पेऽपि । विजातीयव्यावृत्तमिवेति । व्यावर्तकगोत्वादिस्फूर्तावपि व्यावृत्तेरस्फुरणात् । परस्परेति । सजा-तीयान्तराद्व्यावृत्तेरस्फुरणात् । अस्फुटमिवेति ।असाधारणधर्मास्फुरणा-दस्फुटमित्यर्थः ।

(३) अन्यथयितुम् । ननु वस्तुस्वाभाव्यमेव द्विरूपमस्तु भिन्नप्र-माणप्रतिभासं येन स्यादित्यत आह नचैकमिति मिश्राः । प्रतिबन्ध सिद्धिः=यद्भावाभावसाधारणं तदन्यव्यावृत्तिनिष्ठमिति व्याप्तिसिद्धि-रित्यर्थः ।

(४) यथेन्द्रियं स्वलक्षणविषयं तथा लिङ्गशब्दावपि यदि तद्वि-षयौ स्यातां तदा प्रतिभासवैलक्षण्यं न स्यात् अतस्तौ न स्वलक्षणं स्पृशत इत्याह स्यादेतदिति मिश्राः ।

(५) उपायभेदमात्रेण प्रतिभासभेदसिद्ध्या, बौद्धोक्तप्रतिबन्ध-व्याप्तिसिद्धिरित्यर्थः ।

नचैकं वस्तु द्व्याकारमिति प्रतिबन्धसिद्धिः । अस्य प्रयोगःयोऽयंक्वचिद्वस्तुनि(१) प्रत्यक्षप्रतिभासाद्विपरीतः प्रतिभासो नासौ तेनैकविषयो यथा घटग्रहणात् पटप्रतिभासः, तथाच गवि(२) प्रत्यक्षप्रतिभासाद्विपरीतः प्रतिभासो विकल्पकाल इति" ।

(३)इदमप्यवद्यम्, चित्राचित्रप्रतिभासाभ्यां मिथो विरुद्धाभ्यामेकनीलविषयाभ्यामनैकान्तात् । नहि चित्राध्यक्षे यन्नीलं चकास्ति तदेव पश्चान्न केवलं तदेव

मादिः न प्रतिपक्ष्याकार इति भावः(४) । इशात इति । सव्यदक्षिणनयनयोस्तथा सामर्थ्यं न दृष्टमित्यभिप्रायः । धर्मिणोद्व्याकारत्वादेकविषयत्वेऽपि प्रतिभासभेदः सम्भवतीत्यत आह नचैकमिति । एकानेकत्वयोर्विरुद्धत्वादिति । विकल्पकाल इति । प्रात्यक्षिकलैङ्गिकशाब्दिकविकल्पकाल इति ।

ननु सर्वभावानां क्षणिकत्वादस्मत्पक्षे पश्चादन्यदेव नीलं चकास्तीति चेत्, तत्राह (५) तदेवेति । परस्तु यस्मिन्नंशे हेतुवृत्तिस्तत्रैक-

(१) वस्तुनीति यत्किञ्चिद्विषयापेक्षया न्यूनत्वलाभाय, तथाच यो यत्प्रतिभासविषयरिकञ्चिद्वस्त्वविषयको नासौ तद्विषयविषयक इति व्याप्तिरिति दीधितिः । विवादपदं विकल्पो न प्रत्यक्षसमानविषयः, तेनान्यूनानतिरिक्तविषयत्वविरहित्वादित्यत्र प्रयोगाकार इति भगीरथठक्कुरः ।

(२) गवीति । स्वलक्षणे यः प्रत्यक्षप्रतिभासो निर्विकल्पकं तद्विपरीतं सविकल्पमिति न तस्य स्वलक्षणविषयतेत्यर्थः ।

(३) यत्रैकमेव नीलं चित्रपटस्थं समस्तचित्रपटदर्शिना चित्रत्वेन संवृतापरभागपटदर्शिना चाचित्रत्वेन प्रतीयते तत्र प्रतिभासभेदेऽपि न विषयभेद इति बौद्धोक्तो हेतुरनैकान्त इत्यभिप्रायेण समाधत्ते इदमपीत्यादिना । प्रतिभासभेदेपि तत्र विषयाभेदमुपपादयति नहीत्यादिना ।

(४) देशकालनियमादिना विषयाकारभेदेऽपि न ज्ञानाकारभेद इति तात्पर्यम् ।

(५) परेषां भावानां क्षणिकत्वादाह तदेवेत्यादि दीधितिः । क्षणि-

वा पुरुषान्तरस्य । "येना(१)कारेणैकविषयत्वं तयोर्न ते-
नैव विरोधो, येन च विरोधो न तेनैकविषयत्वम्, धर्मा-
न्तराकारेण विरोधो नीलमात्राकारेण चैकविषयतेति
चेत्" । नन्विहापि धर्मान्तराकारेण विरोधो गोत्व-
वत्पिण्डमात्राकारेण चैकविषयतेति (२)तावन्मात्र-
निराकरणेऽसिद्धो हेतुः । (३)पूर्वत्र सिद्धसाधनम् । नहि

---

विषयत्वं यत्र चैकाविषयत्वं न तत्र हेतुवृत्तिरित्याह (४)येनेति ।
सिद्धान्ती त्वंशभेदेन विरोधाविरोधनिरूपणं पक्षेऽपि शक्यमित्याह
(५)नन्विति । धर्म्यन्तराकारेण देशकालनियमादिधर्मान्तराकारेणेत्यर्थः ।
सिद्धसाधनत्वं दर्शयति नहीति ।

---

कत्वेऽपि संवृतापरभागपटदर्शिनः पुरुषान्तरस्य तस्मिन्नेव काले केव
लनीलप्रतिभासादेकविषयत्वमस्त्येवेति भावः ।

( १ ) येनाकारेण = नीलत्वेन । येन विरोधः चित्रत्वेनेत्यर्थः ।

( २ ) तावन्मात्रेति । शब्दलिङ्गविकल्पानां स्वलक्षणविषयतानिरा
करणे प्रतिभासभेदो हेतुः स्वरूपासिद्धः वस्तुनि सर्वेषां समानप्रति
भासत्वादित्यर्थः ।

( ३ ) पूर्वत्रेति । देशकालनियमादिषु प्रतिभासभेदेन भिन्नविषय
त्वं यदि साध्यते तदेत्यर्थः। सिद्धसाधनत्वमेवोपपादयति नहीत्यादिना

( ४ ) चित्रत्वाचित्रत्वाभ्यां विरोधो नीलत्वेन चैकविषयतेति
तत्रानैकान्तिकत्वमिति शङ्कते येनेति मिश्राः ।

( ५ ) गोत्ववद्व्यक्तिविषयतया समानविषयत्वं साधयामः, प्रति
भासभेदश्च देशकालनियतत्वानियतत्वस्फुटास्फुटत्वादिभिः स्वरुप
सिद्धैरिति तुल्यमिति परिहरति नन्विहापीति मिश्राः । इदमत्र पर
िहारतात्पर्यम्-यत्प्रतिभासविषयवदर्थाविषयको यः प्रतिभासो नास
तेनार्थेन तत्समानविषय इति बौद्धमतेन पर्यवसितायां व्याप्तौ यदि
प्रत्यक्षविषयगोत्ववत्पिण्डाविषयत्वं हेतूक्रियते तदा स्वरूपासिद्धि
प्रत्यक्षवच्छब्दादिविकल्पस्यापि गोत्ववत्पिण्डविषयत्वाभ्युपगमात्। यदि
च प्रत्यक्षविषयदेशादिनियमाविषयत्वं तदा सिद्धसाधनम्, देशादि
नियमेनार्थेन प्रत्यक्षसमानविषयताविरहस्य शब्दादिविकल्पे नैयायि
कैरभ्युपगमादिति ।

शाब्दलैङ्गिकविकल्पकाले देशकालनियमादयोऽपि सर्व एव धर्मविशेषा विषयभावमासादयन्तीत्यभ्युपगच्छामः

(१)"ननु धर्मिण्येव स्फुटास्फुटप्रतिभासभेदः कथम्"। न कथञ्चित्। यथा यथा हि धर्माः प्रतिभान्ति तथा तथा स्फुटार्थप्रतिभानव्यवहारः, यथा यथा च धर्माणामप्रतिपत्तिस्तथा तथा प्रतिभानस्य मान्द्यव्यवहारो दूरान्तिकादौ प्रत्यक्षेऽपि लोकानाम् (२)ननु सर्वथैवाप्रतिपत्तौ। (३)"विदूरादिप्रत्ययोऽपि पक्ष एवेति चेत्"। (४)अस्तु, न तु तावतापि धर्मधर्मिभेदासिद्धौ प्रत्यक्षबाध·

न कथञ्चिदिति। केवलधर्म्यपेक्षया स्फुटास्फुटप्रतिभासभेद एव नास्तीत्यर्थः। (५)स्फुटास्फुटव्यवहारस्त्वन्यथासिद्ध इत्याह यथेति। स्वलक्षणविषयत्वेन तु संप्रतिपन्ने दूरान्तिकवर्तिनि प्रत्यक्षेऽपि त्वदुक्तप्रतिभासभेदव्यवहारो धर्माणां स्फुरणास्फुरणनिबन्धनो दृश्यते, अतस्तत्सिद्धौ सत्यां तस्यैव धर्मिणः स्फुरणेऽपि धर्माणां स्फुरणास्फुरणमात्रेण

(१) प्रत्ययानां स्फुटास्फुटप्रतिभासत्वं स्फुटास्फुटार्थावगाहित्वं, नचैकास्यार्थस्य तत्सम्भवति विरोधात्, अतः स्फुटप्रतिभासस्य प्रत्यक्षस्य स्फुटस्वलक्षणविषयत्वमस्फुटप्रतिभासस्य च लैङ्गिकादिज्ञानस्यास्फुटालीकविषयत्वमित्यभिप्रायेणाशङ्कते नन्विति।

(२) नन्विति। यदि शब्दलिङ्गयोर्धर्मिविषयिता न स्यात्तदा तस्यास्फुटतापि न भवेदित्यर्थः।

(३) दूरादिप्रत्ययेऽपि स्फुटास्फुटप्रतिभासप्रभेदेन सद्द्रव्यपार्थिवादिप्रतिभासभेदेन वा विषयभेदं साधयिष्याम इत्यभिप्रायेणाक्षिपति विदूरादीति।

(४) समाधत्ते अस्त्विति। यदि धर्मधर्मिणोरभेदः स्यात्तदा किञ्चिद्धर्माभासे धर्म्यभानं स्यात्, नचैवम्, किन्तु तयोर्भेदात् दूरान्तिकप्रत्ययानां धर्म्यविषयकत्वे साध्ये बाधः, अनुव्यवसायेन धर्मिविषयत्वस्य प्रमितेः, बाधसन्देहेऽपि सन्दिग्धानैकान्तिकत्वम्, धर्मिविषयकत्वेऽपि किञ्चिद्धर्माविषयकत्वेनास्फुटत्वोपपत्तेरुक्तत्वादिति समाधानार्थः

(५) प्रकाशमात्रं स्फुटं, स्फुटास्फुटव्यवहारश्च बहुतराल्पधर्म·

स्य तत्सन्देहेऽपि सन्दिग्धानैकान्तिकस्य वा परिहारः तावतापि प्रतिभासभेदस्योपपत्तेः ।

(१)यदि च नैवं, दूरतमादिप्रत्ययेषु कः समाश्वासविषयः। "(२)यस्यार्थो लभ्यत इति चेत्" ननु लाभोऽपि पूर्वपूर्वोपलब्धानुपमर्दनेनैव । नहि सत्त्वद्रव्यत्वपृथिवी·

---

प्रतिभासभेदाद्धर्म्यंशस्यास्फुरणानुमाने तेनैव दूरावगतमेव सन्निकर्षेऽप्युपलभ्यत इत्येवमेकत्वग्राहिणा प्रत्यक्षेण बाधः प्रसज्ज्येतेत्यर्थः । तत्सन्देह इति । भेदसन्देह इत्यर्थः । सन्दिग्धानैकान्तिकत्वमेव दर्शयति (३)तावतेति । धर्मिणः स्फुरणे सत्येव धर्माणां स्फुरणास्फुरणमात्रेणापि प्रतिभासभेदोपपत्तेर्विपक्षवृत्तिसन्देहात्सन्दिग्धानैकान्तिकत्वं भवतीति ।

कः समाधिरिति(४) । स्वलक्षणरूपवस्तुगोचरतया कः समाश्वासास्पदप्रत्यय इत्यर्थः । सत्त्वेति । दूरतमप्रत्ययगोचरः सत्त्वं, दूरतरप्रत्ययगोचरो द्रव्यत्वं, दूरप्रत्ययगोचरः पार्थिवत्वं वृक्षत्वं वा परिभूय पार्थिवत्व(मार्तिकत्व?)वृक्षत्वप्रत्ययविषयः शिंशपापि न

---

विषयतानिबन्धन इति भावः । एतदेवाग्रिमग्रन्थेन प्रदर्शयन्नवतारयति स्फुटेति ।

( १ ) यदि च क्रमिकसद्द्रव्यपार्थिवत्वादिप्रत्ययानां प्रामाण्यं तदा समानविषयत्वमेव, अथैकस्य प्रमात्वम् तदा कस्य तदिति नाश्वासः स्यादित्याह यदि चेति । अनुभूयमानायामनुगताकारस्य विधिरूपतायां विकल्पस्य च धर्मिविषयतायां न किञ्चिद्बाधकमस्तीति भावः ।

( २ ) ज्ञानविषयस्य प्राप्तिरेव ज्ञानसमाश्वासहेतुरित्यभिप्रायेणाशङ्कते यस्येति । सद्द्रव्यं पृथिवी वृक्षः शिंशपेति दूरादिप्रत्यया जायन्ते, तत्र शिंशपालाभेऽपि सदादीनां लाभोऽस्तीति तावद्धर्मविशिष्टपिण्डगोचरा एव सर्वे प्रतिभासा न तु विषयभेद इत्युत्तरार्थ इति मिश्राः ।

( ३ ) अथ दूरादिप्रत्यया अपि पक्षकुक्षौ निक्षिप्यन्ते तदाऽप्रयोजकमित्याह तावतापीति दीधितिः । धर्मधर्मिणोरभेदसाधकं मानं नास्तीत्याशयः ।

( ४ ) अत्र मूले एतन्मतेन 'कः समाश्वासविषय' इत्यत्र कः समाधिरिति पाठो द्रष्टव्यः ।

त्ववृक्षत्वादिकं परिभूय शिंशपात्वं लभ्यते। "(१)यत्रार्थक्रियासिद्धिरिति चेत्" सर्वेषामनुवृत्तेः कस्यार्थक्रियेति किं निश्चायकम्। "(२)न किञ्चित्, किन्तु सङ्कीर्णार्थक्रियाविरहादेकमेव तत्र वस्तु, न चैकस्मिन् प्रतिभासभेद इत्येक एव प्रत्ययस्तत्र सालम्बन इति ब्रूम इति चेत्" तथापि कतम इत्यनिश्चये स एवानाश्वासः। असङ्कीर्णापि चार्थक्रिया न व्यक्तितः, सामग्रीतः सर्वसम्भवात्। (३)अत एव न सन्तानतो नियमः, न

लभ्यते अतः सर्वेषामपि लाभ इति। अपि च असङ्कीर्णापि चार्थक्रिया सर्वैरपि दूरतमादिप्रत्ययगोचरैः क्रियत इत्याह।(४)पिचेति। न व्यक्तितः नैकेनैव स्वलक्षणेन क्रियते इत्यर्थः। कुत इत्याह सामग्रीत इति। न किञ्चिदेकमेकस्मात्, सामग्र्या सर्वसम्भवादित्युक्तत्वादिति। न सन्तानत इति। नैकजातीयानेकव्यक्तिभिरित्यर्थः। विजातीयानेककारणसामग्रीनियता ह्यर्थक्रिया (५)नत्वेकस-

(१) पत्रकाण्डादिविशेषलक्षणाऽर्थक्रिया शिंशपाया एवेति तल्लाभ एवातस्तत्प्रतिभास एव समाश्वास इत्याह पूर्वपक्षी यत्रेति। सत्त्वादीनां पूर्वपूर्वप्रतिभासविषयाणामप्रतिबन्धश्चेत्तदा सैवार्थक्रिया कस्येति निर्णायकं नास्तीत्याहोत्तरपक्षी सर्वेषामिति।

(२) शङ्कते न किञ्चिदिति। बहूनां प्रतिभासेऽपि अर्थक्रियाया एकत्वादेव तद्विषयो वस्तुभूतोऽन्ये प्रतिभासास्त्ववस्तुविषया इति शङ्काभिप्रायः। पूर्वोक्तसदादिप्रत्ययानां कतमः प्रत्ययो यथार्थ इत्यनिश्चये प्रवृत्त्यनध्यवसाय एवेत्यभिप्रायेणोत्तरमाह तथापीति।

(३) सामग्रीतः सर्वसम्भवादेव।

(४) एतन्मतेन मूले अपि चासङ्कीर्णापीत्यादिः पाठो द्रष्टव्योऽथवा'सङ्कीर्णापि चार्थक्रियेति'ग्रन्थमध्यस्थापिचेत्यादिप्रतीकग्रहणं कर्तव्यम्। दूषणान्तरमाहासङ्कीर्णापीति। असङ्कीर्णार्थक्रिययापि व्यक्तिविशेषनिश्चयस्तदा भवेद्यदि सार्थक्रिया व्यक्तिविशेषमात्राद्भवेन्न चैवं, किन्तु सामग्रीतस्सर्वसम्भव इति कल्पलता।

(५) अङ्कुरस्यापि नहि एकस्मात् सजातीयबीजसंतानादुत्पत्तिः

त्येकसन्ताननियता काचिदर्थक्रिया नाम ।

(१)"काञ्चिदर्थक्रियां प्रति प्रत्यक्षानुपलम्भगोचर एव तथा व्यवस्थाप्यत इति चेत्" (२)तर्हि दूरतमाद्युपलम्भा अपि तथा व्यवस्थाप्याः, सर्वेषामेव तेषां तां तामर्थक्रियां प्रति प्रयोजकतायां अन्वयव्यतिरेकगोचरत्वादिति ।

(३)"स्यादेतत्, न धर्मान्तराकारेण प्रतिभासभेदो

---

जातीयव्यक्तिमाननियता, अतः सर्वैरेव सदादिप्रत्ययगोचरैरन्यैश्च सहकारिभिर्युक्तस्यैव स्वलक्षणस्यार्थहेतुत्वात्सर्वेषां सालम्बनत्वमित्याभिप्रायेणाह नहीति ।

---

किन्तु धरणिसलिलादिरूपविजातीयानेकसन्तानादिति भावः ।

(१) नन्वन्वयव्यतिरेकाभ्यां विजातीयकार्यविजातीयकारणानां कार्यकारणभावे स्थितेऽपि सदादेरर्थक्रियाकारित्वाभावात्तेषां कारणतायां प्रमाणाभावेनासत्त्वात्तद्विषयाः प्रत्ययाः कथं प्रमाणानीत्यभिप्रायेणाशङ्कते काञ्चिदिति । अर्थक्रियायाः सामग्र्यधीनत्वेऽपि प्राधान्येनाङ्कुरं प्रति बीजस्यैवान्वयव्यतिरेकाभ्यां कारणत्वावधारणमिति भावः ।

(२) समाधत्ते तर्हीति यद्येवं तर्हि द्रव्यं पृथिवी वृक्षः शिंशपेत्यपि द्रव्यत्वेन संयोगं प्रति पृथिवीत्वेन गन्धं प्रति वृक्षत्वेन पत्रकाण्डादिकं प्रति शिंशपात्वेन तद्विशेषं प्रत्यन्वयव्यतिरेकाभ्यां कारणत्वावधारणात् सर्वे प्रत्यया यथार्था एवेति समाधानतात्पर्यम् ।

(३) ननु प्रत्यक्षलैङ्गिकविकल्पयोः परोक्षत्वापरोक्षत्वरूपप्रतिभासभेदाद्विषयभेदः स्यादित्याशङ्कते स्यादेतदिति । धर्मान्तराकारेण=विषयनिष्ठपरोक्षत्वापरोक्षत्वाभ्यां प्रत्यक्षलैङ्गिकज्ञानयोः प्रतिभासभेदो न भेदकारणं किन्तु ज्ञाननिष्ठाभ्यां ताभ्यामित्यर्थः । ननु परोक्षत्वापरोक्षत्वे विषयस्यैव धर्मौ, तथाचापरोक्षत्वधर्मविशिष्टं प्रत्यक्षस्य विषयो लैङ्गिकादेस्तु परोक्षत्वधर्मविशिष्टमिति न ते ज्ञानधर्मावित्यत आह सा हीति । तन्मते विषयधर्मभेदेऽपि परोक्षापरोक्षज्ञानोत्पत्तेः, न च परोक्षत्वादावपरोक्षत्वाद्यवान्तरधर्मस्वीकारोऽनवस्थितेस्तथा च परोक्षत्वापरोक्षत्वयोर्मिथो विरोधात् प्रत्यक्षलैङ्गिकविकल्पयोः प्रतिनियतविषयतेति पूर्वपक्षाभिप्रायः ।

भेदहेतुः, किन्तु परोक्षापरोक्षरूपतया। सा हि न धर्मभेदानप्युपादाय समर्थयितुं शक्या, तेष्वपि परोक्षापरोक्षज्ञानोदयात्, तत्रापि धर्मान्तरानुसरणेऽनवस्थामादिति चेत्" । न (१)तयोरविषयाकारत्वात्। द्विविधो हि ज्ञानधर्मो विषयावच्छेदो जातिभेदश्च । तत्र विषयावच्छेदभेदेन विषयस्य भेदस्थितिरभेदानिराकरणं वा न तु द्वितीयेन, तस्य कारणभेदेनैवोपपत्तेः। श्रुत्यनुमितिस्मृतिवत् । यथाच विषयभेदेऽपि कारणभेदादेवापरोक्षजातीयमिन्द्रियजं ज्ञानं, तथा विषयभेदेऽपि कारणभेदादेव परोक्षापरोक्षजातीयमिन्द्रियालिङ्गज्ञानं भवत् केन वार्यते । वारणे वा कार्यभेदं प्रति कारणभेदोऽप्रयोजकः स्यात्, तथाचाकस्मिकः स आपद्येत । "जातिभेदोऽयं

---

श्रुत्यनुमितिस्मृतिवदिति । भावप्रधानो निर्देशः । यथाहि विषयैकत्वे सत्यपि परोक्षावान्तरजातिभेदाः श्रुतित्वादयः कारणभेदादेवोत्पद्यन्त इत्यर्थः । एवं विषयैकत्वे सत्यपि कारणभेदाज्जातिभेदो निदर्शितः इदानीं विषयभेदेऽपि कारणभेदाज्जात्यभेदं निदर्शयति (२)यथा-

---

(१) समाधत्ते तयोरिति। परोक्षत्वापरोक्षत्वयोर्विषयघटितत्वाभावात्तदेवोपपादयति द्विविध इत्यादिना । प्रथमः विषयनिबन्धनः यथा घटपटज्ञानयोः, द्वितीयः कारणभेदप्रयोज्यो जातिभेदो यथा परोक्षत्वे तुल्येऽपि शाब्दत्वानुमितित्वयोर्ज्ञानगतजातिभेद कारणभेदाधीनः। तत्राद्ये हि विषयकृते प्रतिभासभेदे विषयभेद एव तन्त्रम् न तु जातिकृते, तत्र कारणभेदस्य तन्त्रत्वादयथैकास्मिन्नेव विषये प्रत्यक्षज्ञानमानुमानिकं च तथा परोक्षमपरोक्षं चेत्यर्थः । नतु द्वितीयेन=जातिभेदेनेत्यर्थः। तस्य=जातिभेदस्य ।

(२) यदीदं वैरूप्यं विषयभेदमात्रप्रयोज्यं स्यात्तदा भिन्नविषयकं ज्ञानद्वयमपरोक्षजातीयं न स्यादिति यथा विषयभेदाप्रयोजकत्वे कारणभेद एव प्रयोजकः तथा विषयाभेदेऽपि वैजात्ये कारणभेदः प्रयोजक इत्यर्थः ।

न तूपाधिभेद इति किमत्र निष्टङ्ककारणमिति चेत्" अनुभव एव । नहि व्यवसायकाले पारोक्ष्यापारोक्ष्यस्मृतित्वानुभूतित्वानि परिस्फुरन्ति , असावग्निमानयमग्निमान् सोऽग्निमानिति स्फुरणात् । अनुव्यवसायकाले तु तत्प्रतिभासः, अनुमिनोमि इमं पश्यामि तं स्मरामीत्युल्लेखात् । "कथं तर्हि परोक्षोऽर्थः प्रत्यक्षश्चेति व्यवहारः" । यथाऽनुमितो दृष्टः स्मृत इति ।

यदप्यत्यन्तविलक्षणानामित्यादि, तदपि (१)सन्दिग्धेति । उपाधिभेद इति । विषयावच्छेदभेदोपाधिभेद(२) इत्यर्थः । नहि व्यवसायेति । विषयोपाधिकत्वे विषयव्यवसायकाल एव तेषां स्फुरणं स्यादिति भावः । अनुभवामिति(३) । स्मृतिग्रहणं दृष्टान्तार्थम् । असाविति । अत्र यथाक्रममनुमानप्रत्यक्षस्मृतीनां निर्देशः । अनुव्यवसायेति । ज्ञानावसायकाले एव तेषां स्फुरणं तद्धर्मत्वमेव(४) तेषामिति भावः । इमं पश्यामीति, अनेनापरोक्षाध्यवसायो दर्शितः, परोक्षस्याप्यनुमितिस्मृत्यनुव्यवसायेनैवानुव्यवसायो दर्शित इति द्रष्टव्यम । यथाऽनुमित इति । नावश्यं स्वगतेनैव विशेषेण भवितव्यं, यथाऽनुमितिविषयीभूतत्वादनुमित इति व्यवहारस्तथा परोक्षापरोक्षविषयत्वात्परोक्षोऽर्थः प्रत्यक्षोऽथ इति व्यवहारः सिद्ध्यतीत्यर्थः ।

(५)यदप्युक्तमत्यन्तेति । अत्यन्तविलक्षणानां स्वालक्षण्य-

---

(१) सालक्षण्यव्यवहारहेतुत्वेऽप्यतद्व्यावृत्तिरूपं माऽस्त्वित्यत्र विपक्षे बाधकाभावात्सन्दिग्धानैकान्तिकमित्यर्थः ।

(२) विषयभेद इति मिश्राः । परोक्षत्वापरोक्षत्वे कारणभेदकृतो जातिभेदो न विषयकृत उपाधिभेद इत्यत्र किं प्रमाणमिति पूर्वपक्षार्थः ।

(३) अत्र अनुभूतित्वानीत्यस्यानुभवामिति प्रतीकग्रहणं चिन्तनीयम् ।

(४) ज्ञानधर्मत्वमेव परोक्षत्वापरोक्षत्वादीनां गमयतीत्यर्थः ।

(५) द्वितीयं परोक्तानुमानं दूषयति यदपीति मिश्राः ।

ग्धानैकान्तिकम् , (१)विधिनापि तथाभूतेन सालक्षण्य-व्यवहारस्य निर्वाहात् । तथाहि अयं व्यवहारो न निर्निमित्तः, नाप्यनेकनिमित्तः, नाप्यनेकासंसर्ग्यैक-निमित्तः, अतिप्रसङ्गात् , ततोऽनेकसंसर्ग्यैकनिमित्तः परिशिष्यते । तथा च तादृशस्य(२) विधिरूपत्वे को वि-रोधः, येन व्याप्तिः स्यात् , (३)प्रत्युत निषेधरूपतायामेव विरोधो दर्शितः प्रागिति कृतं पल्लवसमुल्लासैः ।

---

व्यवहारहेतुत्वादन्यव्यावृत्तिरूपो विकल्पविषयीकृतोऽर्थ इति यद्बौद्धेनो-क्तमित्यर्थः । सामर्थ्याक्षिप्तं समानरूपत्वं(४) तथाभूतेनेति परामृशति, एतदेव दर्शयितुं प्रथमं तावत्सामान्यरूपमन्तरेण नास्य व्यवहारस्य सम्भ-व इत्याह (५)तथा ह्ययमिति । अतिप्रसङ्गादिति । अनेका-संसृष्टस्यैव सालक्षण्यव्यवहारहेतुत्वे गोविकल्पविषयेणैव वाऽश्वानां साल-क्षण्यव्यवहारप्रसङ्गादिति । सन्दिग्धानैकान्तिकत्वमेव दर्शयति तस्य चेति । येन व्याप्तिः स्यादिति । विपक्षे बाधकेऽसत्येव व्याप्तिः सिद्ध्यतीति भावः(६) । निषेधरूपतायामिति । इतरेतराश्रयत्वा-द्विरोध इत्यर्थः ।

---

(१) अन्यथासिद्धिद्वारा सन्दिग्धानैकान्तिकत्वमेव विशदयति विधिनापीति ।

(२) अत्र तादृश इति षष्ठ्यन्तः पाठो मिश्रमते, तस्येति च ना-रायणमतेन द्रष्टव्यः ।

(३) पूर्वोक्तवाक्यं स्मारयति प्रत्युतेति ।

(४) जातिरूपत्वमित्यर्थः ।

(५) विधिरत्र जातिरिति व्यवस्थापयति तथाहीति । निर्निमित्त-त्वे नित्यत्वप्रसङ्गः, अनेकनिमित्तत्वे चाननुगताकारप्रसङ्गः, अनेकासं-सर्ग्यैकनिमित्तत्वेऽपि तथेत्यर्थ इति कल्पलता ।

(६) यदत्यन्तविलक्षणानां सालक्षण्यव्यवहारहेतुस्तदन्यव्यावृत्ति-निष्ठमिति तदुपदर्शिता व्याप्तिः सिद्ध्येदित्यर्थ इति मिश्राः ।

नापि प्रवृत्त्यादिव्यवहारानिर्वाहकत्वमपोहकल्पनायाः, (१)अन्यावभासादन्यत्र प्रवृत्तावतिप्रसङ्गात् ।

"अध्यवसायादयमदोष इति चेत्" । अथ कोऽयमध्यवसायः । किमलीकस्य वस्तुधर्मतयाऽवभासः, किं वा वस्त्वात्मकतया ततो भेदाग्रहो वा, वस्तुवासनासमुत्थत्वं वेति । न प्रथमः, (२)विकल्पे तदनवभासात् । न द्वितीयः, असाधारणविषयतया शब्दविकल्पयोरप्र-

---

नापि (३)प्रवृत्त्यादीति । विधिरूपसामान्यपक्षे तु तद्विशिष्टस्य स्वलक्षणस्यापि विकल्पेऽपि स्फुरणात्तत्र प्रवृत्त्यादिरपि सिद्ध्यतीत्यभिप्रायः ।

अध्यवसायादिति । अपोहमात्रविषयत्वेऽपि विकल्पस्य स्वलक्षणस्यैवाध्यवसेयत्वात्तत्रैव प्रवृत्त्यादिसिद्धिरिति । अलीकस्य=अपोहस्येत्यर्थः । वस्तुवासनासमुत्थत्वं वेति । अलीकविकल्पस्येति शेषः । असाधारणविषयतयेति । अपोहस्यासाधारणवस्त्वात्मकतया(४) प्रतिभासे तस्याप्यसाधारणरूपतैव स्यात्, ततश्च तद्विषयत्वे

---

(१) अन्येति । व्यावृत्तेरभासनाद्वस्तुनि प्रवृत्तिर्न भवेदित्यर्थः । ज्ञानस्य स्वविषय एव प्रवर्तकत्वात्, अन्यथा घटज्ञानात् पटेऽपि प्रवृत्तिः स्यादिति भावः ।

(२) निर्विकल्पकमात्रवेद्यस्य वस्तुधर्मस्य सविकल्पकेऽनवभासादित्यर्थः ।

(३) अपोहे बाधकान्तरमाह प्रवृत्त्यादीति मिश्राः । अपोहमात्रावलम्बी विकल्पो न स्वलक्षणं स्पृशतीति पक्षं निरस्यति नापीति दीधितिः । वस्तु यदि विकल्पे न भासेत तदा तत्र प्रवृत्तिरेव ततो न स्यादेवेत्यर्थः ।

(४) स्वलक्षणविषयतयेत्यर्थः । वस्तुतः स्वलक्षणस्यासाधारणत्वात्तदनतिरिक्तं तत्तादात्म्यमप्यसाधारणं, तद्विषयत्वे चासाधारणविषयत्वं स्यात्, ततश्च शब्दविकल्पयोरप्रवृत्तिः, सङ्केतग्रहाधीनो हि शब्दः, सङ्केतश्चानुगतरूपमपुरस्कृत्य स्वलक्षणेष्वशक्यो ग्रहीतुं

वृत्तिप्रसङ्गात्, (१)तस्यासामयिकत्वात्। (२)तस्माद्विकल्पवस्तुनोरक्षूरसवत् सर्वथा विरोध एव, साधारणविषयत्वे तु वस्तुत्वाप्रतिभासनम्, तस्यासाधारणत्वात्। न तृतीयः, प्रवृत्तिसामानाधिकरण्यानियमानुपपत्तेः, भेदाग्रहस्य सर्वत्र सुलभत्वात्।

(३)"अतेभ्यो भेदो गृहीत इति चेत्" किमेतेषु गृह्यमाणेषु अगृह्यमाणेषु वा? नाद्यः, अतेषामपि स्वलक्षणानां विकल्पागोचरत्वात(४)। न द्वितीयः, अविज्ञा-

शब्दविकल्पयोरनुदय एव प्रसज्येतेति। प्रवृत्तीति। गोविकल्पस्य गोस्वलक्षण एव प्रवृत्तिरिति प्रवृत्तिनियतस्यायं गौरिति गोस्वलक्षणसामानाधिकरण्यानियमस्यैवानुपपत्तेरिति। अथवा यत्र यत्र प्रवृत्तिस्तत्रैव भेदाग्रह इति भेदाग्रहस्य प्रवृत्तिसामानाधिकरण्यनियमानुपपत्तेरिति।

---

मानत्वात् विशिष्यानुपस्थितत्वाच्च, न चानुगतस्यासतो रूपस्य सता स्वलक्षणेन सम्बन्धोऽस्ति, विकल्पोऽपि चानुगतमसन्तं बाह्यमाकारमालम्ब्यैव प्रवर्तते इति भावः।

(१) स्वलक्षणस्य सङ्केतग्रहाविषयत्वात्।

(२) उपसंहरति तस्मादिति। विकल्पस्यानुगतधर्मविषयत्वाद्वस्तुनश्चाननुगतत्वात्तयोरक्षूरसवद्विरोध एवेत्यर्थः। विरोधमेवाह साधारणेति। तस्य=वस्तुनः। तथा च वस्त्वात्मतया भानमध्यवसाय इति यदुक्तं तदनुपपन्नमिति भावः।

(३) ननूक्तसामानाधिकरण्यनियमभङ्गस्तदा स्याद्यदि गोविकल्पादश्वे प्रवृत्तिः स्यान्न त्वेवं, गोविकल्पो ह्यगोभ्यो व्यावृत्तोऽयमिति जायमानोऽश्वादिव्यावृत्तिं विदधत्कथमश्वादिषु प्रवृत्तिं कुर्यादित्यभिप्रायेणाशङ्कते अतेभ्य इति मिश्राः। अतेभ्यो=अश्वादिभ्यः।

(४) विकल्पागोचरत्वादिति। तथाच तेभ्यो भेदग्रहोऽनुपपन्न इत्यर्थः। न च निर्विकल्पकेनोपस्थितान्येतानि स्वलक्षणान्येवेति वाच्यम्। स्वलक्षणास्पर्शिना विकल्पेनापोहाग्राहिणा चाविकल्पेन तदुभयभेदस्य ग्रहीतुमशक्यत्वात्, अनुपस्थितस्वलक्षणान्तरे प्रवृत्तेर्दुर्वारत्वात्।

तावधेर्भेदस्याप्रथनात्(१), प्रथने वा अध्यवसेयाभिमतस्वलक्षणादपि भेदो गृह्येत, अविशेषात् । "गृहीतादग्रहो भेदस्यागृहीतेभ्यस्तु तद्ग्रह इति चेत्"। यदि धर्मलक्षणो भेदः, तदा विपर्ययः(२) । स्वरूपलक्षणश्चेत्, अविशेषात् सर्वतस्तद्ग्रहोऽन्यत्र तादात्म्यग्रहात् ।

अध्यवसेयाभिमतस्वलक्षणस्यापि विकल्पविषयत्वेन स्वलक्षणान्तरेभ्यो विशेषाभावेऽपि तस्य निर्विकल्पकेन गृहीतत्वादितरेषां चागृहीतत्वादनेन विशेषेणाध्यवसेयाद्भेदाग्रहः, अन्येभ्यस्तु तद्ग्रह इति शङ्कते गृहीतादिति(३) । निर्विकल्पकगृहीतादित्यर्थः । अयं (४)चास्याभिमानः—गृहीतविषये तादात्म्यग्रहे सति भेदाग्रहदर्शनात्सर्वत्रैव भेदाग्रह इति । अस्य तु परिहारस्य प्रात्यक्षिकविकल्पमात्रसम्भवादितरयोरव्यापकत्वमुत्तरविभवादनुक्तोत्तरान्तरं वक्तुं विकल्पयति यदीति । गृहीतविषयेऽपीत्यर्थः । अत्रापवादमाहाऽन्यत्रेति । यदि गृहीततादात्म्यं

---

( १ ) अज्ञातप्रतियोगिकभेदस्यास्फुरणादित्यर्थः । प्रतियोगिज्ञानाभावेऽपि भेदास्फुरणे दोषमाह प्रथन इति। तथाच गोविकल्पो गोस्वलक्षणादपि भेदं गृह्णीयादविशेषादिति भावः ।

( २ ) अपोहे तात्विकधर्माभावादित्यर्थः । स्वरूपेति । यथा माहिषादिभ्यो भेदग्रहस्तथा गोस्वलक्षणादपि स्यादेवापोहस्येवेत्यर्थः । अन्यत्रेति । तादात्म्यग्रहादन्यत्र, तादात्म्यग्रहविरहे सर्वतस्तद्ग्रह इत्यर्थः, तादात्म्यग्रह एव भेदग्रहे प्रतिबन्धकः, स चापोहस्य केनापि वस्तुना नास्तीति सर्वत्र प्रवृत्तिस्तदभावो वा स्यादिति भावः ।

( ३ ) अत्र ग्रहणं निर्विकल्पकं, तदनन्तरं यत्सविकल्पकमुत्पद्यते तद्ग्रहणसमानप्रतिभासमतः सारूप्याद्गोस्वलक्षणाद्भेदो न गृह्यते माहिषादिभ्यस्तु भेदो गृह्यत एवेति गोविकल्पो गवि प्रवर्तयति न माहिषमातङ्गादावित्यर्थ इति मिश्राः ।

( ४ ) परिहारस्येत्यर्थः । प्रात्यक्षिकविकल्पमात्रसम्भवादानुमानिकशाब्दिकविकल्पस्थले तादात्म्यग्रहाभावेनेति शेषः । अतः अनुक्तमुत्तरान्तरं वक्तुं विकल्पमाहेत्यभिप्रायो नारायणीकारस्य कथंचित्सङ्गमनीयः ।

"(१)निःस्वरूपत्वात्तस्य क्व स्वरूपलक्षणो भेद इति चेत्"। (२)अगृहीतादपि तथा स्यात् अविशेषात्।

(३)"निःस्वरूपमपि सस्वरूपमिव भिन्नमिव प्रथितमिति चेत्"। (४)तत्किमध्यवसेयापेक्षया सस्वरूपमिव न प्रथितम्, अध्यवसेयस्वरूपमिव वा स्फुरितम्। आद्ये अप्रतिपत्तिर्वा स्यात्, निःस्वरूपप्रतिपत्तिर्वा स्यात्, उभयथापि सामानाधिकरण्यप्रवृत्ती न स्याताम्। द्वि·

---

गृह्येत तदानीं भेदग्रहो न स्यात्, तादात्म्याग्रहे तु भेदाग्रह एवेति। तस्येति। व्यावृत्तिरूपस्य गोत्वस्येति।

स्वरूपप्रथनाभावे द्वेधैव(५) गतिरित्याह आद्य इति। उभयथापीति। अप्रथननिःस्वरूपप्रथनप्रकारद्वयेऽपि(६), अयं गौरिति सामानाधिकरण्यं प्रवृत्तिश्च न स्यातामिति। निराकृत इति। अध्यवसेयाभिमतस्वलक्षणस्य विकल्पसंस्पर्शनिराकरणान्निराकृत इत्यर्थः।

---

(१) शङ्कते निःस्वरूपत्वादिति। तस्य=अपोहस्य।

(२) समाधत्ते अगृहीतादिति। भेदाग्रह एव स्यादित्यश्वादावपि स एव प्रवृत्तिप्रसङ्गः, नहि तदपेक्षयाऽपोहो न निःस्वरूप इत्यर्थः।

(३) अपोहवादी शङ्कते निःस्वरूपमपीति। निःस्वरूपमपि गोत्वादि अध्यवसेयाश्वाद्यपेक्षया सस्वरूपमिव, स्वरूपं च भेदोऽतो भिन्नमिव प्रथितम्तथाचाश्वादितो भेदाग्रह एवेति न तत्र प्रवृत्तिरिति शङ्काकर्तुराशयः।

(४) निराकरोति तत्किमिति। यथाऽनध्यवसेयाश्वादेर्भिन्नमिव प्रथितं तथाऽध्यवसेयाद्गोस्वलक्षणादपि कथं तथा न प्रथेतेति तद्भेदग्रहात्तत्रापि प्रवृत्तिर्न स्यादिति भावः। अध्यवसेयेति। स्वलक्षणस्वरूपमिव वा स्फुरितमिति द्वितीयकल्पार्थः।

(५) अप्रतिपत्तिविषया निःस्वरूपप्रतिपत्तिविषया चेति द्विधैव सस्वरूपाप्रथेत्यर्थः।

(६) अप्रतिपत्तिनिस्स्वरूपप्रतिपत्त्योरित्यर्थः।

तीयस्तु प्रागेव (१)दूषितः । (२)नापि चतुर्थः, नीलानुभववासनासमुत्थस्य पीतानुभवस्य नीले प्रवर्तकत्वप्रसङ्गात् । (३)"नानुभवः प्रवर्तकः, अपि तु विकल्पः, स च यस्मात्तस्यैव विषय इति चेत्"। यस्मादिति साक्षात्परम्परया वा ? प्रथमे शाब्दलैङ्गिकविकल्पानामप्रवर्तकत्वप्रसङ्गः, द्वितीये तु स एवातिप्रसङ्गः ।

---

नीलानुभवसमुत्थस्येत्यनेनानुभवमुखेन तद्वासनासमुत्थत्वं दर्शयति। विकल्पं प्रत्यनुभवस्य यस्मादितिनिर्दिष्टं हेतुत्वं साक्षात्परम्परया वेति विकल्प्य दूषयति यस्मादिति । शाब्दलैङ्गिकविकल्पानामिति । नहि शाब्दलैङ्गिकविकल्पा यत्र प्रवर्तकास्तद्विषयनिर्विकल्पेन साक्षाज्जन्यन्ते, किन्तु शब्दलिङ्गविकल्पजन्या इति(४) । स एवेति । नीलानुभवोपादेयपीतानुभवजन्योऽपि विकल्पो नीले प्रवर्तकः प्रसज्येतेति।

---

(१) अत्र नारायणमतेन 'निराकृत' इति पाठो द्रष्टव्यः ।

(२) वस्तुवासनासमुत्थत्वं वेति चतुर्थं दूषयति नापीति । अत्र नारायणमतेन 'नीलानुभवसमुत्थस्ये'त्येव पाठः 'अनुभवमुखेन तद्वासनासमुत्थत्वं दर्शयति' इति व्याख्यानात् । स्ववासनापरिपाकवशादुपजायमाना बुद्धिरपश्यन्त्यपि बाह्यं बाह्ये प्रवृत्तिमातनोतीति ज्ञानश्रिया समाहितं न युक्तम्, तन्मते अनुभवरूपवासनातिरिक्तस्थायिसंस्काराद्यभावात् पीतानुभवस्यापि नीलानुभवसमुत्थत्वात्पीतानुभवोऽपि नीले प्रवर्तकः स्यादिति भावः ।

(३) ननु नीलनिर्विकल्पकं न प्रवर्तकमपि तु नीलसविकल्पकं तच्च नीलानुभवेनैव जनितमतस्तद्विषये नीलस्वलक्षण एव प्रवर्तयतीत्यभिप्रायेणाक्षिपति नानुभव इति । विषय इति सप्तमी, प्रवर्तक इत्यनुषङ्गेणान्वयः ।

(४) परोक्षविकल्पानां व्याप्तिसङ्केतविकल्पजन्यत्वात्तस्य च स्वलक्षणाविषयत्वात्तत्र प्रवर्तकत्वं न स्यात् साक्षादनुभवाजन्यत्वादित्यर्थः ।

"(१)अनुभवव्यापारपुरस्कारान्नियम इति चेत्"। कः पुरस्कारार्थः? न तावदनुभवैकविषयत्वम्, विकल्पेन तदसंस्पर्शात्। (२)नाप्यनुभवत्वारोपः, स्वात्मनि कल्पनापोढाभ्रान्तत्वात्, (३)विषये चाभिलापसंसर्गयो-

अनुभवेति। पीतविकल्पो हि पीतानुभवव्यापारं पुरस्करोति न नीलानुभवव्यापारम्, अतोऽनुभवव्यापारपुरस्कारेण विकल्पस्य तदनुभवविषये प्रवर्तकत्वान्नातिप्रसङ्ग इति। तदसंस्पर्शादिति। अनुभवविषयस्य स्वलक्षणस्यासंस्पर्शादिति(४)। स्वात्मनीति(५)। विकल्पे हि द्वयोरर्थयोः प्रतिभास इष्यते भवता स्वात्मनो विषयस्य च, तत्र स्वात्मापेक्षया वा विकल्पस्यानुभवत्वमारोप्यते विषयापेक्षया वा? तत्र न स्वात्मापेक्षया सम्भवति, तत्र हि स्वत एवानुभवत्वान्नारोप्यमनुभवत्वम्,

---

(१) ननु साक्षात्परम्परयेति न विवक्षितम्, किन्तु यो विकल्पो यस्यानुभवस्य व्यापारं पुरस्करोति स तस्यैव विषये प्रवर्तयति, पुरस्कारश्चोपाधिरूपं धर्मान्तरमेवान्यथानुपपत्त्या कल्प्यत इत्याहानुभवेति। व्यापारपुरस्कारश्च कार्यकारणभावव्यवस्थितये नैयायिकेनापि वाच्य इति आक्षेप्तुर्बौद्धस्याभिप्रायः।

(२) नन्वारोपितनीलानुभवात्मा नीलविकल्पो नीले प्रवर्तयति पीतविकल्पे तु वैधर्म्यान्नीलानुभवत्वानारोपादित्यत आह नापीति मिश्राः।

(३) विकल्पविषयेऽनुभवत्वमारोप्यत इति पक्षे आह विषये चेति। अभिलापसंसर्गयोग्यो विकल्पविषयोऽलीकं तत्रारोपो न सम्भवति विशेषदर्शनप्रतिहतत्वादित्यर्थः। यदि तु विकल्पस्याभिलापसंसर्गयोग्यप्रतिभासो नेष्यते तदाप्याह तथेति।

(४) अविषयीकरणादित्यर्थः।

(५) अनुभवत्वं विकल्पस्वरूपे वाऽऽरोप्यते तद्विषये वा? नाद्य इत्याह स्वात्मनीति। कल्पनापोढत्वेन=कल्पनाव्यावृत्तत्वेनाभ्रान्तत्वात, नहि विकल्पः स्वात्मनि वस्तुभूते कल्पना किन्तु स्वविषयेऽलीके, तथाच कथमारोप इत्यर्थः। एतदभिप्रायेणैवाह विकल्पे हीत्यादिना।

ग्यप्रतिभासत्वात्, तथाऽनवभासे वा विकल्पत्वव्याघातात्, विशेषोपलब्धौ चारोपासम्भवात् । (१)नापि तद्धर्मप्रामाण्यारोपः, तस्यानियतविषयत्वे प्रवृत्तिनियमानुपपत्तेः । परमार्थसद्विषयत्वे च तस्य विकल्पसंसर्गप्रसङ्गात् । अलीकविषयत्वे चाप्रवृत्तेः । अलीकस्यानलीकतया स्फुरणन्तु निषिद्धम् ।

---

किञ्च आरोपे भ्रान्तत्वमपि स्यादारोपस्य कल्पनात्वात् कल्पनारूपत्वमपि स्याद्द्वयमपि न सम्भवति स्वात्मनि कल्पनापोढाभ्रान्तत्वाद्विकल्पस्येति । भवतु तथावभासः तथापि किमिति निर्विकल्पत्वं नारोप्यत इति चेत्तत्राह (२)विशेषोपलब्धाविति । निर्विकल्पकाद्विशेषस्याभिलापसंसर्गयोग्यप्रतिभासत्वस्योपलब्धौ न निर्विकल्पकत्वारोप इति । अनियतविषयत्वे इति । किं सर्वविषयसाधारण्येनैतस्य प्रामाण्यमारोप्यते, नियतविषयत्वेऽपि किमध्यवसेयविषयतया अलीकवियतया वेति । तत्र न तावदाद्यः सम्भवतीत्यर्थः(३) । अनलीकतयेति । अनलीकतया स्वलक्षणतया स्फुरणं निषिद्धम् ।

---

(१) नन्वनुभवस्य प्रामाण्यं विकल्पे समारोप्यते तेनानुभवविषये विकल्पः प्रवर्तयतीति नातिप्रसङ्ग इत्याशयेनाह नापीति । प्रामाण्यसामान्यमारोप्यते विषयविशेषोपहितं वा ? आद्ये आह तस्येति । द्वितीये परमार्थेति । प्रामाण्ये ह्युपधायकं वस्तु वाच्यं तच्च (न) विकल्पे भासते इत्यर्थः । नन्वलीकमेवोपधायकं स्यात्तथा च तत्प्रामाण्यमेवारोप्यतामत आहालीकेति । ननु विकल्पविषयालीकस्यानलीकतया भानं प्रवर्तकं स्यादित्यत आहालीकस्येति । अनलीकतया पारमार्थिकतयाऽलीकस्य भानं तदा स्याद्यदि परमार्थसद्विषयो विकल्पः स्यात् तत्तु बौद्धेन नाङ्गीक्रियते इति भावः ।

(२) ननु भवत्वभिलापसंसर्गयोग्यप्रतिभासस्तथाप्यारोप उपपद्यतामत आह विशेषेति मिश्राः ।

(३) विषयनियमाभावात्प्रवृत्तिनियमानुपपत्तेरिति शेषः ।

(१)नाप्यनुभवात् स्वात्मनो भेदाग्रह एव तद्व्यापारपुरस्कारः, स्वरूपस्य स्वतोऽवगतेः, विषयतया भेदस्य च प्रागेव निरूपणात्। (२)नाप्यपरोक्ष्यम्, तस्यापि स्वात्मनि सर्वज्ञानसाधारणत्वात्। (३)विषये च विकल्पस्य तदभावात्। तथा भावेऽप्यन्यत्र नियतप्रवृत्त्यनुपपत्तेः।

तस्य विकल्पस्य च स्वरूपतस्तावद्भेदाग्रहो नास्तीत्याह (४)स्वरूपस्येति। विषयतोऽपि नास्तीत्याह विषयतयेति। "न तृतीयः प्रवृत्तिसामानाधिकरण्यनियमानुपपत्तेरि"त्यादिना निरूपणादिति(५)। तदपि स्वात्मापेक्षया चेत्तत्राह(६) तस्यापीति। तथाच सर्वे विकल्पाः सर्वत्र प्रवर्तयेयुरिति भावः। (७)विषयापेक्षया चेति। (८)तथात्वे इति। तत्रापरोक्षत्वे सत्यपि विकल्पविषयादन्यत्र स्वलक्षणे नियतेऽप्य-

---

(१) ननु नीलानुभवनीलविकल्पयोर्भेदाग्रहादेव नीलविकल्पो नीलानुभवविषये नीले प्रवर्तकः स्यादित्याशंक्याह नाप्यनुभवादिति। अत्रान्यटीकाकारमतेन 'विषयभेदस्ये'ति पाठो द्रष्टव्यः।

(२) नन्वनुभववद्विकल्पेऽप्यपारोक्ष्यन्तथाच विकल्पोऽनुभवविषये प्रवर्तयतीत्याशंक्याह नाप्यपारोक्ष्यमिति। अनुभवव्यापारपुरस्कार इति पूर्वेणान्वयः।

(३) ननु यथाऽनुभवविषयोऽपरोक्षस्तथा विकल्पस्यापीति प्रवृत्तिनियमः स्यादित्यत आह विषये चेति। अलीके विकल्पविषयेऽपरोक्षत्वाभावादपरोक्षत्वेऽपि तस्य प्रवृत्तिनियामकत्वाभावादिति भावः।

(४) अत्र नीलानुभवविकल्पयोर्भेदाग्रहस्तद्विषयोर्वा? आद्ये आह स्वरूपस्येति। विकल्पस्य स्वप्रकाशतयाऽनुभवभेदेनैव ग्रहादित्यर्थः।

(५) अन्त्ये आह विषये इति। अलीके ग्रहविषये पारमार्थिकभेदासम्भवादित्यादिना दूषितत्वादिति मिश्राः।

(६) अपारोक्ष्यं विकल्पापेक्षया चेदित्यर्थः। विकल्पा इति। अपरोक्षतयेति शेषः।

(७) एतन्मतेन मूले 'विषयापेक्षया च विकल्पस्य तदभावात्' इति पाठो द्रष्टव्यः।

(८) अत्रैतन्मतेन मूले 'तथात्वेऽप्यन्यत्रेति' पाठो बोध्यः।

(१)नापि विषयसारूप्यम्, तदभावात् । का हि परमार्थसदलीकयोः समानरूपता नाम ? यदि रूपशब्दो धर्मिवचनः समानशब्दश्चैकपर्यायः, काऽर्थसङ्गतिः प्रकृते । यदि वा रूपं धर्मः समानश्चैको वैकजातीयो वेति, तथापि काऽर्थसङ्गतिः प्रकृते(२) । "अतद्व्यावृत्तिरिति चेत्"(३) । न, तस्या अलीकानलीकनिष्ठतया एकत्वैकजातीयत्वयोरभावात् ।

(४)"आभिमानिकोऽयं सारूप्यव्यवहारो न पार-

---

वसेयाभिमते प्रवृत्त्यनुपपत्तेः नियामकाभावादित्यभिप्रायः । का हीति । (५)न कापीत्यर्थः । कथमित्याह यदीति । समानशब्दस्यैकधर्मिवचनत्वे प्रकृतेऽलीके स्वलक्षणेन सहैकधर्मिसमावेशाभावान्नार्थसङ्गतिरिति । अतद्व्यावृत्तिरिति । समानो धर्म इति शेषः । एकत्वैकजातीयेति । एकत्वपक्षे जातित्वं स्यान्न च तत्सम्भवति, अलीकानलीकयोरेक-

---

(१) शङ्कते नापीति । विषयसारूप्यं सरूपविषयकत्वशालित्वमिति दीधितिः ।

(२) वस्त्ववस्तुनोरेकस्यैकजातीयस्य वा धर्मस्यासम्भवादित्यर्थः ।

(३) तथाचातद्व्यावृत्तिरूपस्योभयसाधारणधर्मस्यैकस्यैकजातीयस्य वा सम्भवादर्थसङ्गतिः स्यादिति पूर्वपक्षार्थः ।

(४) बौद्धः शङ्कते आभिमानिक इति । विषयसारूप्यमनुभवव्यापारपुरस्कार इत्यत्र सारूप्यव्यवहारो न पारमार्थिकः, किन्त्वाभिमानिक इति शङ्कार्थः । समाधत्ते अभिमानस्यैवेति । अभिमान एव नानाप्रकारेण विकल्पितः न तु तेन प्रवृत्तिनियम उपपादित इत्यर्थ इति मिश्राः । सद्धर्मेऽसद्धर्मत्वभ्रमः, असद्धर्मे सद्धर्मत्वभ्रमो वा अभिमानः, तस्य च विकल्पतया न सद्वगाहित्वमिति कथमुभयधर्मावगाही विकल्प इति भाव इति गुणानन्दः ।

(५) प्रमेयत्वादिनापि परमार्थसदसतोः सारूप्यस्य दुर्लभत्वादिति भावः ।

मार्थिक इति चेत्"। न, अभिमानस्यैव चिन्त्यमानत्वात्। नहि चिन्तितप्रकारान् परिभूयाऽपरोऽभिमानो नाम।

"(१)स्वभावादेव कश्चिद्विकल्पः कस्मिंश्चिदेवा स्फुरितेऽपि प्रवर्तयति, किमत्र क्रियताम्, स चास्य स्वभावभेदः स्वकारणादेवायातः, तत्र कः पर्यनुयोज्यतामिति चेत्"। तत्किमप्रत्यासन्न एव विकल्पस्तत्र प्रवर्तयति, प्रत्यासत्त्यन्तराभावात् स्वभावप्रत्यासन्नो वा, व्यवहृतिरेव वा प्रत्यासत्तिः? न प्रथमः, अतिप्रसङ्गात्। (२)द्वितीये तु स्वभावेनोत्तरं स्यात्, किन्तु तदेव स्फुर-

णीयस्याभावात्, एकजातीयत्वपक्षे गुणकर्मत्वं स्यान्न चालीके गुणसमवायः कर्मसमवायो वा सम्भवतीति(३)।

महीति। सारूप्याभिमानो हि समानधर्मत्वप्रतिभासो वा ततो भेदाग्रहो वेत्यादिचिन्तितप्रकारबहिष्कारेण नान्यः प्रकारः सम्भवति, तत्र पूर्वेषु त्रिषु स्वलक्षणस्यापि विकल्पसंस्पर्शप्रसङ्गः, चतुर्थे प्रवृत्तिसामानाधिकरण्यनियमानुपपत्तिप्रसङ्गः। एवं प्रकारान्तरेष्वपि दोषो द्रष्टव्यः॥ तदेव

(१) ज्ञानश्रीमतेन प्रवृत्तिनियामकमुत्थापयन्नाशङ्कते स्वभावादेवेति। समाधत्ते तत्किमिति। एकविषयगोचरज्ञानेच्छादीनां तत्त्वेन कार्यकारणभावेऽनन्तकार्यकारणभावापत्त्या लाघवात्तद्विषयज्ञानत्वेन तद्विषयकृतित्वेनेत्येक एव कार्यकारणभावस्तथाच विकल्पानामिच्छादिविषयकत्वस्यापलपितुमशक्यत्वात्समानविषयत्वेनैव प्रवृत्तिविकल्पयोः कार्यकारणभावस्तदतिरिक्तस्वभावभेदे च प्रमाणाभावादिति समाधानतात्पर्यसंक्षेपः।

(२) स्वभावप्रत्यासत्तिरेव ज्ञानज्ञेययोर्विषयविषयिभावः सम्बन्ध इति सिद्धा विकल्पस्य वस्तुविषयतेति सिद्धं नः समीहितमित्याह द्वितीये त्विति कल्पलता।

(३) अलीकनिष्ठतया नैकत्वमनलीकानिष्ठतया च नैकजातीयत्वमिति साध्यद्वये हेतुद्वयमेतत्। उभयत्राप्यलीकानलीकानिष्ठतयेत्येक एव हेतुरिति मिश्राः।

णम्, नहि व्यवहारे प्रवर्तयितव्ये स्वभावप्रत्यासत्तिम-
पहाय ज्ञानज्ञेययोरपरः कश्चिद्विषयविषयिभावः । सद-
सदनिर्वचनीयात्मख्यातिवादिभिरपि स्वभावप्रत्यासत्ते-
रवर्जनीयत्वादिति वक्ष्यमाणत्वात्

(१)तृतीये तु व्यक्तमात्माश्रयत्वम्, स्वव्यवहारनि-
यमं प्रत्येव निबन्धनानुसरणात् । "कारणशक्तेरसदुत्प-

---

स्फुरणमिति । विषयविषयिभाव इत्यर्थः । व्यवहार इति ।
व्यवहारे प्रत्येतव्ये(२) साधयितव्येऽर्थात्तद्धेतुभूतो विषयविषयि-
भावो न स्वभावप्रत्यासत्तेरन्यः सम्भवति । एतच्च वक्ष्यते । (३)स च
प्रकाशस्य सतः तदीयतामात्ररूपस्वभावविशेष इति, (४)एवञ्च विकल्प-
स्यापि व्यवहारगोचरस्वलक्षणरूपवस्तुगोचरत्वं सिद्धमिति भावः ।

निबन्धनानुसरणादिति । ततश्च व्यवहारस्यैव तन्नियमनि-
बन्धनप्रत्यासत्तिरूपत्वे व्यक्तमात्माश्रयत्वमिति(५) । कारणेति ।
यथा कारणस्यासता कार्येण प्रत्यासत्त्यभावेऽपि तच्छक्तिविशेषादेव
नियतस्यैव कार्यस्योत्पत्तिः, तथा विकल्पवस्तुनोर्विषयविषयिभावलक्षण-
सम्बन्धाभावेऽपि विकल्पसामर्थ्यविशेषादेव प्रवृत्तिनियमः सिद्ध्यतीति(६) ।

---

(१) ननु गोगोचरव्यवहारजनकत्वमेव गोविकल्पस्य प्रत्यासत्तिः स्यादत आह तृतीये त्विति । अत्र निमित्तानुसरणादिति मूले पाठः स्वरसम्मतटीकाकारमतेन द्रष्टव्यम् ।

(२) एतन्मतेनात्र मूले 'प्रत्येतव्ये' इति पाठो द्रष्टव्यः ।

(३) विषयविषयिभावश्च विद्यमानस्यैव ज्ञानस्यार्थेन निरूपयितुं शक्य इति भावस्तथा च कथं क्षणिकत्वमिति हृदयम् ।

(४) ननु एतावता प्रकृते किमायातमत आहैवञ्चेति ।

(५) व्यवहारस्यैव व्यवहारनियमनिमित्तप्रत्यासत्तिरूपत्वेनात्मा-श्रयादिति भावः ।

(६) तथाचासत्त्वाविशेषेऽपि नैयायिकमते यथा दण्डाद् घट एवो-त्पद्यते न पटस्तथा गोविकल्पाद्गव्येव प्रवृत्तिर्नाश्व इत्याशयोऽभिमतः ।

स्तिवन्नियम इति चेत्”। सत्यम्। एतत्तु चिन्तनीयम्, कारणशक्त्यापि नियतजातिनियतया भवितव्यम्, (१)अन्यथा ज्वलनविकल्पाज्जलेऽपि प्रवृत्तिप्रसङ्गात्। “(२)दाहादिसमर्थाकारविकल्पजातीयं तात्त्विके वह्नौ प्रवर्तयतीति जातिर्वोपाधिर्वा नियामक इति चेत्”। (३)न

सत्यमिति। अत्र कश्चिदाह न्यायदर्शने शक्तेरभावात्कथं तदङ्गीकृत्योत्तरमिति। नैतदादर्तव्यम्, नहि नो दर्शने शक्तिः पदार्थ एव नास्तीति (४)स्वकण्ठोक्तेरप्यनाकलनादिति। चिन्तनीयमिति। स्फुरणमनादृत्यैव(५) शक्तिविशेषात् प्रवृत्तिनियमः सिद्ध्यति नवेति चिन्तनीयमित्यर्थः। नानादृत्य सिद्ध्यतीत्येतत्प्रतिपादयन्नाह (६)कारणेति। विकल्परूपस्य प्रवृत्तिकारणस्य शक्त्याप्याश्रयतो विषय-

(१) नियामकं विना स एवातिप्रसङ्ग इत्याहान्यथेति। नियतजातिनियतशक्त्यभावे वह्निज्ञानाज्जलेऽपि प्रवृत्तिः स्यादिति भावः।

(२) ननु वह्निरयमिति ज्ञानत्वावच्छिन्नमेव वह्नौ प्रवर्तकं, तच्च ज्ञानत्वं जातिरुपाधिर्वेत्यन्यदेतत्, नहि कारणतावच्छेदकं जातिरेवेति नियमः कालाकाशदिशां प्रतिनियतकार्यं प्रत्यकारणतापत्तेरित्यभिप्रायेणाशङ्कते दाहेति। आदिपदात्पाकादिपरिग्रहः। सत्यपि वह्निरितिज्ञाने दाहादिसमर्थोऽयमिति विकल्पं विना दाहाद्यर्थिनोऽप्रवृत्तेरावश्यकत्वात्स एव प्रवर्तक इत्याशङ्कातात्पर्यम्।

(३) समाधत्ते न तर्हीति। ततो वह्निविकल्पात्, तत्रापि रत्नमरीचिनिश्चयेऽपि वह्निज्ञानस्यैव प्रवर्तकत्वे मरीचिज्ञानात्तदर्थी तत्र न प्रवर्तेत, मरीचिज्ञानवत् वह्निज्ञानस्यापि प्रवर्तकत्वे तादृशविकल्पजातीयं तात्त्विके वह्नौ प्रवर्तयतीति नियमो न स्यादिति भावः। एवं रत्नकिरणज्ञानात् वह्नौ प्रवृत्तिर्न स्यादित्यपि द्रष्टव्यम्।

(४) स्वकण्ठोक्तेरिति। तस्य कार्यकारणभावस्वरूपत्वादतिरिक्तपदार्थत्वं नेति दर्शनकारोक्तेरभिप्रायानवधारणादिति भावः।

(५) विविच्यमानं विमेत्यर्थः।

(६) यथा दण्डत्वावच्छिन्नस्यान्वयव्यतिरेकौ घटत्वावच्छिन्नं कार्यमनुविधत्ते तथा यदि प्रवृत्तिं प्रति विकल्पस्य जातिप्रतिनियमस्त्वन्मते दुरुपपाद इत्याह कारणशक्त्येति मिश्राः।

तर्हि रत्नमरीचिनिचये ततः प्रवर्तेत, तज्जातीयस्य द-हन एव प्रवर्तनसामर्थ्यात्।(१)"ताद्रूप्येण तस्यैव प्रथना-दिति चेत्"। प्रथताम्, न तु तस्य प्रवर्त्तनयोग्यता तत्र प्रथननियता, वह्निस्वलक्षणेऽपि वह्निविकल्पादप्रवृत्तिप्र-सङ्गात्। स्वीकुरु वा तस्यापि स्फुरणम्, परिहर वा वह्निविकल्पादवह्नौ प्रवृत्तिमिति।

(२)एतेनाकारसारूप्यं नियमहेतुरपास्तः। अर्थनीय-सारूप्याभावेऽपि प्रवृत्तिदर्शनात्। अनर्थनीयसारूप्य-

तश्च जातिनियतया भवितव्यमिति रत्नमरीचिर्वह्निविकल्पवद्भ्रान्त इति शेषः। वह्निस्वलक्षणेऽपीति। तस्यापि तत्पक्षे प्रज्ञानाभावादिति। स्वीकुरु वेति। प्रवृत्त्यङ्गीकरण इति शेषः। स्फुरणानङ्गीकारेण श-क्तिविशेषा(णां) वह्नावेव प्रवृत्त्यङ्गीकरणे दोषमाह परिहर वेति। अ-वह्नौ रत्नमरीचिनिचय इत्यर्थः।

एतेनेति। अवह्नौ वह्निप्रवृत्तिदर्शनेनेत्यर्थः(३)। एतदेव विक-ल्प्य दर्शयति अर्थनीयेति। अर्थनीयवह्नित्वाद्याकारेण सारूप्यमङ्गी-कृत्य तदभावेऽपि प्रवृत्तिदर्शनान्न तस्य हेतुत्वमित्युक्तमिदानीं तयोः सारू-

(१) शङ्कते ताद्रूप्येणेति। वह्नित्वेन रत्ननिचयस्यैव। प्रथता-मिति। त्वन्मते प्रवृत्तिविषयप्रथनमप्रयोजकमित्यर्थः। वह्निविकल्पा-दिति। वह्निविकल्पाद्वह्निस्वलक्षणप्रथनं बौद्धेन नाङ्गीक्रियते, अङ्गीकारे सिद्धं नः समीहितमित्यर्थः।

(२) ननु स्वविषये ज्ञानस्य प्रवर्तकत्वे नातिप्रसङ्गः, यद्धर्मवि-शिष्टोऽर्थस्तत्रैव तद्धर्मविशिष्टज्ञानस्य प्रवर्तकत्वादित्यत आह एतेनेति। आकारसारूप्यं विकल्पप्रवृत्तिविषययोरेकाकारत्वम्, अर्थनीयसारूप्यं तयोरिष्टतावच्छेदकैकाकारशालित्वम्, तदभावेऽपि रजताकारविकल्पेन रजतार्थिनो रङ्गेऽपि प्रवर्तनात्। अनर्थनीयसारूप्यमिष्टतानवच्छेदकैका-कारशालित्वम्, अतिप्रसंजकत्वात्—सद्रूप्यं रजतमिति विकल्पाद्र-जतार्थिनो लोहेऽपि प्रवृत्तिप्रसङ्गात् इति दीधितिः।

(३) मरीचिनिचये ततः प्रवृत्त्यभावप्रसक्तेनेत्यर्थ इति मिश्राः।

मग्रस्य चातिप्रसञ्जकत्वात् । न च बाह्यवादे ज्ञानज्ञेय-
योर्विवक्षितसारूप्यसंभवः, सामग्रीवैषम्यात् । (१)सा-
म्ये वा जाड्यचैतन्ययोरेकशेषप्रसङ्गात् । न च सामग्र्य-
वान्तरविशेषात् कार्यविशेषव्यवस्था, (२)मिथःसा-
मग्र्यननुविधानेन जायमानत्वात् । न च कार्योन्नेयं
सामग्रीसाम्यं, (३)बाह्यधूमाद्यनुविधीयमानस्य कार-
णस्य दृश्यमानत्वात्, धूमज्ञानस्य च तदुभयव्यभिचारोप-

प्यमेव नास्तीत्याह(४) न च बाह्येति । विवक्षितं नीलत्वादिकं एक-
जातीयत्वलक्षणं सारूप्यं न सम्भवतीति । न च यथा सामग्र्या जडाजड-
साधारणनीलाकारोत्पत्तिस्तदवान्तरविशेषादेव जडाजडात्मककार्यविशेषव्य-
वस्था स्यादिति वाच्यमित्याह (५)नचेति । कुत इत्याह मिथ इति ।
यद्येकस्याः सामग्र्या अवान्तरविशेषात् कार्यविशेषव्यवस्था स्यात्, नचैतां
सामग्रीमनुरुध्य ज्ञानज्ञेययोरुत्पत्तिः स्यात्, न चैवम्, अन्योन्यसामग्री-
बहिष्कारेणैवान्योन्यस्योत्पत्तेरिति । नन्वेतदेवासिद्धं कार्यस्य साजात्येनैक-
विधसामग्र्यनुमानादिति चेत्तत्राह नचेति । यद्यप्यान्तरे ज्ञाने कारण-

---

(१) साम्ये वेति । अभिन्नसामग्रीकतया सर्वमज्ञानमेव वा भवेत् ज्ञानमेव वा, वैजात्यं जगति नैव भवेदित्यर्थः ।

(२) मिथ इति । ज्ञानजडयोर्विलक्षणसामग्रीजन्यत्वादित्यर्थस्तथा च न सामग्रीसाम्यमिति भावः ।

(३) बाह्येति । धूमादिनाऽनुविधीयमानस्य वह्न्यादिरूपकारणस्य दृश्यत्वात्, धूमज्ञानस्य च वह्निं विनापि जायमानत्वात् धूमधूमज्ञानयोः कथं सामग्रीसाम्यमिति भावः ।

(४) विज्ञानवादे ज्ञानज्ञेययोरभेदात्सामग्रीसाजात्यात् बाधकाभावाच्च तयोराकारसाम्यं सम्भवति नतु बाह्यवाद इत्याह नचेति दीधितिः ।

(५) ननु ज्ञानसुखयोर्यथा सामग्रीसाम्येऽपि किञ्चित्कारणभेदाद्वैजात्यं तथा जडचैतन्ययोरपि स्यादित्यत आह नचेति मिश्राः ।

लम्भात् । न च तदेव कारणमेकत्र दृश्यमदृश्यं चान्यत्रेति युक्तम् ।

यदि च नीलिमादिर्विज्ञानस्य जातिविशेषः, कथं तदतिपत्य ज्ञेयं स्पृशेत्, ज्ञेयस्य चेत्, कथं ज्ञानं तद्विशिष्यात् इति (१)जातिसङ्करापादनप्रस्तावे चिन्तितप्रायम् । तस्मात् स्फुरित एव ज्ञानं प्रवर्त्तयतीति गले पादुकयाप्यङ्गीकारयितव्यो गत्यन्तराभावात् ।

स्याद्दृश्यमानत्वाचन्मात्रस्य(२) कार्योन्नियतत्वसम्भवः, तथापि न सामान्यानुमानं सम्भवति, बाह्येऽर्थे धूमादौ तेनानुविधीयमानस्य वह्न्यादेः कारणस्य दृश्यमानत्वात्तस्य चादृश्यत्वेन तज्ज्ञानस्य च योग्यानुपलब्धिबाधितत्वादित्यर्थः । ननु ज्ञानोत्पत्तौ तस्यैव कारणस्य दृश्यमानत्वान्न योग्यानुपलब्धिबाधितेति चेत्तत्राह (३)नच तदेवेति ।

इतश्च न ज्ञानज्ञेययोः सारूप्यसम्भव इत्याह (४)यदि चेति। कथं तदतिपत्येति । नहि (५)तद्विशेषस्य तदव्यापकत्वात्तदतिक्रमः सम्भवतीति । जातिसङ्करापादनप्रस्तावे=विकल्पानुपपत्तेरिति हेतुवि-

---

(१) ननूभयत्रापि वर्ततां नीलत्वादिरत आह जातिसङ्करेति । एवं सति ज्ञानत्वानुभवत्वसाक्षात्त्वादिभिः साङ्कर्यं स्यादित्यर्थः ।

(२) दृश्यादृश्यसाधारणकारणमात्रस्य । कुत इत्यत आह बाह्येऽर्थे इति ।

(३) ननु धूमज्ञानेऽप्यदृश्यो वह्निः कारणं स्यादिति कथं न सामग्रीसाम्यमत आह नचेति मिश्राः ।

(४) आकारसारूप्याद्विकल्पः स्वलक्षणे प्रवर्तयतीत्यत्र दूषणान्तरमाह यदि चेति । आकारो हि नीलत्वं, तद्यदि ज्ञानगता जातिः तदा सा ज्ञेये नीले न वर्तेत, ज्ञेयगता चेत्तदा ज्ञाने कथं वर्ततामिति नाकारसाम्यमित्यर्थ इति मिश्राः ।

(५) तद्विशेषस्य ज्ञानगतस्य नीलत्वादिविशेषस्य तदव्यापकत्वा ज्ज्ञानव्यापकत्वात्तदतिक्रमो ज्ञेयगतत्वं न हि सम्भवतीत्यर्थः ।

(१)"तर्हि स्फुरिते स्वाकार एव प्रवर्तयतु, तत्र प्रवृत्त एव चार्थी तत्सदृशमर्थमासादयति, मणिप्रभायां प्रवृत्तो मणिवदिति चेत्"। न, अभिमतार्थक्रियासामर्थ्यविरहिण्यप्रवृत्तेः। (२)न च बाह्ये विकल्पाकारारोपसम्भवः, तस्य तेनासंस्पर्शात्। (३)न चाकारे बाह्यत्वारोपः, स्वरूपे स्फुरत्यन्यस्वरूपारोपानवकाशात्। (४)प्रभायान्तु मणिबुद्ध्यैव मण्यर्थी प्रवर्तते न तु तदबुध्येति दृष्टा-

वरणवेलायामित्यर्थः। तस्मादिति। प्रवृत्तेरन्यथासिद्धत्वादित्यर्थः। गत्यन्तरेति। विस्फुरणं विहायाऽध्यवसायपुरस्कारस्वभावसारूप्यादेर्गत्यन्तरस्याभावादित्यर्थः। ज्ञानाकारे प्रवृत्तस्य कथं बाह्यार्थलाभ इति चेत्तत्राह (५)तत्रेति। तत्सदृशं=तत्समर्पकतया तत्सदृशमित्यर्थः(६)। (७)चेन्नाभिमतेति। विकल्पाकारस्य नाभिमतार्थक्रियासाधकत्वमिति भावः। न च बाह्य इति। (८)यतोऽभिमतार्थक्रियासमर्थे बाह्ये प्रवर्तेतेति। न चाकार इति। यतः सामर्थ्यमारोप्याकारे प्रवर्तेत। मणिबु-

(१) उक्तप्रघट्टकेन शब्दालङ्गविकल्पानामलीकविषयत्वं निराकृत्य आकारो वेति सौत्रान्तिकमतं दूषयितुमाशङ्कते तर्हीति।

(२) ननु बाह्येऽर्थक्रियासमर्थे ज्ञानाकारारोपात्प्रवृत्तिः स्यादत आह नचेति। बाह्यस्य बौद्धमते विकल्पेनासंस्पर्शादेतदपि न संभवतीत्यर्थः।

(३) ननु ज्ञानाकार एव बाह्यत्वमारोप्य प्रवृत्तिः स्यात् तदर्थक्रियासमर्थमेव यत इत्यत आह नचेति। स्वरूप इति। स्वप्रकाशेन ज्ञानाकारे स्फुरति तत्र विशेषदर्शनादारोपानुपपत्तिरित्यर्थः।

(४) अन्यविषयज्ञानादन्यत्र प्रवृत्तिरित्यत्र दृष्टान्तोऽपि साध्यविकल इत्याह प्रभायां त्विति।

(५) विकल्पानां प्रामाण्याभिमानमुपपादयति तत्रेति। संवादात्प्रमाणत्वेनाभिमान इति भाव इति मिश्राः।

(६) ज्ञानकारसमर्पकतया ज्ञानाकारसदृशमर्थमित्यर्थः।

(७) परिहरति नेति। अर्थक्रियासमर्थेऽर्थेऽर्थक्रियार्थी प्रवर्तते न तु ज्ञानाकारस्तथाति कल्पलता।

(८) यदि विकल्पेन बाह्यस्य संस्पर्शः स्यात्ततो बाह्ये ज्ञानाकारारोपो भवेत् इत्यादिः।

न्तोऽप्याभासः ।

(१)न चाकारवादेऽस्फुरतोऽर्थस्य सत्तायां प्रमाणमस्ति, आकारकादाचित्कत्वस्य तैमिरिककेशाद्याकारेणानैकान्तिकत्वात् । अर्थक्रियासंवादस्यापि स्फुरितस्या-

द्ध्यैवेति अर्थक्रियासमर्थबुद्ध्यैवेत्यर्थः ।

आकारवाद इति । आकारस्फुरणवाद इत्यर्थः । (२)केशाद्याकारेणेति । तैमिरिकस्य हि केशाद्याकारस्य ज्ञाने केशाद्याकारस्तदाधायकत्वं बाह्यमन्तरेण वासनामात्रादेव सिद्ध्यतीत्यभिप्रायः । अर्थक्रियासंवादस्तर्हि लिङ्गम्, न च तैमिरिकज्ञानेऽर्थक्रियासंवाद इति चेदत आह (३)अर्थेति । सोऽपि हि स्फुरितश्चेज्ज्ञानाकार एव स्फुरितश्चेत्सो बाह्योऽसिद्ध एवेति । ननु तैमिरिकज्ञाने यथाऽर्थाकारस्यार्थव्यभिचारो दृष्टः नैवमर्थक्रियाकारस्यार्थक्रियाव्यभिचारो दृष्टः, अतस्तेन बाह्यार्थक्रियाऽनुमा-

---

(१) सौत्रान्तिकमते दोषान्तरमाह नचेति । इदमत्र तात्पर्यम्—ज्ञानसाकारत्वपक्षे ज्ञानं बाह्यमवगाहते न वा ? आद्ये तत एव रजतज्ञानादिव्यवहारसंभवे आकारे मानाभावः, नहि ज्ञानं रजतमिति कश्चिद्व्यवहरति प्रत्येति वा, किन्तु रजतस्य ज्ञानमिति । द्वितीये तु न बाह्यसिद्धिः, रजतमित्यादिज्ञानं हि रजताद्यवगाहमानमेव रजतादिबाह्यार्थसाधकं स्यात्, तच्चेन्न तदवगाहि कुतो रजतादिबाह्यार्थसिद्धिरिति, अर्थक्रियाया अप्याकारशरीरत्वादित्यर्थः ।

(२) नन्वाकारकादाचित्कत्वादेव बाह्यार्थसिद्धिर्भवेत्, नहि नीलसन्निधानं विना नीलाकारं ज्ञानं कादाचित्कं स्यात् सर्वदैव तदाकारज्ञानप्रसङ्गादित्यत आहाकारेति मिश्राः । तैमिरिकस्य कादाचित्ककेशाकारज्ञाने केशार्थव्यभिचारदर्शनान्नाकारकादाचित्कत्वाद्विषयसिद्धिरिति भावः ।

(३) ननु बाह्यार्थक्रियैव बाह्यार्थे प्रमाणं भवेदत आहार्थक्रियेति कल्पलता ।

कारमात्रशरीरत्वात्, बाह्यस्य चासिद्धेः। निरालम्बनार्थाकारवच्च क्वचिद्वासनावशादर्थाकारोऽपि निरालम्बन एव भविष्यतीति विपक्षे बाधकाभावात् प्रतिबन्धस्याप्यासिद्धेः(१)। तस्माद्बाह्यासिद्धिः साकारञ्च ज्ञानमिति बाललोलुपत्वमिति(२)।

"अस्तु तर्हि बाह्यमेव स्वलक्षणं विकल्पविषयः। (३)यद्यपि स्वरूपेणासामयिकतया तन्नाभिलापसंसर्ग-

नात्कथं बाह्यार्थासिद्धिरत आह (४)निरालम्बनेति। यद्यपि व्यभिचारो(५) न दृष्टः, तथापि व्यभिचारशङ्कायामपि न प्रतिबन्धः सिध्यति।

एवं ज्ञानाकारो वेति द्वितीयो विकल्पो निरस्तः, बाह्यं वस्तु वेति तृतीयं विकल्पमवलम्बमानः पर इदानीं स्वलक्षणस्य विकल्पविषयत्वमङ्गीकृत्य तस्याभिलापसंसर्गानर्हत्वेन तस्य विकल्पानर्हत्वात्तदेवापोहविशिष्टतद्द्वारेण विषयः न तु जातिविशिष्टमित्याह (६)अस्तु तर्हीति। प्रत्या-

---

( १ ) असिद्धेरिति। उक्तव्यभिचारसन्देहेन अर्थक्रियाकारबाह्ययोः प्रतिबन्धस्याप्यसिद्धया कथमर्थक्रियासंवादेन बाह्यार्थसिद्धिः स्यादिति भावः।

( २ ) बाललोलुपत्वमिति। बाह्यानङ्गीकारे हि रङ्गज्ञानं रजतज्ञानमित्यादिविशेषो न विनाऽकारं संभवतीति आकारसिद्धिः स्याद्बाह्याङ्गीकारे तु तत्तद्विषयत्वेनैवोक्तविशेषोपपत्तावाकारे किं प्रमाणमिति तात्पर्यम्।

( ३ ) ननूक्तं स्वलक्षणं नाभिलापसंसर्गयोग्यप्रतिभासमत आह यद्यपीति।

( ४ ) न चार्थक्रिया बाह्ये प्रमाणं भवितुमर्हति, तैमिरिककेशज्ञानवदर्थक्रियाज्ञानस्यापि वासनासमुत्थत्वेन उपप्लवयितुं शक्यत्वादित्याह निरालम्बनेति। निरालम्बनार्थाकारः–तैमिरिककेशज्ञानाकार इति मिश्राः। निरालम्बनो–बाह्यार्थाप्रयुक्त इति दीधितिः।

( ५ ) व्यभिचारो–व्यभिचारनिश्चयः।

( ६ ) सम्प्रति बाह्यं वस्तु वेति वैभाषिकमतमुत्थापयन् तृतीयं विकल्पं दूषयति अस्तु तर्हीति मिश्राः।

योग्यम्, तथाप्यतद्रूपपरावृत्तिप्रत्यासत्त्या साधारणरूपतामापन्नं सत्तथा भवत्येव । यथा ह्येको गौरगोव्यावृत्तस्तथाऽपरेऽपि गाव इति चेत्"(१) । (२)अथ कोऽयमगौर्नाम । किमेकस्य गोस्वलक्षणस्यानात्मा, आहोस्वित्तद्गतधर्मविरही । प्रथमे न गवान्तरेऽपि(३) गोशब्दविकल्पौ प्रवर्तेयाताम्, अश्वादिवदनात्मत्वाविशेषात् । अतिप्रसङ्गश्च महिषमातङ्गाद्यगोव्यावृत्त्याऽश्वेऽपि गोव्यवहारप्रसङ्गात् । "(४)स गोरपि व्यावर्तते इति चेत्" । तत्किमभिमतो गौर्गोरपि न व्यावर्तते । (५)"व्यावर्तते

सत्त्या सम्बन्धेनेत्यर्थः । न केवलमप्रसङ्गः(६), अतिप्रसङ्गश्चेत्यहातिप्रसङ्गश्चेति । तत्किमिति । अभिमतोऽपि हि गौर्गोः

(१) अत्र निर्विकल्पकाविषयवस्तुना गवादिव्यक्तिरूपस्यानन्त्यव्यभिचाराभ्यां शक्तिग्रहाविषयतयाऽभिलापसंसर्गयोग्यत्वाभावेऽपि अगोव्यावृत्तिलक्षणसम्बन्धेन स्वलक्षणेष्वपि तद्योग्यताऽस्त्येवेति बाह्यमेव स्वलक्षणं गवादिर्विकल्पविषय इति पूर्वपक्षाशयः ।

(२) यद्यपि वैनाशिकमतेऽसत्या व्यावृत्तेः सता स्वलक्षणेन सम्बन्धस्य सत्त्वस्य वाऽभ्युपगमेऽपसिद्धान्तः, तथापि तस्य तैर्दोषत्वानङ्गीकाराद्दोषान्तरमाहाऽथेति दीधितिः । अत्र गोपिण्डभिन्नो वा गोत्वजातिशून्यो वा अगौरिति विकल्पाकारो बोध्यः ।

(३) तस्याप्यगोत्वादित्यर्थः ।

(४) अश्वादिर्गोरपि व्यावर्तते इति न तत्र गोव्यवहार इत्याह पूर्वपक्षी स गोरपीति । समाधत्ते तत्किमिति । एकस्माद्गोपिण्डादन्यपरोऽपि गोपिण्डो व्यावर्तत इति तत्रापि गोव्यवहाराभावप्रसङ्गः स्यादिति समाधानार्थः ।

(५) पुनराक्षिपति व्यावर्तत इति । गोपिण्डादेकस्माद्भिन्नोऽपि गोपिण्डो गौर्भवत्यवेति तत्र गोव्यवहारः स्यादेवेत्याक्षेपाभिप्रायः । समाधत्ते यदीति । महिषादगोर्व्यावृत्तोऽश्वोऽपि स्यादिति अगोव्यावृत्तिरूपं गोत्वं नैव वक्तुं शक्यते बौद्धेनेति समाधानार्थः ।

(६) गवान्तरे गोशब्दविकल्पप्रवृत्त्यभावप्रसङ्ग इत्यर्थः ।

किन्तु स्वयमप्यसौ गौरिति चेत्"। यद्यगोव्यावृत्तिरेवाऽस्य गोत्वं तदाऽश्वेपि समानम्, अन्यच्चेत्तदुच्यताम्।

(१)द्वितीये तु तद्गतधर्मविरहिव्यावृत्तस्तद्वानेव स्यात्, तत्र च नो न विवादः।

"(२)मिथः सम्भिन्नाकाराः पिण्डा एव साधारणं रूपमस्तु, कृतमतद्रूपपरावृत्त्येति चेत्"। न, (३)सम्भेदा-

स्वलक्षणान्तराद्व्यावृत्त एवेति(४)। तदुच्यतामिति। गोत्वं विहायेति (५)शेषः।

तद्वानेवेति। अभावाभावो भाव एवेति भावः। अतद्रूपपरावृत्त्येति। भावात्मिकयाऽभावात्मिकया वेत्यर्थः।

(१) अगौस्तद्गतधर्मविरहीति पक्षे, गोत्वात्यन्ताभाववद्भिन्नो गोत्ववानेवेत्यर्थः। यत्किञ्चित्तद्गतधर्मशून्यत्वमतिप्रसक्तं, यावत्तद्गतधर्मशून्यत्वं चाप्रसिद्धमतस्तद्गतगोत्वशून्यत्वमेव वक्तव्यं, तथाच सिद्धमीहितमित्याह तद्गतेति दीधितिः।

(२) आकाराभेद एवानुगतमतेरालम्बनमिति कीर्तिमतेनाशङ्कते मिथ इति। अतएवाह कीर्तिः—

पररूपं स्वरूपेण यया संवृयते धिया।
एकार्थप्रतिभासिन्या भावानाश्रित्य भेदिनः॥
तया संवृतनानार्थाः संवृत्या भेदिनः स्वयम्।
अभेदिन इवाभान्ति भावा रूपेण केनचित्॥ इति।

(३) संभेदोऽभेदः। आकारो धर्मी तद्धर्मो वा? आद्ये पिण्डानामित्यादि, द्वितीयं शङ्कने तद्धर्माणामिति दीधितव्याख्यानम्। मिश्रास्तु स इति। सम्भेद इत्यर्थः। पिण्डानां वास्तवमेकत्वमाभिमानिकं वा, आद्य आह पिण्डानामिति। एवं च सम्भिन्नाकारा इत्यत्राकारपदेन धर्मिणो तद्धर्मस्य वाऽभेदो विवक्षितः, धर्मिपक्षेऽपि संभेदो वास्तवोऽवास्तवो वेति पक्षद्वयखण्डनं प्रथनादित्यन्तग्रन्थेन प्रदर्शितम्।

(४) तत्रापि गोव्यवहाराभावप्रसक्त इति शेषः।

(५) गोत्वावच्छिन्नप्रतियोगिकान्योन्याभाववान् गौस्तदन्यश्च गौरित्यर्थस्तथा च सिद्धं गोत्वमिति भावः।

भावात् । स हि न वास्तवः, पिण्डानां विरुद्धधर्माध्यस्तत्वात् । नाभिमानिकः, शाबलेयादेर्भेदेनैव प्रथनात् । "तद्धर्माणां सम्भेदाभिमान इति चेत्" । न, धर्म्यतिरिक्तधर्मानभ्युपगमात् । अभ्युपगमे वा पर्यवसितं विवादेन ।

(१)"स्यादेतत् भिन्नानामेव स्वलक्षणानां समानाकारविकल्पजननसामर्थ्यमस्तु, तदपेक्षया च केचिद्गाव इति व्यपदिश्यन्ते केचिदगाव इति । तच्च सामर्थ्यं स्वकारणनियतत्वादपर्यनुयोज्यम् । अन्यथा सामान्येष्वपि सामान्यान्तरं कल्प्येत अनुगतव्यवहारानुरोधात्, तथा गोपिण्डेष्वपि गोत्वस्य, व्यवस्थित्यनुरोधात्, उभयमुखी चैवमनवस्था स्यादिति चेत्" ।

---

पर्यवसितं विवादेनेति । धर्मान्तरवद्गोत्वादेरपि स्वीकरणप्रसङ्गादिति भावः ।

कथं (२)तेषामेव सामर्थ्यमिति चेत्तत्राह तच्च सामर्थ्यमिति । (३)अन्यथेति । अनुगतव्यवहारानुरोधेन सामान्याङ्गीकरण इत्यर्थः । एवमाधेयसामान्यगोचरत्वादूर्ध्वमुखी अनवस्था, एवन्तदाधारगोचरत्वादधोमुखी चेत्याह(४) तथेति । गोत्वस्य तेष्वेव वृत्तेर्नान्येष्विति—एवंवृत्तिव्यवस्थानुरोधात्सामान्यान्तरं कल्प्येतेत्यर्थः । यदि तत्र सामर्थ्यमेव वृत्तिनियामकं तदेव तर्ह्यनुगतव्यवहारे-

---

(१) ननु पिण्डानामेवानुगताकारविकल्पजननसामर्थ्याङ्गीकारेण निर्वाहे किं सामान्यकल्पनयेत्याभिप्रायेण पुनः शङ्कते कीर्तिः स्यादेतदिति ।

(२) तेषां-स्वलक्षणानां पिण्डानाम् ।

(३) एतच्च नैयायिकेनापि स्वीकर्तव्यमित्याह कीर्तिरन्यथेति ।

(४) गोऽश्वमहिषादिवृत्तिगोत्वादिसामान्येष्विदं सामान्यमिदं सामान्यमित्यनुगतप्रत्ययात्तेष्वपि सामान्याङ्गीकारादूर्ध्वगामिन्यनवस्थैव, गोत्वं गोपिण्डेष्वेव नान्यत्रेति तद्वृत्तिनियामकाऽपरापरजातिस्वीकाराच्चाधोगामिन्यनवस्थेति भावः ।

(१)यद्येवं निमित्तान्तरमनपेक्ष्यैकव्यवहारोऽत्यन्तभिन्नैः, एवं भिन्नव्यवहार एवाभिन्नेनैकेन केनचित् किं न साध्यते, शक्तिस्वभावालम्बनस्योभयत्रापि तुल्यत्वात्। "(२)अथैवंसत्येकव्यवहारः क्वचिदपि न स्यात्, निर्निमित्तो वा भवेत्, उभयमप्यनिष्टम्"। (३)तदेतत्तुल्यम्, अनेकव्यवहारोऽप्येवंसति न स्यात्, निर्निमित्तो वा भवेत्, उभयमप्यनिष्टम्। (४)तस्मादेकेनैकव्यवहारवदनेकेनाप्यनेकव्यवहार एवेति सामर्थ्यनियमः। (५)"का गतिस्तर्हि सामान्येष्वनेकेष्वेकव्यवहारस्य"। या चन्द्रमस्येकस्मिन्ननेकव्यवहारस्य। "भ्रान्तोऽसाविति

---

ऽपि निमित्तं स्यादिति भावः।

शक्तीति। शक्तिविशेषाद्वा अनेकैरेकव्यवहार इत्येवं शक्तिस्वभावावलम्बनस्यैकेनानेकताव्यवहारसिद्धावपि तुल्यत्वादिति। सामर्थ्यनियमः—एकानेकयोः न त्वनेकस्याप्यनेकव्यवहारेण सामर्थ्यमि-

---

(१) उक्तं सामर्थ्यं यदि तादृशनिखिलव्यक्तिनिष्ठमेकं तर्हि किमपराद्धं प्रत्यक्षसिद्धेन गोत्वादिना, अथ प्रतिव्यक्तिभिन्नं न तर्हि तस्यानुगतविकल्पोत्पादनियामकत्वं मिथो व्यभिचारादित्याशयेन निराकरोति यद्येवमिति। यथात्यन्तभिन्नानामभेदव्यवहारहेतुत्वं तथाऽभिन्नानां भेदव्यवहारहेतुत्वमेव किं न स्यात्तथाचैकैकोऽपि गोपिण्डो भेदेनैव व्यवहर्तव्य इत्युत्तराभिप्रायः।

(२) एकेनानेकव्यवहारस्यानुपपत्तावनेकैरेकव्यवहारोऽपि न स्यादित्यभिप्रायेणाशङ्कतेऽथैवमिति।

(३) समाधत्ते तदेतदिति। तुल्यतामेव विशदयति अनेकेति।

(४) उपसंहरति तस्मादिति। एकेनैव गोत्वादिसामान्येन गवादिपिण्डानामनुगतव्यवहार इत्युपसंहारार्थः।

(५) शङ्कते केति। यद्येकेनवैकव्यवहार इति शेषः। समाधत्ते येति। चन्द्रद्वयव्यवहारवत्सामान्येऽप्येकव्यवहारो भ्रान्त एवेत्यर्थः।

चेत्" । अयमपि भ्रान्त एव, बाधकस्योभयत्रापि तुल्यत्वात् । "सर्वत्र भ्रान्तोऽस्त्विति चेत्" । (१)भेदव्यवहारोऽपि तथा किं न स्यात् । "(२)अर्थक्रियाभेदास्थितेरिति चेत्" । व्यक्तिभेदाभेदव्यवस्थापकार्थक्रियाभेदाभेदवत् सजातीयासजातीयत्वव्यवस्थापकार्थक्रियासाजात्यवैजात्ये (अपि) किं न पश्यसि । "ते अपि भ्रान्ते इति चेत्" । अर्थक्रियाभेदोऽपि भ्रान्त इति तुल्यम् । (३)"अस्त्वेवमिति चेत्" । त्यज तर्हि बाह्यव्यसनम् ।

ति(४) । उभयत्रेति । चन्द्रमसो द्वित्वे प्रसिद्धं बाधकम्, सामान्येष्वपि सामान्याङ्गीकारेऽनवस्था बाधिकेति । सर्वत्रेति । व्यक्तिष्वपीत्यर्थः । अर्थक्रियासाजात्येति । सजातीयस्य ×××××दकारणादिजातीयार्थक्रियावेकजातीयस्याजा ××××× दनादिजातीयेति । (५) ते अपीति । अर्थक्रियाजातेरनभ्युपगमादिति भावः । (६)अर्थक्रियाभेदोऽपीति । बाधकमन्तरेणापि भ्रान्तत्वेऽर्थक्रियाभेदस्यापि भ्रान्तत्वप्रसङ्गादिति । (७) त्यजेति । अर्थक्रियाभेदस्यापि भ्रान्तत्वे

(१) वेदान्तिमतमालम्ब्याशङ्कयति भेदेति ।

(२) अर्थक्रियाभेदाद्व्यक्तिभेद इत्याशयेनाशङ्कतेऽर्थक्रियेति । अर्थक्रियासाजात्यवैजात्यनिबन्धने तर्हि व्यक्तीनामपि साजात्यवैजात्येऽङ्गीकार्ये एवान्यथा तदाकस्मिकत्वापत्तिरित्यभिप्रायेण समाधत्ते व्यक्तीति ।

(३) व्यक्तिभेदोऽपि वाऽस्तु किं नश्छिन्नमित्याह पूर्वपक्षी अस्त्विति

(४) अत्र नत्वनेकस्याप्येकव्यवहारकरणे सामर्थ्यमिति पाठो युक्तः प्रतिभाति ।

(५) ×× एतच्चिह्नान्तर्गतः पाठो बहुधा भ्रष्ट इति सङ्गमयितुमशक्यः सुधीभिः स्वयं योजनीयः । ते-अर्थक्रियासाजात्यवैजात्ये ।

(६) तर्हि व्यक्तिभेदकोऽर्थक्रियाभेदोऽपि भ्रान्त एवेति व्यक्तिभेदोऽपि न स्यादिति जितं वेदान्तिभिरित्याशयेन समाधत्तेऽर्थक्रियाभेदोऽपीति ।

(७) तर्हि चिद्रूपं ब्रह्मैवैकमस्तु किं बाह्येनेत्याह त्यजेति मिश्राः ।

(१)"अयमेवाशय इति चेत्" । तत्र वक्ष्यामः ।

(२)मा भूद्वाऽर्थक्रियासाजात्यम्, भ्रान्त्यनुगमोऽप्येकं निमित्तमनादृत्य कथम्, तदपि हि कार्यसाजात्यं साम·

सामान्यवद्विशेषस्याप्यभावाद्वाह्यमेव न स्यादित्यर्थः । वक्ष्याम इति । द्वितीये भङ्गे बाह्यार्थसिद्धिं वक्ष्याम इति । आधारगोचराव्यनवस्था शक्तिस्वभावावलम्बनेन परिहर्तुं शक्यते, एकबुद्धिविषयत्वं ह्यनेकस्य विरुद्ध्यते, अन्याकारज्ञानस्यान्याविषयत्वे भ्रान्तत्वप्रसङ्गादेकाधारत्वं त्वने· कस्य विरुद्ध्यत इति भावः ।

मा भूद्वेति । मामूद्वाऽर्थक्रियासाजात्यम्, अत एव च मा नाभू· दनुगमव्यवहारस्याभ्रान्तत्वमित्यर्थः । भ्रान्त्यनुगमः(३) अनेकेषु पिण्डेषु अयमपि गौरयमपि गौरित्येकरूपानुगम इत्यर्थः । कार्यसाजात्यमि· ति । यद्यप्यस्य भ्रान्तत्वे प्रामाण्यासम्भवान्न स्वविषयतया एकव्यवस्था· पकत्वन्तथापि तदेकरूपं कार्यं स्वकारणतयैकं व्यवस्थापयति, यथा सा· मान्येष्वनुगतव्यवहारस्य भ्रान्तस्याप्येकसामान्यशब्दप्रयोगादि ( तिनित्य· त्वमि ) त्यर्थः । ये तु सामान्यमिच्छन्त एव भिन्नजातीयैरपि तृणारणि· मणिभिरेकजातीयाग्न्युत्पत्तिदर्शनात् सामान्येषु भ्रान्तिरूपस्यैकानिमित्तत्वं

(१) वेदान्तिमतेन पूर्वपक्ष्याहायमेवेति । बौद्धमतखण्डनान्ते तन्मतं विचारयिष्याम इत्याह तत्रेति ।

(२) अर्थक्रियासाजात्यस्य जातिरूपानुगतबुद्धिरूपकारणसा· जात्योन्नायकत्वानङ्गीकारेऽपि कस्यचिज्ज्ञानस्य भ्रान्तत्वं कस्यचिद· भ्रान्तत्वमिति व्यवस्था कारणसाजात्यनिबन्धनैवाङ्गीकार्याऽन्यथा सर्वं भ्रान्तमभ्रान्तमेव वा स्यादित्यभिप्रायवानाह सिद्धान्ती मा भूद्वेति । तदपि=भ्रान्तत्वमपि ।

(३) भ्रान्त्यनुगम इति । सर्वधीभ्रमत्ववादिनो भ्रान्तित्वमप्येकं वस्तु न सिद्ध्येत्, तत्राप्यनुगतमतेर्भ्रमत्वात् यदि सामग्रीसाजात्यं ना· द्रियेतेत्यर्थ इति भगीरथठक्कुरः ।

ग्रीसाजात्यमन्तरेणाकस्मिकमापद्येत, (१)अन्यथा तत्प-रम्परालम्बनमपि विडम्बनमेव। भिन्नैस्तैस्तैरनुगतव्य-वहारासिद्धौ व्यक्तिभिरेव तथाभूताभिरभिमतसिद्धेस्त-दनुसरणप्रयासवैफल्यात्(२), (३)तस्मादारोपव्यवहार-स्याप्यनारोपितजात्यनादरे असम्भव एवेति ।

---

नेच्छन्ति तान्प्रत्याहान्यथेति(४)। सामग्रीसाजात्यमन्तरेणैव सामा-न्येष्वनुगतव्यवहारस्य एकरूपस्य कार्यस्याभ्युपगमे कार्यैकजात्यस्य कार-णैकजात्यं निमित्तं तस्यापि तत्कारणैकजात्यं निमित्तमिति कारणजा-तिपरम्पराश्रयणं नोपपद्येत, ततश्च जातिरेवोच्छिद्येतेति भावः। ननु कार्यैकजातीयत्वेन न कारणेषु जातिसिद्धिः किन्तु कार्येषु कारणव्यवहा-रादेव जातिसिद्धिरिति चेत्तत्राह भिन्नैरिति। भिन्नैरेव सामान्यैस्तेष्व-भेदव्यवहारसिद्ध्यभ्युपगमाद्भिन्नाभिरेव व्यक्तिभिस्तास्वनुगतव्यवहारस्या-मतस्य सिद्धेः तद्घटत्वादिसामान्यानुपपत्तेरिति, ताणाद्यामिष्वपि याव-त्कारणभेदं जातिभेदोऽप्यस्तीति भावः। अनारोपितेति। कारणभू-तारोपितजात्यनादर इत्यर्थः ।

---

(१) अनुगतधर्मानभ्युपगमे, तत्परम्परालम्बनं–भ्रमपरम्पराल-म्बनम्, परम्परया सामान्येऽपि सामान्यान्तरं व्यक्तिरूपमनुगतव्यव-हारहेतुरालम्बनमिति यदुच्यते तद्विडम्बनमेव निमित्तान्यथोपपत्तेः स्वयमभ्युपगमादिति भगीरथठक्कुरः ।

एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी ।
एकधीहेतुभावेन व्यक्तीनामप्यनेकता ॥

इत्यत्र प्रत्यवमर्शस्य प्रतिसन्धानस्यैकत्वभ्रमादनुगतप्रत्ययानामेक-त्वभ्रमाच्च व्यक्तीनामेकत्वभ्रम इति या भ्रमपरम्परा बौद्धेनोक्ता सापि तव विडम्बनमेव धिक्कार एव भ्रमकारणस्याप्यनुगतस्य त्वयाऽन-ङ्गीकारादिति मिश्राः। (२) भ्रमपरम्परानुसरणप्रयासवैफल्यात् ।

(३) एकजातीयं वास्तवमनुसरणीयमेवेति उपसंहरति तस्मादिति

(४) ननु भ्रमत्वे सामग्रीसाजात्याप्रयोजकत्वेऽप्यनाकस्मिकत्वं स्यादित्यत आहान्यथेतीति मिश्राः ।

(१)"अस्तु तर्हि जात्यादौ बाधकादपोहसिद्धिरिति चेत्" । व्यवहारस्यानन्यथासिद्धौ क्व बाधकम् । (२)अन्यथा विपक्षे बलवद्बाधकमुपनीयानन्यथासिद्धिविश्रान्तोऽपि स्वभावहेतुर्बाधकशङ्कयाप्युपहन्येत । ततो बाधकव्यसनमपहायानुगतव्यवहृतिरन्यथाप्युपपाद्यताम्, (३)नचैतच्छक्यम् गत्यन्तराभावात् । न च बाधकमस्ति, तद्धि स्वरूपतो वा स्यात्, ज्ञानतो वा स्यात् । स्वरूपतोऽप्यनुलम्भो वा विरुद्धधर्माध्यासो वा ।' न

जात्यावित्यादिशब्देन जात्याधारोऽवयवी गृह्यते, आधारासम्भवादपि जात्यसम्भव इति प्रतिपादनार्थं तत्रापि बाधकोपन्यासः । बाधकञ्चाग्रे दर्शयिष्यते इति । अपोहसिद्धिः—विकल्पानालम्बनत्वेनापोहसिद्धिरित्यर्थः । व्यवहारस्येति । प्रतीतिप्रयोगरूपानुगतव्यवहारस्येति । तदुक्तम्—

प्रत्यक्षबलसिद्धस्य सामान्यस्य कुतर्कतः ।
न शक्योऽपह्नवः कर्तुं सर्वं विजयते हि तत्(४) ॥ इति ।

अन्यथेति । अनन्यथासिद्धस्यापि प्रत्यक्षस्य यदि बाधकशङ्कयाऽपह्नवः स्यात्स्वभावानुमानस्याप्येवं स्यादिति । स्वरूपतो वेति ।

(१) वक्ष्यमाणबाधकसद्भावादपोहसिद्धिः स्यादित्यभिप्रायेणाशङ्कतेऽस्तु तर्हीति । अनुगतव्यवहारस्यानन्यथासिद्धत्वादेव न बाधकमित्याशयेन समाधत्ते व्यवहारस्येति ।

(२) अन्यथा सुदृढनिरूपितोऽप्यर्थो बाध्यः स्यादित्याहान्यथेति मिश्राः । नापि बाधशङ्का, तस्या एव विपक्षबाधकत्वादन्यथा तव स्वदर्शनव्याघात इत्याहान्यथेति । यदि विपक्षबाधकसद्भावेऽपि शङ्केत्यर्थ इति भगीरथठक्कुरः । स्वभावहेतुः प्रसङ्गमिश्रो हेतुरिति मिश्राः । अनुभावको हेतुरिति शिरोमणिः । उपहन्येत—आभासः स्यात् ।

(३) एतत्—अनुगतव्यवहारान्यथोपपादनम्, न शक्यम् अन्यापोहादेरयं गौरित्यादिनाऽनुगतव्यवहारानुपपत्तेः प्रदर्शितत्वादिति भावः ।

(४) प्रत्यक्षं सर्वप्रमाणेभ्यो बलवदित्यर्थः ।

प्रथमः, असिद्धेः। (१)स्फुरत एव हि साधारणाकारस्य शरीरं चिन्तयितुमारब्धम् , नास्फुरतः।

(२)"अध्यक्षे साधारणस्फुरणं व्यासेधामो न तु विकल्पे, तस्य समानशब्दसङ्केतग्रहतिमिरनिकुरम्बकरम्बितदृष्टिभिरेवोत्पादनात् , न त्वस्माभिः, कल्पनाकोषस्यानन्तप्रसवतया तत्त्वाव्यवस्थापकत्वात् इति चेत्"। (३)न, शब्दानुसन्धानविरहेऽपि जायमानत्वात्। (४)"तथापि तद्वासनात एवेति चेत्" किमेकसङ्केतविषयाभावेऽपि समानशब्दसङ्केतग्रहवासनावशादेकाकारप-

---

साक्षाज्जातिस्वरूपस्य वा बाधकं ज्ञानबाधद्वारेण वेत्यर्थः(५)। शरीरमिति। भावात्मकमभावात्मकं वेति।

अस्तु विकल्पेऽपि तावत्स्फुरणमिति चेत्तत्राह तस्येति। किमिति भाववद्भिन्नोपादानमिति(?)(६) चेत्तत्राह कल्पनेति। एकाकारपरा

---

(१) उपलम्भस्य साधितत्वात्स्वरूपतोऽनुपलम्भोऽसिद्ध इत्यर्थः। एतदेवाह स्फुरत एवेत्यादिना नास्फुरत इत्यन्तेन।

(२) निर्विकल्पकमात्रस्य प्रमाणत्वेन तत्र समानशब्दसङ्केतग्रहादेरसम्भवात् न जातौ प्रमाणविषयता किन्तु विकल्पे एव गवादिपदसङ्केतग्रहाधीना नामजात्यादियोजना, सा चावास्तवीति कुतो स्फुरणस्य सम्भव इत्याभिप्रायेणाशङ्कते अध्यक्ष इति। समानेति। समानशब्दसङ्केतग्रह एव तिमिरनिकुरम्बन्तेन कलुषितदृष्टिभिर्नैयायिकैरेव विकल्पस्योत्पादनान्न त्वस्माभिस्तत्त्वमात्रदृष्टिभिरित्यर्थः।

(३) अगृहीतसङ्केतानामपि नामजात्यादिस्फुरणान्न पूर्वपक्ष्युक्तं युक्तमिति समाधत्ते नेति।

(४) शब्दानुसन्धानाभावेऽपि प्राक्तनी तद्वासना तत्र हेतुर्भविष्यतीत्यभिप्रायेणाक्षिपति तथापीति। समाधातुं विकल्पयति किमिति। सोऽपि सङ्केतग्रह एकं जात्यादिनिमित्तं तिरस्कृत्य पुरस्कृत्य वेति विकल्पार्थः।

(५) स्वरूपतः जातिस्वरूपे साक्षात्, ज्ञानतः जातिविषयकज्ञानस्वरूपतदेकत्वादिनिरासद्वारा इति दीधितिः।

(६) अत्रापि कश्चित्पाठो पतित इति प्रतिभाति।

रामर्शस्तत्सद्भावे वा। न तावदाद्यः, नानासास्नादिमद्व्यक्तिवत् स्वर्गलोचनबाणाम्बुकुलिशादिष्वपि गोशब्दग्रहसङ्केतग्रहवासनावशात्तथाविधप्रत्ययानुगमप्रसङ्गात्। "इष्ट एवासा(१)वर्थ इति चेत्"। (२)सोऽयं सास्नादिमतीषु व्यक्तिषु साधारणं रूपं न पश्यति, पश्यति तु गोशब्दवाच्येषु दशसु, इति किमत्र वक्तव्यं नूनं रुचिरेवास्य लोचनमिति।

(३)"शक्यमिदमितरेणापि वक्तुमिति चेत्"। शक्यम्, न तु व्यवहारस्तन्मूलो विपर्य्यासयितुम्।

र्श इति। एकाकारशब्दमन्तरेणानेकव्यक्तिनिष्ठतयैकस्याकारस्यावमर्श इत्यर्थः(४)। तथाविधप्रत्ययानुगमप्रसङ्गादिति(५)। लोचनम्—दर्शनोपायः(६)।

शक्यमिदमिति। सास्नादिमतीष्वेकाकारदर्शनस्य रुचिरेव लोचनमिति (७)शक्यमिति। तन्मूलः—एकाकारदर्शनमूलः।

---

(१) अनुगतप्रत्ययः।

(२) समाधत्ते सोऽयमिति। गोशब्दवाच्यासु स्वर्गाद्यनेकव्यक्तिषु विजातीयासु अनुगतधर्मनिमित्तमङ्गीकुर्वाणोऽप्येकजातीयासु गोव्यक्तिषु तत्पदवाच्यासु तत्र स्वीकरोतीति इच्छामात्रं बौद्धस्य न तु प्रमाणानुरोधः कश्चिदिति उत्तरार्थः।

(३) गोशब्दाभिधेयेषु साधारणं रूपं न पश्यति पश्यति तु सास्नादिमतीति बौद्धेनापि वक्तुं शक्यमित्याक्षेपार्थः। समाधत्ते शक्यमिति। वाङ्मात्रं शक्यं न वास्तविको व्यवहारोऽपलपितुं शक्य इति समाधानार्थः।

(४) इति प्रथमविकल्पार्थ इत्यर्थः।

(५) स्वर्गादिष्वपि गौर्गौरिति अनुगतव्यवहारप्रसङ्गादित्यर्थः।

(६) चक्षुरिन्द्रियमित्यर्थः।

(७) दर्शनोपाय इति वक्तुं शक्यं इत्यर्थः।

(१)"नन्वेतावतापि विकल्पः सिद्ध्यतु, अनुभवस्तु कथम्" । सवस्तुकविकल्पसिद्धेरेव । "कथं तस्य सवस्तुकतेति चेत्" । (२)शब्दवासनादिकारणान्तरविध्वंसादिति तूष्णीम्भव । (३)"अन्तराले किमिति नोपलभ्यत इति चेत्" । उपलब्धिकारणाभावात् । "पिण्ड एव कुण्डे

---

एतावतापि—व्यवहाराविपर्यासेनापि । अनुभवस्तु कथमिति । अतोऽनुभवाभावात् प्रत्यक्षानुपलब्धिः(४) सिद्धैवेति भावः । सवस्तुकेति । सवस्तुको हि विकल्पो निर्विकल्पकपूर्वक एवेति(५) । शब्दवासनेति । शब्दकारणत्वं वासनाकारणत्वं च निरस्तम् । आदिशब्दोपात्तं लिङ्गकारणत्वं शब्दकारणव्युदासेनैव लिङ्गानुसन्धानाभावेऽपि जायमानत्वान्निरस्तम् । अतो इन्द्रिये सम्बन्धकारणत्वेन सवस्तुकत्वं सिद्धमिति । अन्तराल इति । सती चेत्सर्वदा जातिः पिण्डद्वयान्तराले किमिति नोपलभ्यत इत्यर्थः । उपलब्धीति । पिण्डाख्योपलब्धिकारणाभावादिति । पिण्ड एवेति । (६)पिण्ड एवोपलभ्यमानोऽपि कुण्डाश्रितबदरवत्तदाश्रिता इह पिण्डे

---

(१) शङ्कते नन्विति । सविकल्पके जातेर्भानेऽपि अनुभवेन तस्या अविषयीकरणात् कथं सा प्रामाणिकीति शङ्काकर्तुराशयः । समाधत्ते सवस्तुकेति । विकल्पविषयस्य बाधकमन्तरेणानुभवविषयत्वस्वाभाव्याज्जातिविषयकानुभवसिद्धिरिति उत्तराशयो द्रष्टव्यः ।

(२) विकल्पस्य सवस्तुकत्वे किं प्रमाणमित्याशंक्य समाधत्ते शब्देति । पूर्वं शब्दवासनादिकारणनिषेधात् गौरयमित्यादिविकल्पानामर्थसमुत्थत्वस्यावश्यकत्वेन गोत्वादिकमपि वस्तुभूतमेवेति समाधानार्थः ।

(३) आक्षिपति अन्तराले इति । पिण्डयोरन्तरालेऽनुपलम्भरूपबाधकसत्त्वात्कथं जातिसिद्धिरित्याक्षेपार्थः ।

(४) जातिविषयिणीत्यादिः ।

(५) निर्विकल्पविषयत्वाज्जातिविषयविकल्पस्य प्रामाण्यमिति भावः ।

(६) तर्हि पिण्डेऽपि विवेकेनोपलभ्यताम्, अनुपलम्भान्नास्तीत्याह पिण्ड एवेति ।

**बदरवत् कुतो नोपलभ्यत इति चेत्"। अनन्यदेशत्वा-त्। भेदेन तूपलभ्यत एव, पिण्डान्तरासंसर्गिणि पि-ण्डेऽनुभूयमाने तत्संसर्गितयाऽनुभवात्।**

**नापि द्वितीयं बाधकम्, अवयविसमानयोगक्षेमत्वा-त्(१)। (२)"जायमानपिण्डसम्बन्धानुपपत्तिरप्रतिसङ्क्र-**

गोत्वमिति किमिति नोपलभ्यत इति। (३)**अनन्यदेशत्वादिति**। बदरस्येव कुण्डात्पिण्डान्नान्यो गोत्वस्य समाधिरूपो देशः समवायादिश्च तत्समवेतानासमानाधिकरणाबुद्धिरेवादृष्टारूपादिति(?)। तथापि भेदेनो-पलम्भः किमिति न स्यात्, न स्याच्चेत्तत्राह **भेदेनेति**। पिण्डान्तरा-संसर्गितयाऽनुभूयमानस्य पूर्वपिण्डाद्भेदोपलम्भः सिद्ध इति।

(तत्सद्भावेऽपि चेत्येतन्निराकरोति **नापि द्वितीयमिति**)(४)। विरुद्धधर्माध्यासो वेत्यतन्निराकरोति नापि द्वितीयं **बाधकमिति**। अव-यविबाधकपञ्चकपरिहारो दर्शयिष्यमाणोऽस्यापि तुल्यः, तद्देशत्वान्निरोधे तावद्यथा सामान्यमेकव्यक्तिप्रवृत्तिं परिच्छिन्दत् प्रत्यक्षं व्यक्त्यन्तरवृत्तिं व्यवच्छिनत्तीति। जातेरसाधारणं विरुद्धधर्माध्यासं शङ्कते **जायमा-नेति**। अप्रातिसंक्रमात् अमूर्त्तत्वेन जातात् पिण्डाज्जायमानं प्रत्यसं-

(१) अवयविनि कार्त्स्न्यैकदेशादिविरुद्धधर्माध्यासनिरासवदि-दमपि निरसनीयम्, न कार्त्स्न्येन जातिर्वर्त्तते नैकदेशेन वा किन्तु स्वरूपेणेत्यर्थः।

(२) शङ्कते जायमानेति। जायमानपिण्डसम्बन्धो जातेः प्रका-रत्रयेण तावत् सम्भवति पिण्डान्तराद्गोत्वस्य गमनात्पूर्वमेव तत्र स-त्त्वात्तेन सहोत्पद्यमानत्वाद्वा, तदेवं प्रकारत्रयेणापि जातौ गमनादेर-सम्भवात्सम्बन्धोऽसम्भवीति शङ्कार्थः। समाधत्ते कथमिति। पिण्डे गोत्वस्य सत्त्वात्सम्बन्धो नानुपपन्न इत्यर्थः।

(३) विवेकेनोपलम्भो यदि पिण्डभिन्नदेश उपलम्भस्तत्राहानन्य-देशत्वादिति। बदरस्य कुण्डेतरस्वावयवदेशत्ववज्जातेः पिण्डेतरादे-शत्वान्नोपलब्धिरिति भावः।

(४) एतत्प्रतीकावतारणपरोऽयं पाठोऽन्यतः कुतश्चिदागत्य पतितः।

मा(१)त्त्रासत्त्वादनुत्पादाच्चेति चेत्"। कथं पुनस्तत्रास-त्त्वं त्वया व्यज्ञायि। "(२)तत्र सत्त्वे तत्रत्याकाशादेरपि गोत्वप्रसङ्गादिति चेत्"। न चैतत्पश्चादपि तत्रत्याका-शादिना सम्बद्ध्यते, येन च पिण्डेन सम्बद्ध्यते न तत्र कदापि तन्नास्ति, तत्कुतो विरोधः। अथ पिण्डम-

---

क्रमात्, अनुपलब्धेन जन्मना प्रोक्त ( तत्रा ? ) सत्त्वादपसिद्धान्तत्वेन, पिण्डजन्मकालेऽनुत्पादाच्च तत्रासद्भावः, अथ च सम्बन्धसद्भावोऽभ्युप-गन्तव्य इति विरुद्धधर्माध्यास इति भावः। तदुक्तम्—

न याति न च तत्रासीदस्ति पश्चान्न चांशवत्।
जहाति पूर्वमाधारमहो व्यसनसन्ततिः॥ इति॥

नैतत्पश्चादपीति। अयमर्थः—गोत्वेन सह समवायाख्यसम्ब-न्धवानेव गौः स्यान्न तस्य तत्र सद्भावमात्रेण, समवायसम्बन्धश्च गोत्वेन सहाकाशादेर्न केवलं पिण्डोत्पत्तेः पूर्वमेव नास्ति किन्तु पश्चादपि, अतो नाकाशादेर्गोत्वप्रसङ्गः। नापि तत्र सत्त्वासत्त्वविरोधः, नित्यं सत्त्वात्। नापि सम्बन्धासम्बन्धविरोधः, नित्यासम्बन्धात्। येन च पिण्डेन गो-त्वस्य समवायसम्बन्धः तत्रापि सम्बन्धविरोधः, नित्यसम्बन्धादित्याह येनेति। (३)अथेति। न देशमात्रे विरोधः नापि पिण्डमात्रे किन्तु

---

इति प्रतिभाति कुत्रापि मूलपुस्तकेऽस्य नापीत्यादेः पाठस्यानुपलम्भा-दिति ध्येयम्। (१) असंक्रमादिति। अमूर्तत्वेन जायमानं पिण्डं प्रत्यगमना दित्यन्वयः।

( २ ) पुनः शङ्कते तत्रेति। गोपिण्ड इवाकाशादावपि गोत्वानुभ-वव्यवहारप्रसङ्गादित्यर्थः। समाधत्ते न चैतदिति। समवायसम्बन्धस्य जातिवृत्तितानियामकत्वाद्यदि तेन सम्बन्धेनाकाशादौ गोत्वं स्यात्तदा पश्चादपि स्यान्न चैवमित्यर्थः। तर्हि पिण्डेनापि तत्र न सम्बध्येते-त्यत आह येनेति। तत्र जातः सम्बद्धश्चेत्येक एव काल इति पिण्डे न कदाचिदपि न तस्यासम्बन्ध इत्यर्थः। कुत इति। पिण्डोत्पत्तेः पूर्वमाकाशादौ गोत्वं नासीदुत्पन्ने च पिण्डे तत्र गोत्वमिति विरोधो न सम्भवतीत्यर्थः।

( ३ ) ननु पिण्डो निरूपकमात्रं न त तत्र गोत्वं समवैति अत्र—

न्तर्गतमुपादायोपलक्षणतया तत्रेति व्यवहारः, तदा त-दुपसर्पणापसर्पणोत्पत्तिविनाशैरेव तदुपपत्तौ 'न याती'त्यादिरपराद्धेषोरिव धानुष्कस्य कण्ठडम्बरः। तथा हि पिण्डमधिकृत्योपसर्पणाभावः, तदुपलक्षितं देशम-धिकृत्य च सत्त्वासत्त्वे सामान्यस्येति किं केन सङ्ग-तम् (१)।

"अथाप्यनुत्पन्ने पिण्डे तस्यासत्त्वं सुलभमेव तद्-

पिण्डदेशान्तर्गतमुपलक्षणतयोपादाय तदुपहिते सत्त्वासत्त्वविरोधव्यव-हार इत्यर्थः। तदाप्युपसर्पणादिभिरेव सत्त्वासत्त्वव्यवहारोपपत्तेर्न कश्चिद्वि-रोधः, एवञ्चापराद्धेषोर्धानुष्कस्यान्यदधिकृत्येषुप्रयोगोऽन्यच्चाधिकृत्य क्रि-याफलेन यादृशः कण्ठडम्बरः तादृश एव नयादित्यादिरित्याह तदेत-त्पिण्डमधिकृत्येति(२)। पिण्डात् पिण्डान्तरं नोपसर्पतीति उप-सर्पणाभावः पिण्डमधिकृत्योच्यत इत्यर्थः।

देशापेक्षया सामान्यस्य नित्यसत्त्वान्न सत्त्वासत्त्वविरोध इत्युक्तेऽपि पिण्डापेक्षया तयोः सम्भवेन विरोधं शङ्कते(३)अथाप्यनुत्पन्न इति।

---

तेन रूपेण निरूप्यमाणं गोत्वमाकाशादौ प्रागासीच्चेत्तदा गोव्यवहारः स्यादिति भ्रम इत्याहाथेति कल्पलता।

(१) पिण्डे चेन्नोपसर्पणापसर्पणे तदा तदुपलक्षिताकाशदेशे सामान्यस्य सत्त्वासत्त्वे स्यातामित्यसङ्गतमित्युत्तरार्थः।

(२) एवंसति पिण्डसत्त्वासत्त्वाधीनगोत्वसत्त्वासत्त्वव्यवहारव-द्गौरस्ति नास्ति जातो नष्टो गच्छतीत्यादिव्यवहाराणामपि पिण्डोपा-धिकत्वमेव, तथाचोत्पादविनाशप्रत्ययो गोत्वबाधकत्वेनाशङ्कितो न मनागपि पदमादधाति तेषां पिण्डोत्पादविनाशविषयत्वात्, एवं की-र्तिबौद्धस्य 'न याती'त्यादिविरोधोद्भावनस्य यद् लक्ष्यं गोत्वं तत्ततः प्रच्युतं व्यक्तौ पतितमित्यपराद्धेषुतेति उत्तरार्थ इति मिश्रादयः। अत्र नारायणमतेन 'तथाहि' इत्यत्र 'तदेतत्' इति पाठो द्रष्टव्यः।

(३) ननु सामान्यं स्वरूपतस्तद्देशादावस्तु तथापि यः पिण्ड उत्पन्न एव नास्ति तेन तत्सम्बन्धः कथं स्यात्, नहि सम्बन्ध्यभावेपि सम्बन्ध इति पूर्वपक्षिणो हृदयमाहाथापीति मिश्राः।

सत्त्वादिति हृदयम्" । (१)तन्न, स्वरूपसत्त्वासत्त्वयोर्द्वितीयानपेक्षणात्, सम्बद्धासम्बद्धत्वे तु द्वितीयापेक्षे, ततस्तत्रासति नास्तीति कोऽर्थः । "तेनासता न सम्बध्यत इति चेत्" । तथैवमेतत्(२) । "पश्चात्कथं सम्बध्यतामिति चेत्" । तस्य सत्त्वात्, असम्बद्धत्वस्य तदसत्त्वप्रयुक्तत्वात्(३) । ततः प्रागसन् पिण्डः पश्चात् कथमुपपद्यतामिति चोद्यनिष्ठा, सा च सत्कार्यवादमनुपतती(४)त्यभुक्तवान्तिः ।

ततश्च तस्मिन्नेव पिण्डे असत्त्वं तस्मिन्नेव च सत्त्वमिति विरोध इत्यभिप्रायः । द्वितीयानपेक्षणादिति । ततश्च पिण्डानुत्पत्तिदशायामपि स्वरूपसत्त्वान्नासत्त्वमित्यभिप्रायः । तथैवमेवेति । "ननु पिण्डानुत्पत्तौ सम्बन्धानुपपत्तिः, तदुत्पत्तौ तदुत्पत्तिरिति समवायाख्यसम्बन्धस्यानित्यत्वादपसिद्धान्तः ।" नैवम्, सर्वत्रैकस्य नित्यस्यैव समवायस्य पिण्डानुत्पत्तौ तत्पिण्डासत्त्वकृत एवेति(५) । ततः प्रागसम्बन्धसामर्थ्यादयं पश्चात् कथं सम्बध्यतामिति चोद्यस्य पिण्डासत्त्वपरिहारात्, प्रागसन् पिण्डः पश्चात्कथमुत्पद्यतामिति चोद्यमवशिष्यत इत्याह तत इति । अभुक्तेति । अन्यदुपक्रमादन्यस्येदानीमुक्तिरभुक्तोद्गार इति ।

---

(१) समाधत्ते तन्नेति । सामान्यं स्वरूपतः सर्वत्र देशे काले चास्तीत्युक्ते तत्कथमनुत्पन्नेन पिण्डेन सम्बध्यतामित्यपि किं केन सङ्गतमित्युत्तरार्थः । (२) असता सम्बन्धो न भवत्येवेत्युत्तरार्थः ।

(३) पिण्डासत्त्वप्रयुक्तत्वात् ।

(४) अभुक्तेति । सांख्यमतं त्वया न भुक्तं न पाचितमिदानीं तदेव वमसीत्यर्थः । देशे काले च सामान्यस्वरूपमस्ति, पिण्डोपगमापगमादिना च गौरस्ति गौर्नास्तीति व्यवहारः यथाऽविचलति चैत्रे दण्डोपगमापगमादिभ्यां दण्डी—चैत्रो नायं दण्डीति व्यवहार इति प्रयुक्तार्थं इति मिश्राः ।

(५) इदमत्र तात्पर्यम्, यद्यपि समवायो नित्यस्तथापि पिण्डानुत्पत्तिकाले पिण्डासत्त्वप्रयुक्तमेव तदसम्बद्धमिति ।

"(१)तथापि सामान्यतद्वतोरत्यन्तभेदे कथं सामानाधिकरण्यमिति चेत्"। (२)किमिदं समानेनाधिकरणेन हि सम्बन्धः सामानाधिकरण्यम्, तस्य च भेदेन को विरोध इति नाधिगच्छामः। "(३)गवाश्वयोरपि (४)तथाभावप्रसङ्ग इति चेत्"। ननु व्यतिरेकदृष्टान्तस्थानन्तत्, न तु विरोधस्थानम्, तच्च मैत्रतनयोऽपि

विरोधान्तरं शङ्कते तथापीति। व्यतिरेकेति। भेदे सत्यपि सामानाधिकरण्यव्यतिरेकस्य दृष्टान्तस्थानं तद्गवाश्वादि, न तु भेदेन सामानाधिकरण्यस्य विरोधस्थानम्, न ह्यविरुद्धयोरवश्यं व्यतिरेकेण भवितव्यं येन व्यभिचाराद्विरोधो भवेत्। व्यतिरेकदर्शनमेव तर्हि दोष इति चेत् तत्राह (५)तच्चेति। अयमर्थः—गर्भस्थो मैत्रतनयः श्यामः मैत्रतनयत्वात् जाततत्तनयवत् इत्युक्ते शाकाद्याहारपरिणतिप्रयुक्तत्वाच्छ्या-

---

(१) धर्मधर्मिणोरात्यन्तिकमभेदं निरस्य पाक्षिकन्तं निरसितुं भेदाभेदवादिमतमुत्थापयति तथापीति। सामान्यतद्वतोर्गवाश्वयोरिवात्यन्तभेदे कथं सामानाधिकण्यमित्यर्थः।

(२) अत्यन्तभेदेऽपि सामानाधिकरण्यं नानुपपन्नमित्याशयेनाहोत्तरपक्षी किमिदमिति।

(३) ननु भिन्नयोः सामानाधिकरण्याङ्गीकारे गवाश्वयोरपि तत्स्यादित्याशङ्कते गवाश्वयोरपीति।

(४) ययोर्भेदस्तयोरवश्यं सामानाधिकरण्यमिति न ब्रूमोऽपि तु क्वचिद्भेदे सति सामानाधिकरण्यन्तदभावश्च गवाश्वयोरिति व्यतिरेकदृष्टान्तस्थानं गवाश्वमित्यभिप्रायेणोत्तरयति नन्विति।

(५) व्यतिरेकदृष्टान्तस्थानं चेत्यर्थः, अस्य क नाम दुर्लभमित्यनेन सम्बन्धः, किन्तु सुलभमेवेत्यर्थः। सौलभ्यमेव दर्शयति मैत्रातनयोपीति। यथा मित्रातनयोः श्याम इति उत्सर्गो, न च तावता (श्यामत्वेन) निर्णीतो मित्रातनयः क्वचिदश्यामस्यापि तस्य दर्शनात्, श्यामत्वेन निर्णीतोऽपि मित्रातनयः स्यादश्यामः, तथा भेदे सति सामानाधिकरण्यमित्युक्ते असामानाधिकरण्येन निर्णीतयोरपि गवाश्वयोः सामानाधिकरण्यं (न) प्रसज्यत इत्यर्थ इति मिश्राः।

**यदि कश्चिदश्यामः स्यात् परिदृश्यमानानामपि तथा-भावप्रसङ्ग इतिवत् क नाम दुर्लभम् ।**

**"तथापि विशेषो वाच्य इति चेत्" । (१)अस्ति स्वाभाविको विशेषो यत् किञ्चिदेव केनचित्सम्बद्धं न सर्वं सर्वेणेति । (२)"तथाऽनुगमनियमोऽपि स्वभावादेव किं न स्यादिति चेत्"। (३)एकस्यानेकसम्बन्धेऽनेकस्य चैकसम्बन्धेऽविरोधात् एकानेकयोरनेकैकव्यवहाराविरोधादिति ।**

मतायास्तद्विरहे सति तत्तनयस्याश्यामताया न विरोध इत्युक्ते जातस्यापि शाकाहारपरिणीतशालिनस्तत्तनयस्याश्यामताप्रसङ्ग इत्येवंविधमुत्तरं सर्वत्र सुलभमिति ।

**विशेष इति** । भेदाविशेषे सास्नादिमत्स्वेव गोत्वं न केसरादिमत्सु इति नियामको विशेषो वाच्य इति(४) । (न)तथेति । यथैकनियामकमन्तरेण स्वभावादेवैकस्यानेकसम्बन्धस्तथैकव्यवहारोऽपि स्वभावादेवानेकैरेव किं न स्यादिति । एकस्यानेकसम्बन्ध इति भवति, न ह्येकस्यानेकनीलपीतादिसम्बन्धः, अनेकस्य च नीलपीतादेरेकेन सम्बन्धः । एकेति । एकस्यानेकव्यवहारविरोधो दृष्टान्तार्थः(५) ।

---

(१) भिन्नयोः क्वचित्सामानाधिकरण्यं क्वचिन्नेत्यत्र प्रतीतिसाक्षिकः स्वभाव एव नियामक इत्युत्तरार्थः ।

(२) तर्हि व्यक्तिविशेषानुगतमतिनियमोऽपि स्वभावादेवास्तु किं जात्येति शङ्कते तथेति ।

(३ यद्येको धर्मोऽनेकसम्बन्धी न भवति तदा तेनानुगतप्रतीतिर्न भवेत्, नचैवम्, यदि वाऽनेकेषां धर्मिणामेकधर्मसम्बन्धविरोधः स्यात्तदा तथा कल्प्येत न चात्र विरोध इत्यर्थः । एकानेकयोरिति । एकेन यथा नानेकव्यवहारः तथा पिण्डैरेकव्यवहारोऽपि न सम्भवतीत्यर्थ इति मिश्राः ।

(४) भिन्नयोः क्वचित्सामानाधिकरण्यं क्वचिन्नेत्यत्र विशेषो वाच्य इति मिश्राः ।

(५) एतन्मतेन 'चैकसम्बन्धेऽविरोधात्' इति पाठो द्रष्टव्यः,

(१)नापि ज्ञानतो बाधकम्, तत्स्वरूपप्रतिक्षेपस्यानुभवबाधितत्वात्।

(२)कारणप्रतिक्षेपस्य च जन्मनैवापास्तत्वात्। एकत्वप्रतिक्षेपस्य च विरुद्धधर्माध्यासविरहप्रतिहतत्वा-

नापीति। जातिज्ञानस्य हि (३)प्रत्यभिज्ञान(स्याऽव)तत्स्वरूपकारणैकत्वप्रामाण्येन्द्रियजत्वप्रतिक्षेपैर्बाधसम्भवः सर्वथापि नोपपद्यत इति भावः। अनुभवेति। ज्ञानानुभवबाधितत्वादित्यर्थः।

ननु सोऽयमित्यत्र स इति चायमिति च ज्ञानद्वयम्, कथमनेन पूर्वापरानुभव( विषय ? )स्यैकस्य वस्तुनः सिद्धिस्तत्राहैकत्वेति(४)। नन्वस्ति विरुद्धधर्माध्यासः सोऽयमित्यत्रापरोक्षपरोक्षरूपप्रतिभासत्वात्तत्राह

---

तथाचानेकस्यैकधर्मिरूपसम्बन्धाभाववदेकस्याऽनेकधर्मिरूपसम्बन्धोऽपि यथा नाङ्गीक्रियते, तथैकेनानेकव्यवहारवदनेकैः पिण्डैरेकव्यवहारोऽपि न युक्त इति नारायणमतं सुधीभिर्विभावनीयम्।

( १ ) नन्वनुगतधर्मज्ञानस्यानुपलम्भ एव जातौ बाधकः स्यादित्याशङ्क्याह नापीति। तद्बाधकं ज्ञानस्वरूपे तदेकत्वे वा, तदेवेदमिति–प्रत्यभिज्ञानतदिदन्तास्पदयोरेकधर्मगोचरं सामान्यं प्रमाणं तदा भवेद्यदि तदिदंग्राहिणी प्रत्यक्षस्मृत्यात्मके द्वे भिन्ने ज्ञाने न स्याताम्तथाच प्रत्यभिज्ञाख्यज्ञानैकत्वप्रतिक्षेपात्सामान्यबाधः। आद्यमपि ज्ञानस्यानुपलंभो वा, करणाभावो वा ? तत्राद्ये आह तत्स्वरूपेति दीधितिः।

( २ ) चरमे आह कारणेति दीधितिः। ज्ञानतो बाधकमिति कोऽर्थः। किं सामान्यविषयं ज्ञानमेव नास्ति, अकारणकं वा, नानाविषयकं वा, निर्विषयत्वेनाप्रमारूपं वा, अनिन्द्रियजं वा, असाक्षात्कारि वा ? तत्र नाद्य इत्याह तत्स्वरूपेति। द्वितीयं दूषयति कारणेति मिश्राः।

( ३ ) प्रत्यभिज्ञानादिप्रतिक्षेपैर्यथा जातिज्ञानस्य न बाधस्तथा स्वयमेव तत्स्वरूपेत्यादिनानुपदं व्याख्यास्यते।

( ४ ) द्वितीये आह एकत्वेति दीधितिः। तृतीये त्वाह एकत्वेति मिश्राः।

त्, पारोक्ष्यापारोक्ष्यादेरसिद्धेः । (१)विषयमप्रतिक्षिप्य तत्प्रामाण्यस्य प्रतिक्षेप्तुमशक्यत्वात्तदप्रतिक्षेपस्य च दर्शितत्वात् । (२)इन्द्रियजत्वप्रतिक्षेपस्य चेन्द्रियान्वयव्यतिरेकानुविधानबाधितत्वात्, (३)साक्षात्कारित्वविश्रान्ते च तदनुविधानस्याव्यभिचारात् ।

(४)अन्यथा निर्विकल्पकस्याप्यनिन्द्रियजत्वप्रसङ्गात्, कामातुरकामिनीज्ञानस्य तदन्तरेणाप्युपपत्तेः । बाधकाभावाच्च (५)दर्शनव्यापारोपाधिकत्वकल्पनानव-

(६)पारोक्ष्येति । असिद्धमेव नः परोक्षापरोक्षरूपप्रतिभासत्वम्—अपरोक्षप्रतिभासात्मकमेवेदं ज्ञानमिति । ननु इन्द्रियव्यतिरेकेऽपि जातिज्ञानं दृश्यते लिङ्गादिभ्योऽतः कथं तदनुविधानमत आह (७)साक्षात्कारित्वेति । साक्षात्कारिणो जातिज्ञानस्य तदनुविधानमस्त्येवेति ।

यदि च विषयविकल्पमात्रस्येन्द्रियव्यभिचारेण साक्षात्कारिणोऽपि तद्विकल्पस्येन्द्रियजत्वं प्रतिक्षिप्यते, तदाऽऽतुरस्य ध्यानजन्मनः कामिनीविषयस्य निर्विकल्पकस्येन्द्रियव्यभिचारेण घटादिनिर्विकल्पकस्याप्यतीन्द्रियजत्वप्रसङ्ग इत्याह अन्यथेति । नन्वसिद्धं जातिविकल्पस्य साक्षात्कारित्वं सर्वविकल्पानां निर्विकल्पोपाधित्वादपरोक्षतायास्तत्राह बाध-

(१) पञ्चमं दूषयति विषयमिति । विषयप्रतिक्षेपाधीनो हि प्रामाण्यप्रतिक्षेपः, स च प्रकृते नास्तीत्यर्थ इति मिश्राः ।

(२) षष्ठं दूषयति इन्द्रियजत्वेति ।

(३) सप्तमं दूषयति साक्षादिति । अयं गौरित्यादिविकल्पानां साक्षात्वमनुभवसिद्धमतोऽपि इन्द्रियजत्वमित्यर्थः ।

(४) इन्द्रियजत्वे साक्षात्वमात्रस्याप्रयोजकत्वे ।

(५) दर्शनं निर्विकल्पकम्, व्यापारो धर्मः, उपाधिरारोप्यः ।

(६) चतुर्थं दूषयति पारोक्ष्येति मिश्राः । विषये तावन्न पारोक्ष्यं नाप्यपारोक्ष्यं तदुभयस्य ज्ञानधर्मत्वात्तथाच जातिगोचरज्ञानमिन्द्रियजमपरोक्षमेवानिन्द्रियजन्तु परोक्षमिति नैतज्जातौ बाधकमित्यर्थः ।

(७) सप्तमं दूषयति साक्षादिति । अयं गौरित्यादिविकल्पानां सा-

काशात्(१), अवकाशे वा विपर्ययकल्पनाया अपि प्रसङ्गात्। (२)इन्द्रियमनपेक्ष्य साक्षात्कारिसमनन्तरप्रत्ययमहिममात्रेण साक्षात्कारिविकल्पोपपत्तौ तद्विपरीतानुत्पत्तिप्रसङ्गात्। प्रथममनुत्पत्तेः पूर्वस्मरणादिसहकारिवैधुर्यनिबन्धनत्वादित्येषा दिक्।

अस्तु तर्हि प्रयोजनानुरोधादपोहस्वीकारः, सर्वधर्मावाच्यत्वसिद्धिर्हि परमं प्रयोजनम्, कल्पनाजालवि-

---

केति। स्वाभाविकत्वे बाधकाभावात्तथात्वेन व्यवसायाच्च नौपाधिकत्वं युक्तमिति। विपर्ययेति। सविकल्पकोपाधिकनिर्विकल्पस्य साक्षात्कारित्वमिति विपर्ययकल्पनाप्रसङ्गादित्यर्थः। नन्वस्तु विकल्पस्यापि साक्षात्कारित्वं स्वाभाविकं तथापि न तस्येन्द्रियजत्वं सिद्ध्यति, तदापादनमात्रेणानुत्पादतो निर्विकल्पकोत्पत्तावेव इन्द्रियव्यापारे पर्यवसिते निर्विकल्पकाख्यसमनन्तरप्रत्ययादेव साक्षात्कारिविकल्पोत्पत्तिरित्यत आह साक्षात्कारीति। तद्विपरीतेति। साक्षात्कारिविपरीताऽसाक्षात्कारिविकल्पस्य कदाचिदप्यनुत्पादप्रसङ्गादिति। प्रथमानुत्पत्तेस्तर्हि किं निबन्धनन्तत्राह प्रथममिति। इन्द्रियसहकारिणः स्वशब्दस्मरणादेः पूर्वमभावात्प्रथमानुत्पत्तिरित्यर्थः।

अस्तु तर्हि—यदि न प्रमाणानुरोधादपोहवाच्यत्वं सिध्यति, तर्हि प्रयोजनानुरोधात्सिध्यत्विति। किं तत्प्रयोजनं तत्राह सर्वेति। अपोहस्यैव हि वाच्यत्वेनैव विषमलाभात्सर्वधर्माणां रूपरसादीनामवाच्यत्वं सिद्ध्यतीति। कथमस्याः प्रजोजनत्वं तत्राह कल्पनेति। अय-

---

क्षात्वमनुभवसिद्धमतोऽपीन्द्रियजत्वमित्यर्थ इति मिश्राः।

(१) सर्वविकल्पापरोक्षत्वे, निर्विकल्पकोपाधित्वकल्पनायाः बाधकाभावेन कल्पयितुमशक्यत्वादित्यर्थः।

(२) अथ समनन्तरप्रत्यय एव विकल्पजनको नेन्द्रियम्, स च साक्षात्कारी करणसारूप्याद्विकल्पोऽपि साक्षात्कारीत्यत्राहेन्द्रियमिति।

धूननेन(१)गम्भीरोदारसमाधिसमाधिगमात् इति चेत्"। निष्प्रमाणकमिदं(२) कः श्रद्दध्यात् । प्रमाणञ्चात्र न प्रत्यक्षानुमाने, आगमश्च न किञ्चिद्वदतीति त्वयैव ग्राहितः शिष्यः । (३)न चैवं चेतनो ग्राहयितुमपि शक्यते, स्ववाग्विरोधस्योद्भटत्वात् । तथाहि—

---

मर्थः—ज्ञानज्ञेयात्मकवस्तुविषयनिर्विकल्पकपारम्पर्यं हि समाधिः । वस्तुनश्च शब्दवाच्यत्वे समाधिस्थस्य वस्तुस्फुरणे सति सन्धानिशब्दे स्मृतिः स्यात् सा च विकल्पमुत्पादयेदिति नैरन्तर्यविच्छेदात्समाधिभ्रंशः स्यात् , अवाच्यत्वे तु विकल्पजालविधूननेन समाधिसमाधिगमः स्यात् , अस्य च गम्भीरत्वमञ्जसाकल्यवत्त्वं, तदुदारत्वं सर्वजनसमीहितापवर्गप्रदत्वम् , अतः सर्वजनसमीहितापवर्गप्रदसमाधिफलतया सर्वधर्मावाच्यत्वसिद्धिरपोहवाच्यत्वकल्पनायाः प्रयोजनमित्युक्तं भवतीति । आगम एवास्मिन्नर्थे प्रमाणमिति चेत्तत्राह **आगमश्चेति** । आगमस्तु न वक्तीति त्वयैव बोधितः शिष्यस्तत्कथं तस्य वस्तुनि प्रामाण्यमुच्यते इति भावः । **तथाहीति** । अक्षणिके वस्तुन्यप्रामाणिके

(१) प्रयोजनमेवाह कल्पनेति । यदि जात्यादिकं पारमार्थिकं न भवति तदा शब्दलैङ्गिकविकल्पाधीने प्रवृत्तिनिवृत्ती न भवतः, ततो बहिर्व्यापारादुपरतं मनो नैरात्म्यमात्रभावनपरं समाहितं भवति, व्याप्तिशक्तिग्रहावच्यपोहानुगमसाध्याविति भावः । गम्भीरत्वं—सवासनमिथ्याज्ञानोन्मूलनक्षमत्वम् , उदारत्वं—नैरात्म्यसाक्षात्कारप्रापकत्वम् इति मिश्राः ।

(२) सर्वधर्मावाच्यत्वसिद्धेरपोहस्वीकारस्य समाधिसमाधिगमकारणत्वमित्यर्थः ।

(३) त्वमिव तव शिष्योऽप्यचेतन एव येनैतादृशादुपदेशात्स प्रतीतो विरोधं स्फुटतरमवधीर्येत्याह नचैवमिति । सर्वधर्मावाच्यत्वेन वस्तुजातमित्यर्थः । आगमो न किञ्चिद्वक्तीति अयमप्यागम एव, तथाच स्ववाग्विरोध इत्यर्थः ।

(१)शब्दस्य काचिदपि वस्तुनि मानमिष्टा
बाधाविधिव्यवहृतिः किमिहास्ति नो वा ? ।
"अस्त्येव चेत्" कथमियन्ति न दूषणानि (२)
"नास्त्येव चेत्" स्ववचनप्रतिरोधसिद्धिः ॥
इति तवैव विषयसञ्चरणमात्रेण श्लोकः ।

---

(३)सत्त्वादेर्हेतोर्व्यतिरेकः प्रामाणिको न लभ्यते, (४)काल्पनिकाङ्गसाकल्ये तु काल्पनिकाङ्गवैकल्यमपि स्यात्, (५)तथा अवस्तुनि निषेधव्यवहारवद्विधिव्यवहारोऽपि स्यादिति बौद्धं प्रति सिद्धान्तिनोक्ते बौद्धेन स्ववाग्विरोधोऽनेन श्लोकेन दर्शितः—धर्मस्य कस्यचिदवस्तुनीत्यादिना । अस्य चायमर्थः—हेत्वादेर्धर्मस्यावस्तुनि निषेधव्यवहारस्य विधिव्यवहारस्य वा स्वीकारे त्वया मां प्रति यावन्ति दूषणान्युक्तानि तावन्ति भवतः कथं न स्युः । अवस्तुनि तौ व्यवहारौ न स्त इति स्वीकारे स्ववचनविरोधः, अस्यैव निषेधव्यवहारस्य स्वीकारादिति । एष एव श्लोको धर्मपदस्थाने शब्दपदम्, अवस्तुपदस्थाने वस्तुपदं प्रक्षिप्य पठनीय इति । तत्र च पक्षे समयाभाजनत्वादीनि दूषणानि ज्ञातव्यानि । ननु यद्वदेवं पृष्टेन भवता स्ववचनविरोधपरिहाराय मूकता

---

(१) विरोधान्तरमाह शब्दस्येति । शब्देन वस्तुनि बाधाविधिव्यवहारौ स्तो न वा ? अन्त्ये स्वलक्षणं न सङ्केतगोचरोऽननुगमात्, शाब्दज्ञानविषयः अभिलापसंसर्गयोग्यप्रतिभासत्वात्, अतद्व्यावृत्तिधर्मवत्तयापि स्वलक्षणं न वाच्यम् अलीकस्यालीकधर्मानाश्रयत्वादित्यादि दूषणानि त्वयोक्तानि त्वय्येव पर्यवसन्नानीत्यर्थः । नास्त्येवेति । वस्तु विधिबाधव्यवहाराविषयमिति वदता तु त्वयैव तद्रूपेण वस्तु व्यवहृतमिति स्ववचनविरोध एव सिद्ध इति भिन्नाः ।

( २ ) दृष्टान्तवैकल्यादीनि ।

( ३ ) बौद्धमतेन क्षणिकत्वसाधकस्येत्यादिः ।

( ४ ) अवास्तविकव्यतिरेकिदृष्टान्तसाकल्योपादाने इत्यर्थः ।

( ५ ) अङ्गवैकल्याङ्गीकारे को दोष इत्यत आह तथेति । अवस्तुनि-शशविषाणादौ ।

(१)न चास्माकमिव तवाप्यत्र मूकतैव शरणम्, सर्वथा वचनविरोधे ह्युदासीनस्य सा शोभते । न चात्र विधौ विरोधः कश्चित् । न च त्वमुदासीनः, प्रयोजने प्रवृत्तत्वात् । तस्मादलम(२)ङ्गुलिदीपिकया ध्वान्तध्वंसाविधिमनुष्ठायेति । आगमस्य तत्त्वार्थपरिस्पर्शित्वविरोधे(न) न स्वर्गापवर्गार्थिनां प्रवृत्तिः सिद्ध्यतीति प्रयोजनम-

---

समाश्रिता यथाऽस्माभिरप्याश्रीयतां को दोषस्तत्राह नचेति । वर्षथा पक्षद्वयेऽपि स्ववाग्विरोधे औदासीन्ये च मूकताऽङ्गीकर्तुं युज्यते, अस्माकं सर्वव्यवहाराभाजने अवस्तुनि व्यवहारोऽस्तीति पक्षे नास्तीति पक्षे च स्ववचनविरोधो भवति प्रयोजनाप्रवृत्तत्वेन चौदासीन्यम्, भवतस्तु नैवमतो न मूकतैव शरणमिति । विधाविति । वस्तुनः शब्दवाच्यत्वविरोधो न स्ववाग्विरोध इति । वस्तुसंस्पर्शी शब्द इत्यस्मद्विचारस्यैव प्रयोजनसिद्धिरित्याहागमस्येति । (३)विरोधेन—आगमप्रामाण्यवि-

---

( १ ) ननु मन्नाथायां यथा त्वया मूकताऽवलम्बिता तथा विषयसञ्चारेण पठ्यमानायामस्माकमपि मूकता शरणम् अन्यथा विरोध एव स्यादित्यत आह नचेति । त्वदुदाहृते सत्वक्षणिकत्वव्यतिरेकदृष्टान्तेऽस्माभिर्निषेधः क्रियते यदि, तदा स्ववचनविरोधान्मम यथा मूकतोचिता, तथा न भवतः कल्पनाजालविधूननस्य त्वयाऽवश्यनिर्वाह्यत्वात्तन्निर्वाहकप्रत्यक्षानुमानयोरभावाच्छब्द एव तन्निर्वाहको वाच्यो भवता, तत्र मत्पठितगाथायाः स्थापनावादिनाऽवश्यं किञ्चिद्वक्तव्यन्तथा च स्ववचनविरोधस्तव स्यादेवेति मिश्राणामाशयोऽत्र द्रष्टव्यः ।

( २ ) अङ्गुलिदीपिकयेति । स्ववाग्विरोधमुररीकृत्य कल्पनाजालविधूननरूपप्रयोजनेनापोहाभ्युपगमस्तवानुचित इत्यर्थः ।

( ३ ) अत्र मूले स्पर्शित्वविरोधेनेति तृतीयान्तपाठोऽपि कैश्चिद्धृतो युक्त एव भाति, नारायणमते तु व्याख्यानानुसारेणान्यो निषेधार्थको नकारो व्यऽपेक्षत इति द्रष्टव्यम् ।

स्मद्विचारस्यैव परं सुन्दरम् । (१)तस्माच्छब्दैः किं वाच्यमित्यनुयोगे किं प्रतिभासादथाध्यवसायात् यद्वा तत्त्वत इति विकल्पस्थोऽन्यापोढाकारोऽन्यापोढस्वलक्षणं न किञ्चिदिति क्रमेण यत् प्रत्युक्तम् ।

(२)तत्र प्रथमे समयाविपर्यासः, विकल्पाकारस्य समयाविषयत्वात् । (३)द्वितीये तु प्रवृत्तिविपर्यासः, अदृष्टे नियामकाभावात् । तृतीये स्ववाग्विरोधः, अस्यैवार्थस्यानेन तत्त्वतावचनात् । (४)अवचने वा तत्त्वतोऽनुत्त-

रोधेनेति । अवान्तरप्रकरणार्थमुपसंहरति **तस्मादिति** । अनुयोगे शिष्येणेति शेषः । किं प्रतीयते इत्यादित्रिषु विकल्पेषु शब्दैरित्यनुवर्तते । यद्वा तत्त्वतः वाच्यमित्यनुषङ्गः । **विकल्पस्थ इति** । अन्यापोहो विकल्पाकार इत्यर्थः । एवं परोक्तमुपन्यस्य दूषयति **तत्रेति** । **समयाविपर्यासः**—समयाभास इत्यर्थः । विकल्पाकारस्य क्षणिकस्य समयाविषयत्वात् इति । **अदृष्ट इति** । अप्रतीते प्रवृत्तौ कुत्रचिदेव प्रवृत्तिः न सर्वत्रेति नियामकाभावादिति । **अस्यैवार्थस्य**——न किञ्चिदित्यस्यै-

(१) तस्मादिति । शब्दैः किं वाच्यमिति नैयायिकैः प्रश्ने कृते ज्ञानश्रिया विकल्पस्य यदुत्तरं दत्तं तदपि न सम्यगित्यर्थः । तद्विकल्पस्त्वेवं बोध्यः-शब्दैः किं वाच्यमित्यस्य कुत्र प्रतिभासो जन्यत इति प्रश्नार्थेऽन्यापोढाकारे प्रतिभासो जायते इत्युत्तरम्, कुत्राध्यवसायो जन्यत इत्यत्र प्रश्नेऽतद्व्यावृत्तस्वलक्षणे इत्युत्तरम्, किं वस्तुशब्दवाच्यमिति प्रश्ने च न किञ्चिदित्युत्तरमिति ।

(२) तदेतदुत्तरत्रयं दूषयति तत्रेति । समयाविपर्यासः-सङ्केताग्रहोऽन्यत्र सङ्केतग्रहो वा, न ह्यन्यापोढाकारः सङ्केतग्रहो येन तत्र प्रतिभासः स्यादित्यर्थः ।

(३) द्वितीय इति । अन्यापोहस्वरूपेऽध्यवसायेन प्रवृत्तिः स्वलक्षणे कथं भवतु अध्यवसायस्य भेदाग्रहरूपत्वादिना विकल्पस्य दूषितत्वात् ।

(४) अवचन इति । तत्त्वतः किं वाच्यमित्यत्र त्वया यद्युत्तरं न देयं तदाऽप्रतिभा, उत्तरदाने तु स्ववाग्विरोध इत्यर्थ इति मिश्राः ।

रत्वादित्युपसंहारः । तत्सिद्धमेतत् न क्षणिकत्वमात्मनि बाधकमिति । इति प्रथमाविप्रतिपत्तिः ।

इति आत्मतत्त्वविवेके प्रथमः परिच्छेदः ।

## अथ द्वितीयपरिच्छेदे द्वितीया विप्रतिपत्तिः ।

"विज्ञानवादिनि जागरूके (१)बाह्यमेव नास्ति कुत आत्मेति चेत्"।(२)स तावदिदं पृष्टो व्याचष्टाम्–किन्ते ग्राह्यग्राहकभागयोः (३)परमार्थसतोरेवाभेदो विव-

वार्थस्येति(४)। महाविकारेण प्रकृतमुपसंहरति तत्सिद्धमिति ॥

इति अत्रिगोत्रतिलकीभूतकृष्णाचार्यसूनुना न्यायविद्याविपश्चिता नारायणाचार्येण विरचितायामात्मतत्त्वविवेकदीपिकायां प्रथमः परिच्छेदः ॥ १ ॥

बाह्यार्थभङ्गो वेति द्वितीयं विकल्पं निराकर्तुमवतारयति(५) विज्ञानवादिनीति । कुतः–कुतो बाह्यविशेष(६) आत्मेत्यर्थः ।

---

(१) बाह्यं ज्ञानभिन्नम् ।

(२) बाह्यार्थभङ्गो वेत्यादिनाऽऽत्मनि बाधकमाचक्षाणानां योगाचाराणां पूर्वपक्षस्यायं भावोऽत्र विज्ञेयो यदुक्तरीत्या स्थैर्यासिद्धावपि न वस्तुत्वं ज्ञानभिन्नानां बाह्यभेदानाम्, वस्तुत्वे च न ज्ञानभिन्नत्वं, ज्ञानं च क्षणमात्रस्थायिनीलपीताद्याकारमिति ।

(३) पक्षत्रयाभिप्रायं विकल्पयति परमार्थेति । नीलादि स्वग्राहकज्ञानव्यक्त्यभिन्नम्, स्वग्राहकज्ञानजातीयम्, अलीकमेव वेति विकल्पार्थः । अत्र च ज्ञानत्वं प्रमेयत्वस्य सत्त्वस्य वा व्यापकं नवेति विप्रतिपत्तिर्द्रष्टव्या ।

(४) तत्त्वतो न वाच्यमित्यनेनैव शब्देन तत्त्वतः कस्यचिदर्थस्याभिधानादित्यर्थः ।

(५) द्वितीयमात्मनि बाधकं निराकर्त्तुमुत्थापयति विज्ञानेति मिश्राः । (६) ज्ञानभिन्नस्यैव बाह्यपदार्थत्वादित्यभिप्रायः ।

क्षितः, उताहोऽभिन्नजातीयत्वम्, अथ ग्राह्यांशस्यालीकत्वमिति।

तत्र प्रथमे साध्ये यः कश्चिद्धेतुरुपादीयते सहोपलम्भनियमो वा, ग्राह्यत्वं वा प्रकाशमानत्वं वा स व्यक्तमाभासः। (१) तथाहि (२)नीलधवलादिपरस्परविरुद्धाकारनिकरावगाहिविज्ञानमनुभूयते, तदिदं(३) तस्य स्ववधाय कृत्योत्थापनम्। यदि हि मिथः (४)प्रत्य-

अभिन्नजातीयत्वमिति। यथा वैभाषिकनये ज्ञानान्तरग्राह्यमिति।

स व्यक्तमाभास इति। बाधितविषयत्वेनाभास(५) इत्यर्थः। ग्राह्यग्राहकाभेदपक्षस्य बाधमेव दर्शयति तथाहीति। परस्परविरुद्धानेकाकारविषयकमेकं चित्रज्ञानन्तावदनुभूयते, तत्र यदि ग्राह्यग्राहकयोरभेदः स्यात् कथमेकस्यानेकविरुद्धात्मत्वम्, अतो भवत्पक्षे चित्राकारस्य ज्ञानस्य यावदाकारभेदप्रसङ्गात् चित्राकारस्यैकस्य ज्ञानस्य विलयः स्यात्, अत एकत्वानेकत्वनीलधवलत्वादिलक्षणविरुद्धधर्माध्यासेन ग्राह्यग्राहकयो (र्भेदाभेद)रभेद पक्षो बाधित इत्यभिप्रायः।

यदि हीति। स्वयंविदितरूपस्यानुल्लिखितरूपाभावाच्चित्राकारस्य

---

( १ ) तत्र ग्राह्यग्राहकयोरभेदे सर्व एव हेतुराभासः, तथाहि हेतुर्हि पक्षधर्मतया ज्ञायमानोऽनुमितिनिमित्तमनुमितिरपि च पक्षसाध्यविषयिणी, तथाच परामर्शहेतुपक्षसाध्यानुमितीनामभेदे कुतो हेतुहेतुमद्भाव इति दीधितिः।

( २ ) योगाचारमते वेदान्तिमते च समानं दोषमाह नीलधवलादीति। समूहालम्बने योगाचारस्य नीलधवलाद्यात्मकत्वम्, वेदान्तिनान्तु तत्रान्यत्रापि क्रमवन्नीलादिज्ञानविरोधापादनमेव, एकस्यैव तन्मते क्रमिकनीलधवलाद्यात्मकत्वादिति मिश्राः।

( ३ ) तदिदं—आकारनिकरावगाहित्वमित्यर्थः। तस्य-विज्ञानस्य-स्ववधाय=स्वभेदाय।

( ४ ) प्रत्यनीकधर्मान्-विरोधिनो नीलधवलादिधर्मान्। भवेदिति। एकस्यानेकात्मत्वानुपपत्तेरित्यर्थः।

( ५ ) आभास इति। कालात्ययापदेशादनैकान्तिकत्वाद्वा, असु-

नेकधर्मानुल्लिखेत् कथमेकं सत्तदात्मकं भवेत् । न चेदुल्लिखेत्, कथं तदाकारं नाम(१) स्वसंवेदनस्यानुल्लिखितस्याभावात् । (२)बाह्यस्यैवंविधाविरुद्धधर्माध्यासाद्भेदम् । तथात्वेऽप्यभेदेऽर्थक्रियाचेतनप्रवृत्तीनां सङ्करप्रसङ्गात्, (३)विवेचनानुपपत्तिप्रसङ्गाच्च । ननु विज्ञानस्य,(४) नहि तस्यार्थक्रियाधीनं सत्त्वम्, अपितु प्रतिभासमात्राधीनम् । नापि तत्रार्थक्रियार्थिनः

ज्ञानस्यानेकविरुद्धाकारोल्लेखित्वमभ्युपगन्तव्यम् । अतो विरुद्धानेकाकारोल्लेखिना ज्ञानेनैवैकत्वनानात्वनीलत्वधवलत्वादिविरोधेन स्ववधः स्यादिति । यद्यपि चित्रबोधस्य चित्रस्य नीलधवलादिभ्यो जात्यन्तरत्वं सिद्धान्तिनोऽभिमतम्, तथापि पूर्वपक्षाभिप्रायेण विरुद्धधर्माध्यास उक्तः । अथवा विनैव चित्रबुद्ध्याऽभिन्नाधिकरणनीलधवलादिविषयविज्ञानेनैव केनचिद्विरुद्धधर्माध्यास उक्त इति । नीलधवलयोः पदार्थयोर्विरुद्धधर्माध्यासेऽप्यभेदे नीलसाध्याऽर्थक्रिया धवलादपि जायेत, तथा नीलार्थी धवलेऽपि प्रवर्तेत, नीलधवलयोर्विविच्य वेदनमपि न स्यादतो विवेचनाभावादर्थक्रियासङ्कराच्च तत्तदर्थक्रियार्थिनं प्रवृत्तिसङ्करः, अर्थक्रियाधीने च सत्त्वे तत्सङ्करो न स्यादित्यभिप्रायः ।

---

लीनिर्देश्यग्राह्यात्मकताया ज्ञानस्य बाधितत्वात्, विरुद्धधर्मसंसर्गप्रतिहतत्वादित्यर्थ इति मिश्राः ।

(१) तदुल्लिखितस्यैवाकारत्वादित्यर्थः ।

(२) अत्र रत्नकीर्तेः समाधिं दूषयितुमुपन्यस्यति बाह्यस्यैवेति । बाह्ये विरुद्धधर्माध्यासमयं दर्शयति तथात्वे इति । विरुद्धधर्माध्यासेऽप्यभेदे नीलधवलादीनां प्रतिनियतार्थक्रियाकारित्वं दृष्टमेव विघटेत् न तु प्रतिनियतार्थप्रवृत्तिः स्यात् इत्यर्थः ।

(३) भयान्तरमप्याह विवेचनेति । विविच्यते हि नीलं धवलभिन्नत्वेन धवलं च नीलभिन्नत्वेन तदेतन्न स्यादित्यर्थ इति मिश्राः ।

(४) अत्र विरुद्धधर्माध्यासाद्भेदमित्यनुषज्यते । अत्र हेतुमाह नहीति । प्रतिभासमात्राधीनं-स्वप्रकाशाधीनम् ।

काचित्प्रवृत्तिः । (१)स्वरसवाहिविज्ञानप्रवाहातिरिक्ताया अर्थक्रियायास्तदर्थिनश्चाभावात्। विवेचनाभावश्चात्र परमो ऽनिर्वाहः । "(२)स्वसंविदितरूपत्वादिति चेत्" । तत्किमङ्ग परिणतशान्तेराश्रमपदमिव विज्ञानमासाद्य व्यालनकुलादेरिव नीलधवलादेः शाश्वतिकविरोधत्यागो निभृतवैराणां तत्फलत्यागो वा(३)। न तावत् प्रथमः, परस्परविधिनिषेधनान्तरीयकविधिनिषेधयोरविरोधे जगति विरोधोच्छेदप्रसङ्गात् । (४)नचै-

उभयत्र हेत्वपक्षायां हेतुमाह (५)स्वरसेति । अर्थक्रियाभावान्नार्थाधीनं सत्त्वं, तस्यास्तदर्थिनश्चाभावात , नापि तदर्थिनस्तत्र प्रवृत्तिरिति । (६)विवेचनाभावश्चेति । अयमर्थः-विविक्तोपलम्भो हि विवेचनम्, न च ज्ञानस्य स्वयंविदितरूपत्वात्तदाकारेणापि धवलादीनां तदुपलम्भभेदस्तस्य त्याग इत्यर्थः । परस्परेति । नीलस्य निषेधे हि पीतस्य विधिर्नान्तरीयको भवति तथा नीलस्य विधौ पीतस्य निषेधोऽपि नान्तरीयकः, एवं पीतनिषेधविध्योरपि द्रष्टव्यम् । अत उभयोरपि परस्परविधिनिषेधरूपत्वादिति । विरोधेच्छेदेति । ततश्च विरोधाधीनभेद-

( १ ) घटपटार्थिनां तन्तुकपालादावेव प्रवृत्तिदर्शनादित्यर्थः ।

( २ ) स्वसंविदितेति । ज्ञानयोर्भेदग्रहो हि न ताभ्यामेव तयोः स्वस्वमात्रमग्नत्वात् ।

( ३ ) ज्ञानाकाराणां नीलधवलादीनां विरोध एव नास्ति, विरोधे सत्यपि वा भेदकत्वं नास्तीति विकल्पार्थः ।

( ४ ) ननु विरोधोऽपि ज्ञानाभिन्न एव अतः सोऽपि माऽस्तु किं न श्छिन्नमित्यत आह न चेति ।

( ५ )नन्वत्रापि भयं तदवस्थमेवेत्यत आह स्वरसेति । अर्थक्रियाप्रवृत्तितदर्थिनामपि ज्ञानात्मकत्वादित्यर्थ इति मिश्राः ।

( ६ ) नन्विदं नीलज्ञानमिदं पीतज्ञानमिति विवेचनं ज्ञानेऽप्यस्तिन, तथाच विरुद्धधर्माध्यासेऽप्यभेदे तत्र स्यादित्यत आह विवेचनेति । परमो निर्वाहः—अत्यन्तं साधक इति मिश्राः ।

वमस्त्विति उत्तरेऽपि निवृत्तिः कथमप्युक्तरूपताया अनिवृत्तेः । (१)तावन्मात्रशरीरत्वाच्च विरोधस्य । तत्सिद्धिरेव च भेदसिद्धिरतो न द्वितीयोऽपि(२) । यस्तु बाह्ये विरोधपालनाय विशेषो(३) दर्शितः, स तेषामेवास्त्विति ।

(४)यदि हि विरुद्धधर्माध्यासस्य भेदसाधकत्वे प्रतिसमाश्वासः, किमर्थक्रियां प्रति नियमोपन्यासेन । न चे(५)त्तथापि किन्तेन । सोऽपि ह्यर्थक्रिययोर्विरुद्धधर्माध्यासेन भेदे सति स्यात् । (६)अन्यच्च यथा बाह्येऽर्थक्रि-

---

भूतानां धर्म्यधर्म्यादिभेदाश्रयाणामनुमानानामुच्छेदात्तदधीनस्य बाह्यापलपस्याप्युच्छेद इत्यभिप्रायः । उक्तरूपतायाः—परस्परनिषेधविधिनान्तरीयविधिनिषेधरूपत्वामिति विरोधात । तत्सिद्धिरेव चेति, साध्यसाधनयोरभेदोपचारः । तेषामेवास्त्विति । नास्मान्प्रति शोभत इत्यर्थः ।

यथा बाह्य इति । अर्थक्रियाधीनसत्त्व इति शेषः ।

---

(१) तावन्मात्रेति । विरोधस्य परस्परपरिहारव्याप्यतामात्रशरीरत्वाद्विरोधाभावे विप्रतिपत्तेरनुदयात्कथाप्रवृत्तिरेव न स्यात्, न स्याच्च ज्ञानानामपि मिथो भेद इति भावः ।

(२) न द्वितीयोपि–निभृतवैराणां तत्फलत्यागो वेति द्वितीयपक्षोपि नास्ति, अयमेव भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासो कारणभेदो वेति तत्रैवाभिधानादित्यर्थः ।

(३) अर्थक्रियाप्रवृत्तिनियमरूपः । तेषामिति । अर्थक्रियाप्रतिनियमेन बाह्यानामेव भेदोऽस्त्वित्यर्थ इति मिश्राः ।

(४) अत्र यदि हीत्यादि स्यादित्यन्तस्यायं भावः–विरुद्धधर्माध्यासस्य भेदकत्वे ज्ञानमपि नीलधवलाद्याकारं ततो भिद्येत, अभेदकत्वे क्रियाभेदोऽपि न स्यान्न स्याच्च तदधीनो बाह्यभेद इति ।

(५) विरुद्धधर्माध्यासस्य भेदसाधकत्वाभावे, किं तेन–अर्थक्रियाप्रतिनियमेन ।

(६) ननु यथा यदि बाह्यानां परस्परं भेदो न स्यात्तदार्थऽक्रिया-

थाप्रतिनियमो न स्यादिति दण्डस्तथा ज्ञानेऽपि प्रति-भासनियमो न स्यादिति दण्ड एव । "क (१)प्रतिभासा-साङ्कर्यनियमः, सहैव प्रतिभासोऽपि स्यादिति चेत्" । न सहानुपलम्भमसाङ्कर्यं ब्रूमः, किन्तु नीलस्यैव पीत-त्वेन पीतस्यैव नीलत्वेनानुपलम्भम्, स(२) एव मूलं सर्वविरोधानाम् । अन्यथोपलम्भानुपलम्भयोरप्यसि-द्धिरेव । यदपि नोपलभ्यत इत्युच्यते तदप्युपलभ्यत

ज्ञानेपीति । प्रतिभासाधीन इति शेषः । सहैवेति । सहानुपलम्भे हि प्रतिभासासाङ्कर्यमित्यभिमानः । नन्विदमस्तु प्रतिभासासाङ्कर्यं, तथा विरोधस्योपलम्भानुपलम्भावेव मूलम्, अत एकस्योपलम्भेऽपरस्यानुपल-म्भादेव विरोधः सिद्ध्यति न तु सहोपलम्भे इत्यत आह स एवेति । सर्वविरोधानां न केवलं ज्ञानाकारविरोधानां बाह्यार्थविरोधानामपीत्यर्थः । कुत इत्यत आहान्यथेति । यदि नीलस्य पीतत्वेनानुपलम्भे नील-पीतयोर्विरोधभेदो न स्यात् तदा नीलोपलम्भस्यैव पीतोपलम्भत्वसम्भवा-न्नीलस्यासहोपलम्भकालेऽपि पीतानुपलब्धिरसिद्धे(३)त्यभिप्रायः । अभि-प्रायमाविष्करोति यदपीति । नीलस्यासहोपलम्भकालेऽपि पीतं नोपल-

प्रतिनियमो न स्यादिति बाह्यभेदसाधने विपक्षदण्डः, तथा ज्ञाने नास्ति येन तद्भेदोऽङ्गीक्रियेतेत्यत आह अन्यच्चेति । प्रतिभासनियमो न स्या-दिति । नीलज्ञानमपि पीताकारं पीतज्ञानमपि नीलाकारं भवेदित्यर्थ इति कल्पलता ।

( १ ) ननु प्रतिभासभेदनियमाभावो मया स्वीक्रियत एव नील-धवलादीनां सहोपलंभस्येष्टत्वादित्याशयेन शङ्कते केति। समाधत्ते नेति । नीलपीतादीनां सहोपलंभेन प्रतिभाससाङ्कर्यस्वीकारेऽपि नीलस्यैव पीतत्वेन पीतस्यैव नीलत्वेन मानस्य भवतोऽप्यनिष्टत्वात् तदेव मया ऽऽपाद्यते नीलपीतादीनां विरोधाभावादिति समाधानाभिप्रायः ।

( २ ) एकस्यापरात्मतयाऽनुपलंभ एव ।

( ३ ) विरोधाधीनो हि भेदः, विरोधश्चेन्नास्ति तदैकदेशशेष एवेत्येकतरासिद्धिरित्यर्थ इति मिश्राः ।

एव, यादिदमश्वादिकमुपलभ्यते तन्नोपलभ्यत इत्युक्त्यैव निवृत्तेः ।

"(१)तेनात्मना नोपलभ्यत इति चेत्" । तत्किं सहोपलम्भेऽपि नीलात्मना पीतमुपलभ्यते यतो न विरोधः स्यात् । तस्मादुभावपि(२) विरोधौ समौ क्षमौ चाभेदाविसर्जने, (३)केवलमेकस्य प्रौढिः सुभगाभिक्षुकन्यायेन यदि स्यात् । (४)एतेन विवेचनाभावोऽपि निरस्तः, आकारयोरसम्भेदेन वेदनस्यैव विवेच-

भ्यत इत्युच्यते तदप्युपलभ्यत एव, यस्मादिदं नीलमुपलभ्यत इत्युक्तिमात्रेणैव निवृत्तेरिति ।

तेनेति । सत्यमुपलभ्यत एव किन्तु तेनात्मना नोपलभ्यत इति चेदिति । यस्मात्परस्परात्मकत्वेनानुपलम्भ एव बाह्यविज्ञानविरोधयोर्मूलं तस्मान्मूलसामान्यादित्यर्थः । एतेनेति । नीलपीताकारयोः परस्परात्मत्वानुपलम्भमात्रेणैव तयोर्भेदप्रतिपादनेनेत्यर्थः । अपि च सहोपलब्धानामसहोपलम्भ एव विवेचनमित्यङ्गीकारेऽपि क्षणिकबाह्यवादे सहोपलब्धा-

(१) ननु यद्युपलम्भात्मना उपलभ्येताऽनुपलम्भो वोपलम्भात्मना, तदा तयोरविरोधः स्यान्नचैवमित्याह पूर्वपक्षी तेनेति । नीलधवलादावपि सहोपलम्भमात्रं, न त्वेकात्मनाऽन्यस्योपलम्भ इति कथं तत्र न विरोधः स्यादित्याह समाधाता तत्किमिति ।

(२) उभावपि बाह्यज्ञानगतौ प्रवृत्तिप्रतिनियमप्रतिभासप्रतिनियमकृतावित्यर्थं इति मिश्राः ।

(३) केवलमिति । त्वया पुरस्कृतस्य बाह्यभेदस्य सौभाग्यात्प्रौढिः, अस्मद्वापाद्यमानस्य प्रतिभासाधीनज्ञानभेदस्य त्वयाऽनभ्युपगमादप्रौढिः, भिक्षुविसर्जने दुर्भगायाः प्राधान्यमसहमानया सुभगया स्वयमेव भिक्षुर्विसर्जित इति सुभगाभिक्षुकन्यायेन यदि स्यात्तदेति शेष इति कल्पलता ।

(४) विज्ञानस्य विरुद्धधर्माध्यासाद्भेदं नास्तीति निराकृत्य विवेचनाभावः परमो निर्वाह इत्युक्तं निराकरोति एतेनेति ।

नत्वात् । (१)अपि च क्षणिकतायामेकपुरुषापेक्षया बाह्यस्यापि कुतो(२) विवेचनम्, नानापुरुषापेक्षयापि सन्दिग्धम् । "परेण परस्यावेदनात् क सन्देह इति चेत्" । अभेदेनैव विवेचनं साध्यं, तथाच किन्तेनोपन्यस्तेनापि । तज्जातीयस्य तु बाह्यवद्विज्ञानस्यापि विवेचनमेवेति ।

---

नां नीलधवलादीनां बाह्यानामप्येकपुरुषापेक्षया न विवेचनमित्याह **अपि चेति** । एको हि पुरुषो विवेचनं क्रमेणैव विवेचयेत्, न च क्षणिकानां क्रमेण विवेचनं सम्भवति क्षणान्तरवर्तिनोऽन्यत्वात् न पूर्वं सहोपलब्धस्य विवेचनमित्यभिप्रायः । अथ यदैकेन सहोपलभ्यन्ते नीलादयस्तदैव पुरुषान्तरेण विविच्यन्ते इत्युच्येत तत्राह **नानेति** । सन्दिग्धं न सम्भवितं विवेचनमित्यर्थः । **परेणेति** । ज्ञानान्तरेण ज्ञानान्तराकारस्य विविच्य वेदनासम्भवात्कथं विवेचनसम्भावनेति । **अभेदेनैवेति** । अविवेचनसाध्येन ग्राह्यग्राहकयोरभेदेनैव विवेचनं साध्यं, तथाचाभेदस्य प्रागेव सिद्धत्वात् किन्तत्सिद्ध्यर्थमविवेचनोपन्यासेनापीति । ननु यद्यपि यस्य नीलविशेषस्य बाह्यस्य सहोपलम्भौ न तस्यैव विवेचनं सम्भवति क्षणिकत्वात्तथापि तज्जातीयस्यैकेनापि पुरुषेण विवेचनं सम्भवतीति, तत्राह **तज्जातीयस्येति** । **विज्ञानस्यापि**—विज्ञानाकारस्यापि, तज्जातीयस्य विवेचनं(३) सम्भवत्येवेति ।

अतो यदत्र परैरुक्तं नीलधवलादिमिश्राकारमेकं ज्ञानं स्वयं वेद्यते अतोऽविविक्तवेदनेनैव विरुद्धधर्माध्यासो बाधित इति तदुष्ट्रलगुडायत

---

( १ ) बाह्यज्ञानयोरपि विवेचनाभावस्तुल्य इत्याहापिचेति मिश्राः ।

( २ ) क विवेचनमिति मिश्रसम्मतः पाठोऽत्र द्रष्टव्यः । बाह्यस्य क्षणिकत्वेन भेदग्रहकाले विनाशात् क विवेचनमित्यर्थः ।

( ३ ) नीलज्ञानजातीयं पीतज्ञानजातीयाभिन्नमिति विज्ञानेऽपि विवेचनमस्त्येवेत्यर्थः ।

संवेदनेनैव बाधितोऽयं विरुद्धधर्माध्यासो न भेद-साधक इति उष्ट्रलगुडकम्, संवेदनेनैवास्य साधित-त्वात्(१)। (२)"हिनस्तु तर्हि प्रकाशमानानेकत्वविरुद्ध-धर्माध्यासोऽप्येकताम्, तथात्वेऽप्येकत्वानेकत्वविकल-नीलाद्याकारप्रकाशस्वरूपे किमायातमिति चेत्"। तदिदं(३) भीतैः क्षेत्रनिलायनं, नियताकारत्वमेव ह्येक-त्वमनियताकारत्वञ्चानेकता। तन्निवृत्तौ च न नीलाकारं नापि नीलपीताद्याकारमित्यनाकारमेवावशिष्यते।

---

इत्याह संवेदनेनैवेति। स्वसंवेदनस्य सिद्धान्ते असिद्धत्वात्संवेदनेने-त्युच्यते, नीलधवलादीनां परस्परानात्मसंवेदनेनैव स्वविरुद्ध एव विरुद्ध-धर्माध्यासः समर्थितः, यथोष्ट्रकगृहीतेनैव लगुडेन स्वविरुद्ध एव स्व-शिरोभङ्ग इति(४)। किमायातमिति। ततश्च नीलादीनां ज्ञानाका-रत्वादेवमपि न बाह्यसिद्धिरित्यभिप्रायः। भीतैरिति। यथाहि भीतैः भूताविष्टैः क्षेत्रे सस्योपघातकतृणोन्मूलनाय प्रवृत्तैः सस्योन्मूलनमेव क्रियते तादृगेतदिति।

---

(१) नीलात्पीतं भिन्नं नीलजातीयात्पीतं भिन्नमिति बाह्येऽपि संवेदनाधीन एव भेदः स कथं तेनैव बाध्यतामिति प्रसिद्धं विरुद्धद्व-याकारं ज्ञानमपि विरुद्धधर्माध्यासाद्भिन्नमिति भावः।

(२) ननु नीलधवलाद्येकज्ञानकुक्षावेव प्रकाशमानत्वानुरोधात्प्रवि-ष्टमिति तज्ज्ञानं कथमनेकं स्यात्, कथं वा तदेकमेव भवितुमर्हति विरु-द्धधर्माध्यासादित्येकत्वमनेकत्वं वा विवादपदे ज्ञाने मास्तु, ज्ञानस्वरूपं तु स्वसंवेदनसिद्धं दुर्निरसनीयमित्यभिप्रायेणाह पूर्वपक्षी हिनस्त्वि-ति। तदा तज्ज्ञानं नैकस्वरूपं न वाऽनेकस्वरूपमिति निःस्वरूपमेव पर्य-वसन्नमित्याशयेनोत्तरयति तदिदमिति।

(३) भीतैः बर्बरैः, क्षेत्रनिलायनं—क्षेत्रकवलीकरणम्, एतदेवाह नियतेत्यादिना इति मिश्राः।

(४) कुरूपो हन्यतामिति श्रुत्वा कुरूपहननाय प्रथममुष्ट्रेणैव लगुडं गृहीतमिति न्यायमनुहरतीत्यर्थ इति मिश्राः।

"(१)स्यादेतत्, पारमार्थिको विरुद्धधर्माध्यासो भेदहेतुरयं काल्पनिक इति चेत्"। एवन्तर्हि सुतरामयत्नसिद्धं स्फटिकवद्बोधस्य निराकारशुक्लत्वम्, आकारनिकरस्त्वनात्मैव स्फुरतीत्युभयथैव कालात्ययापदिष्टाः सहोपलम्भादयः। (२)अपि च आस्तां तावद्विरुद्धधर्माध्यासचिन्ता, योऽयं ग्राह्यग्राहकभावभेदो ग्राह्यनीलादिभेदो वा चकास्ति स किं सत्योऽसत्यो वा? सत्यत्वे (३)स एव दोषो हेतूनाम्, असत्यत्वे नायमात्मा विज्ञानस्य इत्यनात्मन्यपि सहोपलम्भनियमादयो गता

काल्पनिक इति। परमार्थसदाकारत्वे ह्याकारविरोधस्यापि पारमार्थिकत्वापत्तेरित्यभिप्रायः। उभयथापीति। पारमार्थिकत्वस्यापारमार्थिकत्वस्य च तादात्म्यं तयोरपीत्यर्थः(४)। तथाहि पारमार्थिकत्वे तावद्विरुद्धधर्माध्यासेन नीलादिज्ञानयोस्तादात्म्यं बाधितम्, अपारमार्थिकत्वेऽपि परमार्थिकज्ञानेनापारिमार्थिकस्य तादात्म्यं सुतरां बाधितमित्यभेदहेतूनां कालात्ययापदिष्टतेति। ग्राह्यग्राहकभावेति। इदं नीलमितीदमा बहिर्वृत्तिता, ग्राहकभागस्य ग्राह्यभागस्य च यो भेदस्स बाधित (५)इत्यर्थः। स एवेति। स एवकालात्ययापदेशदोष इत्यर्थः।

---

(१) ननु नीलपीतादीनामवस्तुत्वात्तद्घटितो विरुद्धधर्माध्यासोऽप्यवस्तुभूतः कथं ज्ञाने स्यादित्याह पूर्वपक्षी स्यादेतदिति।

(२) एकदण्डिमतमन्तर्भाव्य दोषान्तरमाहापि चेति मिश्राः। आस्तां तावदिति। दोषान्तरमेव द्रढीय इति भावः।

(३) स एवेति। भासमानस्य भेदस्य सत्यत्वे ग्राह्याभेदसाधने बाध एवेत्यर्थः।

(४) नीलादीनां पारमार्थिकत्वेऽपारमार्थिकत्वे वेति मिश्राः। अत्र मूले नारायणमतेनोभयथापीति पाठो द्रष्टव्यः। परमार्थसदाकारत्वे निराकारत्वे वेत्यर्थ इति केचित्।

(५) पूर्वपक्षिमतेनेति शेषः, स सत्योऽसत्यो वेति विकल्पार्थो बोध्यः।

इत्यनैकान्ताः(१) ।

"भेदो न प्रथत एवेति चेत्" । एवन्तर्हि अस्तु तावत्सर्वजनीनप्रतीतिविरोधः स्ववाग्विरोधो वा, असिद्धा(२)स्तर्हि हेतवः, नहि भेदाप्रथने सहार्थं तद्व्याप्यतां(३) वा पश्यामः । तदस्फुरणे(ऽपि) (४)पक्षादिप्रविभागोऽपि कथं, (५)कश्च बोधयितुं प्रवृत्तोऽसि, किमर्थश्च, (६)अन्वयव्यतिरेकाप्रतीतौ किञ्च हेतोर्बलम्, कुतश्च विप्रतिपत्तिः कीदृशी चेति । सोऽयं विचारमारभते, भेद-

स्ववाग्विरोधइति । भेदं हि निर्दिश्य तस्य प्रथनं निषेद्धव्यम्, निर्देशश्च प्रथनमन्तरेण न सिद्ध्यति, भेदनिर्देशेनाप्रथनोक्तिर्विरुद्ध्येतेति । नहीति । नहि भेदाप्रथने तस्यैव तेन साहित्यं बोद्धुं शक्यते तथा सहोपलम्भस्याभेदव्याप्यतापि भेदास्फुरणे न बोद्धुं शक्यते । उपलक्षणं चैतत्-ग्राह्यत्वप्रकाशमानत्वयोरपि ग्राह्यग्राहकयोर्भेदाप्रथने न सिद्धिः, नह्यप्रातियोगिकं ग्राह्यत्वं नाम सम्भवति, प्रकाशग्राह्यत्वं प्रकाशकर्तृत्वं च प्रकाशाभेदे न सिद्ध्यति । तदस्फुरणे इति । कुतश्चेति । वादिप्रतिवादिनोः स्वपक्षपरपक्षयोर्भेदप्रतिभासो हि विप्रतिपत्तिमूलं, तथा पक्षा-

(१) अनैकान्ता इति । असत्यस्य ग्राह्यत्वे सहोपलम्भनियतत्वादिति हेतुसत्त्वेऽपि साध्यस्य ग्राह्याभेदस्यासत्वादनैकान्ता इत्यर्थः ।

(२) असिद्धाः=स्वरूपासिद्धाः ।

(३) अभेदव्याप्यताम्, व्याप्यव्यापकभावस्य भेदघटितत्वादित्यर्थः ।

(४) पक्षेति । पक्षसाध्यहेतुदृष्टान्तादीनां भेदे सत्येवानुमानप्रवृत्तिरित्यर्थं इति मिश्राः ।

(५) कश्चेति । वादिनोरपि भेदाभावादित्यर्थः । किमर्थं चेति । तत्त्वनिर्णयविजयादीनामुद्देश्यानामभावादित्यर्थः ।

(६) अन्वयव्यतिरेकयोरपि (भेदाभावे) प्रतीतिभेदाभावे विरुद्धा प्रतिपत्तिरपि न स्यात्तदभावाच्च न विवादप्रवृत्तिरिति सर्वथ सर्वत्र भेदतज्ज्ञानयोरपेक्षेत्याहान्वयेत्यादिनेति मिश्राः ।

न्तु साम्प्रतमपि नेच्छति, नूनमुन्मत्तोऽप्यनेन जित इति ।

"विकल्पारूढ एव भेदो व्यवहाराङ्गं नानुभवारूढ इति चेत्" । सोऽपि सत्यो ऽसत्यो वा भासते न वेति विकल्पान्नातिवर्तते । "असन्नेवास्फुरन्न(१)वाध्यवसीयते इति चेत्" । अध्यवसीयत इति (२)विवरणार्हमेतत् । (३)"तद्विषयव्यवहारजननमध्यवसायार्थ इति चेत्" । (४)व्यवहारोऽपि यद्यज्ञानरूपः कथमसंस्तेन जन्यताम्, ज्ञानरूपश्चेत् कथं नियामकं विना तद्विषयः ।

---

न्तराव्युदासेन पक्षान्तरस्वीकारश्च विप्रतिपत्तिरित्यभिप्रायः । उन्मत्तोपीति । न केवलं नैयायिकः, उन्मत्तोऽपीति(५) ।

विकल्पारूढ इति । ततश्च विकल्पमात्रारूढत्वान्न तात्त्विकं नाप्यनुमानाच्च व्यवहार इत्यर्थः । विकल्पान्नातिवर्तत इति । ततश्च भासत इति पक्षे सत्यत्वे(६) कालात्ययापदेशः, असत्यत्वे त्वनैकान्तिकत्वम्, न भासत इति पक्षे व्यवहाराभाव इति दोषाः । असन्नेवेति । असन्नेव विकल्पेऽप्यस्फुरन्नध्यवसीयते विकल्पेन ततश्चास्फुरणेऽप्यध्यवसायादेव व्यवहार इत्यभिप्रायः । तेन=विकल्पेनेत्यर्थः ।

---

(१) अस्फुरन्-अज्ञायमानः ।

(२) अत्र मिश्रादिमतेन "विचारणीयमि"ति पाठो द्रष्टव्यः । 'विचारासह'मिति च तदर्थः ।

(३) ज्ञानाविषयेऽपि भेदव्यवहारं करोति विकल्प इत्याह पूर्वपक्षी तद्विषयेति ।

(४) समाधत्ते व्यवहारोऽपीति । त्वन्मते ज्ञानातिरिक्तस्यासत्त्वादज्ञानरूपत्वे विकल्पेनासन्व्यवहारोऽपि कथं स्यात्, ज्ञानरूपत्वे तु नियामकाभावात्कथं भेदविषयो व्यवहारः स्यादिति । एवंसति नीलादीनामपि विषयत्वसिद्धिरिति समाधानतात्पर्यार्थः ।

(५) जित इति शेषः ।

(६) सत्यो भेदो भासते च यदि तदा सिद्धं न समीहितं ज्ञानमपि त्वन्मते भेदात्मकं स्यात्तदनात्मकत्वे च भेदोऽपि ग्राह्यग्राहकभा-

"स्वकारणसामग्रीसामर्थ्यादिति चेत्"। सोऽयं व्यवहृतिरूपज्ञानालीकभेदयो(१)र्नियामकाभावेऽपि कारणसामर्थ्यमाश्रित्य विषयविषयिभावमिच्छति न त्वनुभवानुभाव्ययोरिति क्षीरं विहाय रुचिररोचकग्रस्तस्य (२)सौवीरे । (३)"भेदोऽपि विकल्पाकार एव नतु बाह्य इति चेत्" । यद्यसन्नेवासौ (४)कथं विकल्पाकारः, तदाकारश्चेत् कथमसन्निति परिभावय । "अस्तु तर्हि सन्ने·

नियामकमाशङ्कते(५) स्वकारणेति । अनुभवेति । निर्विकल्पकपर्यायानुभवतात्त्विकानुभवयोरिति(६) । नतु बाह्य इति । ततश्च व्यवहृतिरूपज्ञानालीकयोर्भेदयोरभिन्नयोर्ग्राह्यग्राहकभावाभ्युपगमेऽपि न पारमार्थिकयोरनुभवानुभा· .रपि ग्राह्यग्राहकभावाङ्गीकारप्रसङ्ग इत्यभिप्रायः । यद्यसन्नेवेति । नहि सदसतोराकाराकारिभावः । अस्तु तर्हीति । ततश्च सदाकारत्वमविरुद्धमिति भावः ।

यश्च, यदि च सत्यो भेदो न भासते तदा भेदव्यवहारानुपपत्तिः न ह्यभासमानं किञ्चिद्व्यवह्रियते, तदा तदभेदाज्ञानमप्यसदेव स्यादन्यथा भेदग्राह्यग्राह्यग्राहकभावसिद्धिरथ न भासते तदा न भेदव्यवहार इत्यर्थ इति मिश्राः ।

(१) अत्र व्यवहृतिरूपज्ञानालीकभेदयोश्चार्थे द्वन्द्वः ।

(२) अरोचकं अरुचिः । सौवीरम्—काञ्जिकम् ।

(३) ननु विकल्पाद्भिन्नस्यालीकभेदस्य विषयतां नाङ्गीकुर्म इत्याह भेदोऽपीति ।

(४) कथमिति । सदसतोस्तादात्म्यानुपपत्तेरित्यर्थः । तदाकार इति । आकाराकारिणोरभेदादिति भावः ।

(५) व्यवहाररूपं ज्ञानं स्वकारणात्तथायातं यथाऽलीकं भेदं विषयीकरोतीत्याह स्वकारणेति मिश्राः ।

(६) निर्विकल्पकवस्तुसद्ग्राह्ययोरिति मिश्राः । वस्तुभूतं नीलादि स्वकारणसामर्थ्यादेव भिन्नमपि विषयीकरोतीति किं नियामकान्तरेणेति भावः ।

वेति चेत्"। नन्वद्वयदर्शि चेत्(१) विज्ञानम् कथं भेद-प्रथा। आकारद्वयदर्शि चेत्, कथमेकं सद्द्वयात्मकम्।

"(२)चित्राकारमिति चेत्"। चित्रमेकमनेकं वेति विकल्पगिलितमेव तव पश्यतः। अनेकत्वे क्व एकवि-ज्ञानतादात्म्यम्। विज्ञानस्यापि यावदाकारमनेकत्वे क्व चित्राकारसंवेदनं स्वस्वमात्रमग्नत्वात्। एकत्वे क्व भेद-प्रतीतिः। (३)"अनीलाद्यनेकव्यावृत्तिकृतोऽनेकत्वाध्य-

नन्वद्वयेति। आकारद्वयदर्शने हि भेदप्रथा सम्भवति, अतो द्वयदर्शि चे द्विज्ञानं कथमभेदप्रथा, अथैतद्दोषपरिहारायाश्रितत्वमङ्गीक्रियते कथमेकस्य ज्ञानस्यानेकाकारात्मकत्वम्, अतः सतोऽसतो वा भेदस्य नैकविकल्पा-कारत्वसम्भव इति।

चित्राकारमिति। अत एकस्यापि ज्ञानस्यानेकाकारत्वं सम्भव-तीति भावः। पश्यत इत्यनादरे षष्ठी। (४)विज्ञानस्यापि यावदि-ति। ततश्च ज्ञानभेदेनैव विरोधस्य चरितार्थत्वात् न ज्ञानज्ञेयभेदसिद्धिरिति भावः। एवं चित्रस्यानेकत्वे दूषणमुक्त्वा एकत्वेऽप्याह एकत्वे इति।

---

(१) ययोर्भेदो ग्राह्यते तदुभयाविषयश्चेत्। आकारेति। विरुद्धद्वया-कारं ज्ञानमपि विरोधादेकन्न स्यादित्यर्थः। एतेन नीलपीताकारयोरनु-योगिप्रतियोगिनोर्ज्ञाने सत्येव भेदज्ञाने को दोष इति परास्तम्।

(२) रत्नकीर्तिमतेनाशङ्कते चित्रेति। न द्वयदर्शि नाप्यद्वयदर्शि किन्तु चित्राकारमित्यर्थः। अत्र नैयायिकैरेकगुणपरश्चित्रशब्दः कर्बु-रात्मा वाऽनेकगुणपरो वा इति विकल्प्य समाधत्ते चित्रमित्यादि प्रती-तिरित्यन्तेन। विरुद्धधर्माध्यासाच्चैकमेकज्ञानाभेदाभावप्रसङ्गाच्च नाने-कमपि सम्भवतीति समाधानार्थः।

(३) अत्र ज्ञानाश्रियस्समाधानं शङ्कते अनीलादीति। परिहरति अतादात्म्ये इति। व्यावृत्तयो यदि ज्ञानभिन्नास्तदा कथं प्रकाशन्तां, ज्ञानाभिन्ना एव चेत्तदा ज्ञानाभेदेन तासामप्यभेद एव वेति क्व चित्रा-कारत्वमित्यर्थः।

(४) नन्वाकारानेकत्वानुरोधाद्विज्ञानमपि भिद्यतामत आह विज्ञा-नस्यापीति मिश्राः।

वसाय एवेति चेत्" । अतादात्म्ये कथं व्यावृत्तीना-मुल्लेखः, तादात्म्ये कथमनेकत्वम्, (१)एकत्वेऽपि क तत्-कृतोऽपि भेदाध्यवसायः ।

(२)"उल्लेखोऽयमस्य विज्ञानस्य यदनेकत्वं नाम न पुनस्तत्त्वान्तरमिति चेत्" ।

(३)स्वरूपमस्वरूपं वेति वाच्यम् । आद्ये अनेकस्व-रूपमेकमिति कोऽन्यो वदेदसुस्थात् । द्वितीयस्त्विष्यत एवास्माभिः किन्तु त्वयेष्यताम् । "भ्रान्ति(४)रसा-

अनीलाद्यनेकेति । अनीलापीताद्यनेकव्यावृत्तिकृतः न तु नीलपी-तादिविषयनेकत्वकृत इति । अतादात्म्ये=विज्ञानातादात्म्ये कथ-मुल्लेखः=स्फुरणमिति । उल्लेखोऽयमिति । स्फुरणमात्रशरीरम-नेकत्वम्, अत एकविज्ञानतादात्म्येऽपि व्यावृत्तीनां स्फुरणमात्रशरीरमने-कत्वमुपपद्यत इति भावः ।

अस्वरूपं ज्ञानादन्यदित्यर्थः । किन्तु त्वयेति । त्वयेष्यतां=त्वयापीष्यता(५)मिति । पूर्वेण सहैकग्रन्थतेति केचित् । किन्त्वित्या-रभ्य चोद्यग्रन्थं मन्यन्ते । (६)अयं चार्थः-अस्वरूपस्फुरणं त्वयेष्यते चेत्कामं त्वयेष्यतां किन्तु भ्रान्तिरेवासौ न बाह्यस्य स्फुरणं सिद्ध्यतीति ।

---

(१) नन्वस्तु व्यावृत्तीनामप्यभेद एवेत्यत आह एकत्वेऽपीति ।

(२) ननु प्रतिशब्दवद्वास्तव एवायमुल्लेखो न वास्तवो येनानेक-त्वं तदनुरोधात् ज्ञानस्य भवेदित्याशङ्कते उल्लेखोऽयमिति । अनेकत्व-मेव न वस्तुसिद्धम् यच्चित्राकारे ज्ञाने त्वयाऽऽपाद्यत इत्यर्थः ।

(३) परिहरति स्वरूपमिति । यदनेकत्वमुल्लिख्यते तद्यदि ज्ञान-स्वरूपमेव तदा ज्ञानस्यानेकत्वमवर्जनीयम्, यदा स्वरूपं ज्ञानाभिन्नमेव ज्ञानेनोल्लिख्यते तदा भेदेऽपि ग्राह्यग्राहकभाव इति सिद्धं नः समीहित-मित्यर्थः ।

(४) असौ अनेकत्वावगाही तत्र प्रत्यय इत्यर्थः ।

(५) तवेदमत्यन्तमनिष्टमिति भावः ।

(६) किन्त्वित्यारभ्यपक्षे पूर्वपक्षार्थ इत्यर्थः ।

विति चेत्" (१)तस्यामपि स्वरूपमस्वरूपं वा प्रकाशेत प्रकारान्तराभावात् इति ।

(२)"स्यादेतत्, यथा अतदपि तत्तया परिस्फुरदपि न वस्तुगत्या तदेव, तथा तदप्यतत्तया परिस्फुरदपि नातदेव, ततः स्वरूपस्यातत्तया प्रथनेऽपि न काचिद् ग्राह्यलक्षणक्षतिरिति चेत्"।

यद्यतत्तापि विस्फुरन्ती स्वरूपमेवास्य स्यात्, स्यादप्यस्योपन्यासस्य प्रस्तुतोपयोगः । (३)अस्वरूपस्य

---

स्यादेतदिति । यथा अतत्तया एकतया परिस्फुरदपि स्फूर्तिगत्या विना वस्तुगत्या न तदेव नैकं यथा प्रत्यभिज्ञानं, तथा विज्ञानं स्फुरदपि नानेकम्, अतो विज्ञानात्मन एवान्यत्वेन स्फुरणान्नात्मनः स्फुरणमित्यात्मन एव ग्राह्यत्वमतो न ग्राह्यत्वलक्षणक्षतिः, अन्यथा अग्राह्यत्वे हि सा स्यादिति ।

(४)यद्यतत्तेति । अस्वरूपत्वे हि स्फुरत्या अप्यतत्तायाः स्वरूपस्यैव स्फुरणमिति प्रस्तुतस्य स्वपक्षस्य हानिः स्यादिति । अस्वरूपस्य कथमिति । अतः स्वरूपमेव तत्रापीति हृदयम् । यद्य-

---

(१) समाधत्ते तस्यामपीति । भ्रान्तिरपि ज्ञानमेव, तत्रापि पूर्वोक्तो विकल्पस्तदवस्थ एवेत्यर्थः ।

(२) न ह्यविद्यासमारोपिताकारः पर्यनुयोगमर्हतीति कीर्तिमतेनाशङ्कते स्यादेतदिति । अतदिति । अरजतं शुक्तिस्वरूपं तत्तया रजततया स्फुरदपि यथा न वस्तुगत्या रजतमेव, यदा तदपि एकमपि ज्ञानमतत्तयाऽनेकतया स्फुरदपि न वस्तुगत्याऽनेकमेव, ततः स्वरूपस्य विज्ञानस्यातत्तयाऽनेकतया स्फुरणेऽपि भेदेन ग्राह्यग्राहकभावो भवेदिति न [illegible] ग्राह्यलक्षणक्षतिरित्यर्थः ।

(३) [illegible] स्फुरति तदा सो स्वरूपमेव वाच्याऽस्वरूपस्य [illegible] अस्वरूपस्येति । यद्यपीति । सर्वथाऽस्वरूपमेव [illegible] स्फुरति इति ग्राह्यग्राहकलक्षणं वक्ष्याम इत्यर्थ

[illegible] स्फुरन्ती यदि विभ्रमप्रकाश-

कथं प्रकाश इति यद्यपि तथा वक्ष्यामः, तथाप्यतस्ता कथं तस्य स्वरूपमितीतोऽपि दीयतां दृष्टिः ।

कश्चास्वरूपस्फुरणे दोषः? । "नायं भिन्नयोर्वेद्यवेदकभावो व्यापारनिबन्धनो, नियतस्य तस्याभावात् । (१)नापि जातिनिबन्धनः कश्चिज्ज्ञेय इति व्यवस्थानुपपत्तिप्रसङ्गात्, नहि निसर्गसिद्धानां गोत्वादीनामीदृशी रीतिरिति चेत्" । नन्वयमभेदेऽपि दोषस्तदवस्थ एव । तथाहि स्वस्य वेदनमिति नायं व्यापारनिबन्धनो व्यवहारः, स्वात्मनि तदभावात् । नापि जातिनिब-

---

पीति । यद्यपि तथा 'अस्वरूपस्यैव प्रकाशो घटत' इति वक्ष्यामः, तथाप्यस्वरूपस्य प्रकाशो घटतां, अतत्रापि कथं तस्य स्वरूपमिति योजनेति । अथवा अस्वरूपस्यैव प्रकाशं वक्ष्यामः, यद्यप्येतन्न घटते, तथापि घटतामतत्रापि तस्य स्वरूपमिति ।

अस्वरूपस्यैव प्रकाशसम्बन्धं वक्ष्यमाणत्वेन प्रतिज्ञातमिदानीं वक्तुं तत्र दोषं परं पृच्छति (२)कश्चेति ।(३)परस्तु दोषमाह नायमिति । भिन्नयोर्वेद्यवेदकयोस्तद्भावो न तयोर्व्यापारनिबन्धनः, कयोश्चिदेव वेद्यवेदकभावो येन तयोरेव नियतेन व्यापारेण सिध्यति तस्याभावात्तस्यापि नियमाय नियामकान्तरापेक्षाप्रसङ्गादिति भावः । नहीति । नहि नैसर्गिकं गोत्वं किञ्चिदेव प्रति नान्यत्प्रतीति व्यवस्था दृश्यत इति ।

---

चेत्तदाऽयं समाधिः स्यादपि, न त्वेवमेकस्य चित्रप्रत्ययस्यानेकत्वप्रसङ्गस्य दुर्वारत्वादित्यर्थ इति मिश्राः ।

(१) ननु भेदेऽपि जातिनिबन्धन एव विषयविषयिभावोऽस्त्वित्यत आह नापीति । तथासति यदेकस्य ज्ञेयं तत्सर्वस्यैव स्यात्, एतदेवाह नहीति ।

(२) भेदेऽपि न ग्राह्यलक्षणक्षतिरिति स्वपक्षनिर्वाहाय पृच्छति कश्चेति । अस्वरूपं ज्ञानभिन्नं बाह्यं तत्स्फुरणे को दोष इति तदर्थ इति मिश्राः । (३) ज्ञानश्रीः ।

न्धनः, (१)साधारण्यप्रसङ्गात् । नहि जात्यैव गौः स्वात्मानं प्रति नतु परं प्रतीतिनियमो दृष्टः । (२)न च ज्ञानं स्वस्यैव परस्यापि वेदनं, सर्वसर्वज्ञत्वापत्तेः ।

"न(३)तत्कस्यचित् किन्तु वेदनमात्रमिति चेत्" ।

(४)तथापि स्वात्मन्यजडवत् परत्राप्यजडवत् स्या-

---

स्वात्मनीति । स्वात्मनि वेदितव्ये ज्ञानस्य न तत्र व्यापारस्सम्भ(५)वति, स्वात्मनि वृत्तिविरोधात् क्षणिकस्य तावत्कालानवस्थानाच्चेति । सर्वसर्वज्ञत्वापत्तेरिति । परसंवेदनत्वेन परत्वाविशेषेण सर्वपरसंवेदनपरतया सर्वेषां ज्ञातॄणां सर्वज्ञत्वापत्तेरिति । अत्र यद्यपि परसंवेदनत्वं सिद्धान्तिनो नाभिमतं, तथापि परं प्रति दोषसाम्ये कथिते तेनैवोपादास्यमानो दोषपरिहारोऽस्माकमपि समान इति प्रतिपादनाय परस्यापि दोष आपाद्य इति द्रष्टव्यम् । शङ्कते नचैतदिति । न च तत्स्वस्य वेदनमिति वदामः किन्तु न कस्यचित्तद्वेदनं न प्रतिसम्बन्ध्यपेक्षं वेदनमित्यर्थः, अतो न स्वस्य वेदनमिति व्यापारनिबन्धन इत्यादिचोद्यस्यावकाश इत्यभिप्रायः ।

स्वात्मन्यजडवदिति । ज्ञानस्य स्वव्यवहारे ज्ञानान्तरापेक्षा-

---

(१) साधारण्येति । तज्ज्ञानं सर्वस्यैव स्यादित्यर्थः । एतदेवाह नहीति । (२) ननु भवतु सर्वसाधारण्यं को दोष इत्यत आह नचेति ।

(३) ननु न ज्ञानं स्वात्मानं प्रकाशयति येन प्रतिबन्धिरियं स्यात् तदुक्तं—

[illegible] ।

[illegible] इति,

[illegible] सिद्धाः ।

[illegible] तथा परं प्रति तथा [illegible] स्यादिति सैव प्रतिबन्धिरि-

[illegible]

त्, परस्मिन्नन्धवत् स्वस्मिन्नप्यन्धं प्रसज्येत जात्यैव त-द्रूपत्वात् । "(१)जात्यापि स्वकारणात् क्वचिन्नियतरूपमेव तदुत्पन्नमिति चेत्" । नैवमुच्चैर्ब्रूयाः, परैरपि कदाचिदेवं श्रूयेत । "(२)अभेदोऽस्तु मा वा भेदन्तु प्रकाशमानत्वेन व्यासेधाम इति चेत्" । न, वस्तुनि भेदनिवृत्तेरेवाभेदरू-पत्वात् ।

"(३)अस्तु तर्हि भेदाभेदविधुरमेव चित्रं चेतो, भेदे प्रकाशस्यायोगात्, अभेदे चित्रत्वानुपपत्तेरिति

---

त्वमिच्छता स्वात्मन्यजडत्वमिष्टमिति भावः । अजडान्धत्वयोरुभयोरपि साधारण्ये हेतुमाह (४)जात्यैवेति । तद्रूपत्वादिति । जडत्वान्ध-त्वयोरुभयोरपि परामर्शः । क्वचिन्नियतरूपमिति । स्वात्मन्येवाज-डस्वरूपमित्यर्थः । सत्यम् किन्तु अनन्यापेक्षपरिहारो न दण्डवारित इति, एतमेवार्थमुपालम्भमुखेनाह (५)नैवमुच्चैरिति । अभेदोऽस्त्विति । अतो नाभेदपक्षेऽपि दोषमाम्ययापादयितुं युक्तमिति भावः । वस्तुनी-त्यनेनावस्तु व्यवच्छिनत्ति, न ह्यवस्तुनि शशविषाणादौ भेदनिवृत्तौ सत्या-मप्यभेदोऽपि भवतीति भावः । चित्रत्वानुपपत्तेरिति । भवदुक्ता-

---

(१) स्वहेतुबलात्स्वास्मिन्नेवाजडरूपमित्याशङ्कते जात्यापीति ।

(२) ननु प्रकाशमानत्वादिहेतुभिर्ज्ञानाभेदो नीलादीनां न मया साध्यते, किन्तु ज्ञानाद्भेदमात्रं निषिद्ध्यते, तथाचाभेदेऽपि प्रकाशमा-नत्वनिराकरणमतन्त्रमित्याह पूर्वपक्षी अभेद इति । भेदनिराकरणमे-वाभेदसाधनमिति न प्रकारभेद इत्याह वस्तुनीति ।

(३) ननु नीलाद्याकारं चेतो नीलादिभ्यो न भिन्नं नाप्यभिन्नं, भेदे सति नीलादीनां प्रकाशमानत्वानुपपत्तिरभेदे नीलादीनामेकरूप-तापत्तौ चित्ररूपत्वं ज्ञानस्य भज्येतेत्यभिप्रायेणाहाक्षेप्ता अस्तु तर्हीति ।

(४) ननु स्वस्मिन्नजडं चेत् परत्रापि तथा स्यात्, परत्रान्धं चेत्तदा स्वस्मिन्नपि तथा स्यादित्यत्र किमापादकमत आह जात्यैवेति । यज्जातीयं तत्सर्वं प्रति तथैवेति दर्शनादित्यर्थ इति मिश्राः ।

(५) तदेतत्तुल्यमित्याह नोच्चैरिति मिश्राः । एतन्मतेनाऽत्र मूले नोच्चैर्ब्रूया इत्येव पाठो द्रष्टव्यः ।

चेत्" । न, (१)मिथोविरुद्ध(विधि)द्वयविधिवत् तदुभयनिषेधस्याप्येकत्र विरुद्धत्वात् । न च सोऽप्यस्त्विति वाच्यम् । (२)स्याद्वादावतारे तथापि दिगम्बरत्वप्रसङ्गात् ।

(३)"अस्तु तर्हि चतुःशिखरशून्यमेव चित्रमाश्चर्यरूपत्वात्, एकानेकत्वाविरहेऽपि सत्त्वमित्याश्चर्यार्थो हि चित्रशब्द इति चेत्" । (४)अथ चतुःकोटिशिखरशेखरमेव किं न स्यात्, आश्चर्यरूपतायुक्तेस्तुल्यत्वात् ।

देव विरुद्धधर्माध्यासादित्यर्थः । न च सोऽपीति । विरुद्धद्वयविधिरपीत्यर्थः(५) ।

चतुःशिखरशून्यमिति । अथवा भेदाभेदाभ्यां तदभावाभावाभ्यां चतुर्भिः शून्यमिति(६) । आश्चर्यरूपतायुक्तेः=एकानेकत्वयोगेऽपि सत्त्वमित्यस्याः, तुल्यत्वात् । ननु ज्ञानज्ञेययोर्भेदे प्रकाशायोगात्

---

(१) यथा गोभेदाभेदावेकत्र विधातुं न शक्येते तथा निषेद्धुमपीत्याह समाधाता मिथ इति । अत्र विधिवद्विरुद्धद्वयनिषेधस्यापीति पाठान्तरं द्रष्टव्यम् ।

(२) स्यादिति । स्यादित्यादिरूपो वादः स्याद्वादः जैनमतोक्तसप्तभङ्गीवाद इत्यर्थः । तथाच यद्यदनिष्टं मयाऽऽपाद्यते तत्र तत्र तवेष्टापादने दिगम्बरमतानुप्रवेश इति भावः ।

(३) शङ्कते अस्त्विति । अत्र चित्रशब्दो न कर्बुरार्थः किन्त्वाश्चर्यार्थ इत्याह एकानेकेति । नीलाद्याकारं ज्ञानं नैकं विरुद्धधर्माध्यासात्, [illegible] नानेकं तथात्वविभागप्रसङ्गात्, एवं विरोधे वर्तमानेऽपि चैतादृशं [illegible] आश्चर्यमित्यर्थः ।

(४) [illegible] अथेति । चतुष्कोटिशून्यतापेक्षया चतुष्कोटिप्र[illegible] [illegible] [illegible]वेऽप्यनुपपन्नत्वाविशेषादाश्चर्यरूपतायुक्तेस्तुल्य[illegible]

[illegible] इति [illegible] ।

[illegible] इति [illegible]

एकैकपक्षानुपपत्तिश्च यथा तन्निषेधपर्यवसायिनी तथाऽतद्विधिपर्यवसायिन्यपीति। (१)अपि चात्र वस्तुतश्चतुःकोटिविरहे चेतसो भावान्तरेणेदमुक्तम्—'यदनात्मान एवैताश्चतस्रः कोटयो भासन्ते न वा प्रतिभान्ती'ति तत्राप्रतिभानमनुत्तरम् । प्रतिभाने तु ग्राह्यलक्षणायोगेऽपि ग्राह्यभाव इति चित्रमेतत्, तथाच चित्राद्वैतादरं (२)चित्रद्वैतमस्तु प्रतिभासनानुरोधादिति ।

---

अभेदे चित्रत्वानुपपत्तेरुभयात्मकत्वविरोधादनुभयात्मकत्वेऽपि तथाभावाच्चतुःशिखरशून्यमेव युक्तमत आह(३) एकैकपक्षेति । यथैकैकपक्षानुपपत्तिस्तत्तत्पक्षनिषेधपर्यवसायिनी तथा तदितरपक्षविधिपर्यवसायिनी, अतस्ताभिरेवानुपपत्तिभिः चतुःशिखरिशेखरत्वमेव स्यादिति । अप्रतिभानमनुत्तरमिति । भासामप्रतिपत्तौ तदभावस्य प्रत्येतुमशक्यत्वादिति भावः । प्रतिभाने तु=अनात्मभूतानां कोटीनां प्रतिभाने तु, ज्ञानात्मकत्वस्य ग्राह्यलक्षणस्याभावेऽपि ग्राह्यत्वमिति चित्रमेतत् । ननु ज्ञानज्ञेययोर्भेदाभेदपक्षयोरुभयोरपि विचित्रत्वाविशेषः, भेदपक्षानुरागे को हेतुरत आह तथेति ।

---

(१) किञ्चैताश्चतस्रः कोटयो भासन्ते न वा, आद्ये ज्ञानाद्भिन्ना एव भासन्त इति ग्राह्यलक्षणाभावादपि भानमित्येकं चित्रम्, एकानेकत्वविधुरमेकमेव ज्ञानं सदित्यपरं चित्रम्, तथा च चित्रद्वैतमेवाङ्गीकर्तव्यं प्रतिभानस्यावश्यकत्वात्, ततः कोटयो न भासन्त इति पक्षः स्ववचनविरोधादेव (न) त्याज्यः, अभाने चतुष्कोटिशब्दप्रयोगस्यैवानुपपत्तेरित्यभिप्रायेणाह सिद्धान्ती अपि चेति ।

(२) चित्रद्वैतमिति । ग्राह्यलक्षणाभावेऽपि ग्रहणमित्येकं चित्रम्, [illegible] ग्रहणमेकत्वानेकत्वविधुरमिति तन्मतानुसारादपरं चित्रमित्यर्थः।

(३) यथैकैकपक्षानुपपत्त्या सर्वकोट्यभावाच्छून्यता स्यादित्यत [illegible]ति । यः पक्षो नोपपद्यते तस्य यथा निषेधस्तथा तद्विपरी[illegible]स्यापि विधिरित्यर्थं इति मिश्राः ।

(१)"स्यादेतत्, बहिरन्तरुभयत्रापि ग्राह्यलक्षणक्षतिरस्तु, प्रकाशमानत्वन्तु नीलादीनामशक्यापह्नवम्, तावन्मात्रञ्चास्माकमभिमतमिति चेत्"।

(२)तदेतद्विक्रीतगवीरक्षणम्। किमिदं हि प्रकाशमानत्वं यत्सर्वथा ग्राह्यलक्षणक्षतावपि न क्षीणम्। न प्रकाशसम्बन्धो नियमानुपपत्तेरित्युक्तम्(३)। न प्रकाशतादात्म्यं चित्रत्वानुपपत्तेरित्युक्तम्(४)। तस्मान्नीलादीनां प्रकाशमानत्वं परिपालयता ग्राह्यलक्षणे यत्नः कर्तव्यः, परिहर्तव्यं वा प्रकाशमानत्वम्, अन्यथा तप-

---

बहिरन्तरिति। अन्तरपि ग्राह्यलक्षणक्षतिः प्रागेवोक्ता साऽनुसन्धेया। तावन्मात्रञ्चेति। नीलादीनां प्रकाशमानत्वेन जडत्वव्यावृत्तेः सिद्धत्वादिति। (५)अन्यथा तपनीयमिति। तपनीय

---

(१) ननु नीलादयः प्रकाशात्मानः प्रकाशमानत्वादित्येतावन्मात्रमस्मदभिमतम्, ननु स्वस्य परस्य वा वेदनमित्यभिप्रायेणाशङ्कते स्यादेतदिति। बहिरन्तरिति। स्वसंवेदने परसंवेदने वा ग्राह्यलक्षणक्षतिरस्त्वित्यर्थः।

(२) नीलादीनां प्रकाशमानत्वं त्वयैव दूरीकृतं, त्वयैव च ज्ञानाभिन्नत्वे साध्ये हेतुत्वेनापादीयत इत्यभिप्रायेणोपहासं करोति सिद्धान्ती तदेतदिति।

(३) व्यापाराधानमन्तरेण नियमानुपपत्तेरिति त्वयोक्तमित्यर्थः।

(४) विरुद्धधर्माध्यासे चित्राकारज्ञानस्य भेदप्रसङ्गादिति मयोक्तमित्यर्थः। तथा चोभयथापि प्रकाशमानत्वं नीलादीनामनुपपन्नम्, एवं च भेदेऽपि विषयविषयिभावोऽभ्युपगम्यते इत्युपहासबीजं द्रष्टव्यम्। एतदभिप्रायेणैवोपसंहरन्नाह तस्मादिति।

(५) अत्र ज्ञानाभिया तदयमाकारबाह्यतामातिवाह्य वादव्यवसायिनो भेदसाधनाविधिस्तपनीयमपनीय वाससि ग्रन्थिकरणमनुहरतीति सोल्लासमुक्तम्, तदिदानीमवसरप्राप्तेनोपहासान्तरेण ग्रन्थिलयन्नाहान्यथेति। नीलादीनां ज्ञानाकारता तावत्तपनीयं तत्त्वया परित्यक्तम्, वाह्यरक्षा वाससि ग्रन्थिः, स च क्रियते, तदनुपपन्नम्, नहि ज्ञानाकार

नीयमपनीय वासासि ग्रन्थिकर्तारमुपहससि स्वयं च कनकमुपादाय गगनाञ्चले ग्रन्थिं करोषीति । सेयं सर्वप्रकारमसिद्धिः । सर्वप्रकारञ्चानैकान्तिकत्वमिति ॥

(१)एतेन द्वितीयः पक्षः प्रत्युक्तः । नहि सजातीय-

---

स्थानं प्रकाशमानत्वम् बाह्ये वासःस्थानीये, ग्रथयन्तं बाह्यवादिनं, बाह्यस्य प्रकाशमानत्वायोगात् प्रकाशमानत्वमपनीय ग्रथयतीत्युपहससि, त्वन्तु प्रकाशमानत्वमुपादायाकारक एव ग्रथयसि नीलादीनां ज्ञानाद्भेदाभेदयोरपि ग्राह्यत्वलक्षणायोगेनानुभयात्मकत्वात्प्रकाशाधारत्वानुपपत्तेरित्यर्थः । प्रकृतं सहोपलम्भादीनामुक्तदोषमुपसंहरति (२)सेयमिति । स्वरूपासिद्ध्यादिभिः व्याप्यत्वासिद्ध्यादिसर्वप्रकारैरसिद्धिः, नहि भेदाप्रथन इत्यादिकेनासिद्धिरित्यर्थः । अनात्मन्यपि सहोपलम्भादयोऽयता इत्यस्योपसंहारः—सर्वप्रकारं चानैकान्तिकत्वमिति । ग्राह्यग्राहकभेदस्य स्फुरतः सत्त्वासत्त्वोभयप्रकारे विज्ञानात्मकतानुपपत्तेरुभयत्रापि हेतोरनैकान्तिकत्वात्सर्वप्रकारमनैकान्तिकत्वमित्युक्तमिति । कालात्ययापदेशदोषस्याप्युक्तत्वात्तदुपसंहारोऽप्यत्र द्रष्टव्य इति ॥

एवं ग्राह्यग्राहकयोरेकव्यक्तित्वं निराकृत्य एकजातीयविकल्पद्वयं तदुक्तेनैव ग्राह्यलक्षणायोगेन निराकरोति एतेनेति । कथमित्यत आह—नहीति । ग्राह्यस्य सर्वथा जडत्वे प्रकाशसम्भावनैव नास्ति अतोऽ-

---

तिरस्कारे ग्राह्यलक्षणस्थितिरिति परोपहासार्थः । यथा भेदे ग्राह्यलक्षणाभावस्तथा स्वसंवेदनेऽपि, तथाच सर्वथा ग्राह्यत्वलक्षणाभावेऽपि प्रकाशमानत्वस्य गगनाञ्चलग्रन्थेः करणमिति परं प्रति नैयायिकानामुपहास इति मिश्राः ।

( १ ) एतेनेति ग्राह्यलक्षणाभावेनानैकान्तिकत्वेन, नीलादीनां ज्ञानाभिन्नजातीयत्वपक्षोऽपि निरस्त इत्यर्थः ।

( २ ) सेयमिति । नीलादि ज्ञानाभिन्नं प्रकाशमानत्वात्सहोपलम्भाद्वेत्यादिहेतूनां नीलादिग्राह्यानभ्युपगमे आश्रयासिद्धत्वम् , भेदेऽभेदग्राह्यलक्षणाभावात्स्वरूपासिद्धत्वम् , तद्व्याप्यधर्मवत्त्वं हि तद्-

त्वेन ग्राह्यलक्षणवैधुर्यमुत्सार्यते, (१)अतिप्रसङ्गस्य तादवस्थ्यात् । "जडत्वे (न) प्रकाशासम्भावनैवेति चेत्" । न, तुल्यत्वात्, यथा ह्यसंवेदनवादिनः परं प्रति प्रकाशमपि ज्ञानमात्मनि जडमेव, तथा स्वसंवेदनमात्रवादिनोऽपि स्वात्मनि प्रकाशमपि ज्ञानं परं प्रति जडमेव । (२)कथञ्चिद् बुध्यन्तरेऽप्यजडञ्चेत् , बाह्येऽपि तथा किन्न

---

सम्भावितप्रकाशस्य प्रकाशाभ्युपगमेऽतिप्रसङ्गः स्यान्नैवमन्यत्रेति शङ्कते (३)जडत्वेति । परिहरति नेति । बाह्यस्य सर्वथा जडत्वे तदितरत्वे च प्रकाशासम्भावनायास्तुल्यत्वादित्यर्थः । एतदेव निदर्शनप्रदर्शनेनोपपादयति यथाहीति । (४)अयमर्थः-यथा ह्यस्वसंवेदनवादिमते परं प्रति प्रकाशोऽपि ज्ञानं न तावता स्वात्मन्यपि तथा किन्तु जडमेव, तथा स्वसंवेदनवादिमतेऽपि स्वात्मानं प्रति प्रकाशोऽपि परं प्रति जडमेव ग्राहकं ज्ञानमतो ग्राह्यस्वभावस्य जडत्वे तदितरत्वे च तत्र ग्राहकजडत्वस्य तुल्यत्वात्तुल्यैव प्रकाशासम्भावनेति । कथञ्चिदिति ।

---

भेदे साध्ये उपाधिरिति सोपाधिकत्वाद्व्याप्यत्वासिद्धत्वं चेत्यर्थः । सर्वेति । प्रकाशमानत्वास्यालीके भेदेऽपि गतत्वात्साधारणत्वम् , सपक्षविपक्षव्यावृत्तत्वादसाधारणत्वमत एव चानुपसंहारित्वं चेत्यर्थ इति मिश्राः ।

( १ ) सजातीयस्यापि ग्रहे ग्राह्यलक्षणक्षतिस्तदवस्थेत्याह अतिप्रसङ्गस्येति । घटपटादीनां सर्वेषां ज्ञानजातीयतया घटज्ञानस्य पटविषयत्वप्रसङ्गस्तदवस्थ एवेत्यर्थः ।

( २ ) ननु ज्ञानजातीयस्यायं स्वभावो यत्स्वेतरमपि प्रकाशयति नतु जडजातीयस्येत्यत आह कथञ्चिदिति । विपक्षे बाधकाभावाज्ज्ञानानां स्वेतरप्रकाशनसामर्थ्ये स्वभिन्नजडप्रकाशनसामर्थ्यमप्यास्तामित्यर्थः ।

( ३ ) प्रकाशमानत्वेन ज्ञानजातीयत्वं सेत्स्यति जडस्य प्रकाशमानत्वानुपपत्तेरिति शङ्कते जडत्वे इति मिश्राः ।

( ४ ) नैयायिकानां स्वात्मनि जडं बौद्धानान्तु स्वभिन्नं ज्ञानजातीयमपि जडमेव, तथाच तदपि कथं गृह्णीयादित्यर्थ इति मिश्राः ।

स्यादिति सन्दिग्धविपक्षव्यावृत्तित्वम्(१)।

(२)"ननु बाह्ये सर्वथैव बाह्यलक्षणक्षतिः, इह तु समानोपादानतानियमेन चित्राकाराणां परमार्थभिन्नानामेव व्यतिवेदनसिद्धिः"।

न, मिथः प्रथानियमे ह्युपादानमुखेन सामान्यतो वा सामग्रीसामर्थ्यमेव वक्तव्यम्, अन्यथा तथाविधकार्यानुत्पत्तेः। तथा च बाह्य(३)ग्राह्यनियतस्वभावज्ञानो-

अस्यार्थं व्याकरिष्यति 'समानोपादानेने'त्यत्र। सन्दिग्धविपक्षव्यावृत्तिकत्वमिति। प्रकाशमानत्वादीनां ग्राह्यस्याबाह्यत्वसाधकानां बाह्ये(त्वे)पि वृत्तित्वशङ्कया सन्दिग्धविपक्षव्यावृत्तिकत्वमिति।

नन्विति। अयमर्थः—बाह्यस्य ग्राह्यत्वे तस्य ग्राहकादत्यन्तभेदात् समानोपादानत्वस्य नियामकस्याभावात्सर्वथा ग्राह्यलक्षणक्षतिरिह तु ज्ञानान्तरग्राह्यत्वपक्षे ज्ञानत्वेनाभेदाद्वेद्यवेदकयोर्ज्ञानान्तरेभ्यश्च तद्भावनियामकस्य समानोपादानत्वस्य विद्यमानत्वाच्चित्राकाराणां ग्राहकाद्विलक्षणाकाराणां परमार्थभिन्नानां केनचित्कस्यचिदेव वेदनं न सर्वेण सर्वस्येत्येवं व्यतिवेदनसिद्धिर्व्यवस्थितवेदनसिद्धिरिति।

एवं कथञ्चिदित्याद्याशङ्का निवृत्ता, इदानीं बाह्येऽपि तथेति परिहारं विवृणोति न मिथ इति। अयमर्थः—अनेनैवास्यैव प्रथेत्येवं मिथः प्रथानियमे उपादानकृतसामग्रीसाहित्यं वा स्वकारणसाधारण्येन सामग्रीसामर्थ्यं वा निमित्तं वक्तव्यम्, अन्यथा क्वचिन्नियतस्वभाव-

(१) अत्र मिश्रादिमते विपक्षवृत्तित्वमिति पाठान्तरम्।

(२) नन्वभिन्नमपि समानोपादानं गृह्णातीति नियमः, स च बाह्यानां ज्ञानसाजात्ये स्यान्नतु वैजात्ये इत्याह पूर्वपक्षी नन्विति। चित्राकाराणां नीलधवलाद्याकाराणां, व्यतिवेदनमन्योन्यवेदनमिति मिश्राः।

(३) बाह्ये ग्राह्येति पाठान्तरम्।

त्पत्तावपि सुलभमेतादिति पूर्वोक्त एव दोषः(१)।

"अस्तु (२)तर्हि तृतीयः, सर्वथा ग्राह्यलक्षणानुपपत्तेः, तदभावे सामग्रीसामर्थ्यस्याप्याश्रयितुमशक्यत्वात्, विचारसिद्धे हि वस्तुनि कारणचिन्तनावसरो न त्वविवेचित इति चेत्"।(३)तत् किं "ग्राह्यलक्षणानिवृत्त्या प्रकाशमानत्वममीषां निवर्तते सत्त्वं वा? न प्रथमः, नहि लक्षणापरिज्ञानमात्रेण (४)स्पष्टदृश्यमपि

---

कार्यानुत्पत्तेरिति। सुलभमेतत्सामग्रीसामर्थ्यमित्यर्थः। पूर्वोक्त एव= सन्दिग्धविपक्षव्यावृत्तिकत्वदोषः (५)सहोपलम्भादिनामिति।

ग्राह्यांशस्यालीकत्वं वेति तृतीयं विकल्पमाशङ्कते अस्त्विति। सर्वथा=ग्राहकादन्यत्वेन वा तत्सजातीयत्वेन वा सर्वप्रकारेण ग्राह्यलक्षणानुपपत्तेरित्यर्थः। ननु सामग्रीसामर्थ्यादेव ग्राह्यलक्षणं सेत्स्यतीत्यत आह तदभावे(६) इति। कथमशक्यतेत्यत आह विचारेति। अयमर्थः—इदमेवंलक्षणकमित्यव्याप्त्यतिव्याप्तिपरिहारेण निरूपितरूपे वस्तुनि किमस्य कारणमित्येवं कारणचिन्ताया अवसरः,

---

(१) अयम्भावः—ज्ञानानां भेदे ग्राह्यग्राहकभावस्त्वयाप्यङ्गीकृत एव, तत्र नियामकं समानोपादानत्वं त्वयोच्यते, मया तु स्वसामग्रीत स्तथैव तज्ज्ञानमुपपद्यते येन घटमेव गृह्णाति न तु पटमपीत्येतत्तुल्यमित्यर्थः। उपादानमुखेन विशेषः तथाविधेति। ज्ञानजातीयमपि स्वभिन्नमेव गृह्णाति नतु स्वमपीति नियामकं तत्रापि कारणशक्तिभेद एवेत्यर्थं इति मिश्राः।

(२) यदि तज्जातीयस्वेऽपि ग्राह्यस्वलक्षणं तदेत्यर्थः। हेतुमाह सर्वथेति।

(३) परिहरति तत्किमिति। ग्राह्यलक्षणं मन्मते सुवचमेव, त्वया निर्वक्तुं न शक्यते एतावता प्रकाशमानत्वं नीलादीनां निवर्तते सत्त्वं वेति सिद्धान्तिप्रश्नाशयः। (४) सर्वानुभवसिद्धम्।

(५) हेतूनामित्यर्थः।

(६) ग्राह्याभाव इत्यर्थः। तदभावस्यालीकत्वादिति भावः।

लक्ष्यमपह्नोतुं शक्यते, अपरिज्ञानमात्रस्य दुरूहत्वेनाप्युपपत्तेः, तेषामप्रतिभाने तन्निषेधस्यानुपपत्तेः(१)।

(२)न द्वितीयः, तदा हि तल्लक्षणानुपपत्तिः सत्त्वं निवर्तयेत् यद्यसत्त्वे लक्षणमुपपद्येत, उभयथाप्यनुपपत्तौ कोऽनुरागोऽसत्त्वे। "तदेव लक्षणमिति चेत्"। सत्त्वमेव किन्न स्यात्। "अतिप्रसङ्गादिति चेत्"। (३)तुल्यम्। "वेदनाधीनव्यवहारगोचरत्वमिति चेत्"। अस्तु तावदिदं, तस्यैवेति तु नियमः कुतः। "(४)साम-

न त्वनिरूपिते कारणबुभुत्साया एवाभावादिति। लक्ष्यमिति। ग्राह्यलक्षणेन लक्ष्यमात्रं ग्राह्यत्वं तच्च प्रकाशमानत्वमेवेत्यभिप्रायः। (५)अपरिज्ञानमात्रस्येति। लक्षणानिर्वचनेन हि तदज्ञानमुन्नीयते न तु लक्षणाभावज्ञानमतस्तदज्ञानमात्रं तस्य दुरूहत्वेनाप्युपपद्यते इति। किञ्च नीलादीनामप्रकाशे तेषामप्रकाशमानत्वेन निषेद्धुं न शक्यते इत्याह तेषामिति।

अतिप्रसङ्गादिति। यदि नीलस्य नीलज्ञानं प्रति सत्त्वमेव ग्राह्यत्वलक्षणं पीतस्यापि तत्त्वाविशेषात्तद्ग्राह्यत्वं स्यादिति। वेदनेति। वेदनाधीनव्यवहारगोचरत्वं ग्राह्यलक्षणमित्यर्थः। अस्त्विति। अस्तु तावदिदं व्यवहारगोचरत्वं लक्षणं तस्यैव न पीतस्येति कुतो निया-

(१) यदि बाह्यानामप्रतिभासस्तदा तत्र लक्षणं नास्तीत्ययं निषेधो न घटते ग्राह्यत्वेन तेषामेवाभिधानादित्यर्थ इति मिश्राः।

(२) न द्वितीयः—ग्राह्यलक्षणनिवृत्त्या सत्त्वनिवृत्तिरूपो द्वितीयः पक्षः। तदा हीति। यद्यसत्त्वं ग्राह्यलक्षणनिर्वाहकं भवेत्तदा तत्कल्पयितुमुचितमिति भावः।

(३) असत्त्वे भेदे च ग्राह्यत्वे घटज्ञानमपि पटविषयकं स्यादिति तुल्यमित्यर्थः।

(४) सामग्रीसामर्थ्यं तत्र नियामकमित्याह सामग्रीति इति।

(५) ननु ग्राह्यलक्षणं न ज्ञायते चेन्नास्त्येवेत्यत आहापरिज्ञानमात्रस्येति।

प्रीतस्तथावेदनोत्पत्तिरिति चेत्"।(१)तदेतत् सम्भाव्यते सति न त्वसतीति विशेषः । यथाहि सति ज्ञानेनाभिलाषस्तेन यत्नस्तेन प्रवृत्तिः तया तत्प्राप्तिः क्रियते, न तथाऽलीके तस्य प्राप्तुमशक्यत्वात् , शक्यत्वे वाऽनलीकत्वात् । "व्यवहारोऽप्ययमलीक(२) इति चेत्" । तर्हि सुतरां लक्षणाभावः, (३)तद्द्वारस्याप्यभावात् ।

अस्तु तर्हि सर्वथा विचारासहत्वमेव विश्वस्येति चेत्" । तत्किमिदानीं(४) तत्त्वोपप्लव एव काष्ठा,(५)

---

मकादित्यर्थः(६) । तदेतदिति । तदेतल्लक्षणं सत्येव सम्भाव्यते न त्वसतीति विशेष इति । ( ननु पूर्ववत्स्वरूपत्वमिति भावः ) । सत एव व्यवहारगोचरत्वमित्येतदेव दर्शयति (७)यथाहीति । तद्द्वारस्येति । व्यवहारद्वारस्याभावादिति ।

ननु यद्यलीकपक्षेऽपि दोषः तर्हि सत्त्वेनालीकत्वेन वा रूपेण विचारासहत्वमेव विश्वस्यास्त्विति शङ्कते (८)अस्तु तर्हीति । किमिदानीमिति । किं नीलादिप्रपञ्चस्य केनापि रूपेणानिरूप्यत्वमेव साध्यते,

---

( १ ) तदेतदिति । अर्थसामर्थ्यसमुत्थत्वाज्ज्ञानस्येत्यर्थः ।

( २ ) अलीकानिर्वाह्य इत्यर्थः ।

( ३ ) तद्द्वारस्यापीति । तथा च वेदनाधीनव्यवहारगोचरत्वं सङ्ग्राह्य लक्षणं कृतं तत्सुतरां न सम्भवतीत्यर्थः ।

( ४ ) इदानीं विज्ञानवादसमाप्तिदशायामिति कल्पलता ।

( ५ ) काष्ठा पर्यवसानम् । आवाभ्यामेतत्पर्यन्तकृतविचारेण सिद्धमेतद्यत्किमपि तत्त्वं नास्ति सर्वं वा शून्यमिति विकल्पार्थः ।

( ६ ) घटज्ञानेन घटव्यवहारो जन्यते न पटव्यवहार इत्यत्र किं नियामकमित्यर्थं इति मिश्राः ।

(७) बाह्यसत्वे परं व्यवहारोपपत्तिर्नासत्व इत्याह यथाहीति मिश्राः ।

( ८ ) ननु ग्राह्यं सत्त्वेनाप्यसत्वेन न भिन्नत्वेन नाप्यभिन्नत्वेन विचारयितुं न शक्यते चेत्तदा विश्वस्य विचारासहत्वमेवोचितमित्याह अस्तु तर्हीति मिश्राः ।

शून्यता वा ? न प्रथमः, इयतीं भूमिमारूढस्यापि विचारस्य निश्चलतायां प्रमाणाभावात्, भावे वा कथं, तत्त्वोपप्लवस्यैव विचारस्यानुपप्लवात्, तत्समानन्यायस्यान्यस्यापि तथाभावप्राप्तेर्निष्फलत्वाच्च । न ह्यस्याः तिप्रवृत्तिः फलम्, गगनास्वादनेनातृप्तेः, ज्वालाकलापालिङ्गनेन तापानपनोदात् । (१)नाप्यतिनिवृत्तिः, जडीभावमात्रेऽप्युपनिपातिदुःखानिवृत्तेः ।

---

अथवाऽनिरूप्यत्वादेव प्रपञ्चस्य शून्यतेति । इयतीमिति । प्रपञ्चोपप्लवरूपामियतीं भूमिमधिरूढस्य तद्विषयस्य प्रतिज्ञाहेत्वादिरूपस्य विचारस्य निश्चलतायामनुपप्लवतायां प्रमाणाभावादित्यर्थः । ननु तत्त्वोपप्लवसाधकविचारव्यतिरिक्तस्यैव सर्वस्योपप्लवः साध्यते न तस्यापीत्यत आह (२)तत्समानेति । उपप्लवसाधकविचारेण प्रामाणिकतया तुल्यन्यायस्याप्यनुपप्लवप्राप्तेरिति । निष्फलश्चायं विचार इत्याह निष्फलत्वाच्चेति । तत्त्वतः सर्वमुपप्लुतमिति विचारस्य सर्वार्थिनां सर्वत्राप्रवृत्तिर्वा फलं, दुःखनिवृत्त्यर्थिनां सर्वतो निवृत्तिर्वा, यथालोकव्यवस्थया परलोकनिवृत्तिर्वा ? सर्वथा न सम्भवतीत्याह (३)नहीति । गगनास्वादनेनेति । (४)खण्डास्वादनेनेव गगनास्वादनेनातृप्तेः । यथा जलकामिन्याद्यालिङ्गनेन तापनिवृत्तिः तथा ज्वालाकलापालिङ्गने न ताप-

---

(१) नन्वनेन विचारेण तत्त्वोपप्लवे ज्ञाते मुमुक्षूणां सर्वथा निवृत्तौ दुःखहानिः स्यादेतदर्थं विचारारम्भ इत्यत आह नापीति । स्यादेवं यद्यतिनिवृत्तौ दुःखविरहः स्यान्नचैवमित्यर्थः ।

(२) अनेन विचारेण तत्त्वोपप्लवः सिद्धोद्विचारस्याप्युपप्लवो वा ? आद्ये कथमनेन तत्सिद्धिः, अन्त्ये विचार एव न वस्तुसिद्ध इति कथं तत्त्वोपप्लवः, विचारस्यानुपप्लवे विचार्य आत्मा, स च ज्ञानभिन्नो नित्यो विभुश्चेत्याद्यसिद्धमेवेत्याह तत्समानेति मिश्राः ।

(३) ननु सुखार्थिनां चन्दनादावेव नियता प्रवृत्तिर्मा भूदेतदर्थं विचारारम्भ इत्याह नहीति । तथासति गगनादावपि प्रवर्तेत न च ततः सुखमिति नैतत्फलमित्यर्थः । (४) शर्करास्वादनेनेवेत्यर्थः ।

नच दुःखमपि विचारासहमित्यहेयमेव, तथावि- धस्य विचारेऽप्यनधिकारात् । नापि यथालोकं व्यव- स्थितिः,(१) विचारात्प्रागपि तस्याः पामरादिवदयत्न- सिद्धेः । (२)नापि परलोकमात्रान्निवृत्तिः, तस्यैहिकतु- ल्यत्वात् । (३)"दृश्यते हि तावदयमिति चेत्" । (४)यदि ज्ञानवचनो दृशिस्तदा परोऽपि तथा । साक्षात्कारव-

निवृत्तिः, अतो न तत्फलार्थिनां तत्र प्रवृत्तिः सम्भवतीति । जडीभा- वेति । दुःखहेतुनिवृत्तिवत्तत्परिहारोपायेभ्योऽपि निवृत्तौ जडीभाव उक्तः स्यात्तत्रापि दैवोपनिपातिदुःखानिवृत्तिः ।

तत्परिहारोपायेष्वपि प्रवर्तमानस्य हेयदुःखाभावः सिद्ध्येदिति दुःख- स्यापि विचारासहत्वाद्धेयत्वमेवासिद्धमिति चेत्तत्राह (५)नचेति । दुःखाहेयत्ववादिनोऽपि विचारेऽप्यनधिकारात् । सर्वे हि दुःखजिहासया तद्धानोपायान्यथाज्ञाननिवारणाय वा विचारेषु प्रवर्तन्त इत्यर्थः । पाम- रादिवदिति । नहि ते विचारपूर्वं प्रवर्तन्त इति । ऐहिकतुल्य- त्वादिति । ऐहिकवत्पारलौकिकस्यापि दुःखस्यैहिकसुखतुल्यजातीय- तया ऐहिकतुल्यत्वेन जात्या तस्यापि प्रत्यक्षत्वादित्यर्थः(६) । अथवा

(१) यथालोकव्यवस्थितिरिति पाठान्तरम् । विचारफलमिति पूर्वेणानुषङ्गः । लोकतः सिद्धादन्यत्किमपि तात्त्विकमित्येव विचार- फलमित्यपि नास्तीत्यर्थः । अत्र हेतुमाह विचारादिति ।

(२) ननु विचारेण तत्त्वोपप्लवे ज्ञाते स्वस्वार्थिनां नरकभीरूणां वा गर्हिसादौ प्रवृत्तिनिवृत्ती मा जायेतामित्येतदेव विचारफलमित्यत आह नापीति ।

(३) शङ्कते दृश्यते इति । इह लोके अयं प्रवृत्तिनिवृत्तिव्यवहारो दृश्यत इति ऐहिकप्रवृत्तिनिवृत्ती स्यातामित्यर्थः ।

(४) विकल्प्य समाधत्ते यदीति । आगमात्परलोकस्यापि ज्ञानात्तत्रा- पि प्रवृत्तिनिवृत्ती स्यातामित्यर्थः ।

( ५ ) नन्वतिनिवृत्तिरेव विचारफलं, जडीभूतस्यापि दुःखोपपत्ति- स्तदाऽनिष्टं भवेद्यदि दुःखं हेयं न स्यात् , नचैवमित्याह नचेति मिश्राः ।

( ६ ) प्रत्यक्षत्वापातादित्यर्थः । मिश्रास्तु एवंसति स्वस्वार्थिनां

चनश्चेत्, (१)इहैवानुमानादेव प्रवृत्तिप्रसङ्गः । "(२)तदपि प्रत्यक्षमिति चेत्" । (३)आमुष्मिकमपि प्रत्यक्षमेव तुल्यलक्षणत्वात् । "अरुचेरेव तत्र न प्रवृत्तिरिति चेत्" । तथापि किं विचारेण, तमन्तरेणापि तस्याः सुलभत्वात् । "तामेवायं पुष्णातीति चेत्" । अविशेषादिहापि पुष्णीयादिति ।

योगिप्रत्यक्षगम्यातीन्द्रियतुल्यत्वादिति, ऐहिकवत्पारलौकिकलक्षणत्वेन पारलौकिकस्यापि योगिप्रत्यक्षगम्यत्वमिति । अरुचेरिति । अरुचिरविश्वासः । तामेवेति । तत्त्वोपप्लवविचारेऽरुचिमेव पुष्णाति उत्तम्भयतीत्यर्थः । अविशेषादिति । अयमर्थः—आमुष्मिकस्य स्वलक्षणस्य साक्षात्प्रत्यक्षत्वाभावेनारुचिं स्वतःप्रवृत्तां यथा तत्त्वोपप्लवविचारे उत्तम्भयति, तथैहिकेऽप्यनुमानादिसिद्धेररुचेः प्रवृत्ताया विचारेणोत्तम्भत्वादत्रापि प्रवृत्तिविरोधः स्यादिति ।

सोऽयं तत्त्वोपप्लववादी विचारसागरं लङ्घयित्वा सत्त्वेनासत्त्वेन वा प्रपञ्चस्य तत्त्वनिरूपणं कृतवतां विदुषां वचांसि श्रुत्वा स्वयमपि तत्त्वनिरूपणाय विचारे प्रवृत्तस्तत्करण एवाशक्तो विचारासहमेव विश्वतत्त्वोपप्लवकाष्ठेति वदन् समुद्रलङ्घनादिविषयहनुमत्पराक्रमवचनं श्रुत्वा स्वयमपि तत्कर्तुमुपक्रम्य असमर्थत्वान्महार्णव एव पतित्वा अपार एवाऽयं सागरः हनूमतस्तल्लङ्घनेन (आ) पारप्राप्त्यादिकथया रामायणं मिथ्यैवेति

---

दुःखभीरूणामिहापि चन्दनादिकण्टकादिप्रवृत्तिनिवृत्ती न स्यातामित्यर्थ इत्याहुः ।

(१) इहैवेति । असाक्षात्क्रियमाणेऽपि वह्न्यादौ प्रवृत्तिदर्शनान्नायं नियम इत्यर्थः ।

(२) आक्षिपति तदपीति । इन्द्रियसन्निकर्षकाले वह्न्यादिकमपि प्रत्यक्षमेवेत्यर्थः ।

(३) समाधत्ते आमुष्मिकमिति । स्वर्गसुखं नरकदुःखं च प्रत्यक्षमेव, सुखत्वदुःखत्वरूपप्रत्यक्षतास्वलक्षणस्य तयोरपि तुल्यत्वादिति समाधानार्थः ।

(१)सोऽयं पवनतनयवार्तामुपश्रुत्य तत्स्पर्द्धया बाल-वानरः कियदपि दूरमुत्प्लुत्य महार्णवे पतितः प्राह-'अपार एवायमकूपारो मिथ्या रामायणमि'ति , तत् किमनेन। (२)'एवं ज्ञातुं निर्वक्तुं वा न शक्यते कीदृशं जगदि'त्येतावन्मात्रमपि पामरदशावन्निष्फलमेव। न च निष्फलत्वेऽपि श्रद्धेयमिदं, तावत्परामर्शपाटवाभा-वेनाप्युपपत्तेः। नहि जात्यन्धो नीलं ज्ञातुं निर्वक्तुं वा न शक्त इत्यज्ञेयानिर्वाच्यमेव (३)तल्लोक इति॥

(४)"अस्तु तर्हि शून्यतैव परमं निर्वाणमिति चेत्"।

---

वदता बालवानरेण तुल्य इत्याह सोऽयमिति। सादृश्याद्बालादिनो वानर-त्वव्यपदेशो गौणः, सिंहो देवदत्त इतिवत् , एवं मिथ्या रामायणमित्या-द्यपि, सादृश्यं चोक्तमेवेति। एवं जगतो ये ज्ञाननिर्वचनाशक्यत्वात्मक-मनिर्वचनीयत्वं वर्णयन्ति तेषामपि विचारोऽनर्थक इत्याह-एव-मिति। स्वयं ज्ञातुं परं प्रति निर्वक्तुमित्यर्थः। न केवलं निष्प्रयोजनं ज्ञाननिर्वचनाशक्यत्वोपपादनं नोपपन्नमपि इत्याह नचेति। विचारे प्रवृत्तस्य ज्ञाननिर्वचनाभावादेव तदशक्यत्वं विश्वस्य कथ्यते, तत्राह-तावदिति। अयमर्थः-न प्रपञ्चस्य स्वभावत एव ज्ञाननिर्वचनाश-क्यत्वात्तज्ज्ञानमनिर्वचनीयं किन्तु यावता परामर्शेन निरूपणेन ज्ञाननिर्व-चनसम्भवः तावत्परामर्शे परामृशतः शक्त्यभावेनाप्युपपन्नम्, अतो यस्य तत्र शक्तिस्तेन ज्ञातुं वक्तुं शक्यमेवेत्यभिप्रायः।

निर्वाणमिति। काष्ठेत्यर्थः। सा शून्यता ज्ञाताऽज्ञाता वा, ज्ञा-

---

(१) सोऽयं तत्त्वोपप्लववादी रामायणं मिथ्येति वदता वानरेण तुल्य इति तत्किमनेनेति योजना। विचाराशक्तत्वादेवंवक्ता न विचा राहं इति भावः।

(२) एवं जगदिति स्वयं ज्ञातुं परं प्रति निर्वक्तुं वाऽशक्यमित्य निर्वचनीयतावादोऽपि निष्प्रयोजन इत्याह एवमिति।

( ३ ) तत्=नीलम्, लोके=संसारे।

( ४ ) आक्षिपति शून्यवादी अस्त्विति। यद्युक्तरीत्याऽनिर्वा

न, सा हि यद्यसिद्धा(१) कथं तदवशेषमपि विश्वमभि-
धीयते, वाङ्मात्रस्य सर्वत्र सुलभत्वात्, परतश्चेत्
(२)सिद्धा, परोऽप्युपगन्तव्यो ग्राह्यलक्षणश्चावर्जनीय-
मिति । स च परो यदि संवृतिरेव विश्वशून्यतयोर्न
कश्चिद्विशेषः, कथं (३)तदप्यवशिष्येत । असंवृतिरूप-
श्चेत् परः, (४)परत एव सिद्धा बलवत्ता । स्वयमसिद्ध-
श्चेत्, कथं शून्यत्वमपि साधयेत् । स्वतःसिद्धश्चेत् आ-
यातोऽसि मार्गेण ।

तथाहि स्वतःसिद्धतया तदनुभवरूपम् । उत्पत्ति

ताऽपि परतो वा स्वतो वा ? न तावदज्ञातेत्याह न सा हीति । परो-
ऽपीति । शून्यतासाधकः परोऽप्यभ्युगन्तव्यः, कथं शून्यतैवाशिष्येतेति
भावः । ग्राह्यलक्षणमिति । परेण परस्याः शून्यतायाः ग्रहणाद्ग्राह-
कादन्यस्यापि ग्राह्यलक्षणमङ्गीकर्तव्यमिति । किञ्च स परः संवृतिरूपोऽ-
संवृतिरूपो वा, सत्योऽसत्यो वेत्यर्थः । न तावत्संवृतिरूप इत्याह
स चेति । उपायस्यासत्यत्वे विश्वशून्यतापि न सती स्यादित्यर्थः ।
असंवृतिरूपोऽपि परः सिद्धो असिद्धो वा, सिद्धोऽपि परतः स्वतो वा,
परतश्चेदनवस्था, असिद्धश्चेदसाधकत्वम् , स्वतःसिद्धश्चेच्छून्यताया एव
स्वतःसिद्धत्वसम्भवे परमविकल्पयितव्यम् , स्वतःसिद्धस्याभ्युपगमो गौरव-
प्रसङ्गादयुक्त इत्यभिप्रायेणाह परतः सिद्धेति । तर्हि शून्यतैव
स्वतःसिद्धेति चेत्तत्राह—स्वतःसिद्धश्चेदिति । मार्गेण=वैदिकेन
मायावादिमार्गेणेत्यर्थः ।

कथमेवं वदतस्तन्मार्गाश्रयणमित्यत आह—तथाहीति । अनु-
भवरूपामिति । न ह्यनुभवादन्यस्य स्वयंप्रकाशत्वमिति । उत्पत्तीति ।

वस्तु तर्हि शून्यत्वे एव पर्यवसानं भवतु, तथाच शून्यमेव तत्त्वमित्या-
क्षेपार्थः । (१) अज्ञाता । (२) ज्ञाता । (३) शून्यं तत्त्वमपि ।
(४) परत एवेति । वास्तविकात्परादूग्राहकात्पुनरपि दुर्वारं ग्राह्य-
लक्षणत्वं शून्यताया इति भावः ।

शून्यत्वादेव च न तस्य कालावच्छेद इति नित्यम्। अत एव न देशावच्छेद इति व्यापकम्। अत एव (१)तन्नि-र्धर्मकमिति विचारासृष्टम्, (२)तस्य धर्मधर्मिभावमुपादाय प्रवृत्तेः। (३)अत एव विशेषाभाव इत्यद्वैतम्। प्रपञ्चस्यापारमार्थिकत्वाच्च निष्प्रतियोगिकमिति विधिरूपम्(४)। अविचारितप्रपञ्चापेक्षया तु शून्यमिति व्यवहारः।

---

शून्यतामात्राविशेषे हि तदुत्पत्तिविशेषकारणस्याप्यभाव इति भावः। अत एवेति। कारणशून्यत्वादेव समवायिकारणभूतेन देशेनानवच्छेदाद्व्यापकम्। अत्राऽनणुत्वे सतीति हेतुविशेषणं(५) द्रष्टव्यम्। अथवा ब्रह्मणो जगत्कारणत्ववादे परमाणोरभावान्नानैकान्तिकत्वशङ्कावकाश इति। अतएव तन्निर्धर्मकमिति। उत्पत्तिविनाशकारणशून्यत्वादेव निर्धर्मकम्, सधर्मकत्वस्य कारणवत्त्वेन व्याप्तेः। अस्मिन्दर्शने आकाशादीनामपि सधर्मकाणां कारणवत्त्वमिति(६)। अतएव तत्रापि व्याप्तिरनुसन्धेया। (७)अत्र नित्यत्वव्यापकत्वयोरपि काल्पनिकत्वान्निर्धर्मकत्वं च सिद्धमिति। ननु प्रपञ्चाभावरूपस्य ब्रह्मणः कथं सद्रूपत्वमत आह प्रपञ्चस्येति।

---

(१) तन्मायावादिमतसिद्धं ब्रह्मेत्यर्थः। नारायणमतेन त्वत्र तत्पदं मूले नास्ति, पूर्वपरामृष्टतत्पदेनैव सर्वत्रान्वयसम्भवादिति प्रतिभाति। (२) विचारस्य।

(३) निर्धर्मकत्वादेव धर्मिणोऽविशेषादद्वैतमित्यर्थः।

(४) अभाव( निषेध )रूपस्य सप्रतियोगित्वनियमादिति भावः।

(५) शून्यं व्यापकं कारणशून्यत्वे सति देशानवच्छेदादित्यत्र हेतौ परमाणौ व्यभिचारवारणायाणुभिन्नत्वं विशेषणं देयमित्यर्थः।

(६) तस्माद्वा एतस्मादाकाशः सम्भूत इति श्रुत्या वेदान्तिमतेऽपि कारणवत्त्वसत्त्वात्सधर्मकत्वं तत्र न व्यभिचारीति भावः।

(७) नन्वेवमपि निर्धर्मकत्वं ब्रह्मणि बाधितं नित्यत्वव्यापकत्वयोस्तत्राङ्गीकृतत्वादत आहात्रेति।

"तथापि प्रपञ्चशून्यस्यानुभवमात्रस्य प्रपञ्चेन कः सम्बन्धः? न च नायं प्रकाशत इति चेत्"। वस्तुगत्या न कश्चित्, (१)संवृत्या तु गगनगन्धर्वनगरयोराधाराधेयभाव इव विषयविषयिभावः, स च यथा नैयायिकैः समर्थयिष्यते तथैव, वेद्यनिष्ठस्त्वसावस्मिन् दर्शन(२) इति विशेषः। (३)अविद्यैव हि तथा तथा विवर्तते यथा यथाऽनुभाव्यतया व्यवह्रियते। तत्तन्मायोपनीतोपाधिभेदाच्चानुभूतिरपि भिन्नेव व्यवहारपथमवतरति, गगनमिव स्वप्नदृष्टघटकटाहकोटरकुटीकोटिभिः। तदास्तां तावत् किमार्द्रकवणिजो वहित्रचिन्तयेति। तस्मादनुभवव्यवस्थितौ अनात्मापि परिस्फुरतीत्यवर्जनीयमेतत्।

(४)तत्सिद्धौ तल्लक्षणमपि किञ्चिदस्त्येव। तच्च

---

कोऽसाविति चेत्तत्राह स चेति। स च विषयविषयिभावो यथा नैयायिकैरेव स्वभावविशेषतया समर्थयिष्यते तथैवात्रापि दर्शने, अयन्त्वस्मिन् दर्शने विशेषः यद्वेद्यनिष्ठोऽयं न तु वेदननिष्ठः तस्य निर्धर्मकत्वादिति। आर्द्रकवणिजो वहित्रचिन्तायामिति। वेदान्तसिद्धान्तचिन्तायां नास्तिकानामनधिकारात् कृतं तच्चिन्तयेत्याह तदास्तामिति। इदानीं ग्राह्यलक्षणनिरूपणायानात्मन एव ग्राह्यत्वं पूर्वोपपादितमुपसंहरति तस्मादिति। अनुभवव्यवस्था अनुभवानुपप्लव इत्यर्थः।

अथैतल्लक्षणमस्मिन्दर्शने किंनिष्ठमित्यत आह तच्चेति। तच्च=

---

(१) अविद्यया प्रपञ्चानुभवयोर्विषयविषयिभावः सम्बन्धः प्रतीयत इत्यर्थः। (२) मायावादिमते।

(३) विषयविषयिभावस्य सांवृतिकत्वमेव विवृणोति अविद्यैवेति।

(४) ज्ञानरूपेणात्मनाऽनात्मनो ग्राह्यत्वसिद्धौ।

बाह्याविरोधे ज्ञानानित्यतायां तन्निष्ठमुभयनिष्ठं
बाह्यविरोधे ज्ञाननिष्ठमेव, (१)तन्नित्यतायां ग्राह्यनि
मेवेति । तथाहि लक्ष्यस्तावदत्र विषयविषयिभा
स च प्रकाशस्य सतस्तदीयतामात्ररूपः स्वभा
विशेषः, स्वभावत्वादेव च नोपकारान्तरमपेक्ष

---

लक्षणम्, बाह्यस्य प्रमाणाविरोधे, तन्निष्ठं बाह्यनिष्ठं, उभया
ग्राह्यग्राहकोभयनिम्, एतच्च न्यायदर्शनत्वे सत्यपि न स्वमतम्,
ज्ञाननिष्ठत्वमेव स्वमतमन्यत्वेन देशितम्, बाह्यविरोधे बाह्याभावाज्ज्ञ
निष्ठम् । अत्र तल्लक्षणमित्यनुषङ्गः । एतच्च योगाचारमतम्—तां
त्यतायामिति । अनिर्वचनीयत्वमते ज्ञाननित्यतायामनिर्वचनीयग्र
निष्ठं ज्ञानस्यानिर्धर्मकत्वादिति । तत्सिद्धौ तल्लक्षणमपि किं
दस्त्येवेति यदुक्तं तदुपपादयति तथाहीति । प्रकाशस्य स
इति । स्वमतेन ज्ञाननिष्ठं लक्षणमुच्यते, लक्षणं हि व्यतिरेकिलिङ्ग
व्यतिरेकि विपक्षव्यावृत्तिमुखेन साध्यस्य बोधकम्, इदमपि त
(२)अत्र यदि स्वभावविशेष इत्येतावन्मात्रमुच्येत, सर्वेषामेव शीतोष्ण
स्वभावानामपि तत्त्वं स्यात् तद्व्यावृत्त्यर्थं तदीयतामात्ररूपत्वेन वि
च्यते, एवम्भूतस्य स्वभावस्य सम्बन्धरूपत्वाच्छीतोष्णादीनां सम्बन्
रूपत्वात् । तथापीष्यमाणेच्छयोः सम्बन्धेऽतिप्रसक्तिर्मा भूदिति प्रका
सत इति विशेषणम् । एवम्भूतस्य विपक्षव्यावृत्तिरस्त्येवेति लक्ष
युक्तमिति । अत्र तदीयशब्देन तत्प्रावण्यलक्षणो वा तन्निरूप्यत्वलक्ष
वा सम्बन्धविशेषोऽभिधीयत इति मन्तव्यम् । स्वभावत्वादेवेति
(३)तदीयत्वस्य स्वभावत्वादेव तदीयत्वसिद्ध्यर्थं न ज्ञानोत्पत्तौ विषय

---

(१) ज्ञाननित्यतायाम् ।

(२) स्वभावविशेषरूपस्य विषयविषयिभावलक्षणस्य पद
प्रदर्शयति अत्रेत्यादिना ।

(३) तन्मात्रीयत्वादेवेत्यत्र मात्रपदव्यावृत्तिं दर्शयन्नाह तदी
त्वस्येति ।

तन्मात्रीयत्वादेव च नान्यदीयः ।

किमस्य फलमिति प्रश्नप्रसङ्गेऽपि बहिस्तद्गोचरव्यवहारप्रवृत्तिरनन्तरमपि तेन ज्ञाननिरूपणम् ।

कुतोऽयमीदृगित्यनुयोगेऽपि सामग्रीशक्तिरेवोत्तरं कार्यकारणभाववत्, अन्यथा तत्राप्युपकारापेक्षायामनवस्था, (१)तदनपेक्षायां वा साधारण्यं केन वार्यम्। तेन तदेव क्रियते अनेनाप्येतदेव विषयीक्रियत इति विवेचनीयम्, विषयीक्रियत इति कोऽर्थः ? क्रियत इत्यपि कोऽर्थः इत्यपि विचारणीयम् । कार्योत्पादनमेव कर-

---

ज्ञानजन्यं वा विषयगतं नियामकमुपकारान्तरमपेक्षणीयं येनोपकारानियमसिद्ध्यर्थमप्युपकारान्तरापेक्षायामनवस्था स्यादिति मात्रग्रहणलब्धं फलमाह तन्मात्रीयेति ।

किमस्येति । विषयविषयिभावस्येत्यर्थः । अत्र तद्गोचरव्यवहारप्रवृत्तिः तेन ज्ञाननिरूपणमिति तच्छब्दौ तदीयतामात्रेत्यत्र तच्छब्देनैकार्थौ द्रष्टव्याविति ।

कुतोऽयमिति । कुतः कारणादयं प्रकाश ईदृक्स्वभावः तदीयतामात्रस्वभाव इत्यर्थः। कार्यकारणभाववदिति । यथाहि कारणस्य स्वकरणसामग्रीसामर्थ्यादेव कार्यविशेषं प्रति नियतस्वभावत्वं तथेत्यर्थः(२) । अन्यथा=एवमनभ्युपगम इत्यर्थः । विषयविषयिभावस्य कार्यकारणभावेन तुल्यन्यायतामेव दर्शयति तेन तदेवेति ।

---

(१) अनवस्थाप्रकारोऽत्र नारायण्यां मात्रपदव्यावृत्तिप्रदर्शनोक्तो ग्राह्यः । तदीयत्वसाधकोपकारान्तरानपेक्षायान्तु तदीयत्वस्य स्वभावत्वेऽपि सर्वज्ञानानां सर्वविषयसाधारण्यं स्यादित्याह तदनपेक्षायामिति ।

(२) ज्ञानरूपप्रकाशस्यापि विषयप्रावण्यलक्षणस्तन्निरूप्यत्वलक्षणो वा नियतस्वभावविशेषसम्बन्ध इत्यत्रापि स्वकारणसामग्रीसामर्थ्यमेव कारणमिति दार्ष्टान्तिके योजनीयमित्यर्थः ।

णम्, तदुपितोत्पत्तिरेव विषयीकरणमिति विवेचनीयम्। उपकारस्तु यथाऽत्र विज्ञानस्वरूपातिरिक्तो नास्ति तथा तत्रापि कार्यस्वरूपातिरिक्तो नास्तीति प्रतिसन्धेयमिति(१)।

अत एव कार्यकारणभावोऽप्युपेक्षितव्य इति तु(२) महस्साहसम्, तथासति हि स्यादेव न स्यादेवेत्यापद्येत, (३)तथाच प्रकाशतमसोरन्यतरस्य कौटस्थ्यप्रसङ्गः। "सांवृतोऽस्त्विति चेत्"। (४)विषयविषयिभावोऽप्येवमस्तु यदि विषयकार्ययोर्बलवती बाधेति द्वयी गतिः।

किमत्र तत्त्वम्? न तावदुभयनिष्ठं लक्षणं, सतोऽ-

---

अतएव विषयविषयिभावतुल्यत्वादेव कार्यकारणभावोऽप्युपेक्षितव्य इति चेत्तत्राह अत एवेति। (५)कथमित्यत आह तथेति। नित्यं सत्त्वमसत्त्वं वा हेतोरित्यनेन न्यायेन प्रकाशस्यापि हेतुशून्यस्य नित्यं सत्त्वमसत्त्वं वाऽऽपद्येतेत्यर्थः। अस्तु तर्हि कार्यकारणभावः, किन्तु नियामकाभावात्सांवृत एवेति शङ्कते सांवृतोऽस्त्विति। सांवृतत्वं पारमार्थिकत्वं वेति द्वयी गतिर्न तु सर्वथोपेक्षेत्यर्थः।

एवं तल्लक्षणमपि किञ्चिदस्त्येवेत्युपपाद्येदानीं तन्निष्ठमुभयनिष्ठं वेत्यादिपक्षेषु निर्धारणं वक्तुं पृच्छति किमत्रेति। सतोऽसतो वेति। सतो जात्यादेरसतो वा प्रागभावादेः स्थिरस्यापि स्फुरणाद्बाह्यनिष्ठस्य च कादाचित्कस्य प्राबल्यस्य न सामग्रीसामर्थ्यनिबन्धनत्वं युक्तमतो ज्ञान-

---

(१) नीलादिना तद्विज्ञानं जन्यते, नीलादिविषयप्रावण्यं वा तद्विज्ञानस्येत्यत्र न कोऽपि विशेष इति विषयविषयिभावस्य कार्यकारणभावेन साम्यमित्यभिप्रायः। (२) इतिपूर्वपक्षिकथनं तु।

(३) तथाचेति। प्रकाशस्य नित्यं सत्त्वेऽसत्त्वे च, सत्त्वपक्षे तस्य कौटस्थ्यमसत्त्वपक्षे च तमसस्तदभावरूपत्वात्तमसः कौटस्थ्यापत्तिरित्यर्थः।

(४) विषयकार्ययोरुभयोरपि त्वन्मते बाधितत्वाद्विषयविषयिभावोऽप्यवास्तविक एव स्यादिति भावः। (५) महासाहसं कथमित्यर्थः।

सतो वा स्थिरस्यापि स्फुरणात् । न च ज्ञाननित्यतायां पारमार्थिकबाह्यनिष्ठं, सत्कार्यवादव्यावृत्तेः सांख्यप्रक्रियाविध्वंसात्, न खलु पूर्वपूर्वतिरोभावाविर्भावान्तरेण विचारस्याप्यवसरः ।

नाप्यलीकग्राह्यतायां क्षणिकज्ञाननिष्ठमिति, तुच्छ-

निष्ठत्वमेव युक्तं न्यायदर्शन इत्यभिप्रायः । ज्ञानस्य नित्यतायां बाह्यस्यानिर्वचनीयत्वे ग्राह्यनिष्ठमेव लक्षणमित्युक्तम्, तत्र किं बाह्यस्य पारमार्थिकत्वेन ग्राह्यनिष्ठत्वमित्याशंक्याह न च ज्ञाननित्यतायामिति । ज्ञाननित्यतायां बाह्यस्य पारमार्थिकत्वं सत्कार्यवादिमतमनुधावतीति तन्निरासेनैव तन्निराकरोति सत्कार्येति । सत्कार्यवादस्य बाधेन व्यावृत्तेर्बाधमेव दर्शयति सांख्येति । (१)असदकरणादित्याकारायाः सांख्यप्रक्रियाया बाधेन विध्वंसनादित्यर्थः । बाधमेवाह न खल्विति । अयमर्थः-सत्कार्यवादस्याऽन्यस्य वा निर्णयः फलम्, एतच्च निर्णयप्रागभावस्य संशयस्य वा पूर्वस्य तिरोभावः, (२)पूर्वस्य निर्णयस्याविर्भावश्चान्तरेण न सम्भवति, अतो विचारारम्भेणैव सत्कार्यवादो बाध्यत इति सत्कार्यवादव्यावृत्तिरिति ।

विज्ञानवादिमतं निराकरोति नापीति । नीलादिविशेषोल्लेखित्वे-

(१) असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम् ॥

इत्यादीश्वरकृष्णोक्तसत्कार्यसाधककारिकाप्रोक्तसांख्यमतालिख्यप्रक्रियाया वक्ष्यमाणबाधेन व्यावृत्तेर्न ज्ञाननित्यतापक्षे बाह्यस्य पारमार्थिकत्वं वक्तुं युक्तमिति भावः ।

(२) अत्रोत्तरस्येति पाठः समीचीनः । अथवा प्रमाणेन तत्त्वपरीक्षारूपविचारस्य पूर्वपक्षनिराकरणं विनाऽसम्भवाद्विप्रतिपत्तिविषयपूर्वपूर्वकोटीनामाविर्भावतिरोभावाख्ययोरुत्पत्तिविनाशयोरनङ्गीकारे विचार एव न सम्भवतीति विचारारम्भसामर्थ्यादेव सत्कार्यवादो बाधित इत्यभिप्रायोऽत्र द्रष्टव्यः । सत्कार्यवादनिरसनन्तु विस्तरतः किरणावल्यादौ द्रष्टव्यम् ।

स्य विशेषाभावात्, ज्ञानस्य च निराकारत्वात्, अन्य-ख्यात्यसिद्धेरारोपयितुमशक्यत्वात्। "असन्त एव विशेषाश्चकासतीति चेत्"। न, असन्त इति सतत्काला अतद्देशा इति वा, अकिञ्चिद्रूपा इति वा, नियतव्या-वृत्तिमात्ररूपा इति वा ?।

प्रथमे कालदेशान्तरयोस्सत्त्वप्रसङ्गः(१)। द्वितीये त्वविशेषता(२)। तृतीये तु(३) नीलस्यालीकस्यानील-व्यावृत्तिरूपतायामनीलानां पारमार्थिकत्वप्रसङ्गः। तेषा-मलीकत्वे तद्व्यावृत्त्यात्मनो नीलस्यानलीकत्वापत्तिः, तथाप्यलीकत्वे अविशेषत्वम्। "तेन (४)रूपेणाविशेषत्व

नोस्मच्चिर्हि ज्ञाननिष्ठं लक्षणम्, न च तुच्छस्य नीलपीतादिविषयः सम्भ-वतीति, येन तदीयतया नियमः स्यात्। ज्ञानाकाराणां विशेषाणामुल्लेखेन तदीयतारूपं लक्षणमिति चेत्तत्राह ज्ञानस्य चेति। आरोपितानामप्युल्लेखो न सम्भवतीत्याहान्यख्यातीति। नन्वन्यथाख्यातिपक्षे देशान्तरकालान्तरयोः सत्त्वापेक्षा न त्वसत्ख्यातौ, सैव चासत्ख्यातिरस्माभिरिष्यत इत्याशङ्कते असन्त इति। नियतव्यावृत्तिमात्ररूपा इति। नीलादयो नानियमेन यत्किञ्चिद्व्यावृत्तिमात्ररूपाः किन्तु अनीलप्रतियोगि-त्वेन नियतव्यावृत्तिमात्ररूपा इत्यर्थः।

अनीलानामिति। अपरमार्थम्प्रति परमार्थस्यैव व्यावर्त्य-त्वादिति भावः। नीलस्यानलीकत्वापत्तिरिति। अत्राप्ययमेवा-भिप्रायः(५)। तद्रूपेणाविशेषत्वमिति। अनीलव्यावृत्तिरू-

(१) तथा चासन्त एव विशेषा इति न स्यादिति भावः।

(२) अकिञ्चिद्रूपत्वेऽपि विशेषत्वाभाव इति भावः।

(३) नियतव्यावृत्तिमात्ररूपत्वे तु।

(४) अत्र मूले नारायणमतेन तद्रूपेणाविशेषत्वमिति पाठो द्रष्टव्यः।

(५) अनीलव्यावृत्त्यात्मनो नीलस्य सत्त्वत्वापत्तिरपरमार्थम्प्रति परमार्थस्यैव व्यावर्त्यत्वादित्यभिप्राय इति भावः।

मिति चेत्" । अथ विशेषः केन ? । "नीलपीतादिनेति चेत्" । तर्हि ततोऽधिकम्, (१)अनलीकं तर्हि स्यात् । अनधिकश्चेत्, कुतस्तेनापीति । "वासनावशाद्विशेषाः स्फुरन्तीति चेत्" । स्फुरन्तु कः कारणे विप्रतिपद्यते । ते तु नीलादयो यत्किञ्चिद्रूपाः कथं विशेषाः ? तादितररूपेणाकिञ्चिद्रूपत्वे तेन रूपेण किञ्चिद्रूपा एवेति ब्रूमः। "विचारासहतामात्रमलीकत्वमिति चेत्"। तथापि भाषापरिवर्तमात्रम्, विचारासहतायाः किञ्चिद्रूपत्वविरोधित्वात्, अविरोधे वा त्वद्विचारसहना अपि किञ्चिद्रूपा एव नीलादय इति विचारस्य दुर्विचारत्वप्रसङ्गात् । तेन नीलादीनां छायामात्रस्याप्यनाक्रान्तेः(२) प्रविश वा अनिर्वचनीयख्यातिकुक्षिम्, तिष्ठ वा मतिकर्दममपहाय न्यायनयानुसारेण नीलादीनां पारमार्थिकत्वे । तस्मात्

---

पेणैवाविशेषत्वं नीलस्य न रूपान्तरेणापीति कुतं तेनापि, तस्यापि रूपस्य निर्विशेषव्यावृत्तेरभिन्नस्य निर्विशेषत्वादिति । वासनावशादिति । निर्विशेषा अपि नीलादयो वासनावशाद्विशेषवत्तया स्फुरन्तीति । यदि यूयं न करणे विप्रतिपद्यध्वम् किं तर्हि ब्रूथेत्यत्राह ते त्विति । तदितररूपेण नीलत्वादितरेण रूपेण नीलव्यावृत्तिरूपेणेत्यर्थः। ततश्च किञ्चिद्रूपत्वे सद्वादस्वीकार इत्यभिप्रायः(३) । भाषापरिवर्तमात्रमिति । विचारासहालीकस्यैव भाषान्तरमित्यर्थः । अतो नीलादीनामलीकत्वं विहाय वेदान्तिसिद्धान्तेनानिर्वचनीयत्वम्, न्यायदर्शनानुसारेण पारमार्थिकत्वं वा नीलादीनामाश्रयणीयमित्याह प्रविशेति ।

सिद्धमर्थं(४) सङ्क्षिप्य श्लोकेनोपसंहरन्नाह तस्मादिति । अयम-

---

(१) सत्त्वम् । (२) अप्राप्तेः ।　　(३) सिद्धान्तिन इत्यर्थः ।
(४) पूर्वोक्तग्रन्थेनेत्यर्थः ।

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्ति-
स्तद्बाधने बलिनि वेदनये जयश्रीः ।
नो चेदनिन्द्यमिदमीदृशमेव विश्वं
तथ्यं तथागतमतस्य तु कोऽवकाशः ॥

तत्रालीकं विचारासहमनिर्वचनीयं वा, यमाश्रि
त्य जगन्निन्दीयते(१), स एव विचारश्चिन्त्यताम् कोऽस्
कीदृशश्चेति । "सतर्कं प्रमाणमेव वाक्यारूढमिति(२
चेत्" । तच्चेद्विचारासहं किन्तेन भीतविचारकल्पेन ।

तथाहि केनचिद्भीतेन राजद्वारि द्विरदमालोक्य
विकल्पितं 'किमयमन्धकारो मूलकमात्ति, आहोस्विज्ज
लवाहो बलाकान् वर्षति गर्जति च, यद्वा बान्धवोऽयं,

र्थः(३)ग्राह्यस्य नीलादेः स्वात्मनो भेदमन्तरेण धियस्तस्मिन्न वृत्तिसम्भव
तस्य ग्राह्यस्यासत्त्वे यदि बाधको बलीयान् भवति तदा वेदनये वेदानुसारि
अनिर्वचनीयसिद्धान्तन्याये जयश्रीर्भवति । (४)अथ बाह्यपारमार्थिक
यदि न बलवद्बाधकन्तदा नैयायिकनयानुसारेण तथ्यमेव विश्वं भवति
उभयथापि न ग्राह्यभेदवादावसर इति । इदानीं बाह्यग्राह्यबाधकाभिमतस्
विचारस्य विचारासहतया दुर्बलत्वं प्रतिपादयितुमुपक्रमते तत्रेति
तत्र=एवं फलफलिभाव इत्यर्थः । सतर्कमिति । तर्कः प्रमाणानुग्रा
हकोऽनिष्टप्रसङ्गः(५)। परमार्थत्वात्प्रमाणवाक्यप्रतिपाद्यतया वाक्यारूढत्व
मिति । तच्च प्रमाणं विचारासहं, तत्सहं वा लोकसिद्धं वेति विकल्प्य दू
यति तच्चेदिति । भूताविष्टप्रयुक्तस्य विचारस्य स्वरूपं तस्य च विचार
सहत्वं च दर्शयति तथाहीति । राजद्वारीति स्थानविशेषोपन्यास

( १ ) जगदुदूध्रीयत इति पाठान्तरम् । ( २ ) विचार इति शेष
( ३ ) श्लोकार्थ इत्यर्थः। (४) नोचेदित्याद्युत्तरार्धं व्याचष्टे अथेति
( ५ ) तर्को न प्रमाणसंगृहीतो न प्रमाणान्तरं किन्तु प्रमाणान
मनुग्राहकस्तत्त्वज्ञानाय कल्पत इति वात्स्यायनभाष्यम् ।

राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ।

इति परमाचार्यवचनात्, अथवा योऽयं भूमौ दृश्यते तस्य च्छायेति । दूषितश्च-तत्र नाद्यः,(१) तस्य शूर्पयुगलप्रस्फोटनाभावात् । न द्वितीयः(२) तस्य स्तम्भचतुष्टयाभावात् । न तृतीयः,(३) तस्य लगुडभ्रामणाभावात् । न चतुर्थः,(४) तस्य नरशिरःशतोद्गिरणाभावात् । ततो न किञ्चिदस्ति । किमेतावता द्विरदरूपं निवर्तताम् । यद्वा वरमेतस्मात् योऽयं सोऽयमिति वादी

तृतीये विकल्प(५) उपयोगो द्रष्टव्यः । अस्य(६) कृष्णत्वेनान्धकारत्वारोपः । अस्याप्रत्यासन्नत्वेन दन्तयोराविद्यमानत्वेन श्वेतमूलकत्वारोपः । एवं जलवहविकल्पेऽपि दन्तयोरेव बलाकारोपः । मूले वर्षात्वारोपः । बृंहिते गर्जितारोपः । योऽयमिति छायाछायावतोर्ग्यत्ययभ्रान्त्या विकल्पः।

(७)दूषितं चेति। भौतेनेत्यनुवर्तते। शूर्पयुगलेति कर्णयोः शूर्पत्वारोपः । स्तम्भचतुष्टयेति पादेषु स्तम्भत्वारोपः । लगुडेति द्विरदकरे लगुडत्वारोपः । नरशिर इति । गजपुरीषपिण्डेषु नरशिरस्त्वारोपः । पायौ चास्यत्वारोपेणोत्सर्जने उद्गिरणभ्रान्तिरिति । किमेतावतेति । अनेन भौतविचारस्य विवक्षितासाधकत्वमेवेत्येतत्प्रतिपादितमिति । एवं एवंविधेन भौतविचारेण गजस्यालीकत्वासिद्धेः तत्सदृशेन विचारासहेन विचारेण जगतोऽपि नालीकत्वं सिद्ध्यतीति प्रतिपादितम्, इदानीमनिर्वचनीयत्वमपि जगतो न सिद्ध्यतीति प्रतिपादनार्थं गजस्थानेनैव विचारेणानिर्वचनीयत्वं वदन्नपि द्वितीयो भौतो न प्रथमाद्विशिष्ट इत्याह यद्वेति । अत्रापि किंशब्दस्यानुषङ्गः। यद्वा एतस्मात्प्रथमाद्भौतात् योऽयं

(१) अन्धकारारोपपक्ष इत्यर्थः । तस्यान्धकारस्य, कर्णद्वयरूपशूर्पयुगलप्रस्फोटनमसंभवीत्यभिप्रायः । (२) जलवाहपक्षः ।

(३) बान्धवपक्ष इत्यर्थः । (४) छायापक्षः ।

(५) राजद्वारे इत्यादिस्थानविशेषविशिष्टबान्धवविकल्पे इत्यर्थः ।

(६) गजस्य।(७)यथा भौतेन विकल्पितस्तथा तेनैव दूषितः...

द्वितीयो भीतः।

"(१)तद्विचारसहमिति चेत्"। एवन्तर्हि स्वयमेव विलीनमलीकादिवादैः। (२)नोत्तरप्रातिक्ष्यमपि लोक सिद्धमिति चेत्"। (३)तर्हि तस्य परिकरशुद्धिरपि तथैव ग्राह्या, अन्यथा लोकस्यापि व्यतिक्रमे विचारस्य यादृच्छिकवाङ्मात्रापत्तेः। लोके चाकाङ्क्षायोग्यताऽऽसत्तिमत्तया प्रतिसंहितमश्लिष्टार्थं प्रमाणान्तराप्रति हतं स्ववचनस्वक्रियास्वज्ञानव्याघातादिदोषरहितं स्वा

---

सोऽयं न निर्वक्तुं शक्यत इति वादी द्वितीयो भीतो परः किं न विशि इत्यर्थः। अथवा किंशब्दानुषङ्गेणैव प्रथमभीतापेक्षया द्वितीयभीतस्य वैशिष्ट्यमेवोच्यते, दृश्यमानस्य वस्तुनः सर्वथा निवृत्त्यनभिधायित्वात् अयमपि तु विचारस्तदपेक्षया विशिष्टोऽपि दुर्विचार एव, द्विरदस्यानिर्वच नीयत्वाभावादित्यभिप्रायः।

स्वयमेव विलीनमिति। विचारसहेन विचारेण तुल्यन्याय जगतोऽपि विचारसहत्वेनालीकतानुपपत्तेरलीकवादैर्गतमित्यर्थः। लोक सिद्धमिति। अतो न विचारासहत्वेन प्रमाणस्य साध्यासाधकत्वम नापि विचारसहत्वेन जगतोऽपि तुल्यन्यायस्य पारमार्थिकत्वापत्तिरि भावः। परिकरेति। परिकरस्तत्प्रतिपादकबाधादिः। यादृच्छि केति। अपेक्षाऽपूर्वत्वं यादृच्छिकत्वम्। लोकसिद्धामेव परिकरशु दर्शयति लोके चेति। उक्तसर्वविशेषणोपेतस्य वाक्यस्योदाहरणम

---

(१) शङ्कते तदिति। विचाररूपं वाक्यारूढं सतर्कप्रमाणं वि रसहं चेदिति शङ्कार्थः।

(२) पुनः शङ्कते नोत्तरेति। पूर्वोक्तरीत्या विचारसहत्वासह ऽयामुत्तरानर्हमपि लोकव्यवहारसिद्धमित्याशङ्कार्थः।

(३) समाधत्ते तर्हीति। ईदृशो लोकव्यवहारसिद्धस्य वाक्य दृष्टान्तविचारस्वरूपस्य सामग्रीपरिशुद्धिरपि लोकसिद्धैव ग्रा समाधानार्थः।

र्थप्रतिक्षेपकयुक्तेरनाक्षेपकं वाक्यमर्थप्रतिपत्तेरङ्गं यथा पर्वतोऽग्निमानिति । (१)अनङ्गमितरत् । यथाऽयं पर्वतो देवदत्तो गौर इति, जलह्रदो वह्निमानिति, गिरिर्देवदत्तेन भुक्तमग्निमानिति, श्वेतो डित्थो धावतीति, शशो विषाणीति, माता वन्ध्येति, अहं मूक इति, इमं न जानामीति, (२)मम कर्णे प्रविश्य गजो गर्जति भेषजमुच्यतामिति । तदर्थः साधनं दूषणञ्च ।

---

यथा पर्वत इति । आकाङ्क्षाऽभावोदाहरणमाह यथाऽयं पर्वतो देवदत्त इति । योग्यताभावोदाहरणमाह (३)गिरिर्देवदत्तेनेति । अप्रतिसन्धानोदाहरणमाह श्वेत इति । प्रमाणान्तरप्रतिघातोदाहरणमाह (४)शश इति । स्ववचनविरोधोदाहरणमाह मातेति । स्वक्रियाविरोधमुदाहरति अहं मूक इति । स्वज्ञानविरोधमुदाहरति इमं न जानामीति । स्वार्थप्रतिक्षेपकयुक्त्याक्षेपमुदाहरति ममेति । अत्र हि विप्रतिपन्ना शब्दग्राहिका(?) कर्णशष्कुलीत्वात्तदितरवदिति, कर्णत्वेन स्वार्थप्रतिक्षेपिका युक्तिराक्षिप्यत इति । एवं वाक्यं लक्षयित्वा वाक्यार्थं लक्षयितुमाह तदर्थश्चेति ।

---

(१) आकांक्षादिरहितं वाक्यमर्थप्रतिपत्तेरनङ्गमित्यर्थः । क्रमेण अनाकांक्षादिवाक्यमुदाहारन्नाह यथेत्यादिना ।

(२) ममेति । कर्णे गजप्रवेशे तद्दर्शनश्रवणासम्भवात्कर्णशष्कुल्याः शब्दग्राहकत्वरूपस्वार्थप्रतिक्षेपकयुक्तेराक्षेपकत्वादप्रमाणमिदं वाक्यमित्यर्थः ।

(३) अत्रादर्शपुस्तक एवंविधपाठोऽनुचितः प्रतिभाति, ह्रदो वह्निमानित्यस्य योग्यताभावोदाहरणत्वस्य युक्तत्वात् , गिरिरित्यादिकं त्वासत्त्यभावोदाहरणमेव, श्वेत इत्यादिकं तु श्वा इत इत्याद्यर्थान्तरस्यापि सम्भवाच्छ्लिष्टार्थोदाहरणमन्यथा तदप्रदर्शनेन न्यूनतापत्तेरिति सुधीभिर्विभावनीयम् ।

(४) प्रत्यक्षतः शशे विषाणानुपलब्ध्या प्रमाणान्तरप्रतिहतमिदं वाक्यमित्यर्थः ।

(१)तत्र साधनं व्याप्तिपक्षधर्मतोपयिकरूपपञ्चको
पेतं लिङ्गम्, यथा विशिष्टधूमवत्त्वादिति। लिङ्गाभास
मितरत्, यथा जलाशयत्वादिति। तत्परिकरश्च तर्कः

व्याप्तीति। (२)निरुपाधिकस्सम्बन्धो व्याप्तिः, पक्षव्यापकत्वं पक्ष
धर्मत्वम्, पक्षे व्याप्या वृत्तिस्सपक्षसत्त्वं विपक्षाद्व्यावृत्तिरबाधितविषयत्वमस
त्प्रतिपक्षत्वं चेत्येतानि पञ्च रूपाणि। तत्र व्याप्त्यौपयिकानि सपक्षसत्त्वा
दीनि चत्वारि, प्रथमन्तु पक्षधर्मत्वौपयिकम्। एतच्च रूपपञ्चकमन्वयव्य
तिरेकिण एव, केवलान्वयिनो विपक्षव्यावृत्त्यभावात्, केवलव्यतिरेकिणः
सपक्षे सत्त्वाभावात् रूपचतुष्टयमेव बोद्धव्यम्। अत्र पक्षधर्मत्वेनासिद्ध
स्य हेत्वाभासत्वमुक्तम्, सपक्षे सत्त्वेनासाधारणस्य(३), विपक्षव्यावृत्त्य
विरुद्धसाधारणयोरबाधितविषयत्वेन कालात्ययापदिष्टस्य, असत्प्रतिपक्ष
त्वेन प्रकरणसमस्य। विशिष्टधूमवत्त्वादिति। अनवरतोर्ध्ववृत्त्य
दिविशिष्टधूमत्वादित्यर्थः। इदमन्वयव्यतिरेकिण उदाहरणम्। केवलान्व
यिनस्तु विप्रतिपन्नं कस्यचित्प्रत्यक्षं प्रमेयत्वात् सम्प्रतिपन्नवदिति(४)
केवलव्यतिरेकिणस्तु इयं पृथिवीतिव्यवहर्तव्या गन्धवत्त्वादिति। लिङ्गा
भासेषु विरुद्धस्योदाहरणमाह जलाशयत्वादिति। (५)अत्र विशि
ष्टधूमत्वादिति पूर्वोपन्यस्तायां पर्वतोऽग्निमानिति प्रतिज्ञायां हेतुर्द्रष्टव्यो, ज
लाशयत्वादिति जलाशयोऽग्निमानिति प्रतिज्ञायां प्रतिसन्धेयः। (६)अपि

(१) शब्दार्थयोस्साधनदूषणयोर्मध्ये।

(२) अत्रानौपाधिकत्वं यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामा
नाधिकरण्यम्, यावत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगिप्रतियो
गिकात्यन्ताभावसमानाधिकरणसाध्यसामानाधिकरण्यमिति याव

(३) हेत्वाभासत्वमुक्तमिति अग्रे सर्वत्रानुषञ्जनीयम्।

(४) इदं हेतोरेवात्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वाभि
प्रायेण, परमाण्वादौ साध्याभावेन हेत्वभावाप्रसिद्धावपि साध्याभावप्र
सिद्धिसम्भवात् इति विभावनीयम्। (५) अत्रायमिति पाठस्समुचितः

(६) मूलन्यूनतापरिहारायान्येषामपि हेत्वाभासानामुदाहरण
स्वयमाहासिद्धस्येति।

सोऽपि व्याप्तिबलमालम्ब्यानिष्टप्रसङ्गरूपः । अनिष्टश्च द्विविधम्–प्रामाणिकपरित्यागोऽप्रामाणिकपरिग्रहश्च । यथा यद्युदकं पिपासादुःखं न शमयेत् न पीयेत, यदि

द्धस्योदाहरणं शब्दानित्यत्वे साध्ये चाक्षुषत्वादिति(१) । साधारणस्य तु तस्मिन्नेव साध्ये प्रमेयत्वादिति(२) । असाधारणस्य तु तस्मिन्नेव साध्ये वर्णात्मकत्वादिति(३) । हेत्वाभासगणनायामनध्यवसितशब्देनासाधारण एवोच्यते(४) इति तस्यैवोदाहरणं ग्राह्यम् । कालात्ययापदिष्टस्य तु अग्नि- रनुष्णो द्रव्यत्वा(५)दिति । प्रकरणसमस्य तु द्रव्यत्वे सत्यरूपत्वादप्रत्यक्षः समीरणः, महत्त्वे सत्यस्पर्शत्वाच्च प्रत्यक्ष इति(६) । तत्परिकर इति । तदनुग्राहक इत्यर्थः । प्रामाणिकपरित्यागोदाहरणमाह यथेति । तथाचाम्बुपानस्य प्रामाणिकस्य त्यागः स्यादित्यर्थः । अप्रामाणिकपरिग्रह- स्योदाहरणमाह यदि चेति । यदि च पीतं जलं परमन्तर्दाहेत् तज्जलम-

(१) शब्दे चाक्षुषत्वाभावात्, "पक्षे हेत्वभावः स्वरूपासिद्धिरि"- ति लक्षणेन स्वरूपासिद्धोदाहरणमिदं द्रष्टव्यम् ।

(२) प्रमेयत्वस्य सपक्षविपक्षानित्यनित्ययोर्वृत्तित्वात्, "यः स- पक्षे विपक्षे च भवेत्साधारणस्तु स" इति तल्लक्षणात् ।

(३) वर्णात्मकत्वस्य शब्दमात्रवृत्तित्वेन सपक्षविपक्षयोरनित्य- नित्ययोर्व्यावृत्तत्वात्, "यस्तूभयस्माद्व्यावृत्तः स चासाधारणो मत" इति तल्लक्षणात् ।

(४) "यश्चानुमेये विद्यमानस्तत्समानासमानजातीययोरसन्नेव सो- ऽन्यतरासिद्धोऽनध्यवसायहेतुत्वादनध्यवसित" इति प्रशस्ताचार्योक्तो- ऽयमेवासाधारणशब्देन कथ्यते इत्यर्थः ।

(५) अग्नावनुष्णत्वस्य प्रत्यक्षतो बाधेनाऽस्य बाधापरपर्यायका- लात्ययापदिष्टत्वात्, "पक्षे साध्याभाव" इति तल्लक्षणात् ।

(६) प्रकरणसमाख्यसत्प्रतिपक्षस्योदाहरणमिदं, "यस्य साध्या- भावसाधकं हेत्वन्तरं स सत्प्रतिपक्ष" इति तल्लक्षणात् । पूर्वानुमाने गगनस्य दृष्टान्ततोत्तरत्र महत्त्वे सति स्पर्शवत्वादिति पाठो युक्तः प्रति- भाति महत्परिणामवतः सस्पर्शस्य घटादेर्दृष्टान्ततोपपत्तेरथवा प्रमाया दृष्टान्तत्वसम्भवादयमपि पाठः सम्यगेवेति विभावनीयम् ।

च तदेव परमन्तर्दहेत् तदविशिष्टं ममापि दहेत् । इतर
स्तु तर्काभासः-यथा यदि जलं पिपासादुःखं नाश
यिष्यत् रूपवदपि नाभविष्यत् यथाऽऽकाशम् । यदि
च तदेव परमन्तरधक्ष्यत् मामपि सुरभिमकरिष्यदिति
दूषणमपि स्वप्रातिक्षेपकयुक्तेरनाक्षेपकं दूष्यासाधक
त्वाभिमतं सिद्धञ्च, यथाऽग्निमत्त्वे साध्ये प्रमेयत्वम
नैकान्तिकत्वादहेतुरिति । अन्यथा तु तदाभासो(१
यथायं धूमो नाग्निसाधकः सर्वथाऽनुपलभ्यमानोपाधि
शङ्काग्रस्तत्वात् प्रमेयत्वाद्विरुद्धत्वाच्चेति । इतरदपि

विशिष्टं तादृशमेवमपि(२) पीतं मामपि तद्वत् इत्यप्रामाणिकस्य दाहस्य
परिग्रहः स्यादित्यर्थः । रूपवदपीति । पिपासाऽशमनस्याप्यन्य
रूपवत्त्वदर्शनादयमव्याप्तिमूलः प्रामाणिकपरित्यागरूपस्तर्काभास इति
सुरभिमिति । दाहकस्यापि तार्णवह्न्यादेः सुरभिकर्तृत्वादर्शनाद्य
व्यावृत्तिमूलोऽप्रामाणिकपरिग्रहरूपस्तर्काभास इति । स्वप्रतिक्षेपकयुक्तेरना
क्षेपकं दूष्यासाधकत्वाविनाभूतमित्याभ्यां विशेषणाभ्यां जातिव्यवच्छेद
एकेनैव विशेषणेन जातिव्यवच्छेदसिद्धावपि जातीनां विशेषणद्वयम
नास्तीति ख्यापनार्थमुभयोपादानम् । सिद्धञ्चेत्यनेन छलकेवलनिरनु
ज्यानुयोगयोर्व्युदासः । स्वप्रतिक्षेपकयुक्त्याक्षेपकोदाहरणमाह स
र्वथेति । नायं सर्वथोपलभ्यमानोपाधिशङ्काग्रस्तत्वादिति हेतुः दूष्या
धकत्वासाधकः, सर्वथानुपलभ्यमानोपाधिशङ्काग्रस्तत्वादिति वक्तुं शक्य
इति भावः । दूष्यासाधकत्वव्यभिचार्युदाहरणमाह-प्रमेयत्वादिति
प्रमेयत्वे सत्यपि साध्यत्वदर्शनान्नासाधकत्वाविनाभूतं प्रमेयत्वमि
भावः । असिद्धोदाहरणमाह विरुद्धत्वादिति । धूमोऽस्याग्नि
साध्ये विरुद्धमस्तीति भावः । एवं विचाराङ्गं लिङ्गमात्रं परिशोध्य प्र
क्षशब्दयोरपि तर्कविनाभावाभ्यामेव विचाराङ्गत्वमित्याह इतर

(१) दूषणाभासः । (२) एवमेवेत्यर्थः। तद्वदिति । दहेदिति शे

(१)प्रमाणमनुमानच्छाययैव विचाराङ्गं तर्कमनन्यथा-सिद्धिश्च पुरस्कृत्य प्रवृत्तेः, ततस्तत्राप्येषैव (२)रीतिरनुगन्तव्येति ।

(३)एवं व्यवस्थिते लोकव्यवहारे साधनोपक्रमेण यदि विचारयसि प्रतिज्ञैव तावन्नाङ्गं धारयति । तथाहि न किञ्चिदस्ति, न किञ्चित्सत्यं, न किञ्चित्कारकं, न किञ्चिद्विचारसहं, न किञ्चित्सालम्बनं, न किञ्चिद्दर्शनं, न काश्चित्सिद्धान्त इत्यादौ स्वार्थप्रतिक्षेपस्तावद्दुर्वारः ।

पीति । कस्मादित्याह तर्कमिति । नहि व्यभिचारिणस्तर्कानन्यथासिद्धी स्त इति भावः । अस्ति च प्रत्यक्षेऽपि तर्कानुग्रहः यदि घटोपलम्भस्य सकलविशेषोपलम्भेऽपि हि व्यभिचारः स्यात्तथात्वातथात्वविभागो न स्यादिति । अत एवानन्यथासिद्धिरप्यनुसन्धेयेति । एषैव रीतिरिति ।

साधनोपक्रमेणेति । द्वेधा हि विचारः—साधनोपक्रमेण परपक्षदूषणोपक्रमेण वेत्यभिप्रायः । प्रतिज्ञैव तावदिति । प्रतिज्ञैव तावत्स्वशरीरं न धारयति, दूरे तस्याः स्वार्थप्रत्यायकत्वमिति भावः । तावच्छब्दो हेत्वादिदोषापेक्षया । न किञ्चिदिति । न किञ्चिन्नीलाद्यस्ति,

---

(१) अनुमानभिन्नप्रत्यक्षशब्दाख्य प्रमाणमित्यर्थः ।

(२) शब्दप्रत्यक्षयोरपि तर्कादिपरिकरशुद्धिरुक्तरीत्याऽन्यवलेयेति भावः ।

(३) परिकरशुद्धिसहितसाधनदूषणात्मकवाक्यार्थेन पूर्वोक्तादृशा लोकव्यवहारे सिद्धे वाक्यारूढं सतर्कप्रमाणं बौद्धीयं विचाररूपं लोकसिद्धं भवितुमनर्हमित्याशयेनाह सिद्धान्ती एवमित्यादिना । साधनोपक्रमेणः स्थापनापक्षेण, सा च पञ्चावयवप्रयोगात्मकन्यायेनैव स्यात्तत्र प्रथमं प्रतिज्ञैव तावद्बौद्धमते न सम्भवति कुतो हेत्वादिसम्भावनेति भावः । नाङ्गं धारयतीति कुत इत्यत आह तथाहीति । न किञ्चिन्नीलाद्यस्तीति प्रतिज्ञा शून्यवादिना विधेया, तत्र तद्वाक्यप्रतिपाद्यं प्रतियोगिज्ञानसापेक्षनञर्थस्याभावात्तस्याः स्वार्थप्रतिक्षेपकत्वमिति भावः ।

(१)प्रतिज्ञापि हि–न स्यात्, न सत्या, न कारिका, न विचारसहा, तद्विज्ञानमपि न सालम्बनम्, तत्फलमपि न दर्शनं, तदर्थोऽपि न सिद्धान्त–इत्यापद्येत । "इष्यत एवेदमिति चेत्" न, इच्छामात्रेण व्याघातानिवृत्तेः यदि हि न ज्ञातं किञ्चिदस्तीत्यादि प्रतिज्ञार्थः प्रतिज्ञा स्पृशेत् कथमयमर्थः प्रत्येतव्यः, न चेत्कथं सोपपन्ना तदुपपन्नत्वे च कथं पुनः प्रतिज्ञार्थ उपपद्यते । तदिदमा यातं–स्वविषमूर्छिता भुजङ्गी आत्मानमेव दशतीति ।

न किञ्चिज्ज्ञानं सत्यं न यथार्थमित्यर्थः, न किञ्चिन्नीलादि कारकं, न किञ्चिन्नीलादि विचारसहं, न किञ्चिदपि प्रत्ययस्यालम्बनं, न किञ्चिदपि ज्ञानमन्यस्य दृश्यस्य दर्शनं, न कश्चिदप्यर्थसिद्धान्त इत्यर्थः । आदिश ब्दान्न किञ्चिन्निर्वचनीयमस्तीति पक्षः परिगृह्यत इति । स्वार्थप्रतिक्षेपमे दर्शयति प्रतिज्ञापि हीति । प्रतिज्ञायां चासत्यां तदर्थस्यापि प्रति क्षेप इत्यर्थः । असत्याऽकारकत्वपक्षयोरपि न प्रतिज्ञार्थः सिध्यति, अन् तादप्रत्ययादकारकाच्चार्थाध्यवसायानुपपत्तेः । विचारासहत्वेऽपि फलते ऽसत्त्वादसत्त्वपक्षवद्दोषः । प्रतिज्ञाविषयविज्ञानस्यापि निरालम्बनत्वे प्रति ज्ञाया अभावादसत्त्वपक्षवद्दोषः । प्रतिज्ञाफलस्य प्रतिज्ञाजन्यज्ञानस्यान्य दर्शनत्वेन प्रतिज्ञार्थासिद्धिः, दृश्यस्यार्थस्याभावात् । तदर्थस्यासिद्धान्त त्वेऽपि असत्त्वतुल्यत्वमेवेति । व्याघातानिवृत्तेरिति । प्रतिज्ञाया अपि प्रतिज्ञार्थतुल्यत्वे तया तदर्थस्य प्रत्येतुमशक्यत्वादित्यर्थः । प्रत्यय शक्तिमेवोपपादयति यदीति । कथं सेति । न किञ्चिदस्तीतिप्रति ज्ञार्थस्य प्रतिज्ञास्पर्शाभावे कथं सा उपपन्ना, असतीत्यर्थः । नानुपपन्ना प्रतिज्ञा उपपन्नैवेति चेत्तत्राह तदिति । तदुपपन्नत्वे तस्याः सत्त्वे किञ्चिदस्तीति प्रतिज्ञार्थः कथमुपपद्यते ॥

(१) एवं प्रतिज्ञास्वरूपासम्भवमुक्त्वा तदर्थप्रतिक्षेपमाह प्रति ज्ञापीति ।

"(१)तत्त्वत इति विशेषणाद्यमदोष इति चेत्" । (२)तद्विचारो वा स्यात् लोकमर्यादातिक्रमो वा । प्रथमः पूर्वमेव निरस्तः, तस्य प्रातिज्ञादिरूपतया कुलीरस्येव (३)स्वप्रसूतयुक्त्यपत्येनैव प्रतिहतत्वात् । (४)द्वितीये तु स्वच्छायातिक्रमवत् स एव व्याघातः । (५)यदि हि

---

व्याघातपरिहारं शङ्कते तत्त्वत इति । अयमर्थः-न किञ्चिदस्तीति प्रतिज्ञानां तत्त्वत इति विशेषणात्प्रतिज्ञादीनां व्यावहारिकसत्यत्वानिराकरणान्न स्वार्थप्रतिपादकत्वाद्यसम्भव इति(६) । तदिति । तत्त्वत इत्यत्र तत्त्वशब्दवाच्यमित्यर्थः । कथमित्याह तस्येति । तस्य विचारस्य प्रातिज्ञानिरूपिततया स्वप्रतिपाद्यत्वेन स्वप्रसूतयुक्त्यपत्यत्वेन हतस्य सर्वनास्तित्वादिसाध्यसाधकत्वानुपपत्तेरिति । न च व्यवहारमात्रसिद्धस्य विचारस्य साधकत्वम्, सर्वास्तित्वसर्वसत्यत्वादीनामपि व्यवहारमात्रसिद्धेन विचारेण साध्यत्वप्रसङ्गादिति । स्वच्छायेति । यथा स्वच्छायातिक्रमस्तत्र तत्र छायाप्रसक्तेरशक्यः तथा लोकमर्यादातिक्रमोऽप्य-

---

(१) शङ्कते तत्त्वत इति । नोत्तरप्रातिक्षणमपि लोकसिद्धमिति पूर्वोक्तलक्षणे तत्त्वत इति विशेषणदानेन पूर्वोक्तसिद्धान्तिप्रदर्शितदोषस्यासम्भव इति पूर्वपक्षार्थः ।

(२) तत्र तत्त्वत इत्यस्य विचारेण लोकमर्यादातिक्रमेण वोत्तराप्रतिक्षणमपीत्यर्थं इति विकल्प्य दूषयितुमुपक्रमते तद्विचार इति ।

(३) स्वं=प्रातिज्ञा, अन्यत्सुगमम् ।

(४) लोकमर्यादातिक्रमपक्षे । स्वेच्छायातिक्रमवत् इति पाठान्तरम् । तत्र च स्वेच्छामात्रेण पूर्वोक्तव्याघातानिवृत्तेरित्यर्थः कथञ्चित्सङ्गमनीयः ।

(५) व्याघातमेव दर्शयति यदि हीति । विचारोति । लोकसिद्धविचारस्वरूपमर्यादेत्यर्थः ।

(६) एतेन वेदान्तिमतवद्बौद्धैरपि पारमार्थिकव्यावहारिकप्रातिभासिकसत्तात्रयमङ्गीक्रियत इति सूचितम् , तथाच व्यावहारिकसत्तासिद्धप्रतिज्ञार्थस्वीकारान्न स्वार्थप्रतिक्षेपकत्वदोष इति पूर्वपक्षाभिप्रायः ।

लोकमर्यादातिक्रमो न विचारस्वरूपस्थितिः तत्स्वरूप स्थितिश्चेन्न तदतिक्रम इत्यर्थः । प्रतिषेध्यासिद्ध्यसिद्धि भ्यां व्याघातश्च । (१)यदि हि प्रतिषेध्यं सिद्धं नास्य न्ताय प्रतिषेधः । न चेत्, न तराम् । "लोकव्यवहार सिद्धमिति चेत्" । सिद्धमेव तर्हि, न ह्यन्यतोऽपि(२ किञ्चित् सिद्ध्यति ।

"(३)नायमबाध्यो व्यवहार इति चेत्" । यदि नैकत्र अन्यत्रापि तथाभावप्रसङ्गात् । "सर्वत्र बाध्यत इति चेत्" । (४)तदपेक्षासिद्धिना व्यवहारेणानपेक्षेण वा

शक्यः, लोकमर्यादातिक्रमसिद्धं विचारमन्तरेण सर्वनास्तित्वादिसाध्यासि द्धिरिति । सर्वप्रतिज्ञासाधारण्येन व्याघातान्तरमाह प्रतिषेध्येति सर्वनास्तित्वादिसाधकप्रतिषेधस्य यत्प्रतिषेध्यं सर्वनास्तित्वादि तत्सिद्ध चेत्तस्य सर्वथा प्रतिषेधव्याघातः, अथासिद्धं सुतरां प्रतिषेधव्या घातः अप्रतियोगिकप्रतिषेधानुपपत्तेरिति । लोकव्यवहारसिद्ध मिति । अतः प्रतिषेध्यत्वसिद्धिरिति, प्रमाणासिद्ध्यभावेन च सर्वत्र प्रति षेधोपपत्तिश्चेत्यभिप्रायः ।

तदपेक्षासिद्धिना व्यवहारेणेति । प्रतिषेध्यसिद्ध्यपेक्षिण व्यवहारेण विचारेणेत्यर्थः । नहीति । ग्राहीति । प्रत्यक्षोपजीवनेन प्रवर्तमानेनानुष्णत्वानुमानेनोपजीव्यस्योष्णत्वग्राहिप्रत्यक्षस्य न बाधो दृश्य

(१) व्याघातं विवृणोति यदि हीति । (२) लोकव्यवहारभिन्नादित्यर्थ

( ३ ) शङ्कते नायमिति । अयं सर्वोऽपि लोकव्यवहारो बाध्य एवे त्यर्थः । समाधत्ते यदीति । न किञ्चिदस्तीति व्यवहारो यदि सर्वशून्यता साधकोऽपसिद्धान्तादिदुष्टिभयान्न बाध्यते तर्हि अन्योऽपि न बाध्येतेति समाधानार्थः ।

( ४ ) आक्षिपति सर्वत्रेति । सकलव्यवहारबाधः किं प्रतिषेध्यसि द्ध्यपेक्षविचारेण तदनपेक्षविचारेणोताविचारेणैवेति विकल्पत्रयेण दूष यन्नाह तदपेक्षेति । तत्र प्रथमं दूषयति य इति । तदपेक्षासिद्धिः=प्रति षेध्यासिद्ध्यपेक्षासिद्धिः ।

अव्यवहारेणैव वेति । यस्तावत्तदपेक्षासिद्धिः स कथं तमेव बाधेत, न ह्यनुष्णत्वानुमानेनोष्णत्वग्राहिप्रत्यक्षबाधो लोके । (१)द्वितीयस्त्वसम्भवी, नहि निषेधकं प्रमाणं निषेध्यसिद्धिनिरपेक्षं भवितुं क्षमते । (२)तृतीये तु तद्विपरीतापत्तिः, विचारबाध्यत्वमुपक्रम्याविचारबाध्यत्वेन बृंहणात् । नचैतदपि निर्व्यूढम्(३), तद्ध्यपत्नसिद्धमध्यक्षं वा स्यात्, अनिष्टिमात्रं वा । आद्ये विरोधोऽसिद्धिश्च । द्वितीये लोकातिक्रमः, परानिष्ट्या त्वद्-

इत्यर्थः । (४)एवमपि बाध्यत्वं तावत् सिद्धमिति चेत्तत्राह न चैतदपीति । एतदपि विचारबाध्यत्वमपि न निर्व्यूढमिति, कथमित्याह तद्धीति । तद् विचारबाध्यत्वशब्दवाच्यमित्यर्थः । (५)विरोध इति । यदि सर्वनास्तित्वं कथं प्रत्यक्षस्यैव सिद्धिः, अथ तत्सिद्धिः कथं सर्वनास्तितेति विरोधः । अस्तित्वस्यैव साधकेन प्रत्यक्षेण सर्वबाध्यत्वासिद्धिश्चेति । (६)लोकातिक्रम इति । न ह्यग्निदाहादिदुःखस्यानिच्छामात्रेणासत्यत्वं लोकः सहत इति । स्वव्याघातकत्वं चेत्याह(७) परानिष्टयेति ।

(१) निषेध्यसिद्ध्यनपेक्षविचारेण सकलव्यवहारबाधपक्षः, असम्भवे हेतुमाह निषेधकमिति ।

(२) अविचारेणैव सकलव्यवहारबाध इति पक्षे तु ।

(३) विचारबाध्यत्वमपि न सिद्धमित्यर्थः ।

(४) एवमपि अविचारबाध्यत्वेन बृंहणेऽपि, विचारबाध्यत्वं तावल्लोकव्यवहारस्य सिद्धमेवेत्यर्थः ।

(५) अथत्तत्सिद्धप्रत्यक्षस्यैव सर्वनास्तितासाधकत्वपक्षे दोषमाह विरोध इतीति । विरोधं विवृणोति यदीति ।

(६) अस्तित्वपक्षेऽनिच्छामात्रमेव सर्वनास्तितासाधकमिति पक्षे दोषप्रदर्शकप्रतीकं गृह्णाति लोकातिक्रम इति ।

(७) अनिच्छामात्रेण सर्वास्तित्वानङ्गीकारे नास्तित्वविषयमदनिच्छया त्वदनिच्छाभङ्गेन स्वव्याघातकत्वमपि दोषान्तरमाहेत्यर्थः ।

निष्टिबाधप्रसङ्गश्चेति ।

एतेन हेतवो निरस्ताः । (१)ते हि ज्ञेयत्वात्, ज्ञान त्वात्, असत्त्वात्, विकल्पानुपपत्तेः प्रत्ययत्वात् कर्मानुपपत्तेः, मिथोऽव्याघातादित्यादयः । एते हि स एव स्वार्थ(क्रिया)प्रतिक्षेपिकां युक्तिमाक्षिपन्ति, निषे ध्यासिद्धिञ्चापेक्षन्ते(२) । अनैकान्तिकौ च (३)प्रथमद्वि तीयौ, स्वफल एव व्यभिचारात् । असिद्धौ तृती

एतेनेति । एतेन स्वार्थप्रतिक्षेपकत्वेन निषेध्यसिद्ध्यपेक्षप्रवृत्तित्वे च, हेतवोऽपि प्रतिज्ञावन्निरस्ता इति । ज्ञेयत्वादित्यादयो हेतवो न किञ्चि दस्तीत्यादिप्रतिज्ञानां यथाक्रमं द्रष्टव्याः । अत्रादिशब्देनानिर्वाच्यत्वप्रतिज्ञा हेतुः ख्यातिबाध्यो निर्दिश्यत इति । स्वार्थप्रतिक्षेपिकामिति न किञ्चिदस्तीत्यादेरपि प्रतिज्ञार्थस्य ज्ञेयत्वेन हेतुना प्रतिक्षेपादिति(४) निषेध्यासिद्धिमिति । प्रतिषेध्यसिद्धिमिति । ततश्च तदपेक्षो हेतु स्तमेव कथं बाधेतेति । एवं हेतूनां साधारणौ दोषावुक्त्वा प्रातिस्विका नाहानैकान्तिकौ चेति । स्वफल इति । ज्ञेयत्वस्य स्वफले ज्ञाने सर्वनास्तित्वात्मके सत्येव वृत्तेर्व्यभिचारात् । ज्ञानत्वस्य स्वफले स्वोत्पादे सर्वासत्यत्वज्ञाने सत्य एव वृत्तेर्व्यभिचारादिति । असिद्धाविति ।

(१) पूर्वप्रदर्शितप्रतिज्ञासप्तके क्रमशो हेतुसप्तकं प्रदर्शयति ते हीत्यादिना । तथाच न किञ्चिदस्ति ज्ञेयत्वात् रज्जुसर्पवत्, न किञ्चि त्सत्यं ज्ञानत्वात् तज्ज्ञानवत्, न किञ्चित्कारकं असत्त्वात् शशविषाण वत्, न किञ्चिद्विचारसहं विकल्पानुपपत्तेः दर्पणमुखवत्, न किञ्चित् सालम्बनं प्रत्ययत्वात् स्वप्नप्रत्ययवत्, न किञ्चिद्दर्शनं कर्मानुपपत्तेः छेद्यानुपपत्तौ छिदावत्, न कश्चित्सिद्धान्तः मिथोऽव्याघात् मिथःशो षकनिर्वापकानलसलिलवत् इत्यनुमानसप्तकं शून्यवादिनोऽत्राभिप्रेतम् ।

(२) ज्ञेयत्वहेतुना न किञ्चिदस्तीति प्रतिषेध्यते, तत्प्रतियोगि ज्ञानं विनाऽसम्भवीति ज्ञेयत्वेन प्रतिषेध्यापेक्षेण किञ्चिदस्तित्वसिद्धौ कथं तेनैव तन्निषेधो बाधापरपर्यायः स्यादिति भावः ।

(३) ज्ञेयत्वज्ञानत्वे । (४) वस्तुमात्राभावरूपप्रतिज्ञार्थस्य ज्ञे-

(१)चतुर्थौ । अनैकान्तिकश्च पञ्चमः(२) । पूर्ववदसिद्धो व्याघातेनानैकान्तिकश्च षष्ठः(३) । असिद्धोऽनैकान्तिकश्च सप्तमः(४) । सर्व एव कालात्ययापदिष्टा इति(५)।

एतेन दृष्टान्ता अपि विसर्जनीयाः । (६)ते हि रज्जुसर्पवत्, तज्ज्ञानवत्, शशविषाणवत्, दर्पणमुखवत्, स्वप्नप्रत्ययवत् , छेद्यानुपपत्तौ छिदावत् , मि-

---

प्रपञ्चासत्त्वविकल्पानुपपत्तेः सिद्धान्तिनं प्रत्यसिद्धेरिति । अनैकान्तिक इति । प्रत्ययत्वं हेतुः पूर्ववत्स्वफल(७) एव व्यभिचारादनैकान्तिक इति । असिद्ध इति । कर्मानुपपत्तेरित्यस्य तावदसिद्धिः, दृश्यस्य प्रपञ्चस्य प्रत्यक्षसिद्धत्वात् । व्याघातश्च । कर्मानुपपत्तिविज्ञानस्यापि कर्मानुपपत्तेः कथं कर्मानुपपत्तिरूपहेतोः सिद्धिः । अनैकान्तिकश्च स्वफलेन, न किञ्चिद्दर्शनमित्येतस्मिन्दर्शने(८) व्यभिचारात् । तथा मिथो व्याघातादित्यस्यापि सप्तमस्यासिद्धिः शब्दानित्यत्वनियत्वयोरन्यतरस्याभासत्वेन सिद्धान्तत्वाभावात् सिद्धान्तयोर्मिथोव्याघातासिद्धिः, तथा सर्वासिद्धान्तत्वसिद्धान्ते व्यभिचारादनैकान्तिकत्वं चेति । सर्व एवेति । अस्तित्वसत्यत्वादीनां साध्यविपरीतानां सर्वप्राणभृत्प्रमाणसिद्धत्वेन सर्व एव हेतवः कालात्ययापदिष्टा इति ।

एतेनैव व्याख्यातेन सर्वनास्तित्वाद्यनुमानदृष्टान्ता अपि वर्जनीयाः, सर्वनास्तित्वासत्यत्वपक्षे तज्ज्ञानादीनामपि नास्तितासत्यत्वादिप्रसक्तेर्दृष्टा-

---

यस्य सत्त्वेन न किञ्चिदस्तीतिप्रतिज्ञार्थस्य प्रतिक्षेपादित्यर्थः । एवमन्यत्रापि । (१) असत्त्वविकल्पानुपपत्तिरूपहेतू ।

(२) प्रत्ययत्वादिति हेतुः । (३) कर्मानुपपत्तिहेतुः ।

(४) मिथोव्याघातादिति हेतुः ।

(५) सर्व एव हेतवो बाधिता इत्यर्थः । अस्तित्वादीनां प्रमाणसिद्धत्वेनेत्यादिः ।

(६) पूर्वप्रदर्शितबौद्धीयप्रतिज्ञाहेतूनां क्रमेण दृष्टान्तानाह ते हीति । अनुमानाकारोऽधस्तात्प्रतिपादित एव ।

(७) प्रत्ययविषये । (८) बौद्धदर्शने ।

थः शोषकनिर्वापकानलसलिलवत् इत्यादयः । येन (१)च तत्रासर्पस्यासत्त्वं तज्ज्ञानस्य मिथ्यात्वं शशविषाणस्याकारकत्वं दर्पणमुखस्य विचारासहत्वं स्वप्नज्ञानस्य निरालम्बनत्वं छेद्यानुपपत्तौ ।छिदानुपपत्तिश्चावधारितानि, तेनैव तत्र रज्जोः सत्त्वम् असर्पज्ञानस्य सत्यत्वं शशस्यान्यत्र गवादेर्विषाण एव कारकत्वं दर्पणस्य विचारसहत्वं अस्वप्नज्ञानस्य सालम्बनत्वं छेद्यनिष्ठाछिदासिद्धौ ज्ञानकर्म चोपपादितानि । तदनुपपत्तौ वा साध्यविकलतया सर्व एवैते दृष्टान्ताभासाः । अन्तिमस्तु(२) साधनविकलः, सिद्धान्तानां हि व्याघातः परस्परविरहरूपत्वलक्षणः, जलानलयोस्तु वध्यघातकस्वभावलक्षणः,(३) न च शब्दसाम्येनानुमानमित्येषा दिक्

"अस्तु तर्हि दूषणोपक्रमेण विचार इति चेत्" ।

---

च्छानुपपत्तेरित्याह एतेनेति । व्याघातमेव स्पष्टयति येनेति । येन बाधकेनेत्यर्थः । शशस्यान्यत्रेति । अन्यत्र कर्णादावित्यर्थः । अस्वप्नज्ञानस्य जाग्रज्ज्ञानस्य । तदनुपपत्ताविति । बाधकज्ञानस्यापि मिथ्यात्वेनापि तदनुपपत्तौ सर्पादीनामसत्त्वाद्यभावेन साध्यविकलतया दृष्टान्ताभासतेति । परस्परविरहेति । यथा शब्दनित्यत्वात्मास्तित्वादिसिद्धान्तानां परस्परविरहरूपतैव व्याघात (४)इति । दिगिति । दूषणोक्ता दिगित्यर्थः ।

एवं साधनोपक्रमविचारे निरस्ते दूषणोपक्रमविचारं शङ्कते अस्तु

---

(१) बाधकेनेत्यर्थः ।

(२) मिथःशोषकनिर्वापकानलसलिलदृष्टान्तः मिथोव्याघातरूप साधनविकल इत्यर्थः, साधनविकलतामेव दृष्टान्ते विवृणोति सिद्धान्तानामिति ।

(३) ननु प्रतिज्ञाद्यर्थाविवक्षयैवोक्तानुमानैस्सर्वशून्यत्वासिद्धिः स्य दत आह न चेति ।

(४) शब्दानित्यतासिद्धान्तस्तदनित्यतासिद्धान्तेनात्मादित्वासि-

**तमपि पश्यामः कीदृशोऽसौ । "नेदं स्थूलं, विरुद्धधर्मासंसर्गप्रसङ्गात् । नास्थूलं, तथाप्रतिभासप्रसङ्गात् । न परानपेक्षं, सदातनत्वप्रसङ्गात्, न परापेक्षं सदसद्व्यतिरेकप्रसङ्गात् । नैकं, तथाप्रतिभासप्रसङ्गात् । नानेकं भेदव्यवस्थितिप्रसङ्गात् । न च व्यापकं(१), निष्क्रियत्वप्रसङ्गात् । नाव्यापकम्, अविधेयत्वप्रसङ्गात् इत्यादिरिति चेत्" ।**

---

**तर्हीति** । सिद्धान्ती तु साधनोपक्रमाविचारतुल्योऽयमपि विचार इति मनसि कृत्वाह **तमपीति** । पूर्वपक्षी तु विचारस्वरूपं दर्शयति **नेदमिति** । इदं घटवृक्षादि न तावत्स्थूलम् । तथा=(अ)स्थूलतया अनुपलम्भप्रसङ्गादिति । एवं स्थूलमस्थूलं विकल्प्य दूषणमुक्तम्, तथा कारणात्मकपरानपेक्षं सापेक्षं वेति विकल्प्य दूषयति **परानपेक्षमिति** । परानपेक्षाणामाकाशादीनां सदातनत्वदर्शनादित्यभिप्रायः । **सदसद्व्यतिरेकप्रसङ्गादिति** । परानपेक्षाणामाकाशतत्कुसुमादीनामेव सदसत्त्वदर्शनादित्यभिप्रायः । तथा घटवृक्षाद्येकमनेकं वेति विकल्प्य दूषणमाह **नैकमिति** । घटवृक्षादि नैकं एकतया प्रतिभासप्रसङ्गात् । नानेकं भेदस्य स्वरूपलक्षणस्य धर्मलक्षणस्याभावलक्षणस्य च व्यवस्थितिप्रसङ्गात्, व्यवस्था च न घटत इत्यभिप्रायः । अभिप्रायश्चानन्तरमेव विवरिष्यत इति ।

तथा व्यापकमव्यापकं वेति विकल्प्य दूषयति **व्यापकमिति** । व्यापकस्य विभज्यमानसंयुज्यमानदेशाभावान्निष्क्रियत्वप्रसङ्गात् । नाव्यापकं, अविधेयत्वप्रसङ्गात्, अव्यापकत्वं हि क्वचिन्नास्तित्वं, नास्तित्वं च निषेध्यत्वं, तस्य च विधेयत्वेन विरोधात् सर्वत्राविधेयत्वं प्रसज्यत इत्यर्थः ।

---

**ध्वान्तश्चात्मनास्तित्वसिद्धान्तेन परस्परविरहात्मतया व्याहन्यते नैवं जलानलयोरिति भावः ।**

**( १ ) व्यापकत्वं देशकालाद्यनवच्छिन्नत्वम्, व्यापकस्य देशाद्यभावान्निष्क्रियत्वापत्तिरित्यर्थः ।**

न, मिथोविरोधमूलशैथिल्येष्टापादनानुकूलत्वविपर्ययापर्यवसानैस्तर्काभासत्वात् । तथाहि नायं पर्वतो निरग्निः निर्धूमत्वप्रसङ्गात् , नाप्यग्निमान्, तथोपलब्धिप्रसङ्गात् इत्यनयोरेक आभासः, परस्परार्थ(१)प्रतिक्षेपकयोरुभयोरनाभासत्वानुपपत्तेः, तथाऽत्रापि, न ह्यस्थूलादिनिषेधादन्यः स्थूलादिविधिः, तन्निषेधाद्वाऽन्योऽस्थूलादिविधिरिति(२)। शिथिलमूलाश्चैते, प्रतिबन्धस्यासिद्धेः,(३) सिद्धौ वा व्याप्यव्यापकतदधिकरणानां सिद्धौ विवादविनिवृत्तेः । इष्टापादनञ्च, (४)प्रथमे अनुभूतावसिते स्थूले विरुद्धधर्मासंसर्गस्येष्टत्वात्, तथाच

सिद्धान्ती त्वेषां पञ्चाङ्गवैकल्येन(५) तर्काभासत्वमित्याह न मिथ इति । अत्र मिथोविरोधमूलशैथिल्ये सर्वसाधारणे, इष्टापादनं त्रयसाधारणम् , अनुकूलत्वं चतुष्टयसाधारणम् , विपर्ययापर्यवसानं त्रयसाधारणम्। परस्परेति । निरग्निकत्वनिषेधको ह्यग्निमत्त्वविधिद्वारेणाग्निमत्त्वनिषेधकार्थं प्रतिक्षिपति, एवमग्निमत्त्वनिषेधकोऽपि निरग्निमत्वनिषेधकार्थमित्येवमुभयोः परस्परार्थप्रतिक्षेपकत्वादनाभासत्वानुपपत्तेरिति । तथाऽत्रापीति । परस्परार्थप्रतिक्षेपकत्वं प्रकृतेऽपीत्यर्थः । परस्परार्थप्रतिषेधकत्वमेव दर्शयति नहीति । व्याप्येति । व्याप्यं प्रसञ्जकम् , व्यापकं प्रसज्यम् , तयोरधिकरणं व्याप्तिबाधस्थानम् , तेषां सिद्धौ बाह्यार्थस्वीकाराद्वयोर्विवादनिवृत्तेरिति(६) । अनुभूतावसित इति । निर्विकल्पक-

(१) अत्र परस्पराप्रतिक्षेपकयोरिति पाठान्तरमसङ्गतमिवाभाति

(२) एवमेव न परानपेक्षमित्यादावपि परस्परार्थप्रतिक्षेपकत्वात्प्रकरणसमरूपाभासत्वात्तर्काभासा द्रष्टव्याः, तथाच मिथोविरोधस्स र्वसाधारण इति भावः ।

(३) हेतुसाध्ययोर्व्याप्त्यसिद्धिप्रसङ्गात् । अयमपि मूलशैथिल्यदोषस्सर्वसाधारण इति । (४) नेदं स्थूलमिति तर्के ।

(५) मिथोविरोधादिरूपतर्काङ्गपञ्चकवैकल्येनेत्यर्थः ।

(६) उक्तेषु नेदमित्यादितर्केषु, विरुद्धधर्मासंसर्गप्रसञ्जकरूपं प्र

वक्ष्यामः । अनुकूलश्च द्वितीयः, (१)अस्थूलताप्रतिक्षेपस्य स्थूलोपलम्भानुग्राहकत्वात्, तद्रूपताऽव्यवहारस्य तथा-प्रतिभासव्यासत्वाच्च । एवं (२)तृतीयोऽपि, अनपेक्षत्व-प्रतिक्षेपस्य सापक्षत्वोपलम्भानुग्राहकत्वात्, अनपे-क्षत्वविधेः सदातनत्वव्यासत्वाच्च । (३)चतुर्थस्त्वप्रसि-द्धव्यापकः, सदसत्त्वस्य विरोधेनैकत्रविधिवत् निषेध-

---

साविकल्पकपर्यायाभ्यामनुभवावसायाभ्यामवगते न केवलविकल्पविलसिते, एतेन प्रमाणसिद्धत्वं दर्शयति, तस्मिन् स्थूले विरुद्धधर्मासंसर्गस्येष्टत्वात्, तथाच कम्पाकम्पादीनामत्यन्तभिन्नावयवावयविनिष्ठतया एकत्रासंसर्गं वक्ष्यामह इत्याह तथाचेति ।

स्थूलोपलम्भानुग्राहकस्यास्थूलताप्रतिक्षेपस्य शिथिलमूलत्वमाहानपे-क्षत्वविधे(४)रिति । अप्रसिद्धव्यापक इति । क्वचित्प्रसि-द्धमेव हि व्यापकं स्वतन्त्रसाधनेन क्वचित्साध्यते, प्रसङ्गसाधनेन वा क्वचि-दापाद्यते, अत्र चापाद्यमानं सदसद्व्यतिरेकित्वं व्यापकभूतं न क्वचित्प्रसि-द्धम्, कथमित्याह सदसत्त्वस्येति । सदसत्त्वयोर्विरुद्धयोरेकत्रैकनिषेधे

---

अकम्, न स्थूलमित्यादिरूपं प्रसज्यम्, तयोरधिकरणं व्याप्तिबोध-स्थानमन्वयदृष्टान्तादि तदङ्गीकारे बाह्यार्थसिद्धौ विवाद एवावयोर्न स्यादित्यभिप्रायः ।

(१) नास्थूलं तथाप्रतिभासप्रसङ्गादिति तर्कोऽस्थूलतानिषेधस्य परस्परविरहरूपतया स्थूलोपलब्धिसहायकत्वात् तर्काभास इत्यर्थः । तत्र हेत्वन्तरमाह तद्रूपतेति । स्थूलात्मकव्यवहारस्य स्थूलज्ञानव्यास-त्वाच्चानुकूलत्वं तर्काभाससाधकमिति भावः ।

(२) न परानपेक्षं सदसद्व्यतिरेकप्रसङ्गादिति तर्कोऽपि, एवमनुकूल इत्यर्थः । कथमित्यत आहानपेक्षत्वेति । (३) न परापेक्षमित्यादितर्कस्तु ।

(४) अत्रापेक्षत्वविधेरिति मूले पाठान्तरम् । अस्थूलताप्रतिक्षेप-स्य स्थूलोपलम्भानुग्रहरूपपरानपेक्षाविधित्वे सदातनत्वापत्तिरित्येत-मतेनार्थः । पाठान्तरे तु परानपेक्षप्रतिक्षेपस्य सापेक्षोपलंभानुग्रा-हकत्वेन सापेक्षविध्यात्मकतया नित्यं व्यासत्वाच्चेत्यर्थो द्रष्टव्यः ।

स्याप्यनुपपत्तेः। पञ्चमस्तु(१) अनुकूल एव, अनेकत्वाभिमते वस्तुन्येकताप्रतिक्षेपस्यानेकतोपलम्भोपलम्भकत्वात्, तादूप्यव्यवहारस्य तथाप्रतिभासव्यासत्वाचेति। (२)षष्ठस्त्विष्ट एवाऽस्माकम्।

"ननु भेदः स्वरूपं वा स्यात्, इतरेतराभावो वा धर्मान्तरं वा? न पूर्वः(३), घटो भिन्न इति सहप्रयोगानुपपत्तेः। (४)नापरः, प्रतीतावात्माश्रयप्रसङ्गात्-भिन्नप्रतियोगिनिरूपणाद्धि तदभावो निरूप्यः, तन्निरूपणमेव च भेदनिरूपणम्। नोत्तरः(५), अनवस्थाप्रसङ्गात्।

इतरविधिः स्यात्, तच्च विधायानुन्मत्तस्यैव पुनः स्ववचनेन तस्य निषेधो विरुद्धो भवति। अशिथिलमूलत्वमाह तादूप्यव्यवहारस्येति। षष्ठास्त्विति। भेदव्यवस्थितिर्नैयायिकानामिष्टैवेत्यत्रापि इष्टापादनमित्यर्थः।

भेदव्यवस्थितेरनुपपन्नत्वात् कथमिष्टत्वमिति चोदयति नन्विति। स्वरूपं वा=भावस्वरूपं भावान्तराद्भेद इत्यर्थः। इतरेतराभावो वा=भावयोः परस्परतादात्म्याभावो वा, धर्मान्तरं=स्वरूपेतरेतराभावयोरन्यो धर्मो वा इत्यर्थः। भिन्नप्रतियोगीति। पटाद्भिन्नेन हि प्रतियोगिना घटेन निरूपिते तदभावः पटे निरूप्यते, अतो भेदनिरूपणाधीनमभावनिरूपणमभावनिरूपणमेव च भेदनिरूपणमिति स्वनिरूपणाधीनं स्वनिरूपणं स्यादित्यात्माश्रयतेति। अनवस्थाप्रसङ्गादिति। धर्मस्यापि हि तदन्येभ्यो भेदाद्धर्मान्तरस्वीकारः तस्यापि तथेत्यनवस्था

(१) नैकं तथाप्रतिभासप्रसङ्गादिति तर्कस्तु।

(२) नानेकं भेदव्यवस्थितिप्रसङ्गादिति तर्कस्तु, नैयायिकमते भेदव्यवस्थाया इष्टापादनत्वादयमपि तर्काभास इत्यर्थः।

(३) व्यक्तिस्वरूपमेव भेद इति पक्षः।

(४) अन्योन्याभाव एव भेद इति पक्षः, प्रतीतौ=भेदप्रतीतौ आत्माश्रयमेव प्रदर्शयति भिन्नेत्यादिना। (५) धर्मान्तरपक्षः।

तत्कथमसौ (१)व्यवतिष्ठतामिति चेत्" ।

तत्किं भेदज्ञानमेव नास्ति, सदपि वा नित्यम्, अनित्यमपि वा निर्हेतुकम्, सहेतुकमपि वा निर्विषयकम्, सविषयकमपि वा बाध्यमानविषयकमिति । तत्र (२)प्रथमः सर्वतो विरोधादनुत्तरः । (३)द्वितीयः सुषुप्तावस्थानुरोधादुपेक्षणीयः । (४)तृतीयोऽपि विरोधाद्धेयः । (५)चतुर्थस्तु भेदोल्लेखादेव त्याज्यः । पञ्चमस्तु(६) चिस्यादिति ।

परिहरति तत्किमिति । भेदज्ञानस्यात्माश्रयत्वकथनेन किं भेदज्ञानमेव नास्तीत्युच्यते, अस्तित्वेऽपि वा नित्यत्वमनित्यत्वेऽपि वा निर्हेतुकत्वं कथ्यते, अनवस्थाप्रसङ्गेन निर्विषयत्वं वा कथ्यते इति । सर्वत इति । भेदज्ञानाभावो वादिप्रतिवादिभेदद्रूष्यदूषणादिभेदव्यवहारादिभिः सर्वतो विरोधादुत्तरानर्ह इत्यर्थः । सुषुप्तावस्थेति । भेदज्ञानस्य नित्यत्वे सुषुप्तत्वं न स्यात्, अचेतयन्नेव हि सुषुप्त इत्युच्यते, न च इदं(७) जानतोऽचेतयमानत्वं सम्भवतीति । तृतीयोऽपि विरोधादिति । भावरूपस्यानित्यत्वसहेतुकत्वव्याप्त्या निर्हेतुकत्वस्य तद्विरोधादित्यर्थः । भेदोल्लेखादिति । तदुल्लेखित्वमेव तद्विषयत्वमि-

(१) 'मसौ भवतु इष्यतामि'ति पाठान्तरन्तु 'भेदः' कथं भवतु, या तूक्तरीत्या भेदस्यानुपपत्तावपीष्यते चेदिष्यतामित्याशयेन कथं तत्सङ्गमनीयम् ।

(२) भेदज्ञानाभावपक्षः, बौद्धनैयायिकयोर्विचारे वादिप्रतिवादिभेदादिस्वीकारस्यावश्यकत्वात्सर्वथा विरोधेन त्याज्य इत्यर्थः ।

(३) भेदज्ञानं सदपि नित्यमिति पक्षः सुषुप्त्यभावप्रसङ्गाद्धेय इत्यर्थः

(४) अनित्यमपि भेदज्ञानं निर्हेतुकमिति पक्षोऽनित्यसहेतुकत्वव्याप्त्या त्याज्य इति भावः ।

(५) सहेतुकमपि भेदज्ञानं निर्विषयमिति चतुर्थपक्षस्तु स्ववचनविरोधाद्धेय इत्यर्थः ।

(६) सविषयकमपि भेदज्ञानं बाध्यमानविषयकमिति पक्षस्तु ।

(७) अनित्यत्वे सर्वदेत्यादिः ।

न्त्यते-किमेतेष्वन्यतमात्मा अस्य विषयः तदन्यो वेति।

तत्र यद्यन्य एव, (१)किमेताभिर्व्यधिकरणानुपपत्तिभिस्तस्य बाध्येत। (२)एवं हि चौरापराधेन व्यक्तमयं माण्डव्यनिग्रहः स्यात्।

अथाऽन्यतमात्मा, तत्रापि यदि धर्मान्तरमेवेति तत्त्वम्, तदाऽनवस्थाभिया तदधिक एव प्रवाहस्त्यज्यताम्, तस्य कुतस्त्यागः, न ह्यनवस्था प्रतिभासमर्थं निवर्तयति किन्तु प्रवाहं परिहापयति, गन्धे गन्धान्तरवदिति।

त्याभिप्रायः। किमेतेष्विति। स्वरूपेतरेतराभावधर्मान्तरेष्वित्यर्थः व्यधिकरणादिभिरिति। यद्विषया याऽनुपपत्तिस्तया तस्यैव बाधो युक्तः, अत्र च स्वरूपभेदाधिगताः सहप्रयोगाद्यनुपपत्तयः(३) तेभ्योऽन्यस्य भेदस्य बाध्यत्वमिति हेतुसाध्ययोर्वैयधिकरण्यान्न किञ्चित्तस्या बाध्यत इति। अयुक्तत्वमेव बाधस्य प्रसिद्धनिदर्शनेन दर्शयति एवं हीति। "अचोरश्चोरतां प्राप्तो माण्डव्यो व्यवहारत" इति कथासिद्धश्चौरापराधेन माण्डव्यनिग्रहोऽयमन्यत्रानुपपत्त्या बाधो भवेत्तत्सदृश इत्यर्थः

नन्वनवस्थाभिया तदधिकप्रवाहवत्सोऽपि तन्मूलभूतस्त्यक्तव्योऽत आह न हीति। न ह्यनवस्था प्रतिभासमानं धर्मान्तरं निवर्तयति प्रतिभासविरोधात्, तन्मात्रेऽनवस्थाभावाच्च, किन्तु तदनुबन्धिनं प्रवाहं त्याजयेत् तत्र प्रतिभासाभावात्, अनवस्थानाच्चेति। अत्रैवोदाहरणमाह गन्ध इति। यथा ह्यबादिभ्यः पृथिव्यां गन्ध एव भेदक इत्युक्ते सुरभि पृथिवीतिवत्सुरभिर्गन्ध इति व्यवहारेण गन्धेऽपि गन्धान्तरप्रसक्तावनवस्थया गन्धान्तरमेव त्याज्यते न तु पृथिवीगन्धोऽपीत्यर्थः। ननु धर्मे धर्मान्तरा

---

(१) स्वरूप-भेद-धर्मान्तरभिन्न एवास्य भेदज्ञानस्य विषय इति चेत्तत्राह किमेताभिरिति।

(२) स्वरूपादिरूपभेदनिषेधकानुपपत्तिभिस्तदन्यभेदविषयबोधनमसम्भवीत्यभिप्रायः।

(३) घटो भिन्न इति सहप्रयोगानुपपत्तेरित्यादिनोक्ता इत्यर्थः।

अथेतरेतरेतराभावमेव भेदज्ञानमवलम्बत इति तत्त्वम्(१), तत्रापि ह्यात्माश्रयः, तेन हि भेदज्ञानमेव न स्यात्, अस्ति च तत्, ततो हेत्वन्तरमाक्षिपेत् नतु स्वात्मनि स्वयमहेतुत्वे स्वयमेव निवर्तेत । (२)"अविद्यावशादिति चेत्" । (३)किञ्चातः ? न ह्यविद्येत्येवमा-

---

नभ्युपगमे कथं तत्र भेदव्यवहारः ? स्वरूपभेदेनेतरेतराभावभेदेन वेति ज्ञात्वोपशाम्यतु भवान् । एतच्च स्वमते वक्ष्यते-सामान्यादिषु त्रिषु ह्यमिति । धर्मान्तरमेव भेद इति पक्षे तु सत्तायां सच्छब्दव्यवहारवन्निर्वाहो द्रष्टव्यः ।

एवं धर्मान्तरभेदपक्षेऽनवस्थादोषः परिहृतः, इतरेतराभावपक्षेऽप्यात्माश्रयदोषं परिहरति अथेति । तेन=आत्माश्रयत्वेनेत्यर्थः । अस्ति च तदिति । नास्तित्वे सर्वतो विरोधादस्तित्वं प्रतिपादितम्, ततोऽस्तित्वेन स्वसिद्ध्यर्थं भेदज्ञानं हेत्वन्तरमाक्षिपेत्, न तु स्वात्मनो हेतुत्वाभावमात्रेण स्वयमेव न स्यादिति, अस्तित्वस्यापि परित्याज्यत्वादिति । अविद्यावशादिति । अयमर्थः-पारमार्थिकं भेदमन्तरेणाविद्यावशादेवेदं भेदज्ञानं भवति, अतः परमार्थपक्षवत् नात्माकमात्माश्रयदोष इति भावः । किञ्चात इति । न ह्यविद्याकल्पितेऽपि भेदे इतरेतराभावरूपभेदज्ञानस्य भिन्नप्रतियोगिनिरूप्यत्वनिबन्धन आत्मा-

---

(१) इति पूर्वपक्षाभिमतम् । तत्रापीति । स्वस्य स्वापेक्षत्वेनात्माश्रयदोषस्तत्रापि वर्तते इत्यर्थः । उक्तदोष इष्टापत्तौ दोषमाह तेनेति ।

(२) पूर्वपक्षी शङ्कते अविद्यावशादिति । पारमार्थिकत्वपक्षे एवात्माश्रयादिदोषसम्भावना न त्वद्वैतवाद इवाविद्याविलसितत्वपक्ष इति पूर्वपक्ष्याशयः ।

(३) प्रश्नपूर्वकं समाधत्ते किञ्चात इति । दण्डचक्रकुलालादिकरणकलापमन्तरेण घटाद्युत्पत्त्यभावस्यापामरसाधारणसिद्धत्वादविद्याविलसितत्वपक्षे घटादीनामपि स्वयमुत्पत्त्यापत्तिप्रसङ्गेनात्माश्रयदोषस्तदवस्थ एवेति समाधानार्थः ।

त्माश्रयानिवृत्तिः, तथासति घटादयोऽपि कुलालादिनिरपेक्षाः स्वयमेव भवेयुः। अथ "आत्माश्रयदोषोपहततया तन्न स्वस्यैव कारणं, ततो यतः कुतश्चित्तस्य जन्म, तच्च दुर्निरूपमतोऽविद्येत्युच्यत" इति विचारार्थः(१), नास्ति तर्हि विवादः। न च (२)तदपि दुर्निरूपम्, प्रतियोगिरूपत्वेनाप्रतीताधिकरणप्रतीतिराधिकरणस्वभावत्वेनास्मृतौ प्रतियोगिस्मृतिश्चेश्चेतरेतराभावग्रहणकारणमिति निरूपणात्।

अथ स्वरूपमेव भेदप्रतिभासस्य विषय इति तत्त्वम्, (३)तथापि सहयोग एवानुपपन्नस्त्यज्यताम्, भेदेन

श्रयदोषः परिहृतो भवति। आत्माश्रयानिवृत्तिः=आत्माश्रयदोष(त्व)निवृत्तिरित्यर्थः। यद्यविद्याविलसिते आत्माश्रयत्वं न दोषाय, तथासति घटादीनामप्यविद्याविलसितत्वेन स्वस्मादेवोत्पत्तिः स्यादित्याह तथासतीति। इति विचारार्थ इति। बाध्यमानविषयत्वविचारार्थ इति। नास्ति तर्हि विवाद इति। इतरेतराभावरूपभेदज्ञानस्य स्वव्यतिरिक्तहेतुकत्वेनात्माश्रयाभावात् भेदव्यवस्थितेर्नास्ति विवाद इति। तर्हि हेत्वन्तरनिरूपणमशक्यमेव नेत्याह न चेति। अयमर्थः इतरेतराभावप्रतीतिस्तावदेवं भवति 'घटः पटो न भवतीति'। तत्राधिकरणं घटः स च गृह्यते, प्रतियोगी पटः स्मर्यते च, तत्र प्रतियोगिरूपत्वेन प्रतियोगितादात्म्येनाप्रतीतावग्रहणेऽधिकरणस्य प्रतीतिग्रहणमधिकरणप्रतियोगिनोः प्रतियोग्यधिकरणाभावविशिष्टयोर्ज्ञानं नाभावज्ञानकारणं येनात्माश्रयता स्यात्किन्तु इतरेतरत्वेनाप्रतीयमानयोः स्वरूपप्रतीतिः कारणमिति।

(१) विचारार्थ इति। पूर्वपक्षाभिप्राय इत्यर्थः। एवमपि कथञ्चित्कारणसत्ताङ्गीकारेणैव भेदव्यवस्थाया अपलापाभावान्न विवादावसर इत्याशयेनाह सिद्धान्ती नास्तीति। (२) हेतुनिरूपणमपि।

(३) भेदज्ञानालम्बनं स्वरूपमेवेति तृतीयपक्षमनूद्य निरस्यति तथापीति। घटो भिन्न इति सहप्रयोगानुपपत्तिर्याऽस्मिन्पक्षे पूर्वं दत्ता

तु किमपराद्धम् । (१)"सोऽपि दृश्यत इति चेत्" । सत्यं नैमित्तिकस्तु स्यात् न तु स्वरूपतः, नहि घटमानय घटमवलोकयेत्यादौ भेदपदमपि प्रेक्षावानुपादत्ते, (२) व्याख्यायान्तु मूढप्रबोधनाय घटः कुम्भ इतिवत्सहप्रयोगेऽपि न (३)दोषः । (४)"तथापि कः परमार्थः" । यथायथं त्रयमपि—पटस्य हि घटाद्यात्मनाऽप्रतीतिः, अघटात्म-

नैमित्तिक इति । अप्रतिपन्नबोधनेन निमित्तेन सहप्रयोगो भवतीत्यर्थः । व्याख्यायामिति । स्वरूपलक्षणभेदानभिज्ञबोधनाय व्याख्यायां कुम्भपदार्थानभिज्ञं प्रति घटः कुम्भ इतिवत् सहप्रयोगेऽपि न दोषो भवति इति । एतच्च स्वरूपमेव भेद इत्यस्मिन्पक्षे स्थित्वोक्तम्, सिद्धान्ते यथायथं भेदत्रयस्यापीष्टत्वात्, (५)स्वरूपभेदे व्यतिरिक्तभेदवचनत्वे पर्यायत्वाभावादव्याख्यायामपि सहप्रयोगो घटत इति । तथापि क इति । त्रिष्वपि भेदेषु कः परमार्थ इति । यथायथं त्रयमिति । विषयविशेषापेक्षया त्रयमपि तत्त्वमित्यर्थः । घटाद्यात्मना-

सत्ता तर्हि सहप्रयोगो मा क्रियन्तानाथापि भेदाङ्गीकारे को दोष इति भावः ।

(१) शङ्कते सोऽपीति । घटो भिन्न इत्यादिसहप्रयोगोऽपि व्यवहारसिद्धः कथं त्यज्यतामित्याशङ्कार्थः ।

(२) स्वरूपतश्चेत्सहप्रयोगस्तदा घटमानयेत्यादावपि स्यादिति भावः

(३) स्वयं घटस्वरूपभेदं जानन्नपि पटाद्यतिरिक्तघटस्वरूपभेदानभिज्ञं प्रति तद्बोधयितुं घटो भिन्न इति वदतीत्यभ्युपगमे न कापि क्षतिरिति सिद्धान्तिन आशयः ।

(४) पूर्वपक्षी सिद्धान्तिनं पृच्छति तथापीति । उक्तभेदत्रयस्वरूपे किं वास्तविकमिति प्रश्नार्थः । उत्तरमाह यथायथमिति । स्वरूपभेदेतरेतराभावधर्मान्तररूपभेदज्ञानविषयस्य पटोऽयं न घट इत्यादौ क्रमेण पारमार्थिकत्वं प्रदर्शयति पटस्येत्यादिना ।

(५) स्वरूपभेद इति । घटस्वरूपभेदस्य पटादिव्यतिरिक्तभेदार्थकत्वे स्वयं प्रयोगपक्षेऽपि घट-भिन्नशब्दयोः पर्यायत्वासम्भवेन घटो भिन्न इति सहप्रयोगः स्यादेवेति भावः ।

ना च प्रतीतिः, ततो वैशिष्ट्यप्रतीतिश्चेत्यनुभवसिद्धम् । तत्राभावस्य प्रथनमात्रम् अभावान्तरधर्मान्तरयोरभावात्, सामान्यादिषु त्रिषु स्वयं धर्मान्तराभावात्, (१)द्रव्यादिषु त्रिषु स्वयं त्रयस्यापि सम्भवात् । भवति पटोऽयं न घटस्तन्तुमयश्चेति, गन्धोऽयं न रूपं सुरभिश्चेति, गतिरियं नोत्क्षेपणं तिर्यक्चेति ।

ऽप्रतीतिरिति, अनेन स्वरूपभेदो दर्शितः । ततो वैशिष्ट्यप्रतीतिरित्यनेन धर्मान्तरभेद इत्यनुसन्धातव्यम्(२) । प्रथनमात्रमिति । स्वरूपभेदमात्रमभावस्य, अभावे अभावान्तराभ्युपगमेऽनवस्थाप्रसङ्गात् अभावेऽभावान्तरप्रतीतेरसम्भवात, अभावे धर्मान्तरलक्षणभेदाऽसम्भवाच्चेति । सामान्यादिष्विति । सामान्यसमवायविशेषेषु स्वरूपभेदोऽभावभेदश्चेति द्वयं, तेषु धर्मान्तराभावात्—भेदरूपं हि धर्मान्तरं गुणो वा कर्म वा सामान्यं वा विशेषो वा सम्भवेत् , तत्र गुणकर्मविशेषाः सामान्यसमवायविशेषेषु न सम्भवन्ति, तेषां द्रव्येष्वेव वृत्तेः । न च सामान्यमपि त्रिषु सम्भवति, अनवस्थासम्बन्धाभावविरोधेभ्य इति(३) । द्रव्ये तावत्त्रयसम्भवं दर्शयति पटोऽयमिति । अत्र क्रमेण स्वरूपाभावधर्मान्तरभेदानां निर्देश इति । गुणेऽप्यनेनैव क्रमेण त्रय सम्भव इति दर्शयति गन्धोऽयमिति । अत्र सुरभित्वं गन्धत्वावान्तरजातिरिति बोद्धव्यम् । कर्मण्यपि पूर्वोक्तक्रमेण त्रयसम्भवमाह गतिरियमिति । तिर्यक्त्वं कर्मत्वावान्तरजातिरिति । "त्रिविधस्यापि भेदस्य कीदृशो भेद इति

(१) सामान्यादित्रिके भेदज्ञानविषयद्वयस्वरूपमुपपाद्य द्रव्यादित्रिके भेदज्ञानविषयत्रयसत्तामाह द्रव्यादिष्विति । त्रयस्यापि—स्वरूपेतरेतराभावधर्मान्तरत्रयस्यापि ।

(२) अनेनाघटात्मना प्रतीतिरित्यस्येतरेतराभावप्रदर्शकत्वम् इत्यपि उपलक्षणविधया सूचितम् ।

(३) स्वतोव्यावर्तकस्वरूपहानिरूपविरोधाद्विशेषेषु सामान्याभावादित्यर्थः ।

**लक्षणञ्च(१) स्वरूपभेदस्य ताद्रूप्येणाप्रतीतौ प्रतीतिः, इतरेतराभावस्य त्वबाधितः समानाधिकरणो निषेधप्रत्ययः, वैधर्म्यस्य तु विरोधः, स चैकधर्म्यसमावेश इत्येषा दिक् ।**

---

चेत्" । श्रूयताम्—स्वरूपाभावात्मकयोः स्वरूपमेव भेदः, धर्मभेदस्यापि गुणकर्मात्मकस्य त्रयम् , सामान्यादित्रयात्मकस्य स्वरूपाभावात्मकद्वयम्, स्वरूपाभावधर्माख्याः सप्तषट्त्रयवर्तिनो(२) भेदा इति विनिश्चिक्युर्भेदत्रयनिरूपका इति ।

इदानीं त्रिविधस्यापि भेदस्य परस्परविवेकाय लक्षणमाह **लक्षणञ्चेति** । वस्तुनः स्वव्यतिरिक्तरूपारोपप्रतीत्यभावविशिष्टया प्रतीत्या यद्रूपं प्रतीयते स स्वरूपभेद इत्यर्थः(३) । अपटोऽयमित्यबाधितेन समानाधिकरणेन निषेधप्रत्ययेन यद्विषयीक्रियतेसोऽन्योन्याभावभेदः । (४)अबाधितत्वेन तस्यैवातत्त्वया प्रतीतेर्लक्षणत्वं व्यवच्छिनत्ति, समानाधिकरणत्वेन इह भूतले घटो नास्तीति संसर्गाभावप्रतीतेः,(५) निषेधप्रत्ययत्वेन शुक्लः पट इति प्रतीतेः । **वैधर्म्यस्य**=धर्मान्तरभेदस्य, एकधर्म्यसमावेशलक्षणो विरोधो लक्षणम् । **इत्येषा**=भेदनिराकरणदूषणोक्तिदिगिति ।

---

(१) अत्र लक्षणञ्चेति नारायणमतेन मूले पाठो बोध्यः । धर्मान्तररूपभेदस्य लक्षणमित्यर्थः । यथा घटत्वपटत्व योर्धर्मान्तरयोरेकत्र धर्मिणि घटे वाऽसमावशाद्भेद इत्यर्थः ।

(२) स्वरूपं सप्तसु पदार्थेषु, इतरेतराभावोऽभावभिन्नषट्सु, धर्मान्तरं द्रव्यगुणकर्मसु त्रिषु पदार्थेष्वित्यर्थः ।

(३) यथा घट इत्युक्तौ घटस्वरूपातिरिक्तपटादिरूपाणामारोपात्मिका भ्रमात्मिका या प्रतीतिस्तदभावविशिष्टघट–इत्याकारकप्रतीत्या घटरूपं प्रतीयते इति घटस्वरूपभेद इत्यर्थः ।

(४) इतरेतराभावलक्षणीयपदव्यावृत्तीः प्रदर्शयति अबाधितत्वेनेति ।

(५) लक्षणत्वं व्यवच्छिनत्तीति पूर्वेणानुषज्यते । एवमग्रेऽपि ।

सप्तमो(१)ऽप्यनुकूल एव, घटादौ व्यापकताप्रतिषेध स्याव्यापकतोपलम्भोपष्टम्भकत्वात्, व्यापकत्वस्य निष्क्रियत्वव्याप्तत्वाच्च। अष्टमस्तु क्वचिदिष्ट एव, (२)यत एव हि क्वचिदविधेयोऽत एव क्वचिद्विधेयोऽव्यापक इति व्यवह्रियते। "सर्वत्रेति चेत्"। न, व्याप्त्यसिद्धेर्विरोधाच्च, नहि यदव्यापकं तत्सर्वत्राविधेयमिति प्रतिबन्धः, (३)क्वचिदस्तीति अव्यापकार्थः, सर्वत्र नास्तीति चाविधेयार्थस्तवाभिमतस्तदनयोर्विरोधोऽपि स्यात्। "यद्विधेयस्वभावं तत्कथं प्रतिषेध्यमिति चेत्"। न, प्रति-

---

न व्यापक इति सप्तमं पक्षं दूषयति सप्तम इति। घटादौ नाकाशादावपीत्यर्थः। शिथिलमूलत्वमप्यस्य नास्तीत्याह व्यापकत्वस्येति। (४)अविधेयत्वप्रसङ्गादित्यष्टमः। अत्र सर्वत्राविधेयत्वप्रसङ्गः क्वचिदविधेयत्वप्रसङ्गो वा विवक्षितः, तत्र प्रथम इष्ट एवेत्याह अष्टम इति। द्वितीयं कल्पमाशङ्कते सर्वत्रेति। दूषयति नेति। व्याप्त्यसिद्धिं दर्शयति नहीति। विरोधं दर्शयति क्वचिदिति। अतो विरुद्धत्वाद्विधिसिद्ध्यसिद्ध्योरिति बाधासिद्ध्योरन्यतरापात(५) इत्यभिप्रायः। विधेयस्वभावस्य प्रतिषेध्यत्वं विरुद्धमिति शङ्कते यदिति। परिहरति नेति। विधेयस्य प्रतिषेधस्वभावता अभावरूपता विरुद्धा, नाभावप्रतियोगितापि विरुद्धा तयोर्भिन्नकालत्वादिति भावः।

---

(१) न व्यापकं निष्क्रियत्वप्रसङ्गादिति बौद्धोक्तः सप्तमपक्षोऽपीत्यर्थः। अनुकूलत्वमेवोदाहरति घटादाविति।

(२) इष्टत्वमेव विवृणोति यत इत्यादिना। यथा घटः क्वचिद्भूतलादौ निषिध्यतेऽन्यत्रभूतलादौ विधीयत इत्यतोऽव्यापकस्तथा च क्वचिदविधेयत्वमिष्टमेवेत्यर्थः।

(३) घटादेः सर्वत्र निषेधासम्भवादिति भावः।

(४) नाव्यापकमित्यादिः।

(५) विधेयत्वासिद्धौ बाधस्तदसिद्धौ स्वरूपासिद्धिरित्यर्थः

षेध्यस्वभावना हि विधेयस्य विरुद्धा न तु प्रतिषेधप्रति-
योगितापि(१) ।

"अथ योऽस्ति कथं तस्य प्रतिषेधोऽप्यस्तीति चेत्" ।
को दोषः । "अनयोरविरोधप्रसङ्ग इति चेत्" । (२)प्र-
कारभेदेन प्रसङ्गोऽपि न दोषमावहति, तदभेदेन तु वि-
धिनिषेधौ केन स्वीकृतौ यं प्रत्यविरोधः प्रसज्येतेति ।
एतेन कालभेदादिनाप्यविरोधो द्रष्टव्यः(३) ।

---

(४)भावमाविष्कर्तुं पुनः शङ्कते अथेति । सिद्धान्ती त्वस्तित्वयुक्तस्य प्रतिषेधस्यापि अस्तित्वे दोषं पृच्छति क इति । परस्तु विधिप्रतिषेध-योरेकधर्मिसमावेशेनानयोरविरोधप्रसङ्ग एव दोष इति शङ्कते अनयो-रेति । सिद्धान्ती तु किं प्रकारभेदेन देशभेदेन वर्तमानयोरविरोधः प्रसज्यते तदभेदेन वेति विकल्प्य, प्रथम इष्टापादनम्, द्वितीये प्रसङ्ग-स्यानभ्युपगम इत्याह प्रकारेति । देशभेदन्यायेन कालभेदादिनाप्यवि-रोध इत्याह एतेनेति । आदिशब्देन गुणकर्माद्युपाधिभेदो गृह्यते । यथा पटोऽस्ति न शुक्लः, गौरस्ति न गच्छतीत्यत्र विधिप्रतिषेधयोरुपाधि-भेदेन न विरोध इति ।

एवं परमाण्ववयव्यादिसाधारण्येनासाधारण्येन चैतेषां साधनोपक्रमो दूषणोपक्रमश्चापलापो निरस्तः, इदानीमसाधारण्येनैवावयविनि बाधकानि

---

(१ विधेयस्य घटादेरभावरूपताया विरुद्धत्वेऽपि अभावप्रतियोगि-त्वेन विरुद्धमिति भावः ।

(२) देशभेदेन देशविशेषावच्छेदेन विधिनिषेधयोर्वृक्षे मूलाव-च्छिन्नकपिसंयोगाभावाग्रावच्छिन्नकपिसंयोगयोरविरोधस्येष्टत्वान्न त-दविरोधप्रसङ्गो दोषावह इत्यर्थः ।

(३) देशभेदेन विधिनिषेधयोरिव प्रथमक्षणावच्छिन्नघटे गुणा-भावस्य द्वितीयादिक्षणावच्छिन्ने तत्रैव गुणस्य च सत्त्वात्कालभेदेनापि तदविरोध इष्ट एवेत्यर्थः ।

(४) यद्विधेयस्वभावं तत्कथं प्रतिषेध्यमिति पूर्वपक्षाभिप्राय-मर्थः ।

"अस्तु तर्हि स्थूलघाती विरुद्धधर्माध्यासो ग्रहणाग्रहणादिः पञ्चविधः"। नासिद्धेः, तथाहि यो येन यत्रैव यदैवोपलभ्यते स तेन तत्रैव तदैव नोपलभ्यत इति नानुभवः नाप्यभ्युपगमः।

"एकावयवसाहितस्योपलम्भेऽन्यावयवसाहितस्यानु-

परिहरिष्यन् तान्याशङ्कते तावत् अस्तु तर्हीति। (१)एक एव पटावयवी केनचिद्भागेन गृह्यते केनचिन्नेति ग्रहणाग्रहणविरोधः, तथा स एव क्वचिदावृतोऽनावृतश्चेत्यावरणानावरणविरोधः, तथा एक एव वृक्षश्चलच्छाखाश्रयः कम्पतेऽचलच्छाखाश्रयो न कम्पत इति कम्पाकम्पविरोधः, तथा एक एव पटः क्वचिद्रक्तोऽरक्तश्चेति रक्तारक्तविरोधः, तथैकस्यावयविनः क्वचिदवयवे नाशेन वृत्तस्यावयवान्तरेऽपि वृत्तिरिति तद्देशत्वातद्देशत्वविरोधः। अत एभिः पञ्चभिर्विरोधैरवयाविनो द्व्यणुकादारभ्य (२)भेदप्रसाधनद्वारेणाभाव इति। परिहरति नेति। पञ्चविधस्यापि विरोधस्यासिद्धेरित्यर्थः। (३)प्रथमस्यासिद्धिं दर्शयति तथाहीति। प्रमेयप्रमातृदेशकालैकत्वे सत्येव ह्युपलम्भानुपलम्भयोर्विरोधः स्यात्, न चैवंविधयोरुपलम्भानुपलम्भयोः प्रतीतिः, नाप्यस्माकमभ्युपगमः, येन प्रतीतिबलेनाभ्युपगमबलेन वाऽनयोरेकधर्मिसमावेशासम्भवेनावयविनोऽपह्नवः स्यात्, किन्तु अवयविन उपलम्भ एवानुपलम्भस्त्ववयवान्तरस्येत्यभिप्रायः।

(४)अभिप्रायमाविष्कर्तुं शङ्कते एकावयवेति। एवन्तर्ह्येकावयवसहितस्योपलम्भविधेरन्यावयवसहितस्योपलम्भनिषेधस्य विशेषणभूताव

(१) मूलोक्तं पञ्चविधविरुद्धधर्माध्यासं स्थूलावयविबाधकं प्रदर्शयति एक एवेत्यादिना।

(२) भेदप्रसाधनेति। उक्तविधविरोधैः परमाणुभिन्नद्व्यणुकाद्यवयविसाधनं न सम्भवतीति भावः।

(३) ग्रहणाग्रहणविरोधस्य।

(४) ग्रहणाग्रहणरूपावयविबाधकविरोधलक्षणाक्षेपाभिप्रायमित्यर्थः

पलम्भ इति चेत्" । एवन्तर्ह्यवयविन्युपलभ्यमाने कश्चि-दवयव उपलभ्यते कश्चिन्नेति वाक्यार्थः, 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामत' इति न्यायात्, त-थाचावयवानामुपलम्भानुपलम्भावयविनि सञ्चार्य प्र-सङ्गस्तदलमनेन ।

(१)एतेनावृतानावृतत्वं व्याख्यातम् । "अनावरण-दशावत् कतिपयावयवावरणेऽपि तथाविधस्थौल्योपल-म्भः किन्न स्यादिति"-(२) त्ववशिष्यते । तदप्यसत्, तस्य परिणामगतसामान्यविशेषस्य ततोऽन्यस्य नियत-

---

यवपरत्वादवयववर्तिनोरुपलम्भानुपलम्भयोरवयविनि सञ्चारः स्यादित्याह एवन्तर्हीति । एवञ्च ययोरवयवयोरुपलम्भानुपलम्भौ न तयोरेकत्वं, यस्यावयविन एकत्वं न तस्योपलम्भानुपलम्भलक्षणविरुद्धधर्मसंसर्ग इत्य-भिप्रायेणाह तदलमिति ।

एतेनोपलम्भानुपलम्भसंसर्गासिद्धत्वप्रतिपादनेनावृतानावृतत्वमप्यवय-वेन्यसिद्धत्वेन व्याख्यातमित्याह एतेनेति । एवञ्च सति यद्यवयवस्यै-ावरणं नावयविनस्तर्हि सर्वावयवानावरणदशायां यादृशं स्थौल्यमव-ाविन उपलभ्यते (३)तादृशस्योपलम्भः किं न स्यादिति चोद्यमेव निरा-र्तव्यमवशिष्यत इत्याहानावरणेति । तदपि निराकरोति तदपी-ते । (४)स्थौल्यं हि नाम परिणामगतमवान्तरसामान्यं, तच्चावयविनो भेन्नं भिन्नसामर्थ्यवेद्यं च, ततः कतिपयावयवोपलम्भसामग्रीकस्यावय-ग्युपलम्भस्य सत्त्वेऽपि ततो बह्ववयवोपलम्भसामग्रीकस्य स्थौल्योपलम्भ-याभावो युज्यत इति ।

---

( १ ) आवृतत्वानावृतत्वरूपावयविबाधकविरोधमतिदेशेन निरा-करोतीतेनेति । ( २ ) बौद्धीयपूर्वपक्षमात्रन्त्ववशिष्यत इत्यर्थः ।
( ३ ) कतिपयावयवावरणदशायामित्यादिः ।
( ४ ) उत्तरार्थं विवृणोति स्थौल्यमित्यादिना ।

**सामग्रीवैधुर्यस्य तदभावे तदुपलम्भेऽप्यनुपलम्भत्वात्(१) ।**

**एतेन कम्पाकम्पसंसर्गो निरस्तः । (२)सामग्रीभेदेनावयवनियतकम्पोत्पादे तस्यां दशायामवयविनो निश्चलत्वात् । "एवं तर्हि कम्पाकम्पयोरवयवयोर्विभागात्संयोगनाशे द्रव्यनाशः स्यादिति चेत्" । ततः किम् ? "अपसिद्धान्त इति चेत्" । न एवमपि क्वचिदभ्युपगमात् ।**

---

एतेनैवासिद्धत्वेन कम्पाकम्पसंसर्गोऽप्यवयविनि निरस्त (३)इत्याह **एतेनेति** । कथमित्याह **सामग्रीति** । नोदनादिकाया अवयविनियतायाः सामग्र्या भेदेनावयवनियतकम्पोत्पादे तस्यां दशायामवयविनश्चलनाभावादवयविनि चलनाचलने न स्त इत्यर्थः । यद्येकस्यैवावयवस्य कम्पः नावयविनः अवयवान्तराणां वा, एवन्तर्हि अयं दोषः स्यादित्याशङ्कते **एवमिति** । कर्मणो विभागहेतुत्वेन सकम्पाकम्पयोरवयवयोर्विभागाद्द्रव्यारम्भकसंयोगस्य द्रव्यासमवायिकारणस्य विनाशाद्द्रव्यनाशः प्रसज्यत इति । किन्ततो द्रव्यनाशादनिष्टमित्याह(४) **ततः किमिति** । (५)शाखाचलने वृक्षावयविनो नाशानङ्गीकरणादपसिद्धान्तदोष इति शङ्कते **अपेति** । नायं दोष इत्याह **नेति** । वेणुदलविभागाद्वेण्ववयविनो

---

( १ ) अवयविभिन्नस्य सर्वावयवोपलम्भसामग्रीकस्य स्थौल्यपरिणामविशेषस्य कतिपयावयवावरणकालेऽभावेन कतिपयावयवसहितावयव्युपलम्भेऽप्यनुलब्धेरिति उत्तराभिप्रायः ।

( २ ) अवयविनिष्ठकम्पोत्पादकसामग्रीतोऽवयवनियतकम्पोत्पादकसामग्र्या भेदेनेत्यर्थः ।

( ३ ) अवयविबाधकस्यावृतत्वानावृतत्वविरोधस्यासिद्धत्वेन कम्पाकम्पविरोधोऽपि अवयविबाधकत्वेन वक्ष्यमाणदिशा निरस्त इत्यर्थः । ( ४ ) सिद्धान्तीत्यर्थः ।

( ५ ) शाखारूपावयवकम्पजनकक्रिययेत्यादिः । नाशानङ्गीकरणादिति । अवयविनि कम्पजनकक्रियाया अभावात्पूर्वोक्तरीत्या द्रव्यनाशप्रसक्तौ अपसिद्धान्तदोष इत्यर्थः ।

**"सर्वत्रैवं प्रसङ्ग इति चेत्"। तथाप्यवयविनः किमत्याहितम्, नचैवमपि, कर्मणो द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजननियमानभ्युपगमात् (१)। कारणविशेषात्कस्यचिदेव कर्मणस्तथाभूतविशेषोपलब्धेः।**

**एतेन "पाणौ चलति तन्मूलभूतः परमाणुरपि चलेत्,**

---

विनाशाभ्युपगमान्नापसिद्धान्तदोष इति। यत्र तर्हि विनाशो नाभ्युपगम्यते तत्रापि विनाशः प्रसज्येत आरम्भकसंयोगविनाशादिति शङ्कते **सर्वत्रैवमिति**। परिहरति **तथापीति**। सर्वत्र विनाशप्रसङ्गेऽपि नावयविनि सद्भावोऽपह्नुतः स्यात्, अतः सिद्धान्तान्तरदूषणं नाम निग्रहस्थानमापद्यत इति भावः(२)। न च सर्वत्र विनाशोऽपि प्रसज्यत इत्याह **नचैवमिति**। विशिष्टस्यैव हि कर्मणो द्रव्यारम्भकसंयोगविनाशकविभागजनकत्वं न तु सर्वस्यैव कर्मणः कारणत्वम्(३) कस्यचिदेव कर्मणः तथाविधविशेषोपलब्धेरिति।

एतेन कर्मणो द्रव्यारम्भकसंयोगप्रतिस्पर्धिविभागजनकत्वनियमानभ्युपगमेन परोपन्यस्तमिदं चोद्यं निरस्तमित्याह **एतेन पाणाविति**। पाणिचलने हि तदारम्भकस्य तन्मूलभूतस्यापि परमाणोश्चलनं स्यात्, तस्मिन्नचलति तदारब्धावयविनश्चलनानुपपत्तेः, ततश्चलितात्परमाणो(४)श्चलद्भुजपरमाणोर्विभागः स्यात्, ततः पाणिभुजारम्भकयोः परमाण्वो-

---

(१) विकसत्कमलकुड्मलभङ्गप्रसङ्गभीत्यैकस्यैव कर्मणः द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्य तदप्रतिद्वन्द्विविभागजनकत्वस्य चास्वीकारात्कस्यचिदेव कर्मणस्तथात्वमुररीक्रियत इत्यर्थः।

(२) सर्वत्र सामान्यतः क्रियाया द्रव्यनाशकत्वं नैयायिकैर्न स्वीक्रियत इति अवयविस्वीकाराद्योऽयो सिद्धान्तस्तस्य दूषणमित्यर्थान्तरं नाम निग्रहस्थानं स्यादिति भावः।

(३) द्रव्यनाशककर्मण एव न तु सर्वस्यैव कर्मणः द्रव्यारम्भकसंयोगविनाशजनकविभागजनकत्वमित्यर्थः।

(४) पाणिपरमाणोरित्यर्थः।

ततो अचलद्भुजपरमाणोर्विभागस्ततो 'यो येन संयुज्यते विभज्यते वा स तत्कार्यद्रव्येणापी'ति न्यायेन भुजपाण्योरपि विभागस्ततः संयोगनाशस्ततः शरीरनाश" इति निरस्तम् । नहि पाणिपरमाणुक्रिया भुजपरमाणुविभागमारभते ।

(१)"नियमेन तदनारम्भकत्वे कर्मलक्षणक्षतिरिति चेत्"।

(२)न, आकाशादिदेशविभागोपजननेनापि तदुप-

---

विभागात् भुजपाण्योरपि विभागः स्यात् , कथमित्याह **यो येनेति** । येन शाखादिना यो विहङ्गादिः संयुज्यते वियुज्यते वा स तत्कार्येण वृक्षेणापि संयुज्यते वियुज्यते वेति दर्शनात् भुजपाणिपरमाणुकार्ययोर्भुजपाण्योरपि विभागः स्यात् , तथाहि पाणिपरमाणुस्तावन्महाकार्येण भुजेन विभज्यते, विभागस्थितेः पुनश्च भुजस्तयैव स्थित्या पाणिपरमाणुकार्येण पाणिना विभज्यत इति भुजपाण्योरनेन प्रकारेण विभागो भवति, ततः शरीरस्याव्यवहितावयवविभागाच्छरीरविनाशोऽप्येवं स्यादिति चोद्यस्वरूपोपन्यासः । एतेनेति निर्दिष्टं निरासहेतुं विवृणोति **नहीति** । पूर्वं चलाचलयोर्विभागात्साक्षात्तदारब्धावयविनोऽपि विनाशः स्यादिति चोद्यं निरस्तम्(३), इदानीं चलाचलावयवारम्भकपरमाणुविभागद्वारेण चलाचलयोरपि विभागादवान्तरावयविनाशद्वारेण परमावयविनोऽपि विनाशः स्यादिति चोद्यं पूर्वनिरासहेतुनैव निरस्तमित्यवगन्तव्यमिति ।

**कर्मलक्षणक्षतिरिति** । 'संयोगविभागयोर्निरपेक्षं कारणमिति' हि तल्लक्षणमिति ।

---

( १ ) पूर्वपक्षी शङ्कते नियमेनेति । सर्वत्र क्रियाया विभागाजनकत्वे 'संयोगविभागयोरनपेक्षं कारणं कर्मेति' कर्मलक्षणे कणादोक्तेऽव्याप्तिः स्यादिति शङ्कार्थः । ( २ ) समाधत्ते नेति ।

( ३ ) पवन्तर्हीत्यादिनोक्तं चोद्यं 'नचैवमपि कर्मण' इत्यादिग्रन्थेन निरस्तमित्यर्थः ।

पत्तेः(१), नोद्यकर्मवत् । "कुतोऽयं विशेष इति चेत्" । अवयवसंयोगकारणाविशेषादित्युक्तम् । "एवन्तर्हि यद्यवयवकम्पेऽप्यकम्प एवावयवी, हन्तावयवसंयोगिविभागिभ्यामाकाशादिदेशाभ्यां न संयुज्येत न विभज्येतेति(२) चेत्" । न, अवयवसंयोगविभागाभ्यामेव तत्सिद्धेः, एतच्च सम्यगवबोद्धुं वैशेषिकमधीष्वेति । "(३)तर्हि च तदवयवसमाश्रितोऽप्यचलन्नेवावयव्युपलभ्येतेति चेत्"(४)। (५)नेदमनिष्टं 'पाणौ कम्पमाने शरीरं न कम्पत' इति प्रत्ययात् । अथवा यो यदाश्रिततयोप-

नोद्यकर्मवदिति । नोद्यस्य इषोः कर्म न सहसा नोदकेन द्रव्येण विभागमारभते किन्तु तत्रत्याकाशदेशेनेति भावः । अवयवगतकर्मावयवान्तरेण कदाचिद्विभागमारभते कदाचिन्नेत्ययं विशेषः कुतो हेतोरित्याह(६) कुतोऽयमिति । अवयवसंयोगविभागाभ्यामेवेति । संयोगजसंयोगविभागजविभागयोरभ्युपगमादवयवसंयोगविभागाभ्यामेवावयविन्यपि तयोरुत्पत्तिरुपपद्यत इति । एष च संयोगजसंयोगविभागजविभागोत्पत्तिप्रकारो वैशेषिकाध्ययनादेव सम्यगवगतो भवतीत्याह एतच्चेति । अथवा चलत्वोपलम्भोऽपि समर्थयितुं शक्य(७)मित्या-

(१) कर्मलक्षणानुपपत्तेः । (२) अवयवीति शेषः ।

(३) शङ्कते तर्हीति । चलदवयवसमवेतोऽप्यवयव्यचलदेवोपलभ्येत नचैवमिति शङ्कार्थः ।

(४) अत्र मुद्रितमूलादर्शपुस्तकस्थः नेत्यादि अधीष्वेत्यन्तं 'न काशादिदेशेष्वमपि सर्वत्रोपलभ्येत विभागिभ्यामाकाशादिदेशाभ्यां संयुज्येतेति चेन्न, अवयवसंयोगविभागाभ्यामेव तत्सिद्धेः एतच्च सम्यगवबोधद्वारैवधिकमनुसन्धेयम्। तर्हि चलदवयवी लभ्येतेति चेत्' पाठोनारायणासम्मतत्वात् 'न अवयवे'त्यादिपूर्वग्रन्थस्यासङ्गतत्वान्न मूले मुद्रितः, विद्वद्भिः स्वयं युक्तायुक्तत्वे विभावनीये ।

(५) समाधत्ते नेदमिति ।

(६) पूर्वपक्षीत्यर्थः । (७) सामान्ये नपुंसकप्रयोगोऽयं सङ्गमनीयः।

लभ्यते स तस्मिंश्चलत्यचलोऽपि चल एव विभाव्यते दर्पण मुखवत् जलवच्चेति(१)। द्रष्टव्यम्, कृतं प्रतीतिकलहेन

"एवमपि सर्वत्र चल एवोपलभ्येतेति चेत्"। (२)चलत्यवयवे सर्वत्र तथैवेति न किञ्चिदनुपपन्नं, न चले कथं तथोपलभ्यताम्।

"(३)तथापि चलाचलाश्रयस्य चलाचलतया प्रतीतौ चलाचलजलचन्द्रवत् द्वैतप्रत्ययोऽपि स्यात् इति चेत्" (४)स्यादपि यद्याश्रयविच्छेदः स्यात्, न ह्येकस्मिन्नेव

---

हाथवेति। कृतमिति। एवम्प्रतीतिमङ्गीकृत्यापि परिहारात् कृत प्रतीतिकृतेन कलहेनेति(५)।

कथं तथेति। अवयवचलनस्यावयविनि तथोपलम्भहेतुत्वात इति भावः।

यद्याश्रयविच्छेद इति। चलाचलयोराश्रययोर्यदि विच्छेदः

---

(१) जलचन्द्रकवदिति पाठान्तरम्।

(२) कलहाभावे हेतुमाह चलतीति। एतत्पूर्वन्तु एवमपीत्यादि पूर्वपक्षपाठो नादर्शपुस्तके किन्तूचितत्वादत्र निवेशित इत्यवधेयम् यत्र यत्रावयवचलनन्तत्र सर्वत्रावयविनि चलत्वोपलब्धिराश्रितचलने नैवेति न काचित्क्षतिः, आश्रिताचलने तु नैवावयविनि कथञ्चिदपि चलनप्रतीतिरिति भावः।

(३) शङ्कते तथापीति। उक्तरीत्याऽवयवचलनेऽपि अवयविचलनप्रतीतेरारोपितत्वेऽपि यत्र केचिदवयवाश्चला अचलाश्च केचित्तत्र तदाश्रितावयविनश्चलाचलतया प्रतीतौ चलाचलजलप्रतिबिम्बितेन्दुवत् द्वैतप्रतीतिः स्यादिति शङ्काशयः।

(४) समाधत्ते स्यादपीति। तथाच तत्र चलाचलावयवभेदेनैव विभिन्नजलप्रतिबिम्बे एव द्विविधचन्द्रप्रतीतिर्नैकस्मिन् जल इति समाधानार्थः।

(५) चलत्यवयवेऽवयविचलनप्रतीतिर्नैव स्वीक्रियते तथापि 'तुष्यतु दुर्जन'इति न्यायेन दर्पणमुखादिदृष्टान्तेनोक्तप्रतीतिरपि भवितुमर्हतीति कृतन्तद्विषयेण विवादेनेति भावः। अत्र मूले मतान्तरेण

जलेऽविच्छिन्नावयवभेदेन द्विचन्द्रभ्रमो नाम, किन्तु स एवैकश्चले चल उपलभ्यतेऽचले त्वचल इति । "वीचिषु सोऽपि सहस्रनिभ इति चेत्" । एवमेतत्, तासां विच्छेदेनाकलनात् (१) । "अस्तु तर्हि चलाचलयो(२)र्युतसि-

---

स्यात् तदा तदाश्रितस्यापि द्वैतप्रत्ययो भवेत् इति । अविच्छिन्नावयवभेदेनेति । चलाचलावयवभेदेनेत्यपि द्रष्टव्यम् । स एवैक इति । यथा द्वैतप्रत्ययं विना स एवावयवी चलेऽवयवे चल उपलभ्यते अचले त्वचलस्तथा स एवैकश्चन्द्रश्चले चलोऽचले त्ववयवेऽचल उपलभ्यत इति । वीचिषु सोऽपीति(३) । अविच्छिन्नावयवभेदजलाश्रयोऽपि चन्द्रस्तद्वत्तेषु वीचिषु सहस्रायत इत्यर्थः । शङ्कते अस्तु तर्हीति । अयमर्थः— अवयवावयविनोः समवायाभ्युपगमादयुतसिद्धिरिष्टा, युतसिद्ध्यभावश्चायुतसिद्धिः, युतसिद्धिश्च द्वयोरपि सम्बन्धिनोः सम्बन्धिद्वयातिरिक्ताश्रयाश्रयित्वम्, द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वं च, द्विविधयुतसिद्ध्यभावश्चायुतसिद्धिः, (४)एकैकाभावेऽप्ययुतसिद्धिरेवाभावात् । अपृथग्गतिमत्त्वेऽपि त्वगिन्द्रियशरीरयोरयुतसिद्ध्यभावादपृथगाश्रयत्वविगमेन, तथा शरीरपरमाण्वोरपृथगाश्रयाश्रितत्वेऽपि पृथग्गतिमत्त्वेनायुतसिद्ध्यभावात । कथं शरीरपरमाण्वोरपृथगाश्रयाश्रयित्वम् ? श्रूयताम्—शरीरस्य स्वावयवाश्रयस्या-

---

प्रतीतिरूपकल्पनया—चलत्ववयवेति' पाठान्तरम् , तस्य च प्रतीतिरूपविकल्पजालेन कृतमित्यर्थो बोध्यः ।

(१) तथाच वीचीनां भिन्नत्वान्नैकत्रानेकचन्द्रप्रतीतिरूपदोषापत्तिरिति समाधानार्थः ।

(२) अवयवावयविनोरित्यर्थः । युतसिद्ध्युपत्तिप्रकारस्तु तारायां द्रष्टव्यः ।

(३) तथाचैकत्र वीचिषु कथं सहस्रशो चन्द्रप्रतीतिरिति पूर्वपक्षार्थः ।

(४) द्विविधयुतसिद्ध्यभावस्यायुतसिद्धित्वे हेतुं सनिदर्शनमाह एकैकेति ।

ऽद्धिप्रसङ्ग इति चेत्" । न (१)स्वयं प्रतिबन्धासिद्धेः, न च प्रसङ्गे व्याप्तावपि पराभ्युपगमः शरणम्, नचैवं पराभ्युपगमोऽपि ।

"वस्त्रोदकादौ दृश्यते तावदयमिति चेत्" । न, तन्तुवस्त्रादौ विपर्ययस्यापि दर्शनात् । "इदं मिथ्येति चेत्" । तत्कथं सत्यम् । "(२)अबाधादिति चेत्" । (३)इह तर्हि बाधकान्तरं वाच्यम् । "चलाचलत्वमेवेति चेत्" । न,

न्याश्रयत्वेऽपि परमाण्वोर्निराश्रयत्वेनाश्रयान्तराश्रयत्वाभावेनोभयोरन्योन्याश्रयत्वाभावात्पृथग्गतिमत्त्वं तु तयोः प्रसिद्धमेवेति, अतोऽवयवावयविनोः पृथग्गतिमत्त्वेऽयुतसिद्धिप्रसङ्ग इति । स्वयमिति । नहि भवन्मतेऽयुतसिद्धयोरपृथग्गतिमत्त्वम् पृथग्गतिमतोश्च युतसिद्धत्वं सिद्धम्, भवतो बाह्यार्थाभावेन साधर्म्यवैधर्म्यदृष्टान्ताभावेन व्याप्तेर्गृहीतुमशक्यत्वादिति । ननु भवतस्तावत्सिद्धैव व्याप्तिरत आह नचेति । प्रसङ्गसाधनेऽपि हेत्वंश एव पराभ्युपगमः शरणम् न तु व्याप्तावपीति(४) ।

वस्त्रोदकाविति । उदकसिक्ते वस्त्रे उदकस्य पृथग्गतिमत्त्वेन तयोर्युतसिद्धिर्दृश्यत इत्यर्थः । तन्तुवस्त्रेति । तन्तुवस्त्रयोः पृथग्गतिमत्त्वेऽपि युतसिद्धिविपर्ययस्यायुतसिद्धेरपि दर्शनादिति । इदं मिथ्येति । अयुतसिद्धत्वं मिथ्येत्यर्थः । तत्कथमिति । युतसिद्धत्वं कथं सत्यमिति । बाधकान्तरमिति । चलाचलादन्यत् बाधकं वाच्यमिति । नान्यद्बाधकमिति किन्तु तदेव किमिति बाधकं न स्यादिति शङ्कते चलाचलत्वमेवेति । सिद्धान्ती तु चलाचलत्वस्य युतसिद्धा-

( १ ) समाधत्ते स्वयमिति । बाह्यार्थाभावेन व्याप्तिसाधनं न स्यादित्यर्थः । प्रसङ्गे=युतसिद्धिप्रसङ्गसाधने ।

( २ ) शङ्कते अबाधादिति । बाधकाभावाद्युतसिद्धिः सत्येति शङ्कार्थः । ( ३ ) अवयविनि ।

( ४ ) नैयायिकमतेन बौद्धीयप्रसङ्गसाधने हेतुमात्रं गृहीतं स्यान्न तु व्याप्त्यङ्गमुदाहरणमपि बाह्यार्थाभावादिति भावः ।

ुतसिद्धावेव किमिति नेदं बाधकमिति विपर्यय-
यापि वक्तुं शक्यत्वादिति ।

"(१)रक्तारक्तविरोध इति चेत्" । न, भ्रान्तत्वात् ।
"तन्मूलरागिद्रव्यसंयोगासंयोगविरोधोऽस्त्विति चे-
" । न, (२)परमाणुवादिनम्प्रति प्रागेव परिहृतत्वा-
। "(३)इतरम्प्रति का वार्तेति चेत्"। सैव तावत्, तथै-
ाविरोधात्, प्रकारभेदेनापि(४) विरोधाभ्युपगमे व्याप्ते-

ुतासिद्धौ च समानेऽपि दर्शने अयुतसिद्धिं प्रति बाधकत्वं चेत् ( अ )
सिद्धिं प्रत्यपि स्यादित्याह न (५)युतसिद्धावेवेति ।

भ्रान्तत्वादिति । नावयविनः स्वतो रागोऽस्ति किन्तु रक्त-
ासंयोगेन तदीयो रागोऽवयविनि आरोप्य भ्रान्त्या गृह्यत इति(६) ।
भ्रान्तिमूलरक्तद्रव्यसंयोगासंयोगविरोध एव (७)बाधकोऽस्त्विति
चे तन्मूलेति । परमाणुवादिनमिति । परमाणुसद्भाववादिनं
ान्तिकम्प्रति, एकस्यैव परमाणोरेकदिगवस्थितेन परमाणुना संयोगाऽ-
गश्च प्रकारभेदेन यथा तथाऽवयविन्यपीति विरोधस्य परिहृतत्वा-
। तथैवेति । प्रकारभेदेनैवाविरोधादित्यर्थः । व्याप्तेरसिद्धे-

१ ) एवं चलाचलविरोधस्यावयविबाधकत्वं सरम्भेण निराकृत्य
ास्य रक्तारक्तत्वविरोधस्य तद्बाधकत्वनिराकरणायाक्षिपति रक्तेति।
२ ) अत्र 'परमार्थवादिनं प्रती'ति पाठान्तरम्। बाह्यार्थसद्भाववा-
प्रतीति तदर्थः ।
३ ) शङ्कते इतरमिति । अवयविवादिनं बाह्यार्थासद्भाववादिनं
वा, तन्मते कथमेकत्र संयोगासंयोगौ भवत इति शङ्काशयः ।
४ ) देशभेदेनापि ।
५ ) चलाचलत्वमवयवावयविनोर्युतसिद्धावेव प्रतिबन्धकं कु-
ते सिद्धान्त्याशयः । अत्र 'स्वतः सिद्धावपि' इति पाठान्तरम् ।
६ ) तथाचैकत्रावयविनि रक्तारक्तत्वविरोधो नैव सम्भवति तत्र
रतीतेरारोपितत्वादिति भावः ।
७ ) अवयविनीत्यादिः ।

रसिद्धेः, संयोगतदभावयोरेवासिद्धेः, सिद्धौ वा, प्रकारभेदाविरुद्धस्वाभावसादेश्यापरित्यागात्(१)। (२)न चैवं पदार्थान्तरवैधर्म्येण संयोग एव निराकर्तव्यः, तद्वैधर्म्येण तेषामेव निराकरणप्रसङ्गात्। न चैवमेव न्याय्यम्, नियमवतो हि सत्यवैधर्म्येणेतरन्निराक्रियते

---

रिति। संयोगासंयोगविरोधस्य (३)भेदेन व्याप्तेरसिद्धेरिति। कथमित्याह संयोगेति। अयमर्थः—संयोगतदभावौ प्रमाणसिद्धौ न वा? यदि न सिद्धौ कथं तयोर्भेदेन व्याप्तिः, अथ सिद्धौ तर्हि तद्ग्राहकप्रमाणेनैव तयोः प्रकारभेदेनाविरुद्धं सादेश्य(४)मङ्गीकर्तव्यमिति कथं देशभेदेन व्याप्तिरिति। न च रूपतदभावयोः प्रकारभेदेनापि सादेश्यादर्शनात् तद्वैधर्म्येण संयोग एव निराकर्तव्य इति वक्तव्यमित्याह न चेति। तद्वैधर्म्येणेति। प्रमाणसिद्धाविशेषेऽपि यदेकवैधर्म्येणेतरानिराकरणं विपरीतं किं न स्यादिति। अस्तु तेषामपि निराकरणमिति चेत्तत्राह न चैवमिति। तेषामप्यसत्त्वे तद्वैधर्म्येण संयोगस्यासत्त्वं,(५)तद्वैधर्म्येण सत्त्वस्यैव सिद्धत्वादिति। किञ्च संयोगनिषेधे निषेध्यस्य तस्य क्वचित्प्रमाणप्रतीतिरभ्युपगन्तव्या, अतोऽपि न तस्य सर्वथा निराकरणं युक्त-

---

(१) संयोगतदभावयोः प्रमाणेन सिद्धौ मूलाग्रादिदेशभेदेनाविरुद्धं यत्स्वस्य संयोगस्य तदभावस्य चैकवृक्षवृत्तित्वरूपं समानदेशत्वं तत्परित्यागासम्भवात्कथं प्रकारभेदेन संयोगासंयोगविरोधस्य व्याप्तिसिद्धिरित्यर्थः।

(२) शङ्कते नचैवमिति। सर्वत्र एकस्मिन्पटाद्यवयविनि रूपतदभावयोर्देशभेदेनापि समानदेशत्वाभावात्संयोगतदभावयोस्तु देशभेदेन सादेश्यदर्शनरूपविरुद्धधर्मदर्शनात्संयोग एव नास्तीति शङ्कार्थः। समाधत्ते तद्वैधर्म्येणेति। संयोगततभावयोरुक्तसादेश्यदर्शनविरुद्धधर्मवत्वाद्रूपादय एव न सन्तीति वक्तुं शक्यत इत्युत्तरार्थः।

(३) देशभेदेन। (४) विरोधरहितं समानदेशत्वम्।

(५) न स्यादिति शेषः, कुत इत्यत आह तद्वैधर्म्येणेति। असद्रूपादिवैधर्म्येण संयोगसत्यत्वस्यैव युक्तत्वादिति भावः।

असत्यवैधर्म्येण सत्यत्वस्यैव निर्वाहात्, निषेध्यप्रतीतिनान्तरीयकत्वाच्च निषेधसिद्धेः । "(१)शशविषाणादौ कल्पितेनापि निषेध्येन निषेधासिद्धिरिति चेत्" । न, निराकृतत्वात्, संयोगस्य वाङ्मात्रेण काल्पनिकत्वसिद्धावतिप्रसङ्गाच्च, शशशृङ्गन्यायस्य च योग्यानुपलम्भाभावेनासिद्धेः ।

इत एव बाधकात् तत्सिद्धावितरेतराश्रयत्वम् । "(२)शब्दप्रत्यभिज्ञानवत् संयोगप्रतीतेरन्यथोपपत्तिमा-

---

मित्याह निषेध्येति । निराकृतत्वादिति । प्रथमकल्पे व्यतिरेकभङ्गे निराकृतत्वादिति । किञ्च शशशृङ्गवत्संयोगस्य काल्पनिकत्वमपि निष्प्रमाणकमित्याह संयोगस्येति ।

इत एव बाधकादिति । पदार्थान्तरवैधर्म्यरूपाद्बाधकात्काल्पनिकत्वसिद्धौ इतरेतराश्रयत्वं–बाधकप्रवृत्तौ काल्पनिकत्वसिद्धिस्तत्सिद्धौ च बाधकप्रवृत्तेरिति । अन्यथोपपत्तिमात्रेणेति । न काल्पनिकत्वनिश्चयाधीना बाधकप्रवृत्तिर्येनेतरेतराश्रयता स्यात्, किन्तु संयोगप्रतीतेर्भ्रान्तत्वेनाप्युपपत्तिसम्भवमात्रेण बाधकप्रवृत्तिः ततः काल्पनि-

---

(१) आक्षिपति शशेति ।

(२) यथा न्यायमते शब्दस्यानित्यत्वात्सोऽयं गकार इति प्रत्यभिज्ञाया गत्वादिसामान्यविषयत्वाद्भ्रान्तत्वन्तथा संयोगप्रतीतेरपि भ्रान्तत्वेनैवोपपत्तिसम्भवात् बाधकप्रवृत्तिर्न तु तत्काल्पनिकत्वसिद्ध्येति नान्योन्याश्रयदोष इत्याशयेन शङ्कते शब्देति । तत्रेष्टापत्त्या समाधत्ते नेति । सोऽयं गकार इति व्यक्तिविषयैक्यप्रतीतेर्भ्रान्तत्वे तत्सामान्यैक्यमुपाधिः स्फुरति न तथा संयोगप्रतीतेस्तथात्वे, येन प्रत्यभिज्ञाया अन्यथोपपत्त्या तद्विपरीतशब्दानित्यत्वानुमानप्रवृत्तिवत्संयोगप्रतीतेरपि भ्रान्तत्वेनान्यथोपपत्त्या तद्विपरीतकाल्पनिकत्वानुमानं स्यात्, विनोपाधिं भ्रान्तत्वेनान्यथोपपत्त्या तद्विपरीतानुमानप्रवृत्तौ तु उष्णोऽग्निरिति प्रत्यक्षप्रत्ययस्यापि भ्रमत्वेनोपपत्तिं स्वीकृत्य तद्विपरीतेऽग्नावनुष्णत्वानुमानेऽपि प्रवृत्तिः स्यादिति समाधानाभिप्रायः ।

त्रेण बाधकप्रवृत्तिरिति चेत्" न, (अनुभवस्य) तदनुरूपमुपाधिमुखपिण्डमदत्वा भ्रान्तत्वेनान्यथोपपत्तौ तद्विपरीतानुमानप्रवर्तने अग्नावनुष्णत्वानुमाने प्रवृत्तिप्रसङ्गात्। (१)न च प्रत्यभिज्ञानस्य सामान्यवत् संयोगप्रत्ययस्य तदनुरूपमुपाध्यन्तरमस्ति। (२)एवंभूतमर्यादातिक्रमे तु त्वदभिमतप्रतिबन्धप्रत्ययस्यापि भ्रान्तत्वेनान्यथासिद्धिप्रसङ्गः कथं वार्यः, तदवारणे शिथिलमू-

---

कत्वनिश्चय इत्यन्यतः परिच्छेदाभेतरेतराश्रयतेत्यर्थः। न तदनुरूपमिति। अनुभवानुरूपमुपाधिं मुखपिण्डं मुखे दीयमानं पिण्डं दत्त्वैव हि बाधकप्रवृत्तिः, यथा क्षुधितस्य पततो व्याघ्रादेः, (३)यथा वा शब्दप्रत्यभिज्ञायामेव तत्तद्गौशब्दत्वादिसामान्यरूपमुपाधिमादाय तदेकत्वमात्रेण व्यक्तावपि प्रत्यभिज्ञाया भ्रान्तत्वेनाप्युपपत्तेस्तद्विपरीताऽनित्यत्वानुमानप्रवृत्तिः, इतरथाऽतिप्रसङ्गः(४) स्यादिति। प्रसङ्ग इति। एवं ह्यत्र प्रसङ्गः पराभिमतः—संयोगो यदि परमार्थः स्याद्रूपरसादिवत् स्वाभावसादेश्यं न स्यात्, न च न सादेश्यं अतस्तद्वैधर्म्यान्न परमार्थ इति विपर्यय-

---

(१) नन्वत्रापि कश्चिदुपाधिः संयोगप्रतीतेर्भ्रान्तत्वप्रयोजकः कल्प्यतामत आह नचेति।

(२) उपाधिं विनापि संयोगप्रतीतेर्भ्रान्तत्वाङ्गीकारे तु संयोगस्य काल्पनिकत्वमपि न सिध्येदित्याह सिद्धान्ती एवमिति। उपाधिं विना प्रतीतेर्न भ्रान्तत्वमिति मर्यादात्यागे तु बौद्धाभिमतस्य यो यः स्वाभावसादेश्याभाववान् स स परमार्थ इति व्याप्तिज्ञानस्यापि भ्रान्तत्वेनापरमार्थत्वसिद्धिप्रसङ्गः कथं वारणीयस्तदवारणे च शिथिलमूलतया यदि परमार्थः संयोगः स्यात् रूपादिवत्स्वाभावसदेशो न स्यादिति तर्कस्य कथं प्रवृत्तिरिति भावः।

(३) यथा क्षुधितस्यात एव भूमौ स्वयं पततो व्याघ्रस्य मुखे भोजनपिण्डमदत्वा भक्षकत्वेन न प्रवृत्तिर्न तथेति कथंचिदुदाहरणान्तोऽयं सङ्गमनीयः। (४) अग्नावनुष्णत्वानुमानापत्तिः।

लस्तर्कः कथं प्रवर्तेत । यथालोकं व्यवस्थानञ्चाध्य-
क्षान्तरवत् संयोगस्यापि शब्दपाकजाद्यर्थक्रियास्थिते-
स्तद्ध्यक्षस्यापि प्रामाण्यसिद्धेर्न भ्रान्तत्वशङ्कावका-
श इति ।

"अस्तु तर्हि तद्देशत्वातद्देशत्वरूपो विरोधः" । न,
विरोधलक्षणाभावात्, न हि (१)तद्देशसंसर्गविधौ नि-
यमेन देशान्तरसंसर्गनिषेधः, तद्देशत्वतद्देशत्वयोस्तु
स्यात् तत्संसर्गस्तु केनेष्यते (२) । "अध्यक्षमेवैकसंस-
र्गपरिच्छेदकं तदभावव्यवच्छेदमुखेन(३) तदन्यव्यव-

पर्यवसायीति । (४)यथालोकमिति । यथाऽध्यक्षान्तराणामर्थक्रिया-
स्थितेः प्रामाण्यं लोके व्यवस्थितं तथा संयोगप्रत्यक्षस्यापि भेरीदण्ड-
संयोगजशब्दरूपार्थक्रियास्थितेरग्निसंयोगजपाकजगुणरूपार्थक्रियास्थितेश्च
प्रामाण्यं लोकसिद्धमिति न भ्रान्तत्वशङ्कावकाश इति ।

(५)विरोधान्तरमाशङ्कते अस्तु तर्हीति । एकस्यैवावयविनोऽनेका-
वयवदेशस्य तद्देशत्वातद्देशत्वविरोध इति । तद्देशसम्बन्धविधाविति । यद्विधौ यस्य निषेधस्तयोर्हि विरोध इत्यभिप्रायः । शङ्कते अध्यक्ष-
मेवेति । अयमर्थः-एतत्संसृष्ट एवायमित्येकस्यैकसंसर्गपरिच्छेदकं

(१) अत्र नारायणमतेन "तद्देशसम्बन्धविधौ" इति पाठो द्रष्टव्यः।

(२) समाधत्ते नेति । एकस्यावयविन एकावयवसंसर्गेऽपि अन्या-
वयवसंसर्गं दृश्यत एव एकावयवसंसर्गविधेरपरावयवसंसर्गनिषेध-
नान्तरीयत्वाभावात, तदवयववर्त्तिनोऽवयविनस्तदवयववृत्तित्वाभा-
वस्तु नेष्यते तद्देशविधेस्तद्देशत्वनिषेधनान्तरीयकत्वात् इति समाधा-
नार्थः । स्यादिति । विरोध इति शेषः । तत्संसर्गस्तु—तद्देशत्वातद्देश-
त्वसंसर्गस्तु, केनेष्यते-नैवेष्यते इत्यर्थः ।

(३) एकसंसर्गाभावव्यावृत्तिद्वारा, तदन्यव्यवच्छेदमतद्देशसंसर्ग-
व्यावृत्तिरूपं विरोधमुद्गिरतीत्यर्थः ।

(४) संयोगप्रतीतेर्भ्रान्तत्वाभावे युक्तिमाह यथालोकमित्यादिना ।

(५) अवयविबाधकं पञ्चमं तद्देशत्वातद्देशत्वविरोधमित्यर्थः ।

च्छेदमिमं विरोधमुद्गिरतीति चेत्"। स्यादप्येवं यदि नियमेनैकसंसृष्टस्यान्यसंसर्गं प्रतिक्षिपदध्यक्षमुदियात्, न त्वेतदस्ति। (१)युगपदेकस्यानेकसंसर्गप्रवृत्तमध्यक्षमविशेषात् सर्वसंसर्गं वा प्रतिक्षिपेत्, न वा कमपि, स्वात्मानमेव वा, सर्वथा न विरोधं दीपयेत्। अन्ततः परमाणोरप्येकस्यानेकैः परमाणुभिः संसर्गस्वीकाराच्चेति।

---

प्रत्यक्षं मुखतस्तदभावं व्यवच्छिन्दन्नपि तद्वत्तदन्यव्यवच्छेदमपि कलयति एकस्यैकसंसर्गेणैव नियमावगमात्, अतः प्रत्यक्षमेव तद्देशत्वातद्देशत्वयोः परस्परविधिनिषेधनान्तरीयकनिषेधविधिलक्षणं विरोधं साधयतीति। शङ्कामुद्धरति स्यादप्येवमिति। अयमर्थः–क्वचिदेव संसृष्टस्यान्यसंसर्गं प्रतिक्षिपति प्रत्यक्षम्, यत्र तत्संसर्गाभावस्येतरसंसर्गेणाविनाभावः, यथा धवलिमसंसर्गाविनाभूतापीतिमसंसर्गं धवलिमसंसर्गविषयं प्रत्यक्षं शङ्खे प्रतिक्षिपति। यत्र तु तत्संसर्गाभावान्यसंसर्गयोरविनाभावो नास्ति न तत्र तदभावव्यवच्छेदमुखेनान्यसंसर्गप्रतिक्षेपसम्भवः, यथाऽवयविन्येव, तत्र हि तदेव प्रत्यक्षं तस्यैव तत्संसर्गमन्यसंसर्गं च युगपत्परिच्छिन्ददुदेति। अतोऽत्र तत्संसर्गाभावेनान्यसंसर्गस्याविनाभावाभावात्तत्संसर्गाभावमात्रस्यैव व्यवच्छेद इति। स्वात्मानमेवेति। प्रतिक्षिपेदित्यनुषङ्गः। सर्वथेति। त्रिष्वपि पक्षेष्वित्यर्थः। एतच्चैवमेव अवयव्यपह्नववादिनापि तथाभ्युपगमादित्याह अन्तत इति। अवयविपरम्परामपह्नुत्य परमाणुपर्यन्तं गत्वापीत्यर्थः। एकस्य परमाणोरनेकपरमाणुसंसर्गस्वीकारेणैव अवयविनो अवयवेषु वृत्तिः कार्त्स्न्येन वा भागशो वेति वृत्तिविकल्पोऽपि

---

(१) तद्देशसंसर्गस्यान्यसंसर्गविरोधाभावे युक्त्यन्तरमाह युगपादिति। अनेकशाखाद्यवयवसम्बद्धवृक्षावयविप्रत्यक्षं सर्वसंसर्गं यदि प्रतिक्षिपेत्तदाऽनेकसंसर्गस्य सर्वसंसर्गाभावेनाविरोधात्, कस्यापि संसर्गस्य प्रतिक्षेपाभावे तु विरोधिनोऽसत्त्वात् सुतराम्, स्वस्वरूपप्रतिक्षेपे चाश्रयासिद्धत्वादेवं त्रिष्वपि पक्षेषु विरोधप्रकाशनमशक्तमित्यर्थः।

एतेन वृत्तिविकल्पो निरस्तः । परमाणुवृत्ताववयविवृत्तेस्तुल्ययोगक्षमत्वात् ।

"अस्तु तर्हि चित्रे नीलानीलविरोधः, नहि तदेकं रूपं चित्रत्वविरोधात्, (१)नानेकं एकावयविसमवायविरोधात्, (२)नचानेकं व्यापकं, तथानुपलम्भविरोधात्, (३)न चाव्यापकं, स्वाभाववैदेश्यजातीयत्वविरोधात्,

---

निरस्त इत्याह एतेनेति । परमाणुर्यथाऽनेकेषु (४)वर्तते तथाऽवयवी अवयवेषु । एतदुक्तं भवति—न कार्त्स्न्येन न भागशः भेदरहितत्वात्, तदुक्तं 'न हि भेदविनिर्मुक्ते कार्त्स्न्यभागविकल्पनमि'ति, किन्तु व्यासज्य वर्तत इति ।

एवन्तावदवयविमात्रविषया विरुद्धधर्माध्यासा(५) निराकृता, इदानीं चित्रावयविविशेषविरुद्धधर्माध्यासमाशङ्कते अस्तु तर्हीति । चित्रे चित्रावयविनीत्यर्थः । विरोधमेव दर्शयति नहीति । चित्रत्वविरोधादिति । चित्रत्वं नाम नानात्वं (६)मन्यते । तथानुपलम्भेति । न हि नीलादयोऽवयविव्यापकतयोपलभ्यन्त इति । स्वाभाववैदेश्येति । विदेश एव वैदेश्यं स्वाभावेन सह विभिन्नो देशो यस्य

---

(१) एकस्मिन्नवयविनि चित्ररूपसमवायाविरोधाच्च चित्ररूपमनेकं न सम्भवतीत्याह नानेकमिति ।

(२) नन्वनेकत्वेऽपि व्यापकत्वादेकावयविसमवायः स्यादत आह न चानेकं व्यापकमिति ।

(३) अव्यापकमप्यनेकं चित्ररूपं न सम्भवतीत्याह न चाव्यापकमिति । व्याप्यवृत्तिजातीयनीलरूपादिवैलक्षण्यप्रसङ्गाच्च नाव्यापकं चित्ररूपमित्यर्थः ।

(४) संयोगेन यथैकः परमाणुः परमाण्वन्तरवृत्तिस्तथाऽवयव्यपि अवयवेषु समवायेनेत्यर्थः ।

(५) ग्रहणाग्रहणरूपोक्तपक्षविरुद्धधर्माध्यासा इत्यर्थः ।

(६) पूर्वपक्षीति शेषः ।

(१)अन्यथा विरोधाविरोधव्यवस्थाविरोधात्, न चारूप एवावयवी, चाक्षुषत्वविरोधात् इति चेत्"। (२)न, चित्रत्वं हि नानात्वं वा मिथो विरुद्धनानाजातिसमवायं वा अभिप्रेत्यैकत्वाभ्युपगमे विरोध उद्भाव्यते तदैवमेतत्, न तथाऽभ्युपगमः। न खल्वनेकत्वं चित्रत्वम्, शुक्लेष्वप्यनेकेषु चित्रप्रत्ययप्रसङ्गात्। (३)नाप्येकस्मिन् विरुद्धानेकजातिसमवायः, विरोधेनैव निराकृतत्वात्, अपि तु नीलत्वादिवच्चित्रत्वमपि जातिविशेष एव, स चावयववृत्तिविजातीयरूपसमाहाराभिव्यङ्ग्यत्वान्नैकरूपावयवसहितस्यावयविन उपलम्भेऽप्युपलभ्यते, अत

---

तत्स्वाभाववैदेश्यं नीलादि तज्जातीयत्वविरोधादिति। अन्यथेति। स्वाभाववैदेश्यजातीयत्वे सत्यपि स्वाभावसादेश्यं चेच्चित्रगतानां नीलादीनां तर्ह्यनयोर्विरोधोऽनयोरविरोध इत्येवं विरोधाविरोधव्यवस्थानुपपत्तिप्रसङ्गात्, न हि जातिमन्तरेण विरोधाविरोधव्यवस्थापनं (न) सम्भवतीति। अभिप्रेत्येति। अभ्युपगमापेक्षया समानकर्तृकत्वव्यपदेशः। एतदुक्तं भवति—नानात्वं वा विरुद्धनानाजातिसमवायं वा चित्रत्वमभिप्रयन्तो वयमेकत्वमभ्युपगच्छाम इति कृत्वा यदि विरोध उद्भाव्यत इति। (४)अत एवेति। अवयवगतरूपसमाहाराभिव्यङ्ग्यत्वात् त्र्यणुका-

---

(१) व्याप्यवृत्तिजातीयस्य चित्ररूपस्याव्याप्यवृत्तित्वस्वीकारे।

(२) समाधत्ते नेति। तदैवमेतत्—तदोक्तविरोधः सङ्गच्छेतेति भावः। न तथा—नानात्वं मिथोविरुद्धनानाजातियसमवायं वा चित्रत्वं नैवाभ्युपगम्यते किन्त्वेकस्मिन्नवयविन्येकं चित्ररूपमङ्गीक्रियते इति भावः

(३) नापि एकत्रावयविनि विरुद्धानेकनीलत्वादिजातिसमवाय श्चित्रत्वन्तेषां विरोधेनैव निराकृतत्वात्किन्तु नीलत्वादिवच्चित्रत्वमप्यन्या रूपत्वव्याप्या जातिरित्यभिप्रायेणाह सिद्धान्ती नापीति।

(४) तदैवमेतदेवं चित्ररूपावयव्यङ्गीकारे आपत्तिः स्यादिति शेषः

(५) तच्च चित्रमेकरूपावयवानिर्मितेऽवयविनि कुतो नोपलभ्यते।

एव त्र्यणुके चित्रेऽपि चित्रप्रत्ययो न कदापि ।

"तथाप्यचित्रे पार्श्वे चित्रप्रत्ययो माभूत् धवलप्रत्ययस्तु कुत इति चेत्"। (१)अवयवरूपसञ्चारेणावयविनोऽपि तथा प्रत्ययात् । अत एव यत्रावयवरूपं न प्रत्यक्षन्तत्र त्रसरेणावेतदपि नास्ति, दृश्यमेव बाह्यालोकरूपमारोप्य पिञ्जरस्त्रसरेणुरालोक्यते, स्यादेतत्(२) यदि चित्रत्वं नाम जातिविशेषः । "(३)कथन्तर्हि विरुद्धजातीयरूपसामहारमात्रे चित्रत्वप्रत्ययः इति चेत्"। न वै नीलधवलारुणेषु पटेषु क्वचिदपि कार्ये वार्यश्चित्रप्रत्ययः कस्यापि, वैधर्म्यनिमित्तस्तु न वार्यते, चित्रशब्दस्याक्षादिपदवदनेकार्थत्वात् । "नीलपीतादिषु मिथःसंसृष्टेष्वनारब्धद्रव्येष्वपि कर्बुरप्रत्ययो (४)भवतीति चेत्"।

---

वयवद्व्यणुकगतरूपसमाहारस्यातीन्द्रियत्वेनानुपलम्भाच्चेति ।

धवलप्रत्ययस्त्विति । न हि चित्रावयविनि चित्रगुणाक्रान्ते धवलिमाऽस्तीति भावः । कथन्तर्हि तत्र पिञ्जरत्वोपलब्धिस्तत्राह दृश्यमेवेति । कर्बुरार्थ इति । विजातीयैः कारणैर्मिलितैरेकमारब्धं, कर्बु-

---

इत्यत्र नियामकग्रन्थावतरणिकामुखेन निदर्शने नियामकं प्रदर्शयति अत एवेति ।

( १ ) त्रसरेणौ चित्रप्रतीत्यभावेऽपि अचित्रावयवैकदेशवति चित्रावयवे धवलप्रत्ययः कथं स्यादित्याशंक्यावयवैकदेशरूपारोपेण तथा प्रतीतिर्न वास्तवीत्यभिप्रायेणोत्तरमाहावयवरूपेति । अत एव–अवास्तविकत्वादेव । एतदपि—रूपप्रत्यक्षमपि ।

( २ ) योग्येऽवयविनि चित्रस्य योग्यताऽयोग्येऽयोग्यत्वमित्येतत् ।

( ३ ) शङ्कते कथमिति । समाधत्ते नेति । नीलाद्यवयवविशिष्टे एव चित्रव्यवहारः सर्वेषामिति भावः । तर्हि अचित्रेऽपि पटादौ वैलक्षण्यनिमित्तको चित्रव्यवहारः कथमत आह वैधर्म्येति । विचित्रावयववतीव विधर्मण्यपि चित्रप्रत्यय इष्ट एवाक्षादिशब्दवच्चित्रशब्दस्यापि नानार्थत्वादिति भावः। (४)अत्र नारायणमतेन 'कर्बुरार्थ' इति पाठो द्रष्टव्यः।

द्रव्यान्तरोत्पादाभिमानात् स्थौल्यातिशयप्रत्ययवदुपपत्तेरिति ।

"अस्तु तर्हि परमाणुनिवृत्तेः सर्वविलोपः, (१)तथाहि बहुभिः परमाणुभिः संसृज्यमानः परमाणुः प्रत्येकं किमेकदेशेन संयुज्यते कात्स्न्येन वा ? प्रकारान्तराभावात् । न प्रथमः, तस्यैकदेशाभावात्, भावे वा परमाणुत्वव्याघातात् । न द्वितीयः, परमाण्वन्तरेणासंसर्गप्रसङ्गात्, न ह्यस्ति सम्भवः एकत्रैव परिसमाप्तवृत्तिरन्यत्रापि वर्तत इति" । न, बुद्ध्या समानयोगक्षेमत्वात्(२) । तथाहि बुद्धिरपि सन्तमसन्तं वा अनेकं

रशब्देनोच्यत(३) इति । स्थौल्यातिशयप्रत्ययवदिति । यथाऽनारब्धद्रव्येष्ववयवेषु बहुषु संहतेषु स्थौल्यातिशयप्रत्ययो द्रव्यान्तरारम्भभ्रान्त्या भवति, इतरथा तस्यैकस्य परिमाणस्यानेकावयवाश्रयत्वानुपपत्तेस्तथा कर्बुरप्रत्ययोऽपीति ।

एवन्तावदाहत्या(४)वयव्यपलापो निराकृतः, इदानीं परमाण्वपलापद्वारेणावयव्यपलापमाशङ्कते अस्तु तर्हीति । बुद्धिरपीति । अय-

(१) परमाण्वपलापमेव व्युत्पादयति तथाहीति । त्रसरेणूत्पादकः परमाणुरनेकैः परमाणुभिः संयुज्य द्व्यणुकावयविद्वारा त्रसरेणुमुत्पादयति, स चैकदेशेन संयुज्यते कात्स्न्येन वा, निरवयत्वादेकदेशेन संयोगासम्भवः, परमाण्वन्तरसंसर्गाभावप्रसङ्गाच्च न कात्स्न्येनापि, तथाच परमाणोरसम्भवात्कथं द्व्यणुकाद्यवयविसिद्धिरिति सर्वविलोप एवेति पूर्वपक्षार्थः ।

(२) 'त्वात्—नह्यस्तिसम्भव' इत्यादिको मुद्रितादर्शपुस्तक पाठस्तु बुद्धिसमानयोगक्षेमत्वेऽपरिपूर्णत्वादस्पष्टत्वाच्चायुक्त इति प्रतिभाति ।

(३) अयं दृष्टान्तः, यथा विलक्षणैरवयवैरारब्धं द्रव्यं चित्रमित्युच्यते तथा तादृशैर्मिथः संयुक्तैरनारब्धमपि संयुक्तद्रव्यसमूहमात्रं चित्रशब्देनाभिधीयत इति कथं स्यादित्याक्षेप्तुराशयः। (४) साक्षात्

विषयमालम्बमाना आकाङ्क्षां बिभर्ति कात्स्न्र्येन वा एकदेशेन वा ? न प्रथमः, पीतादिविषयाकारविलोपप्रसङ्गात्, न ह्यस्ति संभवो नील एव विषये आकारे वा परिसमाप्ता(१) पीतादिसम्पृक्ता चेति । (२)न द्वितीयः, तदभावात् । "(३)एवमनाकारत्वमविषयत्वं च बुद्धेरिष्यत एवेति चेत्" । (४)तत्किं यत्प्रतिभासते तदसत्, आहो न प्रतिभासत एव किञ्चित् । नाद्यः, असत्यपि नीलपीतादौ ज्ञानवृत्तिविकल्पस्य तदवस्थत्वात्, नहि कृत्स्नमेव विज्ञानं नीलोल्लेखि पीताद्यनुल्लेखित्वप्रसङ्गात्, नापि तदेकदेशः, तदभावादित्युक्तत्वात् । न द्वितीयः बाह्येऽपि वृत्तिविकल्पस्यानुपपत्तेरिति ।

"(५)स्यादेतत् निःशेषसमुदायी कृत्स्नशब्दस्यार्थः,

---

मर्थः—बाह्यार्थापलापवादिनो द्वेधा दर्शनम्—अलीकं भासते इत्येकम्, ज्ञानाकारो भासते इत्यपरम् । तत्रालीकपक्षनिर्देशः असन्तमिति, निर्देशनार्थम् । सन्तमिति ( आकारमिति ) ज्ञानाकारपक्षनिर्देशः । विषयाकारेति द्वन्द्वसमासः । ततश्चायमर्थः–पीतादिविषयविलोपप्रसङ्गात् , पीताकारविलोपप्रसङ्गाच्चेति ।

बाह्येपीति । नहि कस्मिंश्चिदप्यप्रतिभासमाने कथं वर्तत इति वृत्तिविकल्पः कर्तुं शक्यत इति ।

---

( १ ) बुद्धिरिति शेषः ।

( २ ) सन्तमसन्तं वा विषयमालम्बमाना बुद्धिरेकदेशेनाकांक्षावतीति पक्षस्त्वेकदेशाभावादेव न सम्भवतीत्यर्थः । (३)शङ्कते एवमिति ।

( ४ ) विकल्पपूर्वकं समाधत्ते तत्किमिति । असत्यपीति । प्रतिभासविषयासन्नीलाद्यालम्बमाना बुद्धिः कात्स्न्र्येनैकदेशेन वाऽऽकांक्षां बिभर्ति इत्यादि वृत्तिविकल्पदोषस्य तदवस्थत्वादिति समाधानार्थः । विकल्पानुपपत्तिमेव व्युत्पादयन्नाह नहीति ।

( ५ ) आक्षिपति स्यादेतदिति । कश्चिदेव-पदार्थावयवः ।

समुदाये कश्चिदेव समुदाय्येकदेशपदार्थः, न च बुद्धिः समुदायस्वभावा, तस्या एकरूपत्वात्, तत्कुतः कृत्स्नैकदेशविकल्पोत्थानम्। (१)कथन्तर्हि तद्विषयिणी तदाकारवती वा प्रकारान्तराभावादिति यदि, तदा स्वरूपेणेति ब्रूमः इति चेत्"। (२)स्फुटान्निरटाङ्कि तार्किकवेदिकाविटङ्केन केवलमस्मभ्यमभ्यसूयता दूरङ्गत्वेति।

एतेन तदतद्देशत्वं निरस्तम्। तथाहि बुद्धेर्नीलाद्याकारतां परिच्छिन्दद्ध्यक्षं तदभावव्यवच्छेदमुखेन तदविनाभूतां पीताद्याकारतामपि व्यवच्छिन्द्यात्, तथा च कथमेका बुद्धिर्नीलपीताद्याकारा स्यादिति तुल्योऽनुयोगः(३)

---

प्रकारान्तराभावादिति । तृतीयप्रकाराभावादित्यर्थः। अस्त्येव तृतीयः प्रकार इति शङ्कते स्वरूपेणेति। स्वरूपेण वर्तते इत्यर्थः। निरटङ्कीति। निरणायीत्यर्थः। केवलमिति। अयमेवाऽस्माकमपि अवयविनः परमाणोर्वा वृत्तिप्रकारः केवलमस्मभ्यमभ्यसूयता त्वया प्रथमत एवैनं वृत्तिप्रकारमपरिभाव्यं बुद्धौ वृत्तिप्रकारं पृष्टेन तत्तदु-

---

( १ ) मध्ये सिद्धान्ती पृच्छति कथमिति। कात्स्न्र्येनैकदेशेन वा वृत्तित्वानङ्गीकारे नीलादिविषयिणी तदाकारा वा बुद्धिः कथं स्यात्प्रकारान्तरासम्भवादिति प्रश्नहार्दम्। प्रश्नस्योत्तरमाहाक्षेप्ता तदेति। बुद्धेः स्वरूपतो वृत्तित्वासम्भवान्नीलादिविषयत्वन्तदाकारत्वं वा सम्भवत्येवेत्याक्षेप्तुराशयः।

( २ ) समाधत्ते स्फुटमिति। स्फुटान्निति पाठान्तरम्। तार्किकवेदिकाविटङ्केन=नैयायिकोत्तराङ्कपाल्याश्रयणेन। पाठान्तरपक्षे अन्ततो गत्वा नैयायिकस्फुरितमेव भवतापि निर्णीतमुत्तरमिति केवलमभ्यसूयामात्रमाविष्कृतमित्यर्थो बोध्यः। तार्किकवेदिका-तार्किकस्यागमस्थाने विटङ्का धूर्तः, दूरं गत्वा अस्मदीयसमाधानावसरे इति मिश्राः।

( ३ ) एवञ्च यथा बौद्धेन 'अध्यक्षमेवैकसंसर्गपरिच्छेदकमि'त्यादिग्रन्थे पूर्वमवयविनि तद्देशत्वातद्देशत्वाविरोधो बाधकतयोपन्यस्तस्तथा बुद्धावपि प्रतिबन्दिसम्भवाद्बुद्धौ यदि भवतैवं विरोधो नाङ्गीक्रियते तदाऽस्माभिरप्यवयविनि नाङ्गीक्रियते इति समानयोगक्षेमत्वामिति भावः।

"(१)भवेदेवं यदि नीलाद्याकारतायाः पीताद्याकारा-भावाविनाभावः स्यात्, स एव तु कुतः ? नील-पीताद्याकाराया बुद्धेरैकात्म्येनैव निश्चयात्, प्रत्याकार-नियतत्वे चित्रविप्रतिपत्तेरिति चेत्"। (२)तदेतत्तुल्यं परमाण्ववयव्यादिषु, नहि तत्राप्यनेकपरमाणुसंसृष्टस्य परमाणोरनेकावयवसंसृष्टस्यावयविनो वा ऐकात्म्ये नानु-भूयेते, तथात्वे वा एकसंसर्गप्रतिपत्तिः कदाचिन्न स्या-दिति तुल्यैवानुगतिः। वाचि वैचित्र्यन्तु कोपयुज्यत

---

त्तराभासवचनेन दूरङ्गत्वा गत्यन्तराभावादयमेव (३)वृत्तिप्रकारो निरटङ्कीत्यर्थः

तद्देशत्वातद्देशत्वविरोधः प्रागेव (४)परिहृतो विरोधलक्षणाभावात्, बुद्धितुल्ययोगक्षेमत्वादपि निरस्त इत्याह एतेनेति । प्रत्याकारं बुद्धिभेद इति चेत्तत्राह प्रत्याकारमिति । संसर्गिभेदेप्यैकात्म्यानुभवस्याभावे दोषमाह तथात्वे वेति । प्रतिपत्तिश्च(५) दृश्यत एवेति भावः । एतच्च चित्रप्रत्ययानुपपत्तेरिति परोक्तानिष्टप्रसङ्गस्थाने तत्राप्य-निष्टप्रसङ्गादिति वेदितव्यमिति(६) । वैचित्र्यमिति । नीलपीताद्या-

---

(१) शङ्कते भवेदिति । स एव—नीलाद्याकारबुद्धेः पीताद्याकारा-भावाविनाभाव एव, अविनाभावाभावे हेतुमाह नीलेति । एकात्म्येनैव-विज्ञानैकस्वरूपत्वेन । चित्रविप्रतिपत्तेः—चित्रप्रत्ययानुपपत्तेः, अयमेव पाठोऽत्र नारायणस्याभिमत इति प्रतिभाति एतच्चेत्याद्यग्रिमग्रन्थानुरोधात्।

(२) समाधत्ते तदेतदिति । ऐकात्म्ये=परमाण्ववयव्येकरूपते । एकसंसर्गप्रतिपत्तिः=एकस्मिन्ननेकसम्बन्धज्ञानम्, अत एवाऽत्र 'एक-स्यानेकसंसर्गप्रतिपत्तिरि'ति पाठान्तरम् ।

(३) कात्स्न्यैकदेशवृत्तित्वासम्भवप्रकारः ।

(४) अस्तु तर्हि तद्देशत्वातद्देशत्वरूपो विरोध इत्यादिग्रन्थेनेत्यर्थः।

(६) एकस्यानेकसंसर्गज्ञानं च ।

(५) अयं च 'बुद्धे रैकात्म्याभावे चित्रप्रत्ययानुपपत्तिवदत्रापि परमाणोरवयवस्य वैकात्म्याभावेऽपि एकसंसर्गप्रतिपत्त्यभावरूपानिष्टप्र-सङ्गो बोध्य इति तुल्यैवानु गतिरित्यस्यार्थो द्रष्टव्यः ।

इति(१)। **संयोगव्यवस्थापनेनैव षट्केण युगपद्योगा दिग्देशभेदाच्छायानावृतिभ्यामित्यादयो(२) निरस्ताः परमाणुसिद्ध्यसिद्धिभ्यामेव मूर्तत्वादयो(३) नि वकाशिताः, (४)आकाशव्यतिभेदादयस्तु सम्भावित**

कारायाः बुद्धेरिति, त्रिचप्रत्ययानुपपत्तेरिति च वाचि वैचित्र्यं क्व वोपयुज्य इति। **संयोगव्यवस्थापनेनेति**। एकस्य निरवयवस्यापि प्रकार दमाश्रित्य संयोगतदभावयोर्व्यवस्थितिरित्येवं संयोगव्यवस्थापनेन,

**षट्केन युगपद्योगात्परमाणोः षडंशता।**

प्रागुदीच्यादिदिग्देशभेदात्परमाणोः सांशता, छायातपाभ्याम सांशतेत्यादयो निरस्ताः, प्रकारभेदेनैव सर्वेषामुपपत्तेरिति।

**परमाणुसिद्ध्यसिद्धिभ्यामिति**। सावयवः परमाणुः मू त्वात्, क्रियावत्त्वात्, अविभुद्रव्यत्वात्, स्पर्शवत्त्वादित्यादयः, परमा सिद्धौ कालात्ययापदेशः, असिद्धावाश्रयासिद्धिरित्येवं परमाणुसिद्ध्यसिद्धि भ्यामेव निरवकाशिताः। परमाणुसिद्धौ धर्मिग्राहकप्रमाणेनैव निरंश साधितम्, सांशत्वे ततोऽपि न्यूनपरिमाणत्वादंशस्य तस्य परमाणुत्वाय

---

(१) बुद्धेरेकरूपत्वाङ्गीकारे नीलाद्यकारायाः बुद्धेरित्यादिवैचित्र्य स्य क्वोपयोग इति भावः।

(२) इत्यादयः परमाणूनां सांशत्वापादका दोषा इत्यर्थः।

(३) परमाणौ सावयवत्वसाधका मूर्तत्वादित्यादयो नाराय प्रदर्शिता हेतवः परमाणुसिद्ध्यसिद्धिभ्यां निरवकाशा इति भावः।

(४) ननु अन्तर्बहिश्चाकाशसमावेशात्परमाणुर्न निरवयवः सम्भ वति, आकाशव्यतिभेदाभावे तु आकाशस्यासर्वगतत्वं स्यात्तथ कथं निरवयवपरमाणुसिद्धिरत आहाकाशेति। सम्भाविता एवे निरवयवस्यापि परमाणोर्देशभेदमाश्रित्य पूर्वोक्तरीत्या संयोगतदभा व्यवस्थापनेनाकाशसंयोगादयः सम्भवन्त्येवेति भावः। अथवा 'अ बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभाव' इति गौतमी सूत्रानुसारेणाकार्येऽवयवासम्भवान्निरवयव एव परमाणुस्सम्भवती मतविशेषमाश्रित्य 'आकाशव्यतिभेदादयस्त्वसम्भाविता एवे'ति पा ऽत्र मूले ग्राह्यः।

एव । सर्वत्र च हेतुदशायां प्रतिज्ञापदयोर्व्याघातः, कालात्ययापदेशश्च । प्रसङ्गदशायामाश्रयासिद्धिर्व्याप्त्यसिद्धिः दृष्टान्तासिद्धिः, अनवस्थालक्षणविपरीततर्कस्य तदुपष्टम्भकतया त्रुटेरनकत्वप्रसङ्गस्य(१) च विद्यमानत्वात् । न च प्रलयः परमाणोः, असत्त्वसाधकस्य प्रमाणस्याभावात् । सावयवत्वापादकानाञ्च हेतूनामनवस्थोत्थापकत्वात्(२) । तदन्य एवायं परमाणू रक्तबीजो यस्य

गादिति भावः(३) । हेतुदशायामिति । स्वतन्त्रसाधनत्वदशायाम्, सावयवः परमाणुरिति प्रतिज्ञापदयोर्व्याघातः, परमाणुपदेन निरवयवस्यैवोक्तेः, परमाणुग्राहिप्रमाणेन बाधितविषयाश्च हेतवः । यदि परमाणुः स्यात् सावयवः स्यादिति प्रसङ्गसाधनदशायां प्रसङ्गसाधनत्वे आश्रयासिद्धिः हेतूनां, परमाणोः स्वमतासिद्धेः । सावयवस्य कस्यचिद्दृष्टान्तस्यासिद्धेर्व्याप्त्यसिद्धिश्च । अनवस्थालक्षणप्रतिकूलतर्कस्य विद्यमानत्वाच्च व्याप्त्यसिद्धिः । अस्त्वनवस्था नेयं प्रतिकूलेति चेत्तत्राह तदुपष्टम्भकयेति । अवयवानन्त्याभ्युपगमे सर्वस्यापरिमेयत्वं प्रसज्येतेत्यर्थः(४) चानवस्थाप्रतिकूलतर्कस्योपष्टम्भकतयाऽपरिमेयत्वप्रसङ्गस्य विद्यमानत्वादिति । किञ्च परमाणुनिवृत्तेः सर्वविलोपो वक्तुमुपक्रान्तः, न चैवं परमाणुनिवृत्तिः सिध्यतीत्याह न चेति । तदन्य एवाय-

---

(१) तदुपष्टम्भकतया—अनवस्थारूपप्रतिकूलतर्कोपोद्बलकतया, परमाणोरनन्तावयवत्वप्रसङ्गस्य च विद्यमानत्वाद्व्याप्त्यसिद्धिरित्यर्थः ।

(२) मूर्तत्वात्परमाण्ववयवोऽपि सावयवः इत्येवंरीत्या सावयवत्वापादकहेतूनामनवस्थाप्रसञ्जकत्वादित्यर्थः ।

(३) परमाणोः सांशत्वे मेरुसर्षपयोस्साम्यप्रसङ्गरूपानवस्था स्यादिति भाव इति भावः ।

(४) अत्र 'एवं चे'ति पाठो युक्तः प्रतिभाति । परमाण्ववयवधाराणामनन्ततया सर्षपमेर्वादिसाम्यप्रसक्त्याऽपरिमेयप्रसङ्गस्य विद्यमानत्वान्नेयमनवस्थाऽनुकूलेति भावः ।

भेदाद्युक्तिचामुण्डोदरमपि मंक्त्वा निष्पततीति ।

न च कल्पिताश्रयाः कल्पितप्रतिबन्धाश्च प्रसङ्गा भविष्यन्तीति युक्तम् । इच्छाकल्पितेन व्यवहारेण सर्वविधिनिषेधव्यवहारविलोपप्रसङ्गात् । लोकव्यवस्थापेक्षणे तु तद्विरोधेनोत्तरस्य निषेधकस्यात्मलाभाभावादित्यसकृदावेदितत्वात । (१)अन्यथा सर्वमेतद्बुद्धावपि समानम् । सा पि हि षट्केण युगपद्योगादिभिः साव-

मिति । ततः=तस्मादित्यर्थः । अयञ्च ग्रन्थार्थः—रक्तबीजो नाम कश्चिदसुरश्चामुण्डोदरं प्रविष्टस्तत्रैव जीर्ण इत्येवं कथासु प्रसिद्धिः, परमाणुबीजस्तु रक्तबीजोऽयमन्य एव स्वाभावसाधकयुक्तिचामुण्डोदरमपि भित्वा निष्पततीति ।

ननु प्रसङ्गहेतोः पारमार्थिकाश्रयव्याप्तेरभावेऽपि(२) काल्पनिकाश्रयव्याप्तिसिद्धिमात्रेणैव प्रवृत्तिरस्त्विति चेत्तत्राह नचेति । व्यवहारेण=अनुमानव्यवहारेणेत्यर्थः । "काल्पनिकत्वेऽपि न स्वेच्छया व्यवहारः किन्तु लोकव्यवस्थामपेक्ष्य व्यवहारप्रवृत्तिरिति(३) चेत्" तत्राह लोकेति । लोकव्यवस्थापेक्षणे तु लोकसिद्धनिषेध्याधीनप्रवृत्तेस्तदुत्तरस्य निषेधकस्य तद्विरोधेनैवात्मलाभासम्भवा(४)दित्यसकृदुक्तत्वादिति यदि लोकविरुद्धोऽपि बाह्यस्य परमाण्वादेरपह्नवः क्रियेत तर्हि बुद्धावप्येतत्सर्वं समानमित्याहान्यथेति ।

अस्मिन्नवसरे अन्यस्तु माध्यमिकश्चक्षुषी निमील्य निर्दयीभवितु

(१) लोकव्यवहारविरुद्धापलापाङ्गीकारे ।

(२) अत्र परमार्थिकाश्रयव्याप्त्योरभावेऽपीति पाठस्समीचीन अग्रेऽपि काल्पनिकयोराश्रयव्याप्त्योः सिद्धिमात्रेणेति कर्मधारयपूर्वद्वन्द्वसमासाश्रयणेनैवार्थः कार्यः, प्रतिबन्धाश्चेति मूलस्थचकारस्वा स्यात् ।

(३) तथाच न लौकिकसकलविधिनिषेधव्यवहारविलोपप्रस इत्यर्थः । (४) प्रतियोगिज्ञानाधीनाभावज्ञानासम्भवादित्यर्थः ।

यथा प्रसज्येत । "तस्यासिद्धा(१) इति चेत्" । न, अनुमानसिद्धत्वात् । तथाहि बुद्धिः षट्कयोगिनी मूर्तिमती च सत्त्वात् व्यवहर्तव्यत्वाद्वा आरोप्यवदिति(२) शक्यते । "(३)विपर्ययस्य धर्मिग्राहकमानसाधितत्वाद्नवकाशमिदमिति चेत्" । एवमन्यत्रापि प्रतिसन्दधीथा इत्येषा दिक् ।

अन्यस्तु चक्षुषी निमील्य निर्दयीभवितुमिच्छन्नाह— "अस्तु तर्हि बुद्धेरपि विलोप इति" । अत्र तु किं वक्तव्यम् यत्र हेत्वादिव्यवहारोऽपि नास्ति । "(४)अस्तु परं सांवृत इति चेत्" । भवेदेवं यदि संवृतिरपि परमार्थसती स्यात्, (५)अन्यथा तु न यथा वास्तवस्तथा सां·

मिच्छन्निव बालबुद्धिस्वीकारेऽप्येतद्दोषभयान्निर्भयीभावाय बुद्धेरप्यस्तु विलोप इत्याह अन्य इति । हेत्वादिव्यवहारोऽपीति । बुद्धेरसिद्धौ तदधीनस्य हेत्वादिव्यवहारस्याप्यसिद्धौ कथं सर्वविलोपसिद्धिरिति भावः । यदि संवृतिरपीति । न च संवृतिः परमार्थसती, तस्या

(१) निरवयवत्वबाधकाः षट्केण युगपद्योगादयः।

(२) निरवयवत्वेन निषेध्यपरमाण्वादिवत् । शक्यते, अनुमानं कर्तुमिति शेषः ।

(३) बुद्ध्यन्तरेण बुद्धिवेदनमसम्भवीति धर्मकीर्तिप्रज्ञाकरगुप्तादिभिर्बौद्धैः प्रमाणवार्तिकादिषु व्यवस्थापितत्वान्निरवयवत्वेनैव बुद्धिर्धर्मिग्राहकप्रमाणसिद्धेति कथं सावयवत्वसाधकोक्तानुमानावकाश इति शङ्कते विपर्ययस्येति । विपर्ययस्य=निरवयवत्वस्य । समाधत्ते एवमिति । परमाणुसावयवत्वसाधकानुमानेष्वेषैव रीतिरुत्तरार्थं मयाप्यनुसरणीयेति भावः ।

(४) शङ्कते अस्त्विति । अस्तीति भिन्नक्रमतोऽत्र पाठो द्रष्टव्यः । सांवृतः=काल्पनिको मायिको वा ।

(५) संवृतेरवास्तवत्वे, प्रमाणस्यायथार्थत्वात्सांवृतोऽपि हेत्वादिव्यवहारो न स्यादित्यर्थः ।

वृत्तोऽपि । "संवृतिरपि संवृतिमत्यसतीति चेत्" । (१)अस्या अप्यसत्त्वे न किञ्चिदधिकमुक्तम् । परसंवृतेस्तु परमाणुसत्त्वस्वीकारे सैव बुद्धिरपरिहेयेति सती च बाधकवती च ।

"संवृतिः(२) सतीति चेत्" । सत्येव यदि सत्कथं बाधकम् । (३)तथा चेत्, कथन्तदालीढस्य सत्त्वमिति । "(४)दृश्यत तावदेवमिति चेत्" । सत्त्वैकार्थसमवायिनो बाधकत्वमेव तर्हि हेयम् । "(५)बाधकैकार्थसमवायिनः सत्त्वमेव किं न हीयत इति चेत्" । न, बाधकस्यापि त्यागप्रसङ्गात् । "(६)उभयमप्यवर्जनीयमेव तर्हि" एव-

एव(७)बुद्धित्वात् । तस्या अपि=द्वितीयस्या अपि संवृतेरित्यर्थः । परसंवृतेरिति । द्वितीयसंवृतेरित्यर्थः । बाधकवतीति चेति । बुद्धौ चावयव्यादिवद्बाधकं पूर्वमुक्तमेवेति ।

तदालीढस्य=बाधकालीढस्य । बाधकस्यापि बुद्ध्यधीनत्वे

---

( १ ) अत्र नारायणमतेन 'तस्या' इति पाठो बोध्यः ।

( २ ) संभूतिरिति पाठान्तरम् । ( ३ ) बाधकं चेत् ।

( ४ ) शङ्कते दृश्यत इति । बाधकस्यापि व्यावहारिकसत्त्वं दृश्यत इत्यर्थः, नेदं रजतमिति बुद्धौ तथा दर्शनात् । समाधत्ते सत्त्वेति । सद्बुद्धिसमवायिनो बाधकत्वं न स्यादिति समाधानार्थः ।

( ५ ) प्रतिबन्द्या आक्षिपति बाधकैकेति । बाधकबुद्ध्यधीनस्य स- त्त्वं कुतो नेत्याक्षेपार्थः । समाधत्ते नेति । बाधकमपि भवता बुद्ध्यधी- नमेव वक्तव्यम्, तथाच बाधकस्याप्यसत्त्वमेवापद्येतेति समाधाना- भिप्रायः ।

( ६ ) शङ्कते उभयमपीति । सत्त्वबाधकत्वोभयमपीत्यर्थः । समा- धत्ते एवमिति । एकस्यां बुद्धौ बाध्यबाधकविरुद्धधर्मद्वयसमावेशो ना- ङ्गीकर्तुं शक्य इत्यर्थः । कुत इत्यत आह नहीति । तथाभूतयोः=विरुद्ध- योः । ननु मयैकत्रोभयमपि स्वीक्रियते इत्यत आह नचेति । विचारा- वसरे सर्वानुभवसिद्धमेव वक्तव्यमित्याशयः ।

( ७ ) अत्र 'अपीति' पाठो युक्तः ।

मेतत्, मिथोविरोधस्तु हेयः, नहि विरुद्धयोरेकार्थसमवायः तथाभूतयोर्वा विरोधः शक्य उपपादयितुमृते स्वसमयात्, न च विचारावसरे स्वसमयावतार इति, यथा यथा च बुद्धिनिवारणाय यत्नस्तथा तथोज्ज्वलः प्रकाशः, (१)तन्निवारणमपि बोद्धव्यमेवेति, तदेतदायातं प्रदीपान्तरेण प्रदीपं निर्वाप्य तिमिरापादनमिति।

एतेन हेतुफलभावानुपपत्तेः सर्वविलोप इति निरस्तम्। तन्निराकरणप्रयासस्य साकल्यवैकल्याभ्यां(२) तन्निराकरणानुपपत्तेः सत्कार्यदूषणस्येष्टत्वादसत्कार्यदू-

---

तदभाव एवेत्याह प्रसङ्गादिति। मिथोविरोधस्त्विवाति। बाध्यबाधकभाव इत्यर्थः। किञ्च बुद्धिनिराकरणमशक्यं चेत्याह यथायथा चेति। उज्ज्वलः प्रकाशः=उज्ज्वला बुद्धिरित्यर्थः। कथमित्यत आह तन्निवारणमपीति। तदेवं बुद्ध्यन्तरेण बुद्धिनिवारणे प्रवृत्तस्यै(व)तदापन्नमित्याह तदेतदिति।

बुद्धिनिरासानुपपत्तिप्रकारेणैतदपि निरस्तमित्याह एतेनेति। हेतुफलभावानुपपत्तिश्च परोक्ता "नन्वेतत्कारणत्वं यदि स्वभावो भावस्य" त्येवमादिः न्यायकुसुमाञ्जलावुक्ता द्रष्टव्या। तन्निराकरणेति। अयमर्थः-हेतुफलभावनिराकरणप्रयासः सफलो वा स्यात् निष्फलो वा स्यात्, सफलत्वे हेतुफलभावनिराकरणानुपपत्तिः, प्रयासतत्फलयोर्हेतुफलभावस्वीकारात्, निष्फलत्वे सुतरां हेतुफलभावनिरासानुपपत्तिः, प्रयासफलस्य निरासस्याभावस्वीकारादिति। किञ्च हेतुफलभावानुपपत्तेः सत्कार्यवादो वा दूष्यतेऽसत्कार्यवादो वा? न प्रथमः, तद्दूषणस्येष्टत्वा(३)दित्याह सत्कार्येति। नापि द्वितीय इत्याह असदिति।

---

(१) बुद्धिनिराकरणमपि बुद्ध्यैव साधितव्यमिति कथं तन्निरास इति भावः। (२) सफलत्वनिष्फलत्वाभ्याम्।

(३) सत्कार्यवादस्य नैयायिकैरनङ्गीकारात् इत्यर्थः।

पक्षस्य च प्रत्यक्षबाधितत्वात्(१), तत्प्रतिपादनस्यासत एवोत्पत्तावनैकान्तिकत्वात् सत्त्वे वा प्रयासवैफल्यादिति

(२)"स्यादेतत्, मा भूवन्नेतानि दूषणान्यवयविनि, अनुपलम्भस्तु स्यात् नहि परमाणुसञ्चयादन्यत् किञ्चिदुपलभ्यते इति चेत्"। वैलक्ष्यविडम्बिकेयं स्थूलैकानुभवस्य सर्वजनसिद्धत्वात्। "तत्प्रतिपादनस्य विकल्पमात्रं तदिति चेत्"। न, स्पष्टप्रतिभासत्वात्। "(३)औपाधि

किञ्चासत्कार्यदूषणप्रतिपादनमसदेवोत्पद्यते सदेव वा? तत्र प्रथमेऽसत्कार्यदूषकस्य सत्कार्यहेतोः क्रियमाणत्वादेरनैकान्तिकत्वात(४), द्वितीये प्रयासवैयर्थ्याच्चैतदनुपपन्नमित्याह तत्प्रतिपादनस्येति।

अनुपलम्भस्त्विति। बाधक इति विपरिणतस्यानुषङ्गः विकल्पमात्रं तदिति। नासावनुभवः किन्तु विकल्पमात्रमिति(५)। स्पष्टेति। अनुभवो हि प्रत्यक्षज्ञानं तन्नियतश्च स्पष्टप्रतिभ

(१) घट उत्पन्नो विनष्टश्चेत्यादिप्रत्यक्षबाधितत्वादसत्कार्यदूषणमनुपपन्नमिति भावः।

(२) अनुपलब्धेरभावसाधकत्वाभिप्रायेणाशङ्कते स्यादेतदित्यादिना। यदि परमाणुसञ्चयाद्भिन्नोऽवयवी स्यादुपलभ्येत नोपलभ्यते नास्तीत्याशयः। अवयव्यभावे एकः स्थूलो घट इति प्रत्ययः कथमाह नहीति। परमाणुसमूह एवोक्तप्रतीतिविषय इति भावः। समाधत्ते वैलक्ष्येति। स्थूलत्वाद्यनुभवस्य परमाणुष्वसम्भवाद्बाह्यार्थवादिनो बौद्धस्य सर्वानुभवापह्नवादित्याशयः।

(३) शङ्कते औपाधिकस्येति। निर्विकल्पकज्ञानाधीनमेव विकल्पकस्य स्पष्टत्वमिति शङ्काशयः। समाधत्ते नेति। समाधानार्थो दीधित्यां स्फुटः।

(४) सत्कार्यसाधक एव क्रियमाणत्वादिर्हेतुर्भवताऽसत्कार्यप्रतिपादनेऽसत्त्वसाधको देयस्स च तत्र सत्त्वरूपसाध्याभावाद्व्यभिचारीत्यर्थः।

(५) सविकल्पकमात्रमित्यर्थः।'कल्पनापोढमभ्रान्तं प्रत्यक्षं' इति वचनात् निर्विकल्पकस्यैव प्रत्यक्षप्रमाणत्वेनाभिमतत्वादिति

कल्प स्पष्टत्वमिति चेत्"। न, तथाभूतानुभवमन्तरेणो-
पाधेरप्यभावात्, अन्यथा नीलादिविकल्पानामपि तथैव
स्पष्टत्वोपपत्तौ सर्वप्रत्यक्षोच्छेदप्रसङ्गात्, (१)(नि)गृहीत-
निश्चित एवार्थे प्रत्यक्षस्यापि प्रामाण्यात्, निश्चयोपप्लवे
तस्याप्युपप्लवात् इति। न च परमाणव एव स्थूलाः, त-
त्त्वव्याघातात्(२)। न च तत्समुदायः, समुदितस्थानस्य
त्वयाऽनभ्युपगमात्, अभ्युपगमे वा अवयविना किम-
पराद्धम्। न च समुदिता एव तथा प्रतिभासितुमर्हन्ति,
तेषां प्रत्येकमस्थूलत्वात्। न च नानादिग्देशव्यापितैव
स्थौल्यम्, परमाणुषु प्रत्येकमसम्भवात्। न च नाना-
र्थैकत्वसमवायिन्येव सा(३) स्थौल्यमिति साम्प्रतम्,
स्थूल एक इति प्रत्ययनियमात्। न च भागेष्वेवारोपि-

---

इत्यभिप्रायः। तथाभूतेति। स्पष्टप्रतिभासानुभवसंसर्गोपाधिर्हि विक-
ल्पस्य स्पष्टप्रतिभासता, ततश्चैकस्थूलविकल्पस्पष्टप्रतिभासोपाधितया एक-
स्थूलानुभवोऽङ्गीकर्तव्य इति। तथैवेति। अनुभवमन्तरेणैव स्थूलवि-
कल्पवदित्यर्थः। किञ्चासत्यप्येकस्मिन्स्थूले विकल्पापरनामधेयस्य निश्च-
यस्य स्वीकारे निश्चयोपप्लवात् निश्चितार्थविषयतया प्रमाणभूतस्य प्रत्य-
क्षस्याप्युपप्लवशङ्कया प्रामाण्यविहतिः स्यादित्याह ज्ञातनिश्चितेति।
समुदितस्थानस्येति। समुदितपरमाण्वाधारस्य तद्व्यतिरिक्तस्याव-
यविस्थानीयस्य त्वयाऽपह्नववादिनाऽनभ्युपगमादिति। नानात्मस्वेव भागे-
(४)ष्वेकत्वमारोप्य एकः स्थूल इति प्रत्यय इति चेत्, तत्राह नचे-

---

(१) अत्र नारायणमतेन 'ज्ञातनिश्चित एवे'ति पाठो द्रष्टव्यः।

(२) धर्मिग्राहकप्रमाणबाधेन परमाणुत्वव्याघातादित्यर्थः।

(३) दिग्देशव्यापिता। प्रत्ययेति। नानार्थैकत्वसमवायिदिग्देश-
व्यापितारूपस्थूलतापक्षे स्थूलो नानेति प्रत्ययः स्यान्नैक इति भावः।

(४) परमाणुषु।

तेन एकत्वेनेदमुपपत्तिमत् , तदसम्भवात् , नहि कर
चरणचिबुकनासिकादिपरमाणूनामैक्यं कश्चित् क्वचि
दारोपयति ।

(१)न च तेषु भेदेन प्रथमानेषु स्थूलप्रत्ययः । न
तत्त्वे स्फुरत्येव तद्विपरीतातत्त्वसमारोपसम्भवः । अ
चैवमेकपरमाण्वात्मना परमाणुकोटिरप्यारोपिता पर
माणुतामात्रतयैव परिस्फुरेत् न स्थूलतया(२) । न च न

ति । तदसम्भवादिति । एकत्वारोपासम्भवादित्यर्थः । कथमस
म्भवस्तत्राह नहीति । अतिस्थूलभेदानामेकत्वारोपोऽसम्भावित इत्य
भिप्रायः(३) । (४)अत्र चावयविमात्रापह्नवेऽप्यवान्तरावयविनोऽप्यभाव
परमाणूनामित्याह ।

न च तेषु भेदेन प्रथमानेष्वेकत्वप्रत्ययो निष्प्रत्यूह एवे
वक्तव्यमित्याह न च तेष्विति । अस्त्येवैकत्वप्रत्ययः, स
भेदेन प्रथमानेषु भागेष्वेवारोपितमेकत्वं गोचरयतीति चेत्तत्राह न
तत्त्व इति । नहि भागानां तत्त्वभूते भेदे परिस्फुरत्येव तद्विपरी
तत्त्वभूतैकत्वसमारोपसम्भव इति । अपि चैकत्वारोपवादिनां स्थूलस्य
यविन एकस्याभावात् परमाणुत्वैकार्थसमवाय्येकत्वारोपो वक्तव्यः, तत
प्रसङ्गः स्यादित्याह अपि चेति । न च एकपरमाण्वात्मनाऽऽरोपिता
मपि नानादिग्देशव्यापितावलेनैव स्थूलताप्रतिभासो भवतीति वक्तव्य

(१) 'तेष्वभेदनं प्रथमानेषु' इति पाठान्तरम् । नानाभूतेषु
माणुषु एकत्वप्रत्ययः स्थूलप्रत्ययः न निष्प्रत्यूह इत्यर्थः ।

(२) नानापरमाणुषु एकपरमाणुगतैकत्वारोप एवावयविन
ङ्गीकुर्वता बौद्धेन वक्तव्यस्तथाच परमाणुरूपतयैव घटादीनां परि
त्याँपत्त्या स्थूलत्वाभावात्कथं तेषां ग्रहणं स्यादिति भावः ।

(३) अतिस्थूलकरचरणादिभागभेदानामेकत्वे कराद्याकारा
णामनुपपत्त्या न कोऽप्येकत्वमारोपयेदिति भावः ।

(४) नन्वत्र करचरणचिबुकादीनामित्येव कथं नोक्तं परमा

नादिग्देशव्यापित्वस्यैष (१)महिमेति साम्प्रतम् । विरोधात्–यदि हि नानादिक्काः(२) परमाणवो देशतयाऽवभासेरन् नैकतया देशितया चारोप्येरन्, तथाच कस्य नानादिग्देशव्यापिता, देशिनोऽपरिस्फूर्तेः, अथ तथाऽऽरोप्येरन् न नानात्वेन देशत्वेन वाऽवभासेरन्, तथाच कस्य नानादिग्देशव्यापिता, देशानामपरिस्फूर्तेः । (३)तस्मादेकत्वारोपे परमाणुमात्रत्वावभास एव स्यादिति ।

"एवन्तर्ह्यनारब्धद्रव्यराशिषु का वार्तेति चेत्" । तावद्देशव्यापित्वसाम्येन तावत्परिमाणद्रव्य(व)त्वारो-

---

त्याह नचेति । विरोधमेव दर्शयति यदि हीति । अयमर्थः–नानादिग्देशव्यापित्वमिति वदता नानादिक्को देशस्तद्व्यापकदेशो द्वावप्यभ्युपगन्तव्यौ । अत्र च त्वत्पक्षे भागभागिनोर्देशदेशिनोर्भिन्नयोरभावात् भागानामेव देशत्वं देशित्वं च भासत इति स्वीकर्तव्यम्, अत्र तु विरोधो वज्रलेपायमानः, न हि नानादिक्कतया नानात्वेन देशत्वेन च भासमानानां परमाणूनां तद्विरोधिनोर्देशित्वैकत्वयोरारोपः सम्भवति, तथाच देशिनोऽपरिस्फूर्तेः कस्य नानादिग्देशव्यापिता, अथ तथा एकत्वेन देशित्वेन वाऽऽरोप्येरन् न नानात्वेन देशत्वेन च भासेरन्, तथापि कस्य नानादिग्देशव्यापिता, देशानामपरिस्फूर्तेः । एतदुक्तं भवति–देशदेशित्वयोर्नानात्वैकत्वयोश्च विरोधादन्यतरस्फुरणेऽन्यतरस्फुरणविरोध इति । तस्मात्पूर्वोक्तः प्रसङ्गस्तदवस्थ एवेत्याह तस्मादिति ।

का वार्तेति । स्थूल एक इति प्रतिभासे का निर्वाहवार्तेति । तावद्देशेति । यावत्परिमाणेन द्रव्येण यावान्देशो व्याप्तः अनारब्ध-

---

किमर्थमत आहात्रेति । महावयविवत् खण्डावयविनोऽप्यभाव इति प्रदर्शनार्थन्तदिति भावः ।

(१) स्थूलत्वप्रतिभासाद्दृश्यत्वमहिमा । (२) नानादिग्भवाः ।

(३) तस्मात् आरोपितमेकत्वं परमाणुषु भासत इति पक्षो नैव सयुक्तिक इति उपसंहरति तस्मादिति ।

पः, न चेहापि(१) तथा स्यात् अन्यत्राप्यसिद्धेः। न चासन्नेवैकः स्थूलः परिस्फुरति, बाधकानामपास्तत्वात्। एतेन प्रतिभासधर्मोऽपि निरस्तः। (२)सोऽपि ह्यसन् बौद्धो वास्तवो वेति न त्रयीं गतिमतिवर्तेत इति। अतीन्द्रियाश्च प्रत्येकमणवः कथं मिलिता अपि दृश्येरन्,

द्रव्यराशेरपि तावद्देशव्याप्तिसाम्येन तावत्परिमाणद्रव्यत्वारोपः स्थूलैकत्वप्रतिभासहेतुरित्यर्थः। अन्यत्राप्यसिद्धेरिति। अवयव्यपह्नववादिनः क्वचिदपि स्थूलद्रव्यस्यासिद्धेरिति। न ब्रूमोऽन्यथाख्यातिं (३)येनान्यत्रापि स्थूलद्रव्यस्यासिद्धेरारोपापरपर्यायान्यथाख्यातिर्न स्यात् किन्तु असत एव एकत्वस्य(४) ख्यातिरिति चेत्, तत्राह न चेति। बाधकानामिति। बाधकाधीनं ह्यवयविनोऽसत्त्वम्, बाधकानि च परोक्तान्यपास्तानीत्यर्थः(५)। प्रतिभासधर्म इति। प्रतिभासस्यैव स्थूलाकारो धर्मो न बाह्य (६)इत्यर्थः। कथं निरस्त इत्याह सोऽपीति। प्रतिभासधर्मोऽपि असन् बाध्यते वास्तवो वा। न प्रथमः, बाधकाभावात्। (७)द्वितीये तु प्रतिभासस्य वास्तवस्थूलतानुपपत्तेर्बाह्यत्वं गले पादिकया स्वीकार्यमिति भावः। स्थूलैकद्रव्यानभ्युपगमे केवलाणुसमूहस्य दृश्यत्व-

(१) अवयवानङ्गीकर्तुर्मतेऽपि, तथा=एकत्वारोपः।

(२) सोऽपीति। प्रतिभासधर्मोऽपि स्थूलाकारो अलीको वा बुद्धिसिद्धो वा वास्तवो वेति गतित्रयं नातिक्रमेतेति भावः। नारायणेन ; बौद्धः प्रतिभाससिद्धस्सोऽसन् वास्तवो वेति विकल्पद्वयं नातिवर्तेते त्यर्थः कृतः, तन्मतेन त्रयीमित्यत्र द्वयीमित्येव पाठः समुचितः। अट इति पाठस्तु सर्वथाऽनुचितः।

(३) अन्यत्र प्रसिद्धस्यैकत्वस्यान्यत्रारोपं भ्रममित्यर्थः।

(४) असतः प्रपञ्चस्य ब्रह्मणि ख्यातिमिव असत एवाध्यस्तपदार्थाकारेण भानमित्यर्थः।

(५) अस्तु तर्हि स्थूलघातेत्यादिग्रन्थेन अवयविबाधकानां रक्तारक्तादिविरोधानामपास्तत्वादिति भावः।

(६) इति बौद्धीयप्रलापोऽपि निरस्त इत्यर्थः। (७) वास्तवपक्षे।

अतीन्द्रियसमूहस्याप्यतीन्द्रियत्वात् । "विशिष्टोत्पादादैन्द्रियकत्वमिति चेत्" । किमद्यापि स्वप्ने हस्तं प्रसारयासि ।

(१)अस्तु वैवं तथापि क्षणभेदाज्जातिभेदो निराकृतो, जातिसङ्करप्रसङ्गात् । तदभेदेऽपि(२) तदा तादृग्वेति न कश्चिद्विशेषः । (३)अस्तु वा जातिविशेषोऽपि, तथापि स्थूलत्वमेवैन्द्रियकत्वं प्रति प्रयोजकं मन्तव्यम् , अन्यथा स्थूलतामनाप्नुवत् एकोऽपि परमाणुः कदापि तथोत्पन्नः

---

मपि न स्यादित्याह अतीन्द्रियेति । विशिष्टोत्पादादिति । अतीन्द्रियेभ्यः परमाणुभ्यो विशिष्टानां भिन्नजातीयानामेव प्रत्यक्षयोग्यानां क्षणिकानामुत्पादादैन्द्रियकत्वमित्यर्थः । किमद्यापीति । क्षणिकत्वे निरस्तेऽपि विशिष्टोत्पादादिति वदन् अलब्धद्रव्यालिप्सया स्वप्ने हस्तं प्रसारयसीव भासीति ।

तदभेदेऽपीति । जात्यभेदेऽपीति । तादृग्वेति(४) । तज्जातीयं वेत्यर्थः । सत्यपि जातिविशेषे न तस्य प्रत्यक्षं प्रति प्रयोजकत्वमित्याह (५)अस्तु वेति । तथोत्पन्न इति । विशिष्टजातीयतयोत्पन्न इति ।

---

( १ ) तथोत्पादमङ्गीकृत्य सिद्धान्ती आहास्तु चैवमिति । क्षणिकत्वेऽपि कुर्वद्रूपो जातिभेदो नास्ति वस्तूनां जातिसाङ्कर्यप्रसङ्गाज्जात्यभेदे तु य एव पूर्वमतीन्द्रियाः परमाणव आसंस्त एवैन्द्रियकाः स्युरन्ये वा न कोऽपि विशेषस्तथाच सञ्चितानामप्यतीन्द्रियत्वमसञ्चितानामपि कचिदैन्द्रियकत्वमित्यनियमः स्यादित्यर्थः ।

( २ ) तदभेदेन तूत्पादेऽपीति पाठान्तरम् ।

( ३ ) भवतु वेति पाठान्तरम् ।

( ४ ) भावानामेकजातीयत्वेऽपि स एव भावो तज्जातीयोऽन्य एव वा भाव इत्यनयोर्नैयायिकबौद्धपक्षयोर्न कश्चिद्विशेष इत्यर्थः ।

( ५ ) अत्र 'ननु वैजात्यमेव तथोत्पादप्रयोजकमिति कुतोऽयमनियम इत्यत आह भवतु वे'ति पाठान्तरं मूले मिश्रमतेन द्रष्टव्यम् ।

प्रत्यक्षतामियात् । नियमेन तु तद्विपरीतस्य प्रत्यक्षता तथाविधस्याप्रत्यक्षतायामेव विश्राम्यति, अन्वयव्यतिरेकगम्यत्वाद्धेतुफलभावस्य । न च सञ्चिता अपि स्थूलतयोत्पन्नाः, न च बहुत्वमेव स्थौल्यम् तद्विपर्ययस्तु सूक्ष्मता वेति, विततदेशानामपि(१) प्रत्यक्षत्वप्रसङ्गात् । "नैरन्तर्यमपि विवक्षितमिति चेत्" । न, तस्य प्रकृतेऽप्यसम्भवात्, रूपपरमाणूनां रसादिपरमाणुभिरन्तरितत्वात् । न चारोप्यते नैरन्तर्यम्, (२)इतरेतरा-

न ह्येव(३)मतोऽस्थूलविपरीतस्य स्थूलस्यैव नियमेनान्वयव्यतिरेकाभ्यां प्रत्यक्षता दृश्यमाना तथाविधस्यास्थूलस्येतरैः संहन्यमानस्याप्रत्यक्षतायामेव पर्यवस्यतीत्याह नियमेन त्विति । स्थूलतयोत्पन्ना इति । (४)अपरमाणुत्वप्रसङ्गादिति भावः । तद्विपर्यय एवास्थूलतेति(५) । अत एकस्य परमाणोर्न प्रत्यक्षत्वप्रसङ्ग इति भावः(६) । विततदेशानामिति । अनिरन्तराणां बहूनामित्यर्थः । प्रकृतेऽपीति । निरन्तरत्वेन भवदभिमतेऽपीत्यर्थः । (७)रूपेति । रूपरसगन्धस्पर्शपरमाणवो घटशब्दवाच्या इति बौद्धानां सिद्धान्तस्तत्र च रूपपरमाणव एव

(१) अत्र तद्देशानामिति पाठान्तरमेवमग्रेऽपि ।

(२) ननु नैरन्तर्यरहितेष्वपि परमाणुषु नैरन्तर्यमारोप्य प्रत्यक्षमुपपत्स्यत इत्याशङ्क्याह इतरेतरेति ।

(३) स्थूलतामप्राप्तस्य विशिष्टजातीयस्यापि परमाणोर्न प्रत्यक्षमित्यर्थः ।

(४) परमाणव इति शेषः । अपरमाणुत्वेति । परमाणूनां सञ्चितानां स्थूलत्वे धर्मिग्राहकबाधेन परमाणुत्वाभावापत्तेरिति भावः ।

(५) अत्रैतन्मतेन मूले तद्विपर्यय एवास्थूलतेति पाठो द्रष्टव्यः ।

(६) पूर्वपक्षिभाव इत्यर्थः । स च न युक्तः, कुत इत्यत आह-विततेति ।

(७) निरन्तरतया प्रत्यक्षत्वेनाभिमते परमाणुपुञ्जे नैरन्तर्याभावे हेतुमाह रूपेत्यादिना ।

श्रयप्रसङ्गात्—नैरन्तर्यारोपे तेषां स्थूलानां ग्रहणं तद्ग्रहणे च सति नैरन्तर्यारोप इति । तस्मादैन्द्रियकत्वे स्थूलतायाः प्रयोजकत्वात्, अप्रयोजकत्वे विततदेशानामपि प्रत्यक्षत्वप्रसङ्गात्, तेषाञ्च प्रत्येकमस्थूलतयाऽतीन्द्रिया एव परमाणवः । तथाच (१)सर्वाग्रहणमवयव्यसिद्धेरिति ।

"अस्तु (२)तर्हि क्षणमात्रावस्थायी स्थूलोऽर्थ इति चेत्" । न, भागभागिनोर्युगपदुपलम्भबाधितत्वा-

स्थूलीभूताश्चाक्षुषास्तेषां च स्थूलीभावो नैरन्तर्ये सति स्यात्, तच्च रूपपरमाणूनां रसादिपरमाणुभिः सह मिलितत्वेन तैर्व्यवहितत्वान्नैव सम्भवतीति । तद्ग्रहण इति । अधिष्ठानग्रहणाधीनत्वादारोपस्येति भावः । तस्मान्न नैरन्तर्ये सति बहुत्वं स्थौल्यं किन्तु महत्परिमाणवत्त्वमेव, तदेव च प्रत्यक्षत्वं प्रति प्रयोजकं, तच्च प्रत्येकं परमाणूनां न सम्भवतीति सर्वाग्रहणप्रसङ्ग इत्युपसंहरति तस्मादिति ।

इदानीमवयविव्यतिरिक्तमेव स्थूलद्रव्यमभ्युपगम्य प्रत्यक्षत्वं समर्थयते(३) अस्तु तर्हीति । क्षणमात्रस्थायीत्यनेनावयविव्यतिरेकं सूचयति । क्षणिकत्वपक्षे हि निरन्वयविनाशिन एव कारणस्य कार्यारम्भकत्वात् नावयवानां स्वसमवायिकार्यारम्भकत्वं सम्भवतीत्यवयव्यभाव इति । भागभागिनोरिति । क्षणिकस्य हि स्थूलस्य क्षणिकैरेव निरन्वयविनाशिभिः कार्यात्पूर्वस्मिन्नेव क्षणे सद्भिर्भागैरुत्पादे भागभागिनोर्युगपदुपलम्भो नोपपद्यत इति भावः । ननु न कारणभूता (४)भावाः पटादय

---

(१) सर्वेति । अवयव्यसिद्धौ तद्गुणकर्मादीनां सर्वेषामग्रहणं स्यादिति भावः। इदं द्वितीयाध्यायप्रथमाह्निकस्थं ३४ गौतमीयं सूत्रम् ।

(२) प्रत्यक्षत्वबलात् ।

(३) पूर्वपक्षीति शेषः। निराकृतमपि युक्त्यन्तरमभिधातुं प्रस्तौति अस्त्विति मिश्राः ।

(४) अत्र कार्यभूता इति पाठस्समुचितो भाति ।

त्(१)। घटपटादिभङ्गे तन्तुकपालादीनामुत्पादे समानोपादानतया सप्रतिघत्वव्याघाताच्चेति । सोऽयमधिकरणसिद्धान्तन्यायेन स्थूलसिद्धौ क्षणभङ्गभङ्गः ।

एतेन यत् सत् तन्निरवयवं यथा विज्ञानम्, सच्च विवादास्पदीभूतो घटादिरिति निरस्तम् । (२)विपर्यये

---

उपलभ्यन्ते किन्तु तेन सह समानोपादानानि भागान्तराणीति चेत्, तत्राह **घटेति** । यदि तन्तव एव तन्त्वन्तराणि पटञ्चाप्युपाददते ततः पटभङ्गेन तन्तूनामुत्पादे पटतन्त्वोः सप्रतिघत्वं समानोपादानत्वेन व्याहन्यते । **अधिकरणसिद्धान्तेति** ।(३)पक्षधर्मविशेषादेव साध्यविशेषसिद्धिरधिकरणसिद्धान्तः । अत्राप्युपलभ्यमानस्य धर्मिणः स्थूलत्वं सिद्ध्यत् तस्य सभागत्वबलेनैवाक्षणिकत्वैकार्थसमवाय्येव सिद्ध्यतीति तत्सिद्धान्तसिद्ध एव क्षणिकत्वभङ्ग इत्याह **सोऽयमिति** ।

अथ विपर्यये बाधकं विनापि व्याप्तिसिद्धिः(४) तदेवं चार्वाकपरि-

---

(१) अवयव्यतिरिक्तस्थूलोत्पादकानिरन्वयविनाशिनां भागानां ग्रहणक्षणे कार्यरूपस्य स्थूलस्योपलम्भः, तदुपलम्भक्षणे च भागोपलम्भो न सम्भवतीति कथं प्रत्यक्षं भवेदिति समाधानार्थः । घटपटादीति दूषणान्तरप्रदर्शनम्—उत्पत्त्यग्रिमक्षण एव यो घटो नष्टस्तम्प्रति कपालमाला तावदुपादानन्तत्र विसभागसन्तानस्य त्वयाऽभ्युपगमात्, तथाचैकैव कपालमाला घटं कपालमालाञ्चाग्रेतनीं प्रत्युपादानमिति मूर्तानां समानदेशताविरोध इत्यर्थः । घटपटादिभङ्गाभिधानं कपालतन्तुमालास्फोरणार्थम्, स्थैर्यपक्षे तु सभागसन्तानव्यवस्थैव नास्तीति नायं दोष इति भावः ।

(२) यत्सत् तत्सावयवमिति विपरीतव्याप्तौ ।

(३) पक्षेति । धर्मिणि स्थूलत्वासिद्धिबलादेव सावयत्वसाध्यसिद्धिरधिकरणसिद्धान्त इत्यर्थः । 'यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्त' इति महर्षिगौतमोक्तलक्षणेन प्रत्यक्षबलात्स्थूलत्वासिद्धावन्यस्य सभागत्वस्य सिद्धिरिति लक्षणसङ्गमनात् ।

(४) यत् सत् तन्निरवयवमिति व्याप्तिसिद्धिः ।

बाधकाभावेन व्याप्त्यसिद्धेः । यत् सत् तत्सावयवं यथा घटः, सच विज्ञानमिति चार्वाकपरिवर्तस्याप्यव-काशाच्च, समो वा समाधिः ।

"(१)ननु निरवयवमेव विज्ञानं स्वसंविदितरूपं घटस्य च सावयवतायामद्यापि विवाद एव, तत्कथं परिवर्तः कथं वा समः समाधिरिति चेत्" । (२)शुष्कविवादस्य विज्ञानेऽपि दुर्वारत्वात्, न हि कश्चित् कण्ठौष्ठपार्श्वजठरपार्श्वादिपरिहीनं पिठरमनुभवति । अस्तु वा सत्त्वात् सप्रतिघत्वसिद्धिर्बुद्धावप्रतिघत्वं वा घटादाविति ।

---

वर्तस्याप्यवकाशप्रसङ्ग इत्याह यत्सत्तत्सावयवमिति । परिवर्तो=विपरीतप्रसङ्गः । अथ विपर्यये बाधकाभावेन व्याप्त्यसिद्ध्या समाधिरभिधीयते(३)स ममापि समान इत्याह समो वेति ।

शुष्केति । अनुभवविरुद्धो विवादः शुष्कविवादः । कथं घटेऽनुभवविरुद्धो विवाद इति चेत्, तत्राह नहीति । अथवा विज्ञानेऽपि निरवयवत्वस्य स्वसंवेदनसिद्धस्यापि सत्त्वादेव (४)सप्रतिघत्वातासिद्धिरित्याह अस्तु वेति । अथानुभवविरोधेन सावयवत्वविषयस्य सत्त्वानुमानस्यानुत्पत्त्या (५)अप्रतिघत्वं मन्यसे, तर्हि घटादावप्यप्रतिघत्वं स्यादित्याह अप्रतिघत्वं वेति ।

---

(१) सत्त्वस्य सावयवत्वसाधकस्य विज्ञान एव व्यभिचार इति शङ्कते नन्विति ।

(२) त्वदभिमतस्य निरवयवत्वसाधकस्य सत्त्वस्यापि घट एव व्यभिचार इत्याशयेन समाधत्ते शुष्केति ।

(३) यत् सत्तन्निरवयवमिति विपर्यये बाधकाभावेन, यत्सत्तत्सावयवमिति व्याप्त्यसिद्ध्या बौद्धेन समाधिः क्रियते इत्यर्थः ।

(४) मूर्तत्वसिद्धिरित्यर्थः ।

(५) अमूर्तत्वम् ।

(१)अपि च स्वतन्त्रसाधनमिदं प्रसङ्गो वा ? न प्रथमः, घटादिशब्देन स्थूलेतराणां रूपादीनां परमाणूनां वा पक्षीकरणे सिद्धसाधनात्, स्थूलमेकमभ्युपगम्य पक्षविधौ कालात्ययापदेशात्, अनभ्युपगमे स्वाश्रयासिद्धेरिति। "ननु प्रामाणिकाभ्युपगमे बाधः स्यात्, सर्वथाऽनभ्युपगमे चाश्रयासिद्धिः स्यात्, न चैवमत्रेति चेत्"। (२)तदेवं नभःस्तलकमलपरिमलसाधनस्यापि साश्रयतामापादयदाश्रयासिद्धिदोषप्रमोषायेत्यलमनेन।

"(३)पर्वतादिवल्लोकप्रतीतिसिद्धान् घटादीनुपादाय

---

अपि चेति। घटादीनां निरवयवत्वसाधनायोक्तं सत्त्वं स्वतन्त्रसाधनं, प्रसङ्गो वा प्रसङ्गसाधनं वेत्यर्थः। घटादिशब्देनेति। धर्मिबाधकेन घटादिशब्देन घटादिशरीरवर्तिनां स्थूलेतराणां रूपादीनां गुणानां पृथिव्यादिपरमाणूनां वेत्यर्थः। कालात्ययापदेशादिति। धर्मिग्राहकेण प्रमाणेन सावयवस्यापि(४) ग्रहणात् तेनैव निरवयवत्वपक्षस्य बाधादिति। न चैवमत्रेति। प्रामाणिकाभ्युपगमासिद्धत्वादिति(५)।

---

(१) सिद्धान्त्याहापि चेति। घटादयो निरवयवाः सत्त्वादिति अनुमानेन निरवयवत्वं घटादौ साध्यतेऽथवा यदीदं सत्स्यान्निरवयवं स्यादिति तर्को इति विकल्पार्थः।

(२) तदेवमिति। व्यावहारिकसत्त्वेनैवमुक्तदोषपरिहारे, गगनारविन्दं सुरभि अरविन्दत्वादित्यनुमानेऽपि आश्रयासिद्धिदोषो न स्यादिति उत्तरार्थः। तदेतदित्यत्र पाठान्तरम्।

(३) गगनारविन्दस्य लौकिकव्यवहारासिद्धत्वान्नोक्तं सिद्धान्तिनोक्तं युक्तमित्याशयेनाशङ्कते पर्वतादिवदिति।

(४) घटादेरित्यर्थः। बाधादिति। धर्मिग्राहकप्रमाणेन सावयवस्यैव घटादेः सिद्धत्वात्तत्र च निरवयवत्वाभावात् सत्त्वादिति हेतुर्बाधित इत्यर्थः।

(५) बौद्धैर्घटादीनां प्रामाणिकत्वं पारमार्थिकसत्त्वं नाभ्युपगम्यते येन बाधः स्यात्, व्यावहारिकसत्त्वाङ्गीकाराच्च नाश्रयासिद्धिरिति पूर्वपक्षिणोऽभिप्रायः।

निरवयवत्वानुमानं स्यात्, अन्यथा ब्रह्मविवर्तादिविप्रतिपत्तिविहततया दहनानुमानमपि पर्वतादौ न स्यात् इति चेत्" ।

नैवम्, अविरोधात् । (१)नहि ब्रह्मविवर्तादिसिद्धावप्याश्रयादयोऽन्यप्रकाराः सम्भवन्ति, तथाहि- सर्वत्र स्वप्नपर्वते स्वप्नधूमेन स्वप्नवह्निरेव साध्यते, केवलं सांवृतेऽपि व्यवहारे सत्यानृतव्यवस्थाऽस्तीति तस्यां निर्भरः कर्तव्यः , इह तु घटादिव्यपदेशेन स्थूल एव यदि पक्षीकृतः, कथं निरवयत्वेन साध्येन न विरोधः, अथ परमाणवादिरेव, कथं न सिद्धसाधनम् ।

"(२)विप्रतिपन्नं प्रति न तथेति चेत्" । न वै कश्चि-

---

(३)ब्रह्मविवर्तादिविप्रतिपत्तिविहतत्वेन पर्वतादानामपि प्रामाणिकत्वासम्भवेनाश्रयासिद्धत्वेन दहनानुमानमपि न स्यादिति ।

अविरोधादिति । ब्रह्मविवर्तत्वेऽपि साध्यस्य (४)तथात्वेनाश्रयस्यापि साध्याविरोधादिति ननु सति तस्यां व्यवस्थायां निर्भरः कर्तव्य इति ।

विप्रतिपन्नमिति । परमाणोर्निरवयवत्वे विप्रतिपन्नमित्यर्थः ।

---

(१) अविरोधमेव दर्शयति नहीत्यादिना । ब्रह्मपरिणामो वा तद्विवर्तो वा पर्वतादिरिति नाश्रयासिद्ध्यादयो दोषा इति भावः ।

(२) शङ्कते विप्रतिपन्नमिति । न तथा=न सिद्धसाधनम् ।

(३) ब्रह्मेति । सर्वं जगत् ब्रह्मणो विवर्तः-उपादानविषमसत्ताकत्वे सत्यन्यथाभावः, इति वेदान्तिविप्रतिपत्तिग्रस्ततया पर्वतो वह्निमानित्याद्यनुभवसिद्धानुमानेऽपि आश्रयासिद्धिदोषः स्यादिति पूर्वपक्षाशयः ।

(४) तथात्वेन=सत्यानृतव्यवस्थया लोकसिद्धत्वेन । कर्तव्य इति । तथाच घटादेरपि वेदान्तिमते सत्यानृतव्यवस्थया स्थूलत्वेन सिद्धत्वात्तत्पक्षत्वे बाधः स्यादेवेत्यर्थः ।

त्परमाणूनां निरवयवत्वं विप्रतिपद्यते। "लोकव्यामोह·निबर्हणाय साधनमिति चेत्"। तथापि यं लोकः स्थूलमेकमुपलब्धवान् तस्य पक्षत्वे विरोध एव, ततोऽन्य·स्य(१) पक्षत्वे सिद्धसाधनमेव। "एकः स्थूलोऽयमिति मिथ्येति चेत्" । एतदेव तर्हि साध्यतां किमनेनाजाग·लस्तन(केश)कल्पेन सत्त्वेन। न च तत्रैवेदं शक्यमुपसं·हर्तुं, व्यधिकरणत्वात्(२)। तस्माद्येन रूपेण यस्य पक्षत्वं सिषाधयिषितधर्माविरोधविवादाभ्यां तत्रानुमानप्रवृ·त्तिर्नातोऽन्यथेति(३)।

लोकेति। यद्यपि न किञ्चिदत्र(४) सावयवं लोकास्तु सावयवत्वेन मुह्यन्ति तद्व्यामोहनिबर्हणाय साधनमित्यर्थः। तथापीति। लोकोपल·ब्धस्य स्थूलस्य(५) पक्षत्वेऽप्युपलम्भप्रामाण्यादेव विरोधस्तदवस्थ एवे·त्यर्थः। ननु स्थूलोपलम्भस्य प्रामाण्ये सत्यतिविरोधो भवेत् प्रामा·ण्यमेव त्वसिद्धमिति शङ्कते एकः स्थूलोऽयमिति। परिहरति एत·देवेति। स्थूलोपलम्भस्य मिथ्यात्वसाधने हि तद्विरोधात्सत्त्वमजागलस्त·नवन्नापेक्षितसाधनाय समर्थमित्यर्थः। न च तत्रैवेति। न च मिथ्यात्व एव साध्ये सत्त्वं प्रयोजकमिति । व्यधिकरणत्वादिति। उपलम्भे धर्मिणि मिथ्यात्वेन साध्यमाने उपलभ्यस्थूलाधारं सत्त्वं व्यधिकरणमिति। अविरोधविवादाभ्यामिति। अविरोधेत्यनेन स्थूलपक्षीकारोक्त·

(१) परमाणोः।

(२) स्थूलघटादिनिष्ठसत्त्वेनोपलम्भधर्मिणि व्यधिकरणत्वान्मि·थ्यात्वसाधनमनुपपन्नमित्यर्थः।

(३) यथा पर्वतपक्षे वह्निरूपधर्मस्य विरोधो बाधोऽपि नास्ति विवादः सन्देहश्च पर्वत इति तत्र बाधसिद्धसाधनदोषयोरभावादनु·मानप्रवृत्तिर्नैवं प्रकृत इति भावः।

(४) जगति किञ्चिद्घटादिकम्।

(५) घटादेस्सावयवत्वेनोपलब्धिसिद्धस्य।

नापि द्वितीयः, विपर्ययापर्यवसानात् । न च विवादविषयो निरवयवः, तस्मान्न सन्निति विपर्ययः । न चैवं(१) सावयवत्वं पक्षस्यानिच्छता प्रवर्तयितुं शक्यते, न च (२)तत्त्वयेष्यते । न च तस्येष्टौ तेनासत्त्वं शक्यसाधनम्, आश्रयासिद्धेर्विरोधादसाधारण्याद्वा । न च विपर्ययोऽपि परेष्ट्या प्रवर्तत इति ।

---

विरोधस्य व्यतिरेको दर्शितः, विवादेत्यनेन परमाणुपक्षीकारोक्तस्य सिद्धसाधनस्य व्यतिरेकः ।

प्रसङ्गो वेति द्वितीयं पक्षं दूषयति नापि द्वितीय इति । विपर्ययापर्यवसानमेव दर्शयति न चेति । सत्त्वान्निरवयवत्वे प्रसज्यमाने न च निरवयवो विवादविषयः, तस्मान्नास्तीति हि विपर्ययो भवति इति । इष्यतां नाम त्वया सावयवत्वम्, तथापि न सावयवत्वेनासत्त्वं शक्यसाधनमित्याह–न चेति । (३)स्थूलस्य सावयवस्याश्रयस्यानभ्युपगमे आश्रयासिद्धिः, तदभ्युपगम्यासत्त्वसाधने विरोधः, असत्सु च शशविषाणादिषु सपक्षेषु सावयवत्वस्याभावादसाधारण्यं हेतोरिति । ननु यद्यपि नास्माभिः(४) सावयवत्वमिष्यते, तथापि त्वया(५) तावदिष्यते, अतो यथा प्रसङ्गः परेष्ट्या प्रवर्तते तथा विपर्ययस्यापि परेष्टिमात्रेण प्रवृत्तौ को विरोधः, अत आह न चेति । नहि परेष्ट्या प्रसङ्गे क्रियमाणे तद्विपर्ययोऽपि परेष्ट्या प्रवर्तत इति युज्यते विरुद्धत्वादित्यभिप्रायः ।

एवं प्रत्यक्षतोऽवयविनि साधितेऽनुमानमन्तरेण साध्यासिद्धिमनुपपन्नां

---

(१) विपर्ययपर्यवसानम् । (२) सावयवत्वम् ।

(३) घटादयोऽसन्तः सावयवत्वादित्यनुमानेन घटादीनामसत्त्वसाधने हेतुदोषान् विवृण्वन्नाह स्थूलस्येति । (४) बौद्धैः ।

(५) नैयायिकेन । यथेति । पराभ्युपगममात्रेण घटादीनां सावयवत्वेऽसत्त्वप्रसङ्ग इत्येवं यथा प्रसङ्गसाधनं भवति तथोक्तरीत्या विपर्ययापादनमपि स्यादिति पूर्वपक्षाशयः ।

"कः पुनरवयविनि न्यायः"। तत्किं प्रत्यक्षान्न्यायो गरीयान्? यद्येवं(१) बुद्धावेव कोऽसौ? तस्मादसारमेतत्। तथापि (२)यन्निरस्तसमस्तविरुद्धधर्माध्यासं तदेकमेव व्यवहर्तव्यं यथा विज्ञानं, तथाच विवादाध्यासित एकस्थूलानुभवगोचर इति स्वभावहेतुः, (३)तावन्मात्रानुबन्धित्वादेकताव्यवहारस्य। न ह्ययमेक-

मन्वानः कश्चित्पृच्छति(४) कः पुनरिति। अवयविसद्भावे को न्यायः किमनुमानमिति। अयुक्तोऽयं प्रश्न इत्याह-तत्किमिति। प्रत्यक्षेणावयविसिद्धौ न न्यायापेक्षा, प्रबलप्रमाणसिद्धे (च) वस्तुनि दुर्बलप्रमाणेन कर्तव्यान्तराभावात्। बुद्धावेवेति। ज्ञानमात्रवादिनस्तव ज्ञानसद्भावेऽपि कोऽसौ न्यायः येन ज्ञानमपि तावत्सिध्यति, नहि तत्रापि(५) प्रत्यक्षादन्यत्प्रमाणमस्तीति भावः। तथापीति। यद्यपि प्रत्यक्षसिद्धे न्यायापेक्षा नास्ति तथापि स उच्यत इति शेषः। अवयविनि च विरुद्धधर्माध्यासाः प्रागेव(६) निरस्ता इति भावः। स्वभावमेव दर्शयति तावन्मात्रानुबन्धित्वादिति। तावन्मात्रानुबन्धमेव दर्शयति (७)न-

(१) प्रत्यक्षादनुमानस्य गरीयस्त्वे। अत्र बुद्धावपि इति मिश्रसम्मतः पाठः। तस्यास्त्वया स्वसंवेद्यत्वेनानुमानमन्तरेणैवाभ्युपगमादिति भावः।

(२) पिशाचः पिशाचभाषयैव बोधितो भवतीति परनीत्यैवानुमानमाह यन्निरस्तेति। तथाच=निरस्तसमस्तविरुद्धधर्माध्यासग्रस्तश्च विवादविषय एकः स्थूल इत्यनुभवविषय इत्युपनयाकारः, तस्माद्घटादिरेक इति व्यवहर्तव्य इति निगमनाकारः स्वयमूहनीयः। स्वभावेति। शिंशपात्ववन्निरस्तसमस्तविरुद्धधर्माध्यासो हेतुस्तादात्म्यहेतुर्बौद्धस्यापि साध्यसाधकत्वेनाभिमत इति भावः।

(३) मापादिरासिध्यवच्छेदार्थं व्याप्तिं दृढयति तावन्मा विरुद्धधर्माध्यासाभावमात्रमूलत्वात् इत्यर्थः।

(४) सिद्धान्तिनं प्रति पूर्वपक्षीत्यर्थः। (५) ज्ञानसद्भावे

(६) नासिद्धेरित्यादिना पञ्चविधग्रहणाग्रहणादिविरुद्धधर्माध्यासखण्डनावसरे इत्यर्थः।

(७) अन्यथासिद्धिं निरस्यति नहीति मिश्राः।

व्यवहारो निर्निमित्तोऽनियमप्रसङ्गात् । नाप्यन्यनिमित्तः, द्रवकठिनोष्णशीतादावपि तथाव्यवहारप्रसङ्गात् ।

"अस्तु तर्हि बाह्येषु सत्त्वेष्वनित्यत्वसन्देहः, (१) तथ्यातथ्याविभागस्याशक्यत्वादिति चेत्" । न तावत् सर्वस्य यथार्थत्वादेव विभागोऽनुपपन्नः उत्तरविरोधात् । तथाहि विपरीतमवगतं मयेति लौकिकी प्रतिपत्तिः, अन्यथाख्यातिरिति च वैनयिकी यथार्थाऽन्यथा वा, उभयथाप्युत्तरेण न सिद्धिः ।

"शब्दसंलापमात्रमेतन्न(२) प्रतीतिरिति चेत्" । न,

---

हीति । निमित्ताभावे नियामकाभावात्सर्वत्रैकताव्यवहारप्रसङ्गादित्यर्थः । नाप्यन्येति । विरुद्धधर्माध्यासाभावादन्यनिमित्तक इति । द्रवकठिनेति । विरुद्धधर्माध्यस्तेष्वपीत्यर्थः(३) ।

(४)अस्तु तर्हीति। यद्यपह्नवहेतूनां दुष्टत्वान्न बाह्यापह्नवः सिद्ध्यति तथापि न बाह्यसद्भावोऽपि सिद्ध्यति किन्तु सन्देह एवेति । उत्तरविरोधमेव दर्शयति तथाहीति । लौकिकी प्रतिपत्तिः लौकिकानां विपरीतज्ञानविषया प्रतीतिः, अन्यथाख्यातिरियं जातेति । वैनयिकी नयविदां परीक्षकाणां प्रतीतिरित्यर्थः । एतदुक्तं भवति—लौकिकानां परीक्षकाणां च व्यवहारमात्रे वैचित्र्यं प्रतीतिस्तुल्यैवेति । इयमुभयेषां विपरीतज्ञानविषया प्रतीतिर्यथार्था न वा । यथार्थत्वे स्वविषयीभूतज्ञानायथार्थत्वग्राहिणः प्रत्ययस्य यथार्थत्वेन विषयज्ञानस्यायथार्थत्वासिद्धिः, नेतिपक्षे तस्यैवायथार्थत्वान्न सर्वायाथार्थ्यसिद्धिः ।

शब्दसंलापेति । विपरीतावगतेरेवाभावात्—विपरीतमवगतं म-

---

(१) सत्त्वेषु=पदार्थेषु, अनित्यत्वसन्देहः=असत्त्वसंशयः । अत्र हेतुमाह तथ्येति । सत्त्वासत्त्वविवेकस्य कर्तुमशक्यत्वादित्यर्थः ।

(२) अत्र शब्दसंलापमात्रमेतादिति नारायणमतेनाऽत्र पाठो द्रष्टव्यः । विपरीतमवगतं मयेति अन्यथाख्यातिविषयः केवलः शाब्दिको व्यवहारः सकलज्ञानयाथार्थ्यादिति भावः ।

(३) जलपाषाणाग्न्यादौ एकत्वव्यवहारापत्तिरिति भावः ।

(४) नीलादिप्रत्यक्षाणामन्यथासिद्धिशङ्काकलङ्कितत्वादाहास्तु

**विवादानुपपत्तेः। नहि व्यवहारमात्रे परीक्षकाणां विवादः। न च नायमस्तीति। "शब्दार्थे विवाद इति चेत्" एवं सत्यप्रतीतस्य निषेद्धुमशक्यत्वात्, पराभिप्रायनिषेधार्थत्वाच्च विवादस्य अभ्युपगन्तृप्रतिषेद्धोः प्रतिषेध्यप्रतीतिः कथं नास्तीति। न चान्यज्ञानादन्यत्र**

---

येति-शब्दसंलापमात्रमेतन्न प्रतीतिरिति। **न विवादेति**। स्वसिद्धान्तविपरीताभिधायिनि हि शब्दे परेण प्रयुक्ते तदर्थ एव परीक्षकाणां विवाद उपपद्यते, न केवलशब्दव्याहार इत्यर्थः। विवाद एव नास्ति इति चेत्तत्राह **न च नायमिति**। न च नायं विवादोऽस्तीत्यर्थः। ननु न तर्हि शब्दमात्रे विवादः विपरीतावगतिरितिशब्दार्थे विवाद इति शङ्कते **शब्दार्थ इति**। परिहरति (१)**एवमिति**। विपरीतावगतिरिति पदस्यार्थो विपरीतावगमः प्रतीतो भवता अप्रतीतस्य निषेद्धुमशक्यत्वात्। न केवलं भवतो विपरीतावगतिविषया प्रतीतिरस्माकमपि विपरीतावगतिविषया प्रतीतिरस्तीति भवताऽभ्युपगते(२)त्याह **पराभिप्रायेति**। विपरीतावगतिरस्तीति परस्य योऽभिप्रायः ज्ञानं तन्निषेधार्थत्वात् विवादस्य विपरीतावगमप्रतिषेधे प्रतिषेध्ये विपरीतावगमे प्रतीतिः परस्य नाभ्युपगतेति(३)। न चायथार्थज्ञानं प्रतिषेद्धुमपि शक्यमित्याह **न चेति**। पुरोवर्तिनि हि शुक्तिशकले यदि रजतज्ञानं न स्यात् न देशान्तरकालान्तरवर्तिरजतस्मरणमात्रादन्यत्र पुरोवर्तिनि

---

तर्हीति। तथ्यातथ्ये=प्रामाण्याप्रामाण्ये इति मिश्राः।

(१) केचित्तद्विशिष्टज्ञानं मन्वते, केचित्तु तदगृहीतभेदं ज्ञायमिति तदर्थे विवादस्तथा च विशिष्टज्ञानं भ्रमात्मकं यन्निषिध्यते ह्यभ्युपगन्त्रा नैयायिकेन प्रतिषेद्ध्रा मीमांसकेन चावश्यं प्रत्येतव्यत्याह एवमिति मिश्राः।

(२) अभ्युपगन्तव्यमित्यत्र पाठः समुचितो भाति।

(३) तथाच कथं तन्निषेधः कर्तुं शक्यत इति भावः।

प्रवृत्तिसम्भवः, अतिप्रसङ्गात् । न च तज्ज्ञान(१)सान्निध्यं नियामकम्, अतिप्रसङ्गादेव(२)। न च तत्सहितो भेदाग्रहः, अग्रहप्राधान्ये भेदाविवक्षायां निवृत्तेरपि प्रसङ्गात् , तद्धेतोरभेदाग्रहस्यापि विद्यमानत्वात्। (३)"नासौ निवर्तकः अपि तु भेदग्रह इति चेत्" । न, रजत एव नेदं रजतमिति कृत्वा न निवर्तेत भेदग्रहस्य तत्कारणस्याभावात् , (४)भावे वा विपरीतख्यातिः अभिन्ने भेदप्रत्ययात्। तस्मात् प्रवर्तकवन्निवर्तकोऽप्यग्रह एव

---

प्रवृत्तिसम्भव इति । अतिप्रसङ्गादिति । अन्यत्वाविशेषेण सर्वत्र प्रवृत्तिप्रसङ्गादित्यर्थः । न च तज्ज्ञानेति । अतिप्रसङ्गादेवेति । पुरोवर्तिलोष्ठज्ञानसान्निध्ये लोष्ठेऽपि (५)प्रवृत्तिप्रसङ्गादिति । ननु तज्ज्ञानसान्निध्यसहितो भेदाग्रहो(६) नियामकः, लोष्ठादौ तु भेदो गृहीत एवेति चेत्तत्राह न चेति । अग्रहप्राधान्य इति । अयमर्थः-भेदाग्रह इत्यत्र भेदो विद्यमानोऽविद्यमानो वा भवतु, तदग्रह एव तावत्प्रवृत्तौ प्रधानं कारणमिति वाऽभिमतम्, अथवा भेदस्य विद्यमानस्यैवाग्रहः प्रवृत्तौ कारणमिति भेद एव प्रधानमङ्गमग्रहः ?, तत्र न प्रथम इत्याह अग्रहेति । तद्धेतोरिति । अग्रहप्राधान्ये पुरोवर्तिशुक्तिरजतयोर्भेदस्यावि-

---

(१) ज्ञानसान्निध्यमिति पाठान्तरम्।

(२) एवकारो नास्ति क० मु० पुस्तके ।

(३) नन्विष्टभेदाग्रहो न निवर्तकः किन्त्विष्टग्रहः, स च प्रकृतेऽपि नास्तीति न निवर्तेत इत्याशङ्कते नासाविति । असौ=अभेदाग्रहः।

(४) भ्रमाद्रजतं रजतमित्यज्ञात्वा निवृत्तिर्भवति सा न स्यात्तत्कारणभेदज्ञानाभावादित्यर्थः । भावे=भेदग्रहसत्त्वे ।

(५) शुक्तिवल्लोष्ठेऽपि रजतार्थिनः प्रवृत्तिप्रसङ्गादिति भावः ।

(६) इष्टज्ञानसहितो भेदाग्रह इत्यर्थः, तथा चेष्टभेदाग्रहः प्रवर्तक इति मिश्राः।

**तथा स्वीकर्तुमुचितस्तथाच स दोषस्तदवस्थ एव ।**

**(१)अथ भेदः प्रधानमङ्गमग्रहः,(२)तदा सत्येव रजतज्ञानाद्रजते न प्रवर्तेत इदमंशरजतांशयोर्भेदाभावादित्यादि स्वयमूहनीयम् । "प्रवृत्तिवत् प्रतिपत्तावप्युभयाग्रहस्तुल्य इति चेत्" । न, अग्रहस्याविवक्षितत्वा-**

---

द्यमानस्याप्यग्रहाद्धेतुका निवृत्तिरपि स्यादिति(३) । **स दोषस्तदवस्थ इति** । निवृत्तिप्रसङ्गदोष इति(४) ।

**प्रवृत्तिवदिति** । यथा भेदग्रहात्प्रवृत्तौ अभेदाग्रहान्निवृत्तिः प्रसज्जिता तथा भेदाग्रहादभेदप्रतीतौ अभेदाग्रहाद्भेदप्रतीतिरपि प्रसज्येतेति तवापि समानो दोष इति । (५)**नाग्रहस्येति** । न भेदाग्रहोऽभेदप्रतीतिहेतुः किन्तु सामग्रीविशेष एव(६) । किञ्च तत्त्वेऽपरिस्फुरति अतत्त्वज्ञानमित्यभ्युपगमे(७) क्वचिदभेदभ्रान्तिः क्वचित्तु भेदभ्रान्तिरिति नि-

---

( १ ) ननु पुरोवर्तिरजतयोर्यत्र वास्तवो भेदो भवति तत्र भेदाग्रहात्प्रवृत्तिः प्रकृते च पुरोवर्तिरजतयोरस्ति भेद इति तदग्रहात्प्रवर्तेत इति शंकते अथेति । भेदस्य प्राधान्यं प्रवृत्तिनिष्ठत्वमिति मिश्राः ।

( २ ) अग्रहप्राधान्यपक्षे इदं रजतमिति भ्रमात्प्रवृत्तिवन्निवृत्तिदोषमुक्त्वा भेदप्राधान्यपक्षे दोषमाह तदेति । भेदाभावादिति । भेदाभावादेव तदग्रहासम्भवात्प्रवृत्तिस्सत्यरजतस्थले न स्यादित्यर्थः । अत्र सति एव रजत रजतज्ञानान्न प्रवर्तेतेति अन्वयो बोध्यः । सत्यरजतज्ञानादिति मिश्रादिसम्मतः पाठो बोध्यः ।

( ३ ) विद्यमानस्यापि भेदस्याग्रहादभेदाग्रहहेतुका निवृत्तिरपि प्रवृत्तिवत्स्यादिति भावः ।

( ४ ) तथाचाग्रहप्राधान्ये शुक्तिरजतस्थले युगपत्प्रवृत्तिनिवृत्ती स्यातामिति भावः ।

( ५ ) इदं रजतमिति नैयायिकाभिमतभ्रमे शुक्तिरजतयोर्भेदभावादभेदज्ञाने तयोरभेदस्याज्ञानादुभयोर्भेदज्ञानमपि स्यात्तथा च मयथार्थज्ञानासिद्धिरिति पूर्वपक्षाशयः ।

( ६ ) दोषाद्यधीना ज्ञानलक्षणाप्रत्यासत्तिरूपा सामग्रीत्यर्थः ।

( ७ ) अत्राभ्युपगमादिति पाठो युक्तः प्रतिभाति ।

त्, सामग्रीविशेषादेव तत्सिद्धेः, तत्त्वेऽपरिस्फुरतीति तु नियमः । न च कश्चिद्भेदाभेदावुभावपि तत्त्वं यतस्तथा स्या(१)दिति एषा दिक्(२) ।

नापि सर्वस्यायथार्थत्वात्, तद्ग्राहकस्य यथार्थत्वायथार्थत्वाभ्यामुत्तरविरोधात् । (३)तत्किञ्चित्प्रमाणं किञ्चिदप्रमाणमिति विभाग एव वस्तुगतिः । न चासौ प्रतीतिगतिमवधूय व्यवहारगोचरः । कथन्ता तु निरू-

यमोऽपि वा स्यादित्याह तत्त्व इति । यतस्तथा स्यादिति । यत एकत्रैव भेदाभेदप्रतीतिप्रसङ्गः स्यादित्यर्थः । इत्येषा दिगिति । एवंप्रकारिकैषा भेदाग्रहस्य प्रवृत्तिहेतुत्वे दूषणोक्तिदिगिति ।

नापि सर्वस्यायथार्थत्वादिति । विभागोऽनुपपन्न इति दीर्घया दृष्ट्याऽनुषङ्गः कर्तव्य इति । तद्ग्राहकस्येति । सर्वज्ञानायथार्थत्वग्राहकस्य ज्ञानस्य यथार्थत्वायथार्थत्वप्रश्ने यथार्थत्वेनोत्तरे सर्वायथार्थत्वविरोधः, अयथार्थत्वेऽपि सर्वायथार्थत्वाग्राहिणो ज्ञानस्यायथार्थत्वात् सर्वायथार्थत्वासिद्धेः सर्वायथार्थत्वविरोध इति । (४)न चासाविति । न चासौ विभागः प्रामाण्याप्रामाण्यप्रतीतिं विना व्यवहर्तुं शक्यत इति । कथन्तेति । प्रतीतेः कथन्ता कथं प्रतीतिः (५)स्वतः परतो

---

(१) एकत्र भेदाभेदज्ञानं स्यादिति भावः ।

(२) दिगिति । भेदाग्रहस्य प्रवृत्तिं प्रति हेतुत्वे रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानं यत्र जातं तत्रोभयत्र युगपत्प्रवृत्तिनिवृत्ती स्याताम्, रङ्गे रङ्गभेदग्रहे रजते रजतभेदग्रहे चान्यथाख्यातिभयात्त्वन्मते दोषादेव रङ्गे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च सत्त्वादतः सत्यरजतस्थल इव विशिष्टज्ञानस्यैव शुक्तिरजतस्थलेऽपि हेतुत्वाद्रजतार्थिप्रवृत्त्यनुरोधादयथार्थज्ञानमपि स्वीकार्यमेवेत्याशयः ।

(३) तस्मादित्यत्र मिश्रसम्मतः पाठो बोध्यः ।

(४) ननु तथ्यातथ्यविभागस्य व्यवहारः सिद्ध्यतु नतु प्रतीतिरपीत्यत आह न चेति । असौ=प्रामाण्याप्रामाण्यव्यवहार इति मिश्राः ।

(५) निरूपणं विचारः स च संशयाधीन इति विप्रतिपत्तिं तज्जनिकामाह स्वत इति ।

प्यते स्वतः परतो वेति ।

(१)आद्ये स्वयं स्वग्राहकेणेति वा ? तत्र न प्रथमः, स्वसंवेदनस्यासिद्धेः, प्रकाशत्वस्यासाधारणत्वात्(२), शब्दसाम्येनानुमानाप्रवृत्तेः । (३)न चाऽध्यक्षमेवात्र प्रमाणम्,

---

वेति निरूप्यत इत्यर्थः ।

आद्येऽपीति । स्वशब्द आत्मवाची आत्मीयवाची वेत्यर्थः । स्वसंवेदनस्येति । स्वेनैव स्वप्रामाण्यज्ञाने स्वसंवेदनमभ्युपगन्तव्यं स्यात्, तच्चासिद्धमिति । ननु ज्ञानं स्वप्रकाशं(४) प्रकाशत्वात्प्रदीपवदिति साधनात् सिद्ध्यत्येव(५) तत्राह प्रकाशत्वस्येति । ज्ञानस्य तेजस्त्वाभावात् प्रकाशशब्देन ज्ञानत्वमेव वक्तव्यम्, तस्य च दृष्टान्तेऽ(६)भावादसाधारण्यं स्यादिति । पक्षदृष्टान्तयोः प्रकाशशब्दार्थसाम्याभावेऽपि शब्दस्तावत्समान इति चेत्, तत्राह शब्दसाम्येति । तथाचोक्तम्-

---

(१) अत्र नारायणमतेन "आद्येपी"ति पाठो द्रष्टव्यः । प्रतीतिः स्वतो भवतीति पक्षे स्वेनैव स्वस्य ग्रहणमात्मीयेन ग्राहकेण वेति विकल्पार्थो द्रष्टव्यः । अत्र स्वत इति मिश्रसम्मतः पाठः । तत्र स्वतस्त्वविप्रतिपत्तिः ज्ञानं प्रामाण्याविषयप्रतीतिविषयो न वा, यावती ज्ञानग्राहिका सामग्री सा प्रामाण्यग्राहकसामग्रीभिन्ना नवेत्यादिर्द्रष्टव्या ।

(२) अत्र प्रकाशत्वं यदि तेजस्त्वं तदा स्वरूपासिद्धिः, ज्ञानत्वं चेत्तदा दृष्टान्ते साधनवैकल्यम्, प्रकाशपदवाच्यत्वं चेत्तदा गोपदवाच्यतया वागादीनामपि विषाणित्वप्रसङ्ग इत्याशयेनोत्तरमाहासाधारणत्वादित्यादि ।

(३) ननु जानामीति प्रत्यक्षमेव स्वप्रकाशे प्रमाणमित्यत आह नचेति । सन्दिग्धेति । जानामीति-ग्राह्यज्ञानभिन्नज्ञानं तदेव वा ज्ञानमिति सन्दिग्धभेदत्वान्न स्वप्रकाशे प्रमाणमित्यर्थः ।

(४) स्वव्यवहारे प्रकाशान्तरानपेक्षमित्यर्थः ।

(५) स्वसंवेदनमिति शेषः ।

(६) प्रदीपेऽभावात्प्रकाशत्वहेतुना सपक्षविपक्षव्यावृत्तेर्- ज्ञाने स्वप्रकाशत्वसिद्धिरित्यर्थः ।

सन्दिग्धभेदत्वात् । (१)"अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति, परेण परवेदनेऽनवस्था स्यात्, न च क्रिया सजातीयक्रियाकर्मतामश्नुते छिदावदिति तर्कपुरस्कारान्नैष दोष इति चेत्" । न, (२)उपलम्भापरपर्याया दृष्टेः सिद्धिर्निष्पत्तिर्वा स्यात् प्रतीतिर्वा ? आद्ये अनागतोपलम्भवेदनप्रसङ्गः, अनुपलब्धस्यानिष्पत्तेः, न चाविद्यमानेनाविद्यमानस्योपलम्भ (३)इति, असंवित्तावसं-

'वाचोऽपि गोशब्दवाच्यत्वाद्विषाणिनामभूदिति(४) । सन्दिग्धभेदत्वादिति । ज्ञानसंवेदनस्यापरोक्षत्वाज्ज्ञानस्य प्रत्यक्षत्वमात्रं सिद्धं तच्च ज्ञानान्तरेण संवेद्यते स्वेनैव वेत्यत्र प्रत्यक्षस्याजागरूकत्वाद्भेदसन्देहोऽपि विद्यत एवेति शङ्कते अप्रत्यक्षेति । अप्रत्यक्षोपलम्भस्य=अस्वयंप्रकाशोपलम्भस्येत्यर्थः । उपलम्भापरपर्याया दृष्टेरिति । अप्रत्यक्षोपलम्भस्येति निर्देशसामर्थ्यादुपलम्भ एव दृष्टिशब्देन वक्तव्य इति । प्रसञ्जितस्या(५)भ्युपगमे दोषमाह न चेति । न ह्यवि-

---

(१) ज्ञानस्य स्वयंप्रकाशत्वाभावे तेनार्थदर्शनं न स्यात्, ज्ञानान्तरेणार्थदर्शकज्ञानस्य वेद्यत्वे तस्याप्यन्येन वेदनमित्यनवस्था, संवेदनक्रिया सजातीयसंवेदनक्रियाकर्मैवेति च न नियमश्छिदादौ तथाऽनुपलब्धेरित्येवमर्थदर्शनानुपपत्तिरूपतर्कसत्त्वान्न सन्दिग्धभेदतादोष इत्यभिप्रायेणाक्षिपति अप्रत्यक्षेति । अत्र 'स्वप्रत्यक्षस्योपलम्भस्य चार्थदृष्टिः प्रसिद्ध्यति' इति पाठान्तरम् । स्वयम्प्रकाशस्यैव संवेदनस्यार्थदर्शनं भवतीति तदर्थो बोद्धव्यः । दोष इति । सन्दिग्धभेदत्वदोष इत्यर्थः ।

(२) विकल्पपूर्वकं समाधत्ते उपलम्भेति । उपलम्भापरनामाऽर्थदृष्टिः सिद्ध्यतीत्यत्र निष्पत्तिः सिद्धिः प्रतीतिर्वेति विकल्पार्थः ।

(३) अनागतस्यापि वेदनं वेदने सत्येवोत्पद्यतैवं तत्तद्रूपीति किमपि वेदन न निष्पद्येतेत्यर्थं इति मिश्राः । 'नस्य वेदनमि'ति पाठान्तरम् ।

(४) तथाच शब्दसाम्येनानुमानप्रवृत्तौ गिरोऽपि गोशब्दवाच्यत्वात् वाक् विषाणी गोशब्दवाच्यत्वाद्गौवत् इत्यनुमानेन विषाणित्वापत्तिरिति भावः । (५) अनागतोपलम्भवेदनस्य ।

विप्तिरेव ।

द्वितीये तु(१) सिद्धसाधनम्, न ह्यनुपलब्ध उपलब्धी-भवति । न चैवंसत्यर्थोऽपि नोपलभ्येत, न ह्यनुपलम्भ-प्रतीतिरर्थवेदनम्, अपि तूपलम्भनिष्पत्तिः। "(२)उपल-म्भादृष्टौ उपलम्भनिष्पत्तिरित्येव व्यवहारः कुत इति चेत्" (३)मा भूत्, न ह्यव्यवहारादेव निष्पन्नस्य वस्तु-नो निवृत्तिः, तथाच तन्निबन्धनोऽर्थव्यवहारो दुर्वार एव । (४)न चानवस्था, अवश्यवेद्यत्वानभ्युपगमात्,

---

द्यामनेन स्वेनाविद्यमानस्य वेदनं भवतीति ।

**सिद्धसाधनमिति** । अप्रत्यक्षस्योपलम्भस्येति यथाश्रुतार्थे सिद्धसाधनमुच्यते न त्वभिप्रेतस्वप्रकाशत्वे, अत एव चोच्यते **ह्यनुप-लब्ध इति** । एतदुक्तं भवति-अर्थदृष्टिरप्रत्यक्षा नोपलब्धा भवत्येव, न चैतावता स्वेनैवोपलब्धा भवतीति । ननु स्वोत्पत्तिकाले(५) स्वेनैवो-पलम्भाभावे अनुपलब्धस्यानुपलम्भः, अनुपलब्धे चोपलम्भे उपलम्भव्यव-हाराभावादुपलम्भस्य सत्त्वाभावात्कथमर्थ उपलभ्यः स्यादिति चेत् तत्राह **न चैवमिति** । उपलम्भेन निष्पन्नेन तन्निबन्धनोऽर्थव्यवहारस्तु भव-त्येवेत्याह **तथाचेति**(६) । ननु परेणोपलम्भवेद्यत्वेऽनवस्थोक्ता तत्र कः परिहारस्तत्राह **नचेति** । अवश्यज्ञेयत्वाभावे च वेदकज्ञानस्य ज्ञानाव-

---

(१) अप्रत्यक्षोपलम्भस्यार्थदृष्टिर्न प्रतीयते इति पक्षे तु ।

(२) उपलम्भादर्शनेऽर्थज्ञानस्य संवेदनाभावे उपलम्भसिद्धिरिति कथं व्यवहार इत्याशयेन शङ्कते उपलम्भेति ।

(३) समाधत्ते मा भूदिति । वस्तुनः-उपलम्भस्य ।

(४) परेण परवेदने याऽनवस्था पूर्वपक्षिणोक्ता तां परिहर्त्तुमाह नचेति ।

(५) अर्थदृष्ट्युत्पत्तिकाले ।

(६) अर्थदृष्टावज्ञातायामर्थव्यवहारो ह्येवं सति न स्यादित्या

निश्चयवत्, अन्यथा स्वनिश्चितनिश्चयस्यार्थनिश्चयोऽपि न सिद्ध्येत् । (१)न चासावात्मन्यपि निश्चय इति । तदिदं(२) वधूमाषमापनवृत्तान्तमनुहरतीति ।

छिदादिवदिति दृष्टान्तमात्रेण नास्मदवधानम्(३) ।

---

श्यंभावाभावान्न तत्रापि ज्ञानान्तरापेक्षानिबन्धनोऽनवस्थापात इति भावः । **निश्चयवदिति(४)**। यथा ज्ञानस्यावश्यनिश्चयत्वाभावः तथाऽवश्यज्ञेयत्वाभावोऽपीत्यर्थः । सोऽपि(५) कथमिति चेत् तत्राह **अन्यथेति** । अस्त्विति चेत्तत्राह **न चासाविति** । न ह्यसौ निश्चयः स्वात्मन्यपि निश्चयरूपो विकल्परूपो भवद्भिरिष्यते स्वात्मनि विकल्पकत्वादिति भावः(६) । **तदेतद्वधूमाषेति** । अनेन स्वार्थसाधकतया अभिमतः स्वानर्थो ज्ञापित इति दर्शितम् । एवं हि वधूवृत्तान्ते श्रूयते काचिद्वधूर्वेश्यासक्तं पतिं स्ववशं नेतुकामा वेश्याया एव चेटिकां तद्वशीकरणोपायमपृच्छत्, साप्येनां विप्रालिप्सया माषमुष्टिमास्यपुटे निःक्षिप्य भर्तृशयनं गच्छेत्यचोदयत्, वध्वा च यथोक्तमनुष्ठायि(७), ततो माषपरिवासदुर्गन्धेनास्येन तया मिथः संलापे कृते सर्वथा तां स्वाभाविकदौर्गन्ध्याशङ्कया पतिस्तत्याजेति(८)। **दृष्टान्तमात्रेणेति** । हेतुरपि कश्चिद्वक्तव्य इत्यभिप्रायः । सहे-

---

(१) ज्ञाननिष्ठनिश्चयताया अनिश्चितत्वे अर्थनिश्चयो न स्यादिति भावः । आद्यनिश्चयोपीति पाठान्तरम् ।

(२) अत्र नारायणमतेन 'तदेतदि'ति पाठो द्रष्टव्यः ।

(३) ज्ञानस्य ज्ञानान्तरवेद्यत्वाभावसाधने यो दृष्टान्तो छिदादिवदिति पूर्वपक्षिणा दत्तस्तन्मात्रेण साध्यसाधनासम्भवान्नास्माकं समाधानमित्याशयः ।

(४) ज्ञानं निश्चयात्मकमेव भवतीति यथा नियमो न, तथाऽवश्यं वेद्यमेवेति नियमोऽपि नेत्यर्थः । (५) ज्ञानस्यावश्यं निश्चयत्वाभावोऽपि ।

(६) विकल्पप्रसञ्जकत्वात् ।

(७) अत्र 'अन्वस्थायी'ति प्रयोगो युक्तः ।

(८) माषमापनव्याकुला वधूः स्वगुह्यसंवरणं यथा करोति तथा त्वया दोषो न समाहित इति मिश्राः ।

ज्ञानं न ज्ञानान्तरकर्म तज्जातीयक्रियात्वात्, या यज्जातीया क्रिया नासौ तत्क्रियाकर्म यथा छिदा छिदान्तरस्येति तु न्यायविप्लवः। (१)छिदावत् सर्वथा सजातीयाकर्मत्वे साध्ये बाधितविषयत्वात् (२)पुरुषान्तरज्ञानस्य च पुरुषान्तरज्ञानवेद्यत्वात्, स्वयमपि स्मृत्यादिगोचरत्वाच्च। स्वकर्मत्वे साध्ये दृष्टान्तस्य साध्यविकलतया हेतोर्विरुद्धत्वादिति।

नापि स्वग्राहकेण, विवेचनानुपपत्तेः। नहि प्रमाणग्रहणं यथार्थैकत्वनियतम्, अप्रमाणेऽपि प्रमाणाभिमानात्, अन्यथा विपर्ययज्ञानादप्रवृत्तिप्रसङ्गाच्च। ततो

---

तुक्तं प्रयोगमाशङ्कते न ज्ञानमिति। न्यायविप्लवः=न्यायाभासत्वम्। विरुद्धत्वादिति। दृष्टान्तस्य साध्यविकलतया तत्प्रातिपक्षत्वात् पक्षविपक्षयोरेव वृत्तेरिति(३)।

(४)द्वितीयं विकल्पं निराकरोति नापीति। प्रामाण्यग्रह इति शेषः। विवेचनानुपपत्तेरिति। ज्ञानग्राहकेण तस्य प्रामाण्यग्रहे अप्रमाणज्ञानग्राहकेणापि तस्य प्रामाण्यग्रहणात् इदं यथार्थमिदमयथार्थमिति विवेचनानुपपत्तेरिति। अथवा प्रमाणमेवेति निश्चयाभावेन विवेचनानुपपत्तेरिति। एतदेव दर्शयति नहीति। मा भून्निश्चय इति चेत्तत्राह

---

(१) कथं न्यायाभास इत्यत्राह छिदावदिति। छिदेव सर्वथा सजातीयाकर्मत्वस्यैव-न ज्ञानान्तरकर्मेति-साध्यार्थत्वे हेतोर्बाधग्रस्तत्वान्न्यायाभास इत्यर्थः।

(२) बाधितविषयत्वमेव दर्शयति पुरुषान्तरज्ञानस्येति। ज्ञानान्तरवेद्यत्वादिति पाठान्तरम्) स्वयमपीति। ज्ञानस्येति शेषः। अत्र च ज्ञानं स्वसजातीयाविषयं तज्जातीयक्रियात्वाच्छिदादिक्रियावादिति प्रयोगो द्रष्टव्यः।

(३) अयं भावः-ज्ञानं स्वकर्म तज्जातीयक्रियात्वाच्छिदादिक्रियावदित्यनुमानप्रयोगे तु तज्जातीयक्रियात्वरूपहेतोः स्वाविषयिण्यां छिदिक्रियायां विपक्षे ज्ञानात्मकक्रियारूपपक्षे च वर्तमानत्वाद्विरुद्धोऽयं हेतुरिति भावः। (४) ग्राहकेणेति द्वितीयं पक्षमित्यर्थः।

यदि प्रामाण्यमापाततः स्फुरेदपि तथापि नियमहेतो-रभावात् प्रमाणमेवेदमिति निश्चयः कुतः ? स च मृग्यते पारलौकिकव्यवहाराङ्गत्वात् ।

(१)"शङ्कानिवर्तनेन तदप्रत्यूहं निश्चितमेवेति चेत्" तन्निवृत्तिरेव कुतः ? "प्रमाणान्तरादिति चेत्" । तदपि निश्चयफलमन्यथा वेति । अन्यथात्वे न शङ्कोच्छेदो निश्चयसाध्यत्वात्तस्य, निश्चयफलत्वे तु योऽसौ मृग्यते न चासौ(२) स्वत इति । "स्फुरणमात्रं तावदस्तु स्वत

---

स चेति । पारलौकिको हि व्यवहारः प्रामाण्यनिश्चयमन्तरेण न घटते, यथैहिकलौकिकव्यवहारः सन्देहमात्रेणापि न तथाऽयमपीति भावः ।

शङ्कानिवर्तनेनेति । अयमर्थः—प्रमाणग्राहकेण(३) तस्य प्रामाण्यमपि गृह्यते, तच्च यदि स्वरसतो(४) निश्चीयमानमप्रामाण्यशङ्कया विहन्येत ततो निमित्तान्तरेण शङ्कां व्यावर्तयता प्रत्यूहे निरस्ते स्वरसतो निश्चितं तथैवावतिष्ठते इति । तदपीति । तदपि प्रमाणान्तरं पूर्वज्ञानस्य यथार्थत्वनियतं प्रामाण्यनिश्चयमुत्पादयच्छङ्कां व्यावर्तयति अनुत्पादयद्वेति । निश्चयसाध्यत्वादिति । निश्चयावधिरेव सन्देह इति भावः । योऽसाविति । योऽसौ निश्चयो मृग्यते पारलौकिकव्यवहारोपयिकतया तस्य प्रमाणान्तराधीनत्वान्न स्वतस्त्वं सिध्यतीत्यर्थः । स्फुरणमात्रमिति । प्रामाण्यनिश्चयाभावेऽपि तस्य प्रामा-

---

(१) ननु स्वग्राहकादेव प्रामाण्यग्रहोऽप्रामाण्यशङ्का तु कुतश्चिन्निवर्त्स्यतीत्याह शङ्केति ।

(२) निश्चयः ।

(३) ज्ञानग्राहकेणेत्यर्थः ।

(४) स्वभावतः ।

इति चेत्"। किन्तेन, (१)नचैतदप्यननुसंहितोपाधेरुप-हितप्रत्ययायोगात्। न च विषयोपधानमात्रं प्रामाण्यम्, तदाभाससाधारण्यात्(२)अपि त्वनुभवस्य सतो भू-तार्थानुसन्धानम्(३)। न चाऽर्थानुसन्धानेऽपि तस्य(४) भूतत्वमनुसन्धीयते, आरोपितत्वव्यावर्तकविशेषाननु-सन्धानात्, अननुसंहितस्य चारोपसाधारण्यात्।

"क्वचिद्विशेषोऽप्यनुसन्धीयत इति चेत्"। न क्वापि प्राथमिकेन(५), अन्यथाऽनभ्यासदशायान्तत्रापि संश-

ण्यस्य स्फुरणमात्रमपि तावत्स्वतोऽस्त्वित्यर्थः। किन्तेनेति। नहि तावन्मात्रेण व्यवहारः सिद्ध्यतीति(६)। अननुसंहितोपाधेरिति। घटज्ञानस्य हि प्रामाण्यं न घटस्फुरणत्वौपाधिकं येन घटज्ञानग्राहकेण घटज्ञानत्वानुसन्धाने तदुपाधिकं प्रामाण्यमपि स्फुरेत्, किन्तु अनुभवस्य सतो भूतार्थत्वौपाधिकम् न च घटज्ञानग्राहकेण घटस्य भूतत्वं सत्यत्वम-नुसन्धीयते, आरोपितघटत्वव्यावर्तकविशेषाननुसन्धानात्, अननुसंहितस्य च घटत्वस्यारोपितत्वसाधारण्यादिति। क्वचिद्विशेषोऽपीति। यथा-

(१) प्रामाण्यस्फुरणेन कथञ्चित् व्यवहारसिद्धावपि न तेन ज्ञानप्रामाण्यं सिद्ध्यतीत्याह नचैतदपीति। अपिना व्यवहारोऽपि न सि-द्ध्यतीति सूचितम्। अन्यथारायणर्थो व्यक्तम्। ननु तथापि त्वदभिमतं परतस्त्वं भग्नमेवेत्याह नचेति। विशेष्यावृत्त्यप्रकारकत्वाद्यात्मकस्य प्रामाण्यस्य तत्रास्फुरणादिति, प्रामाण्यघटकोपाधेरननुसन्धाने प्रामा-ण्योपहितप्रत्ययासम्भवादित्यर्थ इति मिश्राः।

(२) भ्रमेऽपि विषयभानादित्यर्थः।

(३) ज्ञाननिष्ठप्रामाण्यं प्रति संवादिप्रवृत्तिजनकत्वं हेतुरित्यर्थः। अयथार्थानुभववारणाय सत इति। (४) अर्थस्य।

(५) ज्ञानग्राहकानुव्यवसायेन। कथमेतदत आहान्यथेति। अयं वह्निरेवेत्यपरिचितवह्नेरपि शब्दाज्जायमाने ज्ञाने प्रामाण्यस्य स्वयं ग्रह-णात्प्रामाण्यकोटिकसंशयो न स्यादित्यर्थः।

(६) ततो निष्कम्पा प्रवृत्तिर्यदि न भवति तदा किं तेन प्रामाण्य-स्फुरणेनेति भावः।

यो न स्यात्, अभ्यासदशोत्पन्ने तु अनुसन्धानं (१)व्याप्तिग्रहजनितसंस्कारसमुद्भवस्मरणबलेन भवत्प्रमाणान्तरशरीरे एव प्रविशतीति परत एवाभ्युपेयते । "तत्राप्यनवस्थेति चेत्" । न, तावदसौ दृष्टान्तद्वारिका प्रागेव तन्निश्चयात्, (२)फलद्वारिका तु स्यादपि यदि प्रामाण्यमवश्यनिश्चेयमभ्युपेयते ।

---

रत्नत्वादाविति शेषः । प्राथमिकेनेति । यज्जातीयविषयज्ञानस्य प्रामाण्यमनुसन्धीयते तज्जातीयविषयप्रथमदृष्टेरित्यर्थः । न ह्यदृष्टापूर्वरत्नजातीयस्य प्रथमदर्शने तस्य तत्त्वं कश्चिदप्यनुसन्धीयत इति । तर्ह्यभ्यासदशापन्ने विषये भूतत्वानुसन्धानात्स्वतस्त्वं स्यादिति चेत्तत्राह अभ्यासेति(३) । अभ्यासदशापन्ने भूतत्वानुसन्धानम् । भूतत्वतदधीनापि परापेक्षायामनवस्था स्यादिति शङ्कते तत्रापीति(४) । परिहरति न तावदिति । अयमर्थः–इदं प्रमाणं यथार्थं च एतज्जातीयत्वात्(५) गुणवत्, कारणजन्यत्वाद्वा सम्प्रतिपन्नवदिति अनुमानप्रामाण्यावगमे

---

(१) व्याप्तीति । यो यो गन्धवद्विशेष्यकः पृथिवीत्वप्रकारकोऽनुभवः पृथिवीत्ववत्येव पृथिवीत्वप्रकारक इत्यादिप्रकारेण यद्व्याप्तिग्रहणं तज्जनितो यः संस्कारस्तत्प्रभवं यत्स्मरणमित्यर्थः ।

(२) ननु तज्जातीयत्वादिना लिङ्गेन याऽनुमितिरिदानीमुत्पद्यते साऽपि गृहीतप्रामाण्याऽपरप्रामाण्यं निश्चाययत्येवं सापि सापीति फलबोधिकाऽनवस्था स्यादित्यत आह फलद्वारिकेति । प्रामाण्यावश्यज्ञेयत्वानभ्युपगमान्नियमनवस्थेत्यर्थः ।

(३) ननु कांचिदिति अभ्यासदशोत्पन्नमेव ज्ञानं ब्रूमस्तच्च स्वतो गृह्यतां नहि तत्रापि संशयोऽस्तीत्यत आहाभ्यासदशेति । तत्रापि तज्जातीयत्वेन लिङ्गेन प्रामाण्यं गृह्यते, तथाहि अयं पृथिवीत्वेनानुभवो (न) पृथिवीत्वप्रकारकः गन्धवद्विशेष्यकपृथिवीत्वप्रकारकनिश्चयत्वादित्याद्यूह्यम् । (४) तज्जातीयत्वेन लिङ्गेन प्रामाण्यग्रहेऽपीत्यर्थः ।

(५) संवादिप्रवृत्तिजनकजातीयत्वादित्यर्थः ।

**(१)"अज्ञातप्रामाण्येन कथं परप्रामाण्यवेदनमिति चेत्"। यथा विषयवेदनम्। (२)"अस्तु तर्हि धर्मिलिङ्ग-द्वारिका ताभ्यामननुमानात्। तन्निश्चयस्य च प्रामाण्य-**

दृष्टान्तभूत(३)ज्ञानप्रामाण्यावगमेऽप्यनुमानान्तरापेक्षा स्यात्तत्रापि दृष्टान्तिते अनुमानान्तरापेक्षेत्येवं दृष्टान्तद्वारिकाऽनवस्था, अथवाऽनुमानफलभूता-नुमितिप्रामाण्यविषयज्ञानेऽपि प्रामाण्यावगमायानुमानान्तरापेक्षेति फलद्वा-रिका वा स्यात्। न प्रथमः, दृष्टान्तभूतज्ञानप्रामाण्यस्यानुमानप्रवृत्तेः प्रागेव निश्चयात्। "ननु प्रामाण्यगतनिश्चयस्यानुमानापेक्षणेऽनव-स्थैव"। मैवम्-प्रवृत्तिसामर्थ्येन तत्रार्थस्य भूतत्वमवगम्य तदुपाधि-कस्य प्रामाण्यस्य ज्ञानग्राहकेणैव प्रतीतेरिति। तदुक्तम्(४)-'**प्रमाण-तोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणमि**'ति।

**यथा विषयवेदनमिति**। यथाऽज्ञातप्रामाण्येन घटज्ञानेन घट-स्य विषयस्य वेदनमित्यर्थः(५)। कुत इत्यत आह **ताभ्यामिति**। प्रामाण्यानिश्चयस्य किमायातमित्यत आह **तन्निश्चयस्येति**। धर्मिलि-

---

(१) शङ्कतेऽज्ञातेति। प्रामाण्यग्राहकेऽपि प्रामाण्यग्राहकापेक्षया-मनवस्थाभियाऽज्ञातप्रामाण्येनैव परेणान्यप्रामाण्यं ग्राह्यन्तथाच कथं स्वयमज्ञातप्रामाण्येन परप्रामाण्यवेदनमित्याशङ्कार्थः। समाधत्ते यथेति

(२) तर्हि अज्ञातप्रामाण्येनापि इदं ज्ञानं प्रमेत्याद्यनुमानेनैव ज्ञान-निष्ठप्रामाण्यग्रहणं कर्तव्यन्तत्र च धर्मिलिङ्गनिश्चयार्थन्तद्विषयज्ञानप्रा-माण्यनिश्चयानुसरणमपेक्षितमित्यनवस्था स्यादित्याशयेनाशङ्कते अ-स्त्विति। पक्षज्ञानलिङ्गज्ञानद्वारिका प्रामाण्यप्रतीतिरस्तु, अनिश्चि-ताभ्यां धर्मिलिङ्गाभ्यामनुमानासम्भवात् कथं तेन प्रामाण्यग्रहणमि-त्यर्थः। अनवस्थामेव स्फुटयति ताभ्यामिति।

(३) दृष्प्रातिपन्नवदिति दृष्टान्तस्वरूपेत्यर्थः।

(४) प्रमाणस्यार्थवत्त्वं साधयता वात्स्यायनमुनिना प्रथमसूत्रीय भाष्यावतरणिकायाम्।

(५) तथाऽज्ञातप्रामाण्येनापि परप्रामाण्यवेदनं स्यादिति भावः। नहि गृहीतप्रामाण्यमेव निश्चायकम्, तथासति प्रथममर्थनिश्चयोऽपि न स्यादिति भावः।

निश्चयमन्तरेणानुपपत्तेः" । न द्वैताभावात्, (१)यत्र लिङ्गज्ञाने धर्मिज्ञाने वा तथ्यातथ्यभावेन द्वैतमुपलभ्यते तत्र तथ्यत्वानिश्चये लिङ्गमाभासशङ्कासङ्क्रान्ततया न निश्चीयते, यत्र तु तज्ज्ञानं तदेकनियतं(२) तत्र तावतैव लिङ्गनिश्चयस्तदा न सशङ्कानुत्थानात्, एककोटिनियतो ह्यनुभवो निश्चयः । ज्ञानतद्धर्मग्राहिणि च ज्ञाने न द्वैतमिति व्यवस्थितिरेव (३) तस्यापि प्रामाण्यनिश्चयः परत एवेति न्यायसम्प्रदायः । इत एवेति विशेषात्ताद-

ङ्गनिश्चयस्य धर्मिलिङ्गविषयज्ञानप्रामाण्यनिश्चयाधीनत्वात्तन्निश्चयस्य च धर्मिलिङ्गान्तरनिश्चयापेक्षत्वात् , सजातीयापेक्षायामनवस्था स्यादिति । **न द्वैतेति** । अयमर्थः—प्रामाण्यनिश्चयो हि विषयतत्त्वातत्त्वनिश्चयापेक्षः, विषयतथात्वनिश्चयश्च प्रकृते तथ्यातथ्यविभागेन द्वैताभावात्स्वत एव सिद्धः, (४)**एककोटिनियतो ह्यनुभवो निश्चय इति** । प्रकृते च न द्वैतमित्याह **ज्ञानतद्धर्मेति** । ज्ञानस्य धर्मिणस्तद्धर्मस्यारोपितत्वव्यावर्तकविशेषजातीयस्य च लिङ्गस्य ग्राहके ज्ञाने तथ्यातथ्यविभागेन द्वैतं नोपलभ्यते, न ह्यज्ञाने ज्ञानत्वारोपेण भ्रान्तिर्दृश्यते, नापि यथार्थत्वनियते वस्तुनि तन्नियतविशेषारोपेण भ्रान्तिरिति । **तस्यापीति**। धर्मिलिङ्गज्ञानस्यापीति । (५)**इत एवेति** । द्वैताभावादेव विशेषादिति ।

(१) तर्हि धर्मिज्ञानं वा न क्वापि परीक्ष्येतेत्यत आह यत्रेति ।

(२) तदेकनियतं=प्रामाण्यैकनियतम् । तावतैव=अगृहीतप्रामाण्यज्ञानमात्रेणैव ।

(३) नन्वेवमनुव्यवसायस्य प्रामाण्यस्य स्वतस्त्वमायातमित्यपसिद्धान्त इत्यत आह प्रामाण्येति । यदि व्यवसानितया तत्र प्रामाण्यमनुमीयते तदा तत्प्रामाण्यमनुमानादेव गृह्यते न्यायनये प्रामाण्यस्य नित्यानुमेयत्वादित्यर्थः । (४) सङ्क्षिप्तव्याख्यानमुपसंहरति एकेति ।

(५) अत्र अत एवेति मिश्रसम्मतः पाठः । तत्रापि स्वतःप्रामाण्यशङ्कानास्पदत्वं टीकाकृत्तात्पर्यविषयो ममापि तदभिप्रायकमेव तथा व्याख्यानमिति तदभिमतार्थो द्रष्टव्यः ।

शस्य स्वत एवेति तात्पर्याचार्याः ।

स्यान्मतम्—"एतदेव तु कथं निश्चेयं यदेवम्भूतमेककोटिनियतमेव, यावता तत्राप्यनवस्थितिरिति चेत्" । न, (च)व्याप्तिज्ञानस्य साक्षादात्मन्यप्रवृत्तावपि सर्वोपसंहारेण यदुपाधिमादाय प्रवृत्तिः तद्धर्मवत्त्वात् तज्जातीयन्तत्रोपाधिः, तच्च तत्राप्यविशिष्टमनुव्यवसायात्(१) । न च सामान्येन नियमनिश्चये तदालिङ्गिते विशेषे द्वैतशङ्कावकाशः । यथा वाचकः शब्द इति स्वात्मनो वाचकत्व न साक्षाद्विधत्ते प्रवृत्तिविरोधात्, तथापि सामान्येन यदुपाधिमधिकृत्य प्रवृत्तः शब्दः तद्वत्त्वात्

---

धर्मिलिङ्गज्ञानस्यैककोटिनियतत्वनिश्चयात्तदाभासत्वशङ्कानुत्थानेन व्यवहारस्थितिरुक्ता, तन्निश्चय एव कुतः ? तस्यापि व्याप्तिलिङ्गापेक्षत्वादनवस्थाप्रसङ्गादिति शङ्कते स्यान्मतमिति । परिहरति न चेति । अयमर्थः—धर्मिलिङ्गज्ञानयोरपि अनुव्यवसायजातीयस्यैककोटिनियतत्वेन व्याप्तिग्रहणादेककोटिनियतत्वं निश्चीयते, तत्र व्याप्तिज्ञानस्याप्येककोटिनियतत्वनिश्चयाय न व्याप्तिज्ञानान्तरापेक्षत्वेनानवस्था स्यात् , तेनैव व्याप्तिज्ञानेन स्वव्याप्यैककोटिनिश्चयात्तथा तस्य स्वात्मनि वृत्तिविरोधात्साक्षात्स्वात्मन्यप्रवृत्तावपि सर्वविशेषसङ्ग्रहेण यमुपाधिं यत्सामान्यमनुव्यवसायत्वमुपादाय प्रवृत्तिः तेनैवोपाधिना स्वस्यापि परिगृहीतत्वादेककोटिनियतत्वं निश्चितं स्यादेवेति । तथापि न विशेषतो व्याप्तिज्ञानस्य द्वैताभावनिश्चय इति चेत् , तत्राह (२)न च सामान्येनेति । ना-

---

(१) यो योऽनुव्यवसायः स सर्वः प्रमाणमेवेत्यनुव्यवसायत्वावच्छेदेन गृहीता व्याप्तिः, प्रकृतानुव्यवसायस्याप्यनुव्यवसायत्वेनैव लिङ्गेन प्रामाण्यानुमानमित्यर्थः ।

(२) नन्वेवं सर्वत्रानुव्यवसाये प्रामाण्यानुमितिरापातेऽप्यनवस्थैव पुनरत आह नचेति मिश्राः ।

शब्दशब्दो वाचको न वेति शङ्कया न परिभूयते, नाप्य-नवस्थेति, एवमिहापीति।

तर्काश्चात्र भवन्ति—यदि धर्मिज्ञानं व्यभिचरेत् निरालम्बनमसदालम्बनं वा भवेत्, निषिद्धञ्च तत्(१)। यद्यनुव्यवसायो व्यभिचरेत्(२) तदार्थकर्मकोऽपि न स्यात् ज्ञानेतरस्यार्थप्राकट्याभावात्(३)। यदि तज्जा-तीयं व्यभिचरेत् व्यभिचारोऽपि क्वचिदपि न व्यवति-ष्ठेत, तद्व्यवस्थितौ व्यभिचारोऽपि न स्यात्, अन्यथा-ख्यातिरूपत्वात्तस्य(४) तत्त्वस्थितौ चान्यथात्वं स्यात्त-स्य तदवधिकत्वात्(५)।

---

प्यनवस्थेति। न च शब्दस्यापि वाचकत्वविधानाय शब्दान्तरापेक्षा-निबन्धनाऽनवस्थेति।

तर्काश्चेति। (६)प्रमाणानुग्राहकास्तर्काश्चेत्यर्थः। धर्मिज्ञानाव्य-भिचाराय तर्कमाह यदि धर्मीति। न हीदमिति इदमो विषयस्य ध-र्मिज्ञानस्य इदमोऽभावेऽपि सम्भवः, निरालम्बनत्वासदालम्बनत्वयोः प्र-सङ्गादिति। लिङ्गज्ञाने तर्कमाह यद्यनुव्यवसाय इति। व्याप्तिज्ञाने तर्कमाह यदि तज्जातीयमिति। यद्यारोपितत्वव्यावर्तकविशेषजातीयं व्यभिचरेत्न ततोऽतिरिक्तविशेषान्तरानुपलम्भात् क्वचिदपि व्यभिचारो व्यवतिष्ठेतेति। तस्य तदवधिकत्वादिति। कस्मिंश्चित्तत्वे स्थिते तदप्यपेक्ष्यान्यथात्वमित्यर्थः।

---

(१) निराश्रयासदाश्रयधर्मिज्ञानमसम्भवीति भावः।

(२) व्यवसायं विना स्यादित्यर्थः।

(३) तथाच ज्ञानं विषयविषयकतानियतस्वविषयताकप्रत्यक्षकं विषयाविषयकप्रत्यक्षाविषयत्वे सति प्रत्यक्षविषयत्वादित्यनुमानं ज्ञा-नप्रत्यक्षस्य विषयविषयकत्वे प्रमाणमिति भावः।

(४) व्यभिचारस्य। (५) तत्त्वसापेक्षत्वादन्यथात्वस्येत्यर्थः।

(६) धर्मिज्ञानादीनामेककोटिनियतत्वग्राहकप्रमाणानुग्राहका इत्यर्थः।

एतेन स्वप्नजागरावस्थयोरविशेष इति निरस्तम्। (१)असत्ख्यातेरात्मख्यातेश्च निराकृतत्वात्, अन्यथाख्यातेस्तत्त्वख्यातिव्यवस्थामन्तरेणानुपपत्तेरिति। सा च(२) जागरेऽपि यदि न स्यात् तदा न भवेदेव। "तथापि कथमनयोरवस्थयोर्विभागः कर्तव्य इति चेत्"। न, लोकसिद्धत्वात्। (३)"किमनयोर्लक्षणमिति चेत्"। कर्तृकर्मकरणदेशकालप्रबन्धबाधः काकतालीयसंवादवान् स्वप्नस्य, प्रबन्धे काकतालीयः कस्यचिदेव विषयस्य

---

सर्वमिथ्यात्ववादिनः स्वप्नजागरयोर्न विशेषः, उभयोरपि मिथ्यात्वादिति वदन्ति, एतदपि पूर्वोक्तेन निरस्तमित्याह एतेनेति(४)। कर्तृकर्मेति। स्वप्ने यो यस्मिन्देशे काले वा करोतीति दृष्टन्तेषां कर्त्रादीनां प्रबन्धस्य कात्स्न्र्यस्य बाध एव स्वरसतः, संवादस्तु काकतालीयसंवादवान्, प्रबन्धबाधः स्वप्नस्य लक्षणमित्यर्थः। प्रबन्ध इति। प्रबन्धे बहुषु कस्यचिदेव विषयस्य बाधः, स च काकतालीयः,

---

(१) स्वप्नज्ञानस्याप्रामाण्यमन्यथाख्यातिरूपतयैव वाच्यम्, सा च तत्त्वख्यातिपूर्विकैव, तत्त्वख्यातिश्च जागरावस्था ज्ञानविशेष एवेत्याह असत्ख्यातेरिति। असत एवाध्यस्तपदार्थाकारेण भानमिति बौद्धीयासत्ख्यातेः, विज्ञानात्मन एवाध्यस्तपदार्थाकारेण भानमित्यात्मख्यातेश्च वेदान्त्यभिमताया इत्यर्थः। (२) तत्त्वप्रसिद्धिश्च।

(३) ननु लोकस्यापि भेदव्यवस्थितिर्लक्षणाधीनेत्याह किमिति। अहं धवलगृहे मध्याह्ने हस्तेन पायसं भुञ्ज इत्यत्र कर्त्रादीनां सर्वेषां बाधः। ननु सर्वबाधे कथं ज्ञानं न निरालम्बनम्, कथं वाऽन्यथाख्यातिः कुत्र वाऽऽरोपः, कथं वा जागरानन्तरमपि क्वचिदविसम्वाद इत्यत आह काकतालीयेति। अन्यथानुपपत्त्यैवारोपविषयाणामन्ततो बहिःरूप्मादीनां मदन्तरतमादिभावेन शब्दानामप्युपलम्भादिति भावः। स्वप्नस्येति। लक्षणमित्यनुवर्तनीयमेवं जागरस्येत्यत्रापीति मिश्राः।

(४) तथ्यातथ्यविभागव्यवस्थापनेनेत्यर्थः। तथाच जागरज्ञानं न प्रमा ज्ञानत्वात्स्वप्नज्ञानवदित्यादीनामनवकाशादित्यर्थः।

बाधो जागरस्येति ।

(१)एतेन बाध्यप्रबन्धोऽवस्थाविशेषः(२) स्वप्नः, प्रबन्धबाधकादिबाध्यप्रबन्धान्तो जागरितमित्येषा दिक् । तस्मात्तथ्यमेव विश्वम्, मन्दप्रयोजनत्वात्तु सद्भिर्मुमुक्षुभिरुपेक्षितमिति युक्तमुत्पश्यामः । "तर्हि नैयायिकानां जगत्परीक्षणे कोऽयमभिनिवेशातिशय इति चेत्"(३) । सहसैव तदुपेक्षायां न्यायाभासावकाशे न्यायमार्गविप्लवो भवेत्, तथाच न्यायरूढः प्रेक्षावान्न तत्त्वमधिगच्छेदिति भियेति ॥

इति आत्मतत्त्वविवेके द्वितीयः परिच्छेदः ॥

---

अथं जागरस्य लक्षणमिति ।

एतेनैतदुक्तं भवतीत्याह एतेनेति । लक्षणस्य दिगियमुक्ता, अतो लक्षणान्तरमपि (४)स्वयमूह्यमित्याह एषा दिगिति । कथन्तर्हि सद्भिराचार्यैस्सर्वैरपि विश्वस्य तथ्यत्वं न प्रतिपाद्यत इति चेत्, तत्राह मन्देति। सहसैवेति । अयमर्थः— मोक्षोपायभूततत्त्वाधिगमकाल एव यदि तदुपेक्षा(५) ततो न्यायाभासेन(६) प्रमाणादीनां तत्त्वं केचिदपह्नुवीरन् ततो न्यायेन तत्त्वं बुभुत्समानः प्रेक्षावांस्तत्त्वं न गच्छेदिति भियेति॥

इति अत्रिगोत्रतिलकश्रीकृष्णाचार्यसूनुना नारायणेन विरचिताया-मात्मतत्त्वविवेकदीपिकायां द्वितीयः परिच्छेदः ।

---

(१) लक्षणान्तरेण विभागव्यवस्थापनेन।

(२) अवस्थाविशेष इति । निद्रोपप्लुतान्तःकरणावस्थाविशेषः, तथा च स्वप्नवहनाडीविशेषसंयोगजं ज्ञानं स्वप्नः, तदितरज्ञानं जागरः, स्वप्नत्वजागरत्वे जातिविशेषौ वेति मिश्राः ।

(३) तेषामपि वेदान्तिनामिव मुमुक्षुत्वात्कुतो नोपेक्षेत्याक्षेपार्थः ।

(४) इन्द्रियाजन्याविषयगोचरापरोक्षान्तःकरणवृत्त्यवस्था, जाग्रद्भोगप्रदकर्मोपरमे सतीन्द्रियोपरमे जाग्रदनुभवजन्यसंस्कारोद्भूतविषयतज्ज्ञानावस्था वा स्वप्नः, इन्द्रियजन्यान्तःकरणवृत्त्यवस्था, दिगाद्यधिष्ठातृदेवतानुगृहीतैरिन्द्रियैः शब्दादिविषयानुभवावस्था वेति जागरस्य लक्षणान्तरमित्यर्थः । (५) विश्वोपेक्षा । (६) आश्रयासिद्ध्यादिना ।

## अथ तृतीयपरिच्छेदे तृतीया विप्रतिपत्तिः ।

"(१)अस्तु तर्हि गुणगुणिनोरभेदान्नैरात्म्यम्, क्षणिक-
ानमात्रपरिशेषादिति चेत्" । उच्यते-अस्ति तावदिह
र्शनस्पर्शनाभ्यामेकार्थप्रतिसन्धानम् (२), तदिदमेकै-
विषयं वा स्यात् समुदायविषयं वा तदतिरिक्तवस्तु-
षेयं वा, वस्त्वननुरोध्याकारविषयं वा अलीक-
वेषयं वा ? नाद्यः, (३)नहि यदेव रूपं स एव स्पर्श
ति । न च रूपं त्वगिन्द्रियग्राह्यम्, अन्धस्यापि नीला-

---

गुणगुणिभेदभङ्गं तृतीयं विकल्पं निराकर्तुमवतारयति अस्तु
र्हीति । कथमित्याह क्षणिकेति । क्षणिकगुणरूपविज्ञानमात्रपरिशे-
ादिति । ननु वेदान्तिनां ज्ञानमात्रमेवात्मा कथं नैरात्म्यमित्यत्रोक्तं
णिकेति । वेदान्तिनामपि नित्यमेव ज्ञानमात्मेति सिद्धान्तः । अतो
त्यात्मवादापेक्षया नैरात्म्यमिति भावः । अत्र तावत्प्रतिपादनसौकर्येण
ह्यमेव तुल्यन्यायं (४)घटादिगुणिनं साधयति अस्ति तावदिति ।
कैकविषयं वेति । रूपस्पर्शैकैकविषयमित्यर्थः । रूपस्पर्शसमुदाय-
षयं वेत्याह समुदायविषयं वेति । आकारविषयं वेति ।
नाकारविषयं वेत्यर्थः । चक्षुषा दृष्टं रूपमेव स्पर्शत्वेन प्रतिसन्धीयत
ति चेत्, तत्राह न च रूपमिति । नचैकमेव रूपादीनामन्यतमं

---

(१) अस्त्विति । ज्ञानाभिन्न आत्मा नास्तीत्येव हि नैरात्म्यपक्षः
च ज्ञानात्मनोरभेदादेव पर्यवसन्न इत्यर्थः । अत्रात्मा ज्ञानाभिन्नस्तद्-
षयकप्रतीत्यविषयत्वादिति विशेषतः गुणिनं पक्षयित्वा गुणाभे-
साधनं, गुणं वा पक्षयित्वा गुण्यभेदसाधनं सामान्यत एवेति मिश्राः ।

(२) यमहमद्राक्षन्तमहं स्पृशामीत्यादिप्रतिसन्धाने एक एवार्थ
न्द्रियाभ्यां गृह्यते तेन गुणभिन्न एव गुणी सिद्ध्यतीत्यर्थः ।

(३) रूपमात्रविषयत्वे दोषमाह नहीति। नहि भवति तदेव रूपमिति
ठान्तरम् ।

(४) यथा युक्त्या घटनद्रूपयोर्भेदाद्बाह्यावयविसिद्धिस्तथैव ज्ञाना
भिन्नात्मावयविसिद्धिरिति भावः ।

**विप्रत्ययप्रसङ्गात् । न चैकमेव वस्तु करणभेदेनान्यथा प्रथत इति युक्तम् । (१)अनात्मकत्वप्रसङ्गात् , भेदा-भेदव्यवस्थानुपपत्तेश्च ।**

**नापि द्वितीयः,(२) स हि एकदेशतया वा एककालतया वा एककार्यतया वा एककारणतया वेति । (३)न ताव-दुपादानरूपैकदेशसम्भवः, तयोः प्रतिनियतोपादान-त्वात् , सम्भवे वा तदेव द्रव्यमिति पर्यवसितं विवा-**

---

वस्तु चक्षुरादिकरणभेदेनाऽन्यथाऽन्यथा विवर्तत इति युक्तमित्याह **नचै-कमिति । अनात्मकत्वप्रसङ्गादिति** । रूपादीनां व्यवस्थितत्वा-भावाद्व्यवस्थितवस्त्वात्मकत्वाभावप्रसङ्गादित्यर्थः । एकस्य नानात्मनावभासे भेदाभेदव्यवस्थानुपपत्तिप्रसङ्गाच्चेत्याह **भेदाभेदेति** । भिन्नस्य भेदा-वभासः, अभिन्नस्याभेदावभास इत्यङ्गीकारे हि भेदाभेदव्यवस्थासिद्धि-रिति भावः ।

एकोपाधिवशीकृतयोः(४) समुदायत्वमित्यभिप्रेत्य तमुपाधिं विक-ल्पयति **स ह्येकदेशतयेति** । कार्यस्योपादानमेकदेश इति शास्त्रमर्यादा, अधिकरणन्तु देश इति लोकमर्यादा, उभयत्रापि दूषणं वक्ष्यन् प्रथमं तावद्दूषयति **न तावदिति । प्रतिनियतेति** । गुणपलापेन गुणमात्रस्वीकारपक्षे गुणानां गुणाभाव एवोपादानमिति रूपस्पर्शयोः प्रतिनियतरूपस्पर्शोपादानत्वान्नैकोपादानत्वमिति(५) । द्वितीयं

---

(१) रूपत्वस्पर्शत्वे जाती परं भिन्नेन्द्रियवेद्ये न तु जातिमदपि तथेति यदि तदा तद्वस्तु न रूपं स्यान्न वा स्पर्शः स्याद्विरोधादित्याहा-नात्मकत्वेति । (२) समुदायविषयप्रतिसन्धानपक्षः ।

(३) आद्यं दूषयति न तावदिति । त्वन्मते रूपस्यैव रूपोपादान-त्वादित्यर्थः । न तावदुपादानतयैकदेशसम्भव इति पाठान्तरम् ।

(४) रूपस्पर्शयोरिति भावः ।

(५) रूपादिगुणानामवयव्येकोपादानत्वानङ्गीकारात्तद्गुणाभाव ए-वापरगुणोपादानमिति नैकोपादानत्वमिति भावः ।

। नाप्यधिकरणीभूतभूतलाद्याधारतया तत्सम्भवः, ]षा क्षुपलभ्यमाने भूतले रूपविशेषे घटोऽपि चक्षुषै· लभ्यमानो रूपविशेषस्तदाधार(१) इति शक्यते क्तुम् , तयोरधरोत्तरभावेनैकज्ञानसंसर्गित्वात् , त· धेकरणाः स्पर्शादयोऽपीति तु कस्य प्रमाणस्य विषयः, ह स्पर्शादयश्चाक्षुषे चेतसि चकासति । त्वचोऽयं व्या· [ इत्यपि नास्ति तथापि भूतलघटस्पर्शयोराधारा· भावाप्रतीतेः । न च समुदाययोस्तत्सम्भवः, परस्प· ग्रयत्वप्रसङ्गात्–एकाधारतायां हि समुदायानुसन्धानं नुदायानुसन्धाने चैकाधारतानुसन्धानसम्भवः–इति । नवस्थाप्रसङ्गाच्च–भूतलस्यापि समुदायत्वं किंकृत· त्यनुयोगानिवृत्तेः ।

अत एव नैककालतयापि,(२) प्रमाणाभावात् ।

---

)दूषयति नापीति । भूतले रूपविशेष इति । (४)भूतल· ापि गुणमात्रत्वादिति भावः । चाक्षुषस्यैव प्रमाणस्य विषय(५) इति तत्राह नहीति । भूतलरूपादिसमुदायस्य घटरूपादिसमुदायस्य धाराधेयभाव इति चेत्तत्राह नचेति । किञ्चानवस्थापि स्याद्भूतल· ापि समुदायत्वानुसन्धानं तन्मूलभूतरूपादिसमुदायानुसन्धानाधीनैका· रतानुसन्धानाधीनं स्यात्तस्यापि तथेत्येवं क्वचिदपि निष्ठाभावादित्या· नवस्थेति ।

(६)अतएव नैककालतयेति । यत एव रूपस्पर्शयोरेकप्रमा-

( १ ) भूतलाधारः । तयोः–भूतलरूपयोः ।

( २ ) रूपस्पर्शयोस्समुदायविषयं प्रतिसन्धानमिति शेषः । भावे· त्यत्र भावं वा इति पाठान्तरम् ।

( ३ ) अधिकरणमेकदेश इति पक्षम् ।

( ४ ) अवयव्यनङ्गीकारपक्ष इत्यादिः । ( ५ ) स्पर्श इति शेषः ।

( ६ ) अत एवेति, समुदायत्वमित्यर्थवृत्तेन सम्बन्धः, रूपरसादी· मेकेन्द्रियग्राह्यत्वादेवेत्यर्थः ।

भावेऽपि वा रासभकरभयोरप्येककालतया समुदायत्वप्रसङ्गः, भेदाग्रहस्य प्रकृतेऽप्यसम्भवात्(१) ।

अत एव नैककार्यतयापि,(२) उपादेयरूपस्यैकस्य कार्यस्याभावात् । (३)एकोदकाहरणलक्षणा अर्थक्रिया इत्यपि न युक्तम्, रूपाद्यतिरिक्तस्योदकस्यानभ्युपगमात् एकैकस्यानेकाहार्यत्वे प्रमाणाभावात् , (४)समुदायस्य चासिद्धेः ।

णगोचरता नास्ति, अतः कालभेदेन तयोर्ग्रहणान्नैककालतायां प्रमाणमिति । किञ्चैककालतायां प्रमाणसद्भावेऽपि (५)साऽतिप्रसञ्जिका स्यादित्याह भावेऽपीति । ननु भेदाग्रहे सति एककालतानुसन्धानं समुदायत्वापादकं रासभकरभयोस्तु भेदो गृह्यत एवेति चेत्तत्राह भेदाग्रहस्येति । रूपस्पर्शयोरपि भेदो गृह्यत एवेति भावः ।

यतएव रूपस्पर्शयोः प्रतिनियतोपादानत्वमत एव तयोः प्रतिनियतरूपस्पर्शोपादेयत्वान्नैककार्यतापीत्याह अत एवेति । एकैकस्येति । एकैकस्योदकाहरणरूपादेर्घटरूपस्पर्शानेककार्यत्वे प्रमाणाभावादिति । नन्वस्तूदकरूपादिसमुदायस्यानेककार्यता तत्राह समुदायस्य चेति ।

(१) रूपस्पर्शयोरपि भेदग्रहणात्समुदायविषयत्वं न सम्भवतीति भावः ।

(२) समुदायत्वेन प्रतिसन्धानं सम्भवतीत्यनुषञ्जनीयम् । उपादेयेति । नहि रूपादिभिरेकं कार्यमुपादीयत इत्यर्थः ।

(३) घटरूपस्पर्शाभ्यामेका जलाहरणादिरूपा क्रिया भवतीत्येककार्यतया तयोः प्रतिसन्धानं स्यादित्याशयेनाशंक्य समाधत्ते एकेति । ालस्यापि रूपादिसमुदायत्वाद्बौद्धमते एककार्यासम्भवादिति समाधानार्थो द्रष्टव्यः ।

(४) समुदायस्येति । तदर्थमेवैककार्यत्वस्यानुसरणात्तत्र च प्रमाणाभावादित्यर्थः । एतेन रूपजन्ये स्पर्शजन्यतायां प्रमाणाभावेऽपि रूपादिसमुदायजन्यमेव तज्जलाहरणमित्यपास्तम् ।

(५) एककालता ।

अत एव नैककारणतयापीति, निमित्तमन्तरेण समुदायव्यवहारेऽतिप्रसङ्गः ।

तृतीये तु न विवादः । नापि चतुर्थः, स हि विज्ञा- ययमाश्रित्य वा स्यात्, द्विचन्द्रादिवद्विसंवादाद्वा । ाद्ये तु रूपादिषु कः पक्षपातः । प्राप्तेरर्थक्रियास्थितेश्च द्वितीयोऽपि(१) । "ते द्वे(२) । रूपादीनामेवेति चेत्" । (३)तेषां किन्तु तस्यैवेति किं न स्यात् । "(४)बाधका ाति चेत्" । न तावत् क्रमयौगपद्यविरहविरोधो रक्ता

---

रूपस्पर्शयोः प्रतिनियतकारणत्वान्नैककारणतयापि समुदायत्वमि- ाह अत एवेति ।

तृतीये तु (५)वस्तुविषयत्वपक्षे आवयोरविवाद एवेत्याह तृतीये त्वेति । चतुर्थस्तु ज्ञानाकारमात्रविषयत्वपक्षो विज्ञानमात्रमेव वस्तु न ाह्यार्थ इति न्यायमाश्रित्य वा स्यात् बाह्यसद्भावेऽपि अस्य धर्मिप्रति- ाासस्य द्विचन्द्रादिवत् बाधकाद्वा स्यादिति विकल्प्य दूषणमाह स ाहीति । कः पक्षपात इति । रूपादीनां गुणानामप्यस्मिन्पक्षेऽ(६)- ात्त्वादिति भावः । रूपादीनामेवेति । रूपादीनां गुणानामेवे- त्यर्थः । धर्मिणि विशेषे तु बाधकादिति शङ्कते बाधकादिति । नेराकरोति नेति । क्रमयौगपद्यविरहविरोध इति, एतद्वय- वेनः स्थिरस्यार्थक्रियाऽसम्भवेन स्थिरत्वांशे बाधकम्, रक्तारक्त-

---

( १ ) जगतो विसंवादित्वपक्षे बाह्यघटादिपदार्थप्राप्तिर्जलाहरणा- दिरूपार्थक्रिया च न सम्भवतीत्यर्थः । ( २ ) प्राप्त्यर्थक्रिये ।

( ३ ) रूपादीनाम् । तस्य=अवयविनः ।

( ४ ) शङ्कते बाधकादिति । यदि गुणी स्थिरः स्यात्र क्रमेण युग पद्वा कुर्यात्, यदि चावयवी घटादिर्भवेत् तदा रक्तारक्तविरोधः स्या- दिति गुणिनि बाधकमित्यर्थः ।

( ५ ) रूपादिसमुदायातिरिक्तवस्तुरूपे तृतीयपक्षे इत्यर्थः ।

( ६ ) विज्ञानमात्रं जगदिति पक्षे ।

रक्तविरोधो वा बाधकम्, निषिद्धत्वात्, क्षणिकपरमाणुरूपद्रव्येणाक्रान्तेश्च ।

"सम्बन्धाभाव इति चेत्" । असम्बन्धस्तावदस्तु । "कथं तद्वत्प्रतीयत इति चेत्" । तेषां तथोत्पादादिति परिहारोऽस्तु, तवैव यथा शरीरश्चेतनावादिति । "(१)रूपादिभिरेव समस्तार्थक्रियासिद्धेः किन्तदतिरिक्तद्रव्यकल्पनयेति चेत्" । (२)न, तावन्मात्रेणैव समस्तार्थक्रियासिद्धेः किं रूपादिकल्पनयेत्यस्यापि वाचाटवचसोऽवकाशप्रसङ्गात् । "(३)प्रतीयमानत्वादिति चेत्" । तुल्यम् ।

---

विरोध इति चावयवित्वांशे बाधकमिति बोद्धव्यम् । निषिद्धत्वादिति । सहकारिसमवधानक्रमेणैवार्थक्रियासमर्थेनेन तद्विरहः प्रथमपरिच्छेदे निषिद्धः, रक्तारक्तविरोधो द्वितीये निषिद्ध इति । क्षणिकपरमाणुरूपेति । क्षणिकग्रहणं स्थिरत्वबाधकेनानाक्रान्तिमाह, परमाणुत्वग्रहणादवयवित्वबाधकेनानाक्रान्तिमिति मन्तव्यम् ।

गुणानां गुणिनां सम्बन्धाभावो गुणिनि बाधक(४) इत्याशङ्कते सम्बन्धेति । परिहरति असम्बन्ध इति । नात्र सम्बन्धाभावेन किञ्चिद्विधीयत इति भावः । सम्बन्धाभावे गुणगुणिनोः, कथं गुणवत्ता गुणिनः प्रतीयेतेति शङ्कते कथमिति । परिहरति तेषां तथोत्पादेति । तेषां गुणिनां तथा गुणवत्तयोत्पन्नत्वादिति(५) । चेतनाव-

(१) रूपादीनामुभयसिद्धत्वाल्लघुः क्लृप्तपरिग्रह इति किं गुणिनेति शङ्कते रूपादिभिरेवेति । तदतिरिक्तेति । गुणातिरिक्तेत्यर्थः ।

(२) प्रतिबंद्या समाधत्ते नेति । तावन्मात्रेण=गुणिमात्रेण । वाचाटो=जल्पाकः ।

(३) रूपादिकमेव सर्वत्र प्रतीयते न तद्विशिष्टमवयविद्रव्यमित्याशयेन गुणिनि बाधकमाह प्रतीयमानत्वादिति । प्रतिबन्द्यैव निराकरोति तुल्यमिति ।

(४) गुणसमवायाद्धि गुणी भवेत्स एव तु नास्तीति मिश्राः ।

(५) सम्बन्धं विनैव विशिष्टबुद्धिजनकत्वेनोत्पादादिति मिश्राः ।

एतेनालीकविषयतापि निरस्ता । "अभेदसाधनं किमिति चेत्" । किं तत् ? "सहोपलम्भनियम इति"। न (१)तस्य सहोपलम्भनियमस्यासिद्धेः, पीतशङ्खो-भ्रमादौ श्वेततयानुपलम्भेऽपि शङ्खोपलम्भात्। "नासौ ः किन्तु शङ्ख इव तैमिरिककेशवदिति चेत्"। (२)अहो वद्विद्वेषः यत्तैमिरिककेशाः करतलपरामर्शप्रतिनि-यतार्थक्रिययोरपायान्न सन्ति इति व्यवस्थापयति,

न। चेतनया सम्बन्धाभावेऽपि शरीरं चेतनावदिति भवतामङ्गीकार इति। एतेनैव बाधकाभावेनैवालीकविषयता निरस्तेत्याह एतेनेति। गुणिनोरभेदसाधनमेव बाधकं गुणिनीति शङ्कते अभेदसाधन-ते। बाधकं पृच्छति किन्तदिति। बाधकं शङ्कते सहेति। प्रयोगः—(३)यस्य येन सहोपलम्भनियमः न तत्तस्माद्भिद्यते यथै-चन्द्राद्द्वितीयचन्द्र इति, नियतसहोपलम्भश्च गुणेन गुणवान् अत-न्न भिद्यत इति। परिहरति नेति। गुणेन गुणिन इति शेषः। नासाविति ः शङ्खसदृशे शङ्खे भ्रान्तिरित्यर्थः। विद्वेष इति। रेककेशेन तुल्यन्यायत्वाभावेऽपि तद्वत् भ्रान्तत्वाभिधानस्य विद्वेष एव नि निबन्धनमिति। तुल्यन्यायत्वाभावमेव दर्शयति तैमिरिक-

(१) परस्परविषयप्रतीत्यविषयत्वस्येत्यर्थः। असिद्धौ हेतुमाह ते।

(२) तैमिरिककेशानां करतलपरामर्शस्य केशनियतार्थक्रिया-भावादसत्त्वमिह तु तदुभयमस्तीति कथं शङ्खासत्त्वमित्याशयेन घत्ते अहो इति। अत्र 'अत' इति पाठान्तरमसमीचीनमिव प्रति-। सन्तीत्यत्र 'सम्भवती'ति पाठान्तरम्। दोषप्रयुक्तपीतशङ्खज्ञान-शङ्खप्रापितदृष्टनिरूपार्थक्रिययोरसम्भवेऽपि शुभ्रताशुणानुपल-सहोपलम्भहेतुरसिद्ध इत्याशयः।

(३) अत्र गुणी न गुणाद्भिन्नः सहोपलम्भात् इति प्रतिज्ञाहेत्वव-सुबोध्याविति तौ न प्रदर्शितौ।

(४) शङ्कामवतारयति नासाविति। यः पीतत्वेनोपलभ्यत इत्यर्थः।

इह तु तत्सम्भवेऽपि शुभ्रतामात्रानुपलम्भादिति ।

"व्यापकत्वादिति चेत्" । वस्तुनोर्व्याप्तिरुपलम्भयोर्वा ? आद्ये न विप्रतिपत्तिः । (१)न च व्यापकानुपलब्धिमात्रेण व्याप्यतदुपलब्धी निवर्तेते, दहनानुपलब्धौ धूमतदुपलब्ध्योरपि निवृत्तिप्रसङ्गात् । (२)तत्रापि वा किं न परिकल्पयसि धूम इवासौ न धूम इति पावकवत्तानुपलब्धेरिति । तस्मान्न व्यापकानुपलब्ध्या व्याप्यतदुपलब्ध्योर्निवृत्तिः, किन्तु व्यापकनिवृत्तेः, सा (३)चात्राऽसिद्धेति वाच्यम्, तदेतत्तुल्यं प्रकृतेऽपि । उपलब्धेस्तु व्याप्तिरिहैव(४) भग्ना श्वैत्यानुपलम्भेऽपि शङ्खोपलब्धेरिति ।

शङ्कते व्यापकत्वादिति । न विद्वेषमात्राद्गुणिनोऽसत्त्वं ब्रूमः किन्तु गुणिनं प्रति गुणस्य व्यापकत्वात्, व्यापकानुपलब्धेर्व्याप्याभावोऽभिहित इत्यर्थः(५) । आद्ये न विप्रतिपत्तिरिति । गुणगुणिनोर्वस्तुनोर्व्याप्तौ न विप्रतिपत्तिः, किन्तु व्यापकनिवृत्त्यैव व्याप्यतदुपलब्ध्योर्निवृत्तिर्वक्तव्या न एकानुपलब्धिमात्रेण(६) । अत्र च श्वैत्यानुपलम्भेऽपि शङ्खोपलब्धेः प्रतिपाद्यत्वादुपलब्धिनिषेधः क्रियते,(७) व्याप्यनिवृत्तिनिषेधोऽप्युपलब्धिनिषेधौपयिकतया क्रियत इति मन्तव्यम् । तदेतत्तुल्यमिति । पीतशङ्खादिविभ्रमेऽपि श्वैत्यानुपलम्भेऽपि न शङ्खस्वरूपनिवृत्तिरिति भावः । उपलब्धेर्व्याप्तिरिति केवलं नेति, तेन श्वैत्योपलम्भनिवृत्तावपि शङ्खोपलब्धिनिवृत्त्यभावात् सहोपलम्भनियमस्या-

(१) उपलम्भयोर्व्याप्तिरिति पक्षोऽपि न सम्भवतीत्याह नचेति ।
(२) केवलधूमदर्शनस्थलेऽपि । उपहसति अत्रापीति मिश्राः ।
(३) पर्वतादौ । (४) धूमं दृष्टान्तीकृत्य शङ्खेऽप्यतिदिशति इहैवेति ।
(५) तथा च शुभ्रता शङ्खव्यापिका, प्रकृते तदुपलम्भनिवृत्तौ कथं शङ्खनिवृत्तिरिति भावः । (६) न केवलव्यापकानुपलब्ध्येत्यर्थः ।
(७) श्वैत्यानुपलब्ध्या शङ्खोपलब्धिर्न स्यादित्यापाद्यत इत्यर्थः ।

लम्भादित्युक्तम्। (१)"स्यादेतत् पीत एव शङ्ख उत्पन्न इति चेत्"। न, (२)पुरुषान्तरेण श्वेतस्यैवोपलब्धेः।

(३)नाप्यसम एव सहोपलम्भनियमो हेतुः, अनैकान्तात्-अभास्वरं हि रूपं भास्वरेण सह नियमेनोपलभ्यते ततो भिन्नश्चेति(४)। "देशाविच्छेद इति चेत्"। न, असिद्धेः, देहदेहिभ्यामनैकान्ताच्च।

सिद्धिरिति भावः। पीत एवेति। तेन श्वैत्यगुणकस्य शङ्खस्य श्वैत्यानुपलम्भेऽपि उपलम्भोऽसिद्ध इति भावः।

नाप्यसम एवेति। गुणगुण्युपलब्ध्योरुभयोरप्युभाभ्यां न साहित्यनियमः किन्तु असम एव, गुणोपलब्धेरेव गुण्युपलब्ध्या साहित्यनियमो हेतुर्न तु गुण्युपलब्धेर्गुणोपलब्ध्येति यावत्। गुणगुण्योर्देशाविच्छेद एवाभेदसाधनमिति शङ्कते (५)देशाविच्छेद इति। निराकरोति असिद्धेरिति। गुणस्य हि गुण्येव देशो गुणिनस्तु स्वावयवा एव देश इति भावः। अन्यतरसंसृष्टाकाशदेशवर्तित्वमेवेतरस्य देश इति चेत्तत्राह देहदेहिभ्यामिति। भिन्नत्वेनाभिमतयोर्विज्ञानरूपदेहिदेहयोरपि तादृग्देशाविच्छेदोऽविशिष्ट इति भावः।

---

(१) शङ्कते स्यादेतदिति। शुक्तिरजतस्थल इव प्रातिभासिकपीतगुणोत्पत्त्या व्यापकोपलब्ध्यैव व्याप्योपलब्धिरिति सहोपलम्भनियमसत्त्वाद्गुणभाव इत्याशङ्कार्थः।

(२) समाधत्ते पुरुषान्तरेणेति। इदमुपलक्षणम्-दोषापगमे कालान्तरेण तस्यैव नायं पीतः किन्तु श्वेत इति उपलब्धेः श्वैत्यानुपलम्भेऽपि शङ्खोपलब्ध्या न सहोपलम्भनियम इति भावः।

(३) एवं समसहोपलम्भनियमं दूषयित्वा गुणेन सहैव गुणिन अनुपलम्भेऽपि गुणिना सहैव गुणोपलम्भ इत्यसमसहोपलम्भनियमोऽपि गुणिनि बाधको नैवेत्याशयेनाह नाप्यसम एवेति।

(४) घटरूपमालोकरूपेण सहोपलभ्यते ततो भिन्नं चेत्यर्थः।

(५) घटरूपालोकरूपयोर्भिन्नदेशत्वात्सहोपलम्भेऽपि नानैकान्तिकत्वमिति शङ्कार्थः।

"न तयोरविच्छेदस्तदनुपलम्भेऽ(१)प्युपलम्भादिति चेत्" (२)तुल्यम्-रूपाद्यनुपलम्भेऽपि तद्वतामुपलब्धेः । "(३)तथापि न विपर्ययः कदापीति चेत्" । तुल्यम्— नहि देहानुपलम्भे देह्युपलम्भवद्देह्यनुपलम्भेऽपि देहस्योपलम्भसम्भवः । तव दर्शने प्रतिपत्तिनिष्पत्तिसामग्रीसाहित्यनियमेन च सहोपलम्भो वा देशाविच्छेदो वा स्यात्, नियमेन विरुद्धधर्माध्यासाद्भेदश्चेति को विरोधः ।

---

तदनुपलम्भेऽपीति । देहानुपलम्भेऽपि देहिन उपलम्भादित्यर्थः। (४)नहि विज्ञानानुसन्धानसमये नियमेन देहानुसन्धानमिति । तुल्यतामेव दर्शयति रूपाद्यनुपलम्भेऽपीति । तव दर्शन इति । विज्ञानात्मवादिनस्तव दर्शने देहविज्ञानकाले देहस्येव तद्विज्ञानस्यापि स्वयंप्रकाशस्योपलम्भसिद्धेरिति भावः(५) । किञ्च सहोपलम्भनियमदेशाविच्छेदयोः स्वरूपसिद्धावपि तयोरन्यथासिद्धिरित्याह प्रतिपत्तीति । प्रतिपत्तिसामग्रीसाहित्यनियमेन सहोपलम्भनियमः, निष्पत्तिसामग्रीसाहित्यनियमेन देशाविच्छेद इति । तथापि भेदस्य कुतः सिद्धिरित्याह विरुद्धधर्माध्यासादिति ।

( १ ) रविच्छेदानुपलम्भेऽपीति क० मु० पु० पाठो नारायणमते-ायुक्तः ।

( २ ) तर्हि पीतशङ्खादौ रूपानुलम्भेऽपि शङ्खोपलब्धेर्गुणगुणिनोरपि शाविच्छेदाभाव इत्याशयेन समाधत्ते तुल्यमिति ।

( ३ ) शङ्कते तथापीति । देहिनो गुणवत अनुपलम्भेऽपि देहस्य ;णस्योपलम्भ इति विपर्यासः कदापि न भवतीति शङ्कार्थः । यद्यपि णानुपलम्भेऽपि गुण्युपलम्भोऽस्ति तथापि गुण्यनुपलम्भे गुणानुपम्भोऽस्तीत्यभिप्रायेणाशङ्कते तथापीति मिश्राः ।

( ४ ) देहिनः स्वप्रकाशस्याहमिति उपलम्भकाले कुतो न देहोपम्भ इत्यत आह नहीति ।

( ५ ) देहानुपलम्भेऽपि देहिनो ज्ञानस्योपलम्भो न पुनर्ज्ञानस्यानुपम्भे देहस्योपलम्भस्त्वद्दर्शने त्वया देहोपलम्भस्य देहिनः स्वयंप्रकाशनोपलम्भनियमस्वीकारादित्यर्थ इति मिश्राः ।

"धर्मविरोध एव कोऽत्रेति चेत्" । तदुपलम्भेऽप्य-नुपलम्भः तदभिधानेऽप्यनभिधानं तन्निषेधेऽप्यनिषेध इत्यादि । नीलमुत्पलञ्चलतीत्यादौ च व्यावृत्तिभेदानि-राकरणे पूर्वक एव न्यायोऽनुसन्धेयः, (१)अन्यत्रोपा-धिभेदात् । अभेदे च धर्मधर्मिणोर्दूरादूरतया ग्रहणे

तदुपलम्भ इति । गुणिनः शङ्खस्योपलम्भेऽपि तद्गुणस्यो-पलम्भानुपलम्भाविरुद्धधर्माध्यासः, एवमुत्तरयोरपि द्रष्टव्यम् । इत्या-दिरित्यादिशब्देन तद्विधानेऽप्यविधानम्, क्वचित्स्थितावप्यस्थितिः, तदुत्पत्तावप्यनुत्पत्तिः, तन्नित्यत्वेऽप्यनित्यत्वम् इत्यादि सङ्गृहीतम्(२) । विरुद्धधर्माध्यासेनापि व्यावृत्तिभेद एवास्त्विति चेत् तत्राह (३)नील-मिति । नीलमुत्पलं चलतीत्यादौ चानीलादिव्यावृत्तिभेदो गुणगुण्या-द्युपाधिभेदमन्तरेण नोपपद्यते, उपाधिभेदाभावे हि व्यावर्त्यभेदाभावा-द्व्यावृत्तिभेदो न स्यादिति प्रथमपरिच्छेदे(४) एवोक्तो न्यायोऽनुसर्तव्य इति । इतश्च धर्मधर्मिणोर्नाभेद इत्याह अभेदे चेति । विदूर-वर्तिषु वृक्षादिषु प्रहणमदृश्यते, तेष्वेवाविदूरवर्तिषु पटु दृश्यते, एत-द्धर्मधर्मिणोरभेदे न सम्भवति धर्मिण्युपलब्धेऽपि धर्माणामुपलम्भानुपल-

(१) ननु किं सर्वत्र आनिगुणाक्रियानिबन्धन एव विशिष्टप्रत्यय-स्तथाच नित्यत्वानित्यत्वादिविशिष्टप्रत्ययाः कथं स्युरित्यत आहान्य-त्रेति । क्वचिदुपाधिकोऽपि विशिष्टप्रत्यय इत्यर्थः ।

(२) रूपाग्रहणेऽपि शङ्खग्रहणम् , शङ्खाभिधानेऽपि तद्रूपाद्यनभि-धानम्, शङ्खनिषेधेऽपि तद्रूपाद्यनिषेध इति एतत्सर्वं भेदे सत्येवोपप-द्यत इत्यर्थः ।

(३) ननु यत्र यत्र गुणानुपलम्भे गुण्युपलम्भस्तत्रयोच्यते तत्र गुणी शङ्खो न भासते किन्त्वशङ्खव्यावृत्तिमात्रम् , अन्यत्र तु सहोपल-म्भनियम एवातो न गुणगुणिनोर्भेद इत्यत आह नीलमिति मिश्राः ।

(४) विधिस्फुरणस्य पूर्वमपोहवादनिराकरणावसरे समर्थित-त्वादित्यर्थः ।

पट्वपटुनी कुतः। न च पुरुषभेदेन तथैवान्यस्योत्पादः, एकस्य द्वैरूप्याभावात् । न चान्योन्य(१) एवासौ, एकदेशतया तत्त्वेन प्रतिसन्धानात् । न च सा भ्रान्ता भिन्नदेशस्य, तथाभूतस्य प्रत्यासीदताप्यनुपलम्भात् । (२)न च निरालम्बन एव तदुपलम्भो, वृक्षादिदेशप्रतिनियमानुपपत्तेः । न चाधिपतिप्रत्ययत्वात्तस्येति युक्तम्,(३)अ-

म्भकृतत्वात्पटुत्वापटुत्वयोरिति भावः(४) । विदूराविदूरवर्तिषु पुरुषभेदापेक्षया वृक्षादेरर्थस्य पट्वपटुत्वयोत्पाद इति चेत्तत्राह नचेति । एकस्य वृक्षादेः पुरुषभेदेनापि द्वैरूप्यविरोधादिति । भिन्नावेव पट्वपटुप्रतिभासविषयावर्थाविति चेत् अत्राह न चान्य इति । दूरत्वदोषात्सादृश्याच्च एकदेशस्थतया एकत्वेन च भ्रान्त्या प्रतिसन्धीयत इति चेत् तत्राह न च (५)सेति । वृक्षादिदेशप्रतिनियमेति । नहि निरालम्बनस्योपलम्भस्य देशविशेषनियतयोत्पत्तौ हेतुरस्तीति । तस्य वृक्षादिदेशस्याधिपतिप्रत्ययत्वा(६)त्तन्नियततया तस्योत्पत्तिरिति चेत्तत्राह न चाधिपतीति । अत्र प्रत्ययशब्दः कारणपर्यायः, तेनाधिपतिप्रत्ययशब्देनाधिपतिरूपमालम्बनव्यतिरिक्तमिन्द्रियादिकारणमुच्यते अधिपतिप्रत्ययस्यालम्बनव्यतिरिक्तज्ञानहेतुषु प्रसिद्धः । अनुभवाना-

(१) नचान्य एवासौ इति पाठोऽत्र युक्तः । अथ वा भिन्न एवासावित्यर्थोऽयमपि पाठो युक्तः ।

(२) ननु तैमिरिककेशोपलम्भवन्निरालम्बनमेव पट्वपटुग्रहणमेष्यत आह नचेति। एवं सति वृक्षादिस्तद्विषयतया नोल्लिख्येतेत्यर्थः ।

(३) वासनाया निरपेक्षायाः कारणत्वाभ्युपगमेऽतिप्रसङ्ग इति तदुद्बोधकोऽनुभवो वाच्यः, स च न देशमुल्लिखतीति तदुद्बोधिता वासनापि न तमुल्लिखेदित्याह अनुभवानामिति ।अनुभवेनापि देशोल्लेखे स एव वृक्षादिदेशस्तत्र च स्पष्टास्पष्टग्रहणं च लिङ्गमित्याह उल्लेख इति

(४) दूरग्रहणेऽपाटवमल्पविषयत्वमदूरग्रहणे च पाटवं बहुविषयत्वं न स्यादभेदे इति मिश्राः । (५) एकदेशता-भ्रमविषय इत्यर्थः ।

(६) अनादिवासनामूलत्वात् ।

नुभवानां । तद्देशोल्लेखानुरोधात्, उल्लेखे वा स एवालम्बनप्रत्ययः तावन्मात्रानुबन्धित्वादालम्बनव्यवहारस्य ।

न च देशोऽस्त्वालम्बनं न तु वृक्षादिरिति साम्प्रतम् । अनुपलब्धविशेषतया देशदेशिनोरविशेषात् । न च दवीयांसोऽपि विशेषाः स्फुरन्त्येव न तु निश्चीयन्त इति युक्तम् । (१)नहि योगविमलाञ्जनधौतदृष्टेरन्यस्य ताराव्यूहगतयः प्रतिभान्तीति शक्यं प्रतिपादयितुम् ।

---

मिति । अनुभवानां तद्देशोल्लेखो दृश्यते, न चैतदधिपतिप्रत्ययत्वेऽनुपपन्नं भवति, आलम्बनप्रत्ययस्योल्लेखविषयत्वात्, तदाह उल्लेख इति ।

अस्तु तर्हि देश एवालम्बनं विदूरप्रत्ययस्य न तु वृक्षादिः, अत एकस्यैव वृक्षादेर्धर्मस्फुरणास्फुरणनिबन्धने पट्वपटुनी ग्रहणे भवत इत्येतदसिद्धमिति चेत् तत्राह न चेति । अनुपलब्धेति । धर्माग्रहनिबन्धनमपटुग्रहणं देशे वा देशिनि वेति न कश्चिद्विशेषः, तच्च देश एवात्रोदाहरणमस्त्विति भावः(२) । तदेवं दूरे धर्माग्रहणेऽपि धर्मिमात्रग्रहणादपटुत्वं ग्रहणस्य, धर्मसहितधर्मिप्रतिभासात्पटुत्वमिति(३) सिद्धं धर्मधर्मिणोर्भेदोऽस्तीति । ननु दूरस्था अपि विशेषा धर्माः स्फुरन्त्येव न तु निश्चीयन्ते, तेनैवापटुत्वं ग्रहणस्योपपद्यते, न तु धर्मासहितधर्मिमात्रग्रहणनिबन्धनमपटुत्वमिति न धर्मधर्मिणोर्भेदसिद्धिरिति चेत्, तत्राह न चेति । स्फुरणानुपपत्तिमाह नहीति । (४)अनिश्चयानुपपत्तिमाह अनि-

---

(१) समाधत्ते नहीति । दवीयसां विशेषाणां स्फुरणाङ्गीकारे योगिवत्सर्वेषां ताराव्यूहगतिप्रतिभानं स्यादतो दूरस्थविशेषस्फुरणमनुपपन्नमिति भावः ।

(२) देश इव देशिन्यपि वृक्षे धर्माग्रहणनिबन्धनमपटुग्रहणमस्त्विति तात्पर्यम् । (३) ग्रहणस्येति पूर्वान्वयः ।

(४) निर्विकल्पके गृहीतं न सविकल्पकेन विषयीक्रियत इत्यप्ययुक्तमित्याह अनिश्चयेति मिश्राः ।

अनिश्चयानुपपत्तेश्च—अनुभूतो ह्यात्मा न निश्चीयत इति हेतुर्वाच्यः(१)। "वासनानुद्भव इति चेत्"। न, निःशेष-विशेषवन्तं धर्मिणमुपलभ्य विदूरवर्तिनस्तदखिलस्मरणेऽपि अनुभवव्यापारा(२)नुसारिनिश्चयानुदयात्। तथापि चानुभवकल्पनायां सर्वः सर्वदा सर्वं जानाति न तु निश्चिनोतीति किं न स्यात्। "भ्रान्तिवशात्तद्विपरीतवि-शेषनिश्चयेऽनुभूतविशेषानिश्चय इति "चेत्"। न, अनु-

श्चयेति। विशेषविषयवासनानुद्भव एवानिश्चयहेतु(३)रिति शङ्कते वास-नेति(४)। परिहरति निःशेषविशेषवन्तमिति। अयमर्थः-समीपं गत्वा निःशेषविशेषविशिष्टतया धर्मिणमुपलभ्य पश्चाद्विदूरवर्तिनस्तदखिल-विशेषस्मरणेन संस्कारोद्बोधे सत्यपि अनुभवव्यापारानुसार्यपरोक्षनिश्चया-नुत्पादादिति(५)। तदनुरूपनिश्चयाऽभावेऽप्यनुभवकल्पनायामतिप्रसङ्गः स्यादित्याह तथाऽपीति। विशेषानिश्चये हेत्वन्तरं शङ्कते भ्रान्तीति। भ्रान्तिवशादनुभूतविशेषविरुद्धविशेषानिश्चयेऽनुभूतविशेषनिश्चयोऽयुक्त इति। परिहरति नेति। अन्यथाऽनुभूतस्यान्यथा निश्चये सर्वेष्वपि निश्चयेष्व-

(१) सूक्ष्मत्वेन दवीयसोऽप्यात्मविशेषस्य स्फुरणमनुभवो भवति निश्चयस्तु न जायत इत्युक्तौ कारणं वाच्यमित्यर्थः।

(२) अनुभवव्यापारः साक्षात्त्वम्, तेन निकटे गृहीतसकलविशे-षस्य धर्मिणो दूरेऽपि तदनुभवबलात् साक्षात्कारि ज्ञानं स्यात् त्वया चक्षुषः प्राप्यकारित्वानभ्युपगमात् सामग्र्यन्तरस्य च सद्भावा-दित्यर्थः।

(३) आत्मरूपविशेषविषयवासनानुद्भव आत्मविशेषानिश्चयका-रणमित्यर्थः।

(४) ननु निर्विकल्पकानन्तरं यत्र संज्ञास्मरणं भवति तत्र तद्वि-शिष्टज्ञानमुत्पद्यते, न च सर्वत्रेत्याह वासनेति मिश्राः।

(५) सकलधर्मविशिष्टधर्मिणः सन्निधौ यथा स्फुटग्रहणात्प्रत्यक्षा-नुभवनिश्चयस्तथा दूरत्वे नेति भावः।

भववैपरीत्ये निश्चयस्य सर्वत्रानाश्वासप्रसङ्गात्। (१)यत्र च विपरीतस्याप्यनिश्चयस्तत्र का वार्ता, यथा पराचीनैर्भागैरर्वाचीनानां संयोगविभागयोरिति ॥

इति आत्मत्तत्त्वविवेके तृतीयः परिच्छेदः ॥

## अथ चतुर्थपरिच्छेदे चतुर्थी विप्रतिपत्तिः ।

"(२)अस्तु तर्हि नैरात्म्यमनुपलब्धेरिति चेत्" । न,

नाश्वासप्रसङ्गादिति(३)। का वार्तेति । विशेषानिश्चये को हेतुरित्यर्थः । अत्रोदाहरणमाह यथेति । विदूरवर्तिनो भावस्य पराचीनैर्भागैरर्वाचीनानां भागानां संयोगवियोगरूपयोर्विशेषयोर्विपरीतो विशेषो निश्चयगोचर इति प्रतीतिविरुद्धम् । तथाच संयोगरूपविशेषनिश्चयो न भवतीति विपरीतविशेषनिश्चयोऽप्यनुभूतविशेषानिश्चये न हेतुरिति ॥

अत्रिगोत्रशेखरकृष्णाचार्यसूनुना नारायणेन विरचितायामात्मतत्त्वविवेकदीपिकायां तृतीयः परिच्छेदः समाप्तः ॥ ३ ॥

अनुपलम्भो वेति चतुर्थं विकल्पं दूषयितुं शङ्कते अस्तु तर्हीति । यदि क्षणभङ्गुरादिभिर्विकल्पैर्नैरात्म्यं न सिद्ध्यति तर्ह्यनुपलब्धेरेव नैरात्म्यमस्त्वित्यर्थः । दूषयति नेति । नहि सर्वादृष्टिरात्मनि निश्चेतुं शक्यते,

(१) किञ्च परभागार्वाग्भागयोः संयोगविभागौ प्रत्यक्षाप्रत्यक्षवृत्तितया द्युवनस्पतिसंयोगविभागवदप्रत्यक्षौ तत्रापि त्वया ग्रहणमभिधीयते विपर्ययश्च नास्ति तत्कथं न विनिश्चय इत्याह यत्र चेति मिश्राः ।

(२) अत्रात्मा नास्त्यनुपलब्धेः शशविषाणवदिति प्रयोगो द्रष्टव्यः ।

(३) अनुभवानन्तरं विपरीतनिश्चयश्चेत्तदा तवाऽनुभवमात्रप्रामाण्यवादिनः क्वापि समाश्वासो न स्यात्, शुक्तेर्निर्विकल्पकं न भवत्येव किन्तु स्मृतरजतस्य धर्मीन्द्रियसन्निकर्षाद्विपरीतनिश्चय एवोत्पद्यत इति भाव इति मिश्राः ।

**सर्वादृष्टेश्च सन्देहात् स्वादृष्टेर्व्यभिचारतः । "(१)दृश्यत्वविशेषणान्नैवमिति चेत्" । न, तदसिद्धेः । "परोपगमसिद्धेरदोष इति चेत्" । न, स्वतन्त्रसाधनत्वात् । यदि च परः सहसैव नैवमभ्युपगच्छेत् ननु साधनमिदं मूर्च्छेत्(२), यदि च (३)परादृष्टिमवधूय दृश्यत्वमभ्युपगच्छेत् एव-**

अतः सा सन्दिग्धासिद्धेति(४) । व्यभिचारत इति । देशान्तरादिवर्तिनि स्वरूपायोग्ये वा स्वादृष्टेर्व्यभिचारिणीति(५) । दृश्यत्वविशिष्टायाः दृष्टेर्न व्यभिचाराशङ्केति शङ्कते (६)दृश्यत्वेति । तदसिद्धेरिति । कदाचिद्दृष्टिगोचरजातीयस्य हि दृश्यत्वं निश्चेतुं शक्यते, भवतस्त्वात्ममात्रस्यैवाभावान्न दृष्टिगोचरजातीयता, अत आत्मनो दृश्यत्वमसिद्धमिति । शङ्कते परोपगमसिद्धेरिति । परो ह्यात्मसद्भाववादी दृश्यत्वमभ्युपगच्छति, अतस्तदभ्युपगमसिद्धेन दृश्यत्वेन विशेषणं युक्तमिति । दूषयति नेति । प्रसङ्गसाधने हि पराभ्युपगमः शरणं न स्वतन्त्रसाध(७)नेऽपीत्यभिप्रायः । स्वतन्त्रसाधनेऽपि पराभ्युपगमसिद्ध एवाङ्गत्वे को दोष इति चेत् तत्राह यदि चेति । यदि च पराभ्युपगत्यैव स्वतन्त्रसाधने-

(१) दृश्यत्वविशिष्टानुपलब्धिरसत्त्वसाधिकेत्यभिप्रायेणाशङ्कते दृश्यत्वेति ।　　(२) स्वरूपासिद्धं स्यादित्यर्थः ।

(३) नैयायिकमतेनादर्शनं विहाय दृश्यत्वमङ्गीकृत्य परदृश्यत्वे सति अनुपलब्धेरिति हेतुं कुर्यात्, तदापि दृष्टिं विना दृश्यत्वासम्भवादनुपलब्धिरूपो हेतुरसिद्ध इति भावः । नारायणमतेन त्वत्र 'परो दृष्टिं' इति पाठः सरलतयाऽन्वेतुं शक्यः ।

(४) सकलदार्शनिकमते आत्मा नास्तीति निश्चेतुमशक्यत्वात्सर्वादृष्टिस्तत्र सन्दिग्धासिद्धेत्यर्थः ।

(५) बौद्धीयादृष्टिरूपानुपलब्धिस्तु स्वरूपायोग्ये दूरवर्तिनि वा पदार्थेऽसत्त्वाव्यभिचारिण्यतो न नैरात्म्यसाधिकेत्यर्थः । पुरुषविशेषानुपलब्धिमादाय व्यभिचारमाह स्वादृष्टेरिति मिश्राः ।

(६) ननु योग्यानुपलम्भेन प्रत्यक्षत एवात्माभावो न गृह्यते इत्याशङ्कते दृश्यत्वेति । अनुमानपक्षे दोषमाह तदसिद्धेरिति मिश्राः ।

(७) आत्मा नास्ति अनुपलब्धेरिति स्वतन्त्रसाधनपक्षे इत्यर्थः ।

मपि सम्भवेत्, न चैवं शक्यं, तस्य तदुपहितरूपत्वादिति संक्षेपः । विस्तरस्त्वसन्तोऽक्षणिका इतिवदूहनीयः ।

"अथात्मसद्भावे किम्प्रमाणम्" । (१)प्रत्यक्षमेव ता-

ऽपि हेतुत्वं स्यात्तदा साधनं दूषयितुकामः परो यदि सहसैव साधनं नाभ्युपगच्छेत्तदैव(२) साधनमुच्छिद्येत, अतः स्वतन्त्रसाधनेऽपि न पराभ्युपगतिमात्रेणैव हेतुत्वं युक्तमिति । किञ्च यदि पराभ्युपगतिमात्रेणैव दृश्यत्वाभ्युपगमनं न शक्यं विशेषणं स्वीक्रियते(३) तदा तद्दृष्टिव्याप्यस्यैव दृश्यत्वाद्दृष्टिरपि तेनाभ्युपेतेत्यदृष्टिरसिद्धा स्यादित्याह यदि च पर इति । नचैवमिति । दृष्ट्यवधूननेन दृश्यत्वाभ्युपगमनं न शक्यं तस्य दृश्यत्वस्य दृष्ट्युपाहितरूपत्वादिति । अयञ्च दूषणसङ्क्षेपः, विस्तरस्तु यथा क्षणिकत्वानुमानव्यतिरेकदृष्टान्ते असन्तोऽक्षणिका(४) इत्यत्राश्रयासिद्धिः, आभासप्रतिपन्नस्य च प्रामाणिकव्यवहारानङ्गत्वं चेत्यादिर्दर्शितः, तथाऽत्रापि ऊहनीय इत्याह इति संक्षेप इति । इतिः प्रकारे, एवंप्रकारः सङ्क्षेप इति ।

ननु मा भूवन्नात्मनि क्षणभङ्गादयो बाधकाः, नैतावता सिध्यत्यात्मा बाधकवत्साधकाभावे सन्देहस्यैवावकाशात्, अतः साधके सत्येव सद्भावनिश्चयः, तच्च साधकं प्रमाणं किमित्याह(५) अथेति ।

(१) समाधत्ते प्रत्यक्षमेवेति । आगमानुमानयोरप्यात्मनि सत्त्वे प्रत्यक्षस्योपजीव्यत्वात्तदेव प्रथममुक्तम् ।

(२) अत्रैवकारः सम्पातायात इति प्रतिभाति ।

(३) पराभ्युपगतत्वे सतीति विशेषणमनुपलब्धिरूपहेतौ उक्तस्वतन्त्रसाधारणनुमाने वाधत इत्यर्थः ।

(४) क्रमयौगपद्यरहितत्वादिति हेतुरत्र स्वयं द्रष्टव्यः ।

(५) पूर्वपक्षीत्यर्थः ।

वत्, अहमिति विकल्पस्य प्राणभृन्मात्रसिद्धत्वात्(१)। (२)न चायमवस्तुकः सन्दिग्धवस्तुको वा, अशाब्दत्वाद्-प्रतिक्षेपाच्च। न च लैङ्गिकः,(३)अननुसंहितलिङ्गस्यापि स्वप्रत्ययात् । (४)न च स्मृतिरियम्, अननुभूते तदनुपपत्तेः। "अनादिवासनावशादनादि(५)रयमवस्तुको विकल्प" इत्यपि न युक्तम्, नीलादिविकल्पसाधारण्यात्, इह तु वासनामुपादायानाश्वासे प्रमाणान्तरेऽपि कः समाश्वासो यतो नीलादिविकल्पेषु समाश्वासः स्यात् ।

अशाब्दत्वादिति।शाब्दलैङ्गिकविकल्पा हि सामान्यमात्रविषयत्वात्तस्य चावस्तुत्वादवस्तुकाः,वस्तुत्वविप्रतिपत्तेः सन्दिग्धवस्तुका वेति परे मन्यन्ते तेषां मतेऽपि नायं विकल्पस्तादृशः अशाब्दत्वादिति । स्वमतेऽपि नास्य तथाविधत्वमित्याह अप्रतिक्षेपाच्चेति । नापि लैङ्गिकतया अवस्तुकतेत्याह न च लैङ्गिक इति । स्मृतेरपि स्वगोचरतया सामान्यमात्रगोचरत्वादवस्तुकत्वं परमतेऽभिप्रेत्य स्मृतित्वमपि निराकरोति नापि स्मृतिरियमिति । प्रमाणान्तरेऽपीति । चाक्षुषादिविकल्परूपप्रमाणान्तरेऽपीत्यर्थः ।

(१) इच्छाद्यात्मसाधकहेतूनामनुसन्धानाभावेऽपि अहमित्यादिस्वानुभवसिद्धत्वादात्मन इति भावः ।

(२) ननु शशविषाणवदहमिति प्रत्ययः स्यादित्यत आह नचेति । बौद्धैः शब्दादिविकल्पानामवस्तुकत्वाभ्युपगमादाह अशाब्दत्वादिति । सन्दिग्धवस्तुकतायामाह अप्रतिक्षेपादिति नायं स्थाणुरितिवन्नाहमिति प्रतिक्षेपाभावादित्यर्थ इति मिश्राः ।

(३) यद्यपि लैङ्गिकमसत्ख्यातिरूपमेव तन्मते तथापि हेत्वन्तरमाह।ननुसंहितेति ।

(४) नापिस्मृति रित्यत्र नारायणसंमतः पाठः ।

(५) आधुनिकवासनाया मूलानुभवसापेक्षत्वादनादिरित्युक्तम् ।

(१)तस्माद्वासनामात्रवादं विहायागन्तुकमपि किञ्चित्कारणं वाच्यम्, तच्चाप्तानाप्तशब्दौ वा लिङ्गतदाभासौ वा प्रत्यक्षतदाभासौ वेति। (२)तत्र यथा प्रथममध्यमप्रकाराभावान्नीलविकल्पश्चरमं कल्पमालम्बते तथाहमिति विकल्पोऽपि, तत्रायं प्रत्यक्षपृष्ठभावित्वे साक्षादेव सवस्तुकः। तदाभासे तु मूलेऽस्य पारम्पर्यात् सवस्तुकतेति। न च बाह्यप्रत्यक्षनिवृत्तावेव निर्मूलत्वम्,

---

आगन्तुकमपीति। अनागन्तुकवासनातोऽतिरिक्तमागन्तुकमपीत्यर्थः। प्रत्यक्षपृष्ठभावित्व इति। प्रत्यक्षं यस्य पृष्ठभावि मूलमिति बहुव्रीहिः। साक्षादेवाव्यवधानेन स्वयमेव वस्तुविषय इत्यर्थः। पारम्पर्यादिति। प्रत्यक्षाभासजेऽपि विकल्पे निर्विकल्पकस्य वस्तुविषयत्वात्तज्जन्येऽपि विकल्पपारम्पर्येण सवस्तुकतेति(३)। नन्वशब्दलैङ्गिकविकल्पस्यास्मरणस्य समूलत्वं बाह्यप्रत्यक्षत्वेन व्याप्तमिति तन्निवृत्तौ समूलत्वमपि निवर्तेत इत्याशङ्क्याह न च बाह्येति। बुद्धीति। बुद्धिमात्रात्मवादिनस्तव बुद्धिविकल्पस्यापि तथाभावप्रसङ्गादित्यर्थः(४)। तव तु(५) स्वसंवेदनत्वाद्बुद्धेर्बुद्धिविकल्पस्य स्वसंवेदनं मूलम् इहाप्यहमिति-ज्ञातृविकल्पे मानसं प्रत्यक्षं मूलमस्माकमिति न कश्चिद्विशेष इत्याह

---

(१) एवं वासनामात्रजन्यत्वेनाहम्प्रत्ययस्यावस्तुकत्वं निराकृत्य सवस्तुकत्वं साधयितुं पीठमारचयन्नाह तस्मादिति। नीलाद्युपप्लवभयादित्यर्थः। कारणं वाच्यमिति। अहमिति विकल्पस्येत्यादिः।

(२) तत्रेति। तेष्वित्यर्थः। नीलमिति। प्रत्यक्षज्ञाने यथा आप्तानाप्तशब्दलिङ्गतदाभासानामनवकाशात्प्रत्यक्षतदाभासावेवागन्तुकं कारणं तथाऽहमिति विकल्पेऽप्यनयोरेव सम्भव इत्यर्थः।

(३) निर्मूलत्वापत्तिरित्यर्थः।

(४) विकल्पस्य निर्विकल्पकजन्यत्वे नीलादिविकल्पवत् सवस्तुकता, प्रत्यक्षाभासमूलत्वेऽपि परम्परया मूलभूतं प्रत्यक्षमभ्युपेयम्, प्रमापूर्वकत्वादारोपस्येत्यर्थः।

(५) क्षणिकविज्ञानात्मवादिनो बौद्धस्य मते त्वित्यर्थः।

बुद्धिविकल्पस्यापि तथात्वप्रसङ्गात् । (१)तत्र स्वसंवेदनं मूलमिहापि मानसप्रत्यक्षमिति न कश्चिद्विशेषः । "शरीरादिवस्तुकोऽपि भविष्यतीति चेत्" । न, निरुपाधिशरीरेन्द्रियबुद्धितत्समुदायालम्बनत्वेऽतिप्रसङ्गात् स्वसम्बन्धिनि शरीरादावयं स्यादिति हि (२)वाच्यम्, तत्र कः (३)स्वार्थ इति वचनीयम् ।

"(४)अनन्यत्वं स्वत्वं सर्वभावानाम्, तथा च यदा तेनैव तदनुभूयते तदा प्रत्येतुः प्रत्येतव्या(५)दव्यतिरेकादहमिति स्यात्, अतएव घटादयो न कदाचिदनन्या-

---

तत्रेति । नन्वहमितिविकल्पस्य सवस्तुकता, किन्तु शरीरेन्द्रियादिवस्त्वेव तस्य विषय(६) इत्याशङ्कते शरीरादीति । परिहरति नेति । निरुपाधीति । निर्विशेषणशरीरबुद्धिसमुदायालम्बनत्वे परशरीरेऽपि परस्याहम्प्रत्ययप्रसङ्गात् । स्वसम्बन्धिनीति । स्वत्वविशेषणविशिष्टे शरीरादावयमहंप्रत्ययः स्यादिति वाच्यमिति ।

प्रत्येतुरिति । परस्य हि बुद्धिमात्रात्मवादिनो बुद्धिरेव प्रत्येतीति

---

(१) ननु विज्ञानात्मनः स्वसंवेदनसिद्धत्वान्न बुद्धिविकल्पो निर्मूलस्तव तु अहमिति विकल्पे प्रमाणाभावान्निर्मूलत्वं स्यादत आह तत्रेति । तत्र-विज्ञानात्मवादे ।

(२) परशरीरे परस्याहम्प्रत्ययापत्तिवारणायेत्यर्थः ।

(३) स्वीय इति चिन्तनीयम् पाठान्तरम् । स्वपदेनात्मैववाच्यस्तथाच सिद्धं नः समीहितमित्यर्थः ।

(४) शङ्कते अनन्यत्वमिति । तद्भिन्नाभिन्नत्वमित्यर्थः । अन्योन्याभावाभाववत्त्वमिति मिश्राः । एवंसति स एवातिप्रसङ्ग इत्याह तथाचेति । प्रत्येता यत्र प्रत्येतव्यः तत्राहमितिप्रत्यये नातिप्रसङ्ग इत्यर्थ इति मिश्राः ।

(५) अनातिरेकादिति पाठान्तरम् । अतएव=प्रत्येतुर्व्यतिरेकादेव ।

(६) शरीर एवाहङ्कार इति प्रत्ययेन गौरत्वादिसामानाधिकरण्येनाहंत्वग्रहादित्यर्थः ।

नुभवितृका इति न कदाप्यहमास्पदमिति चेत्" । (१)एवन्तर्हि स्वन्मतेऽप्यहंप्रत्ययः शरीरादावारोपरूप एव ततः प्रत्येतुरन्यत्वात् । (२)"बुद्धौ मुख्य एवेति चेत्" । न, तस्याः क्रियात्वेनानुभूयमानायाः भिन्नस्य कर्तुरहं छिनद्मीतिवदहं जानामीत्यनुभवात् । "नीलादिप्रत्येतव्याकारवत्प्रतिपत्त्राकारोऽपि प्रतिपत्तेरेवायमात्मा तथा भासत इति चेत्" । तर्हि प्रत्येतव्यप्रतिपत्त्राकारयोस्तुल्ययोगक्षेमत्वात् सिद्धं नः समीहितम् ।

---

भावः । (३)तथाच (!)शङ्कते बुद्धावपीति । बुद्धिरेव प्रत्येति सैव न प्रत्येतव्य इति तत्र मुख्य एवाहम्प्रत्यय इति । परिहरति नेति । यदि हि बुद्धिपर्यायं ज्ञानमेवाहम्प्रत्ययविषयः स्यात्, तदाहं ज्ञानमिति प्रत्ययः स्यात्, न चैवमतः क्रियातो भिन्नस्यैव तत्कर्तुश्छिदिक्रियाकर्तुरहं छिनद्मीतिवदहं जानामीति अनुभवादिति । (४)शङ्कते नीलादीति । योगाचारनये यथा नीलादिप्रत्येतव्याकारः प्रतिपत्तेरेवात्मा, तथा पतिपत्त्राकारोऽपि तस्य स एवाकारो भासत इति न ततो भिन्नस्य तत्कर्तुः सिद्धिरिति(५) । सिद्धं नः समीहितमिति । प्रत्येतव्याकारस्य प्रतिपत्तेर्भेदो द्वितीयपरिच्छेदे समर्थित इति तत्तुल्यन्यायस्य

---

( १ ) समाधत्ते एवन्तर्हीति । प्रत्येतुः प्रत्येतव्याद्व्यतिरेकस्यैव मुख्याहम्प्रत्ययप्रयोजकत्वे ।

( २ ) अत्र नारायणमतेनापिकारोऽधिकः पठनीयः । अहन्ताधिकरणक्रियात्वेन भासमाना बुद्धिर्नाहङ्कारास्पदं भवितुमर्हतीत्याह तस्या इति ।

( ३ ) अत्र तथाचेति प्रतीकाविवरणग्रन्थः परिभ्रष्ट इति प्रतिभाति ।

( ४ ) ननु नीलादिबुद्ध्या यथा नीलादिराकारस्तथा प्रतिपत्तेराकारोऽहम्त्वं प्रतिपत्तौ भासत इति शङ्कत मिश्राः ।

( ५ ) बाह्यार्थशून्यत्ववादियोगाचारमते यथा नीलादिर्ज्ञानाकारस्तथा ज्ञात्राकारोऽपि ज्ञानरूप इति पूर्वपक्षिहार्दम् ।

"अस्तु स्वोपादानमात्रमिति चेत्"। न, तत्प्रतिभासे तदाकारस्यापि(१) प्रतिभासप्रसङ्गात्, आकारमन्तरेणाकारिणोऽनवभासात्। "प्रवृत्तिसन्तानान्यो बुद्धिसन्तानः प्रतिपत्ता, यं तमालयविज्ञानमाचक्ष्महे इति चेत्"। अस्तु तर्हि प्रवृत्तिविज्ञानोपादानमनादिनिधनः प्रतिपत्ता, स किं सन्तन्यमानज्ञानरूपः तद्विपरीतो वा इति चिन्ताऽवशिष्यते निःशेषिता चासौ प्रागिति(२)।

---

प्रतिपन्नाकारस्यापि तत्त्वतो भेदः सिद्ध एवेति भावः। तत्र शङ्कते अस्तु स्वोपादानमात्रमिति(३)। यत एव भेदः ततः स्वस्योपादानं ज्ञानान्तरमेव प्रतिपन्नहंप्रत्ययस्य विषय इति। परिहरति नेति। न च निराकारं ज्ञानमस्ति सर्वज्ञानस्य सविषयकत्वाद्विषयोल्लेखस्यैव तदुल्लेखिन आकारत्वादिति भावः। प्रवृत्तीति। प्रवृत्तिसन्तानो नाम सालम्बनबुद्धिसन्तानः, आलयविज्ञानं नाम निरालम्बनं संविन्मात्रं प्रवृत्तिसन्तानस्योपादानन्तेन तस्यैव प्रतिपत्तुरहमास्पदत्वात्, तत्प्रतिभासे तदाकारप्रतिभासोऽनुपपन्नः तस्य निराकारत्वादिति भावः। (४)अनादिनिधन इति। प्रवृत्तिसन्तानस्यानादिनिधनत्वस्वीकारात्तदुपादानात्तस्याप्यनादिनिधनत्वमिति। प्रागेवेति। क्षणभङ्गनिराकरणेन प्रथमपरिच्छेद एव साकल्येन कृतेति।

---

(१) तद्विषयस्यापि। अनवभासादिति। निर्विषयज्ञानस्यासम्भवादित्यर्थः।

(२) ज्ञानरूपात्मनः क्षणिकत्वनिराकरणेनैव ज्ञानातिरिक्तोऽनादिनिधनः स्थिरस्तदाश्रयः सन्तन्यमानज्ञानातिरिक्त आत्मेति सिद्ध्यतीति भावः। अत्र नारायण मतेन 'प्रागेवेति' पाठो द्रष्टव्यः।

(३) अहंप्रत्ययविषय इति शेषः।

(४) आलयविज्ञानमुपादानपदेनोच्यते, तस्य चाहन्त्वमात्रमाकार इति न नीलादिभानप्रसङ्ग इत्याहानादिनिधन इति मिश्राः।

"कः पुनरत्र न्यायः" । प्रतिसन्धानम्(१) । "तथ्यमिदमित्यसिद्धम्, अतथ्यञ्च विरुद्धम्, अविशिष्टमनैकान्तिकमिति चेत्" । (२)न, हेत्वर्थानवबोधात्, नहि प्रत्यभिज्ञानमात्रमत्र विवक्षितम् । "तत्किम्"? कार्यका·

कः पुनरत्रेति । स्थिर आत्मनि प्रत्यक्षसिद्धेऽपि नानुमानेन विना परितोषः, अतः किमत्रानुमानमिति । परिहरति प्रतिसन्धानमिति । प्रतिसन्धानमनुमानमत्र लिङ्गमित्यर्थः । एतच्च प्रतिसन्धानस्वरूपं प्रश्नपूर्वकमुत्तरत्र स्फुटीकरिष्यत इति । ननु तथ्यं वा प्रतिसन्धानं हेतुरतथ्यं वा अविशिष्टं वा ? न प्रथमः, असिद्धत्वात्, नहि क्षणिकज्ञानात्मवादिन आत्मप्रतिसन्धानस्य तथ्यत्वं सिद्धमिति । न द्वितीयः, विरुद्धत्वात्, अतथ्यस्य हि ज्वालादिप्रतिसन्धानस्यानेकज्वालादिविषयत्वात्, साध्यस्यैकविषयत्वस्य विपक्ष एवानेकविषयत्वे प्रतिसन्धानं विरुद्धमेवेति । नापि तृतीयः, अनेकान्तिकत्वात्, अविशिष्टस्य हेतुत्वे भवत्पक्षेऽप्येकविषये घटादिप्रतिसन्धानेऽनेकविषये ज्वालादिप्रतिसन्धाने च हेतोर्वृत्तेरनैकान्तिकत्वमिति शङ्कते तथ्यमिति । परिहरति नेति । कार्यकारणयोरिति । कार्यकारणज्ञानयोरेकस्मिन्देवदत्तादिसन्धाने प्रतिनियमः(३), न तु शिष्याचार्यधियोः कार्यकारणभूतयोरिव भिन्नसन्तानवर्तित्व(४)मित्यर्थः । सोऽपि ज्वालादिप्रत्यभिज्ञाने विपक्ष एव वृत्तेर्वि·

(१) दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्यादिना गौतमेनोक्तं योऽहं घटमद्राक्षं सोऽहं स्पृशामीत्याद्यनुसन्धानमेव स्थिरैककर्तात्मसाधकमित्यर्थः । प्रतिसन्धानमनुमानं तथा च प्रयोगः—अहमिति प्रत्ययालम्बनं स्थिरं तादृरूप्येण प्रत्यभिज्ञायमानत्वाद्घटादिवदिति मिश्राः ।

(२) समाधत्ते नेति । योऽहमित्यादिना प्रत्यभिज्ञानमात्रस्यैकात्मसाधकत्वं नोक्तं येनोक्तदोषावसरः स्यादित्यर्थः ।

(३) व्यवस्था । (४) प्रतिसन्धानपदेन विवक्षितमिति शेषः ।

रणयोरेकसन्तानप्रतिनियमः । "(१)सोऽपि विरुद्ध इति चेत्" । एषोऽपि न विवक्षितो नः । "कस्तर्हि"? पूर्वापरधियामेककर्तृकतया विनिश्चयः? "(२)एषोऽपि तासामुपादानोपादेयभावेनाप्युपपद्यत इति चेत्" । न, स्थैर्यस्थितौ तदभावात् । क्षणिकत्वेऽपि नैकजातीयत्वे सति तदुत्पत्तिरेवोपादानोपादेयभावः, शिष्याचार्यधियामपि तथाभावप्रसङ्गात्(३) । "भेदाग्रहे सतीति

रुद्ध इति शङ्कते सोऽपीति । परिहरति एषोऽपीति । पूर्वापरधियामिति । यथा य एवाहं घटमन्वभूवं स एवाहं स्मरामीति । यथा वा य एवाहं घटमज्ञासिषं स एवाहं जानामीति । अत्र प्रथमत एव विवक्षितहेतुस्वरूपानिर्देशस्तु(४) एकदेश्यभिमतहेतुस्वरूपदूषणपूर्वकं विवक्षितं व्यापायितुमिति बोद्धव्यमिति । एषोऽपीति । भिन्नसन्तानवर्तिनीनां धियामुपादानोपादेयभावाभावादेककर्तृकत्वाविनिश्चयाभावः न तु कर्त्रैकत्वाभावात्, अत एकस्मिन्नपि सन्तानेऽनेककर्तृकत्वकृतोऽयम्, किन्तु स उपादानोपादेयत्वकृत इति भावः । स्थैर्येति । भावानां स्थैर्यस्य साधितत्वात्, स्थिरपक्षे च स्थिरस्यैवात्मनो धियः प्रत्युपादानत्वान्न तासां परस्परमुपादानोपादेयत्वमित्यर्थः । क्षणिकत्वपक्षेऽप्युपादानोपादेयत्वं दूषयति क्षणिकेति । तदुत्पत्तिः कार्यकारणभाव इत्यर्थः । तथाभावेति ।

(१) शङ्कते सोऽपीति । कार्यकारणयोरेकसन्तानप्रतिनियमोऽपि एकत्वरूपसाध्याभाववति ज्वालादिप्रत्यभिज्ञाने विपक्षे वृत्तित्वाद्विरुद्ध इति भावः ।

(२) शङ्कते एषोऽपीति । पूर्वापरज्ञानानामेककर्तृकत्वनिश्चयोऽप्युपादानोपादेयभावाङ्गीकारेणैव ज्ञानानां सम्भवतीति किन्तदाश्रयस्थिरैकात्मकल्पनयेति शङ्कार्थः ।

(३) एकजातीयत्वे सति आचार्यज्ञानोत्पत्तेः शिष्यविज्ञानेषु सत्त्वात्तासामप्युपादानोपादेयभावः स्यात्तथा चातिव्याप्तिरित्यर्थः ।

(४) पूर्वापरज्ञानानामेककर्तृकत्वनिश्चयरूपैकात्मसाधकहेतुस्वरूपानिर्देशस्तु एकदेश्यभिमतं यत् कार्यकारणयोरेकसन्तानप्रतिनियमरूपहेतुस्वरूपं तत्खण्डनार्थमित्यर्थः ।

चेत्" । न, प्रकृतेऽपि तदभावात् । "शरीरभेदाग्रहस्ता- वदस्तीति चेत्" । न, भिन्नजन्मज्ञानाव्याप्तेः, अनुपल- ब्धपितृकेणापि बालेनातिप्रसङ्गात्, घटकपालक्षणयो- रतथाभावप्रसङ्गाच्च ।

"एकाधारतया तथा नियम इति चेत्" । (१)न,

उपादानोपादेयत्वप्रसङ्गादिति । भेदाग्रहे इति । भेदाग्रहेण विशिष्टं पूर्वो- क्त(२)मुपादानोपादेयत्वलक्षणम् , न च शिष्याचार्यधियां भेदाग्रह इति भावः । तदभावादिति । एकसन्तानवर्तिनीनामपि भेदाग्रहस्याभावा- दित्यर्थः, तत्रापि पूर्वापरधियां भेदो गृह्यत एवेति(३) । शरीरेति । आत्मस्थानीयानां धियामुपाधिभूतस्य शरीरस्यैकसन्ताने भेदाग्रहस्ताव- दस्ति, ततस्तु द्वारेण धियामपि(४) भविष्यतीति भावः । एवम्भूतस्य लक्ष- णाव्यापित्व(५)माह भिन्नेति । भिन्नजन्मवर्तिनीनां धियामुपादानोपादेय- भूतानामपि शरीरभेदाग्रहाभावात्पूर्वोक्तलक्षणस्य तद्विषयाव्याप्तेरिति । अतिव्याप्तिमाह अनुपलब्धेति । पितापुत्रधियां भिन्नसन्तानवर्तित्वा- न्नोपादानोपादेयभावः । अथवा अनुपलब्धपितृकेणापि बालेन पितृशरी- रज्ञानाच्च तस्मात्स्वशरीरस्य भेदो गृह्यते इति लक्ष्यव्यतिक्रमेणापि लक्षण- वृत्तेरतिव्याप्तिरिति । पुनरपि विषयभेदेनातिव्याप्तिमाह घटकपाले- ति । घटकपालक्षणयोर्भेदाग्रहाभावेनोपादानोपादेयताभावप्रसङ्गाच्चेत्यर्थः ।

एकाधारतानियम एवोपादानोपादेयभाव इति(६) शङ्कते एकेति ।

---

(१) समाधत्ते नेति । वास्तवस्यैकाधारस्याभावात् इत्यन्वयः । काल्पनिकस्येति । तन्तुघटयोः कपालपटयोश्च कदाचिदेकाधारताप्र- सम्भवादित्यर्थः । उपादानोपादेयभावशून्ययोरपि देहबुद्ध्योः समाना- धारत्वाभिमानात्तयोरपि एकाधारत्वादुपादानोपादेयभावः स्यादित्य- तिप्रसङ्गार्थो वेदितव्यः । (२) एकजातीयत्वे सति तदुत्पत्तिरूपम् ।

(३) क्षणिकत्वाज्ज्ञानानामित्यर्थः । (४) भेदाग्रह इति शेषः ।

(५) भेदाग्रहाविच्छिन्नैकजातीयत्वे सति तदुत्पत्तिरूपोपादानोपा- देयभावलक्षणस्याव्याप्तिमित्यर्थः ।

(६) घटकपालयोरेकाधारतासम्बन्धसम्भवात्कार्यकारणभावे स- त्युपादानोपादेयभाव इत्यर्थः ।

तस्य वास्तवस्य क्षणिकत्वपक्षेऽपि विषमसमयानां क्ष-णानामभावात्, काल्पनिकस्य त्वतिप्रसङ्गकत्वात्, शरीरबुद्ध्योरपि समानदेशताभिमानात् ।

(१)एतेन "अभ्रान्तसमतैकावसायः प्रकृतिविक्रिये वा ततौ हेतुफलस्योपादानोपादेयलक्षणमिति" निरस्त-म् । (२)काष्ठस्य तु प्रकृतेर्विकृतिरङ्गार इति कुतो नि-श्चितं भवता, यावता वह्नेरेवायं विकारः किं न स्यात् । "वह्निसम्बन्धिकाष्ठादेव (३)तदुत्पत्तेरिति चेत्" । न,

विषमसमयानां क्षणानामेकाधारत्वेऽनेककालक्षणावस्थायिस्थिरसद्भावः स्यात्, न च सर्वक्षणिकत्वपक्षे स्थिरसद्भाव इत्यभिप्रायवानाह तस्ये-ति । अतिप्रसक्तत्वमेव दर्शयति शरीरेति । अनुपादानानुपादेय-भूतयोरपीति शेषः ।

उपादानोपादेयभावस्य परोक्तलक्षणान्तरमप्युक्तन्यायेन निरस्तमि-त्याह एतेनेति । ततौ सन्ततावित्यर्थः । सन्ततौ हेतुपूर्वकस्य फल-स्याभ्रान्तसमतैकावसाय उपादानोपादेयलक्षणम् । लक्षणान्तरमाह प्रकृ-तिविक्रिये इति । प्रकृतिविकारभाव इत्यर्थः(४) । अभ्रान्तसमतै-कावसाय इत्यस्यार्थः स्वयमेव प्रश्नपूर्वकं विकल्पयता व्याख्यास्यत इति । प्रकृतिविकृतिभाव एव काष्ठाङ्गारादीनां निश्चेतुमेव न शक्यते इत्याह

(१) एतेनेति । घटकपालाद्यव्यापकत्वेन लक्षणयोः परस्पराक्रान्ता-व्यापकत्वेन वा, "विज्ञानसन्ततौ अभ्रान्तसमतैकावसायो प्रकृतिविकृ-तिभावो वा कार्यकारणस्योपादानोपादेयलक्षणमित्यपि" निरस्तं वेदि-तव्यमित्यर्थः ।

(२) तत्र प्रकृतिविकृतिभावरूपमुपादानोपादेयत्वं विज्ञातुमशक्य-त्वादसम्भवीत्याशयेनाह काष्ठस्येति ।

(३) अभ्रान्तसमतया एकावसाय एकाकारावसायस्सभागस-न्ताने उपादानोपादेयलक्षणम्, विभागसन्ताने तु प्रकृतिविकारभाव इति मिश्राः ।

(४) अङ्गारोत्पत्तेः, काष्ठविकारोऽङ्गार इति ज्ञायत इत्यर्थः ।

काष्ठसम्बन्धेन वह्नेरेव तदुत्पत्तिरित्यपि किं न कल्प्येत। "(१)पार्थिवं पार्थिवोपादानमिति निश्चयादिति चेत्"। कुत एतत्। (२)"सभागेषु (ल)क्षणेषु तथा दर्शनादिति चेत्"। एतदपि कुतः।(३)"अभ्रान्तसमतैकावसायादिति चेत्"। अथ कथं समता नाम? यदि साजात्यं सादेश्यं वा तत् प्राङ्निरस्तम्। एकसन्तानत्वञ्चेत्तदपि तदुत्पत्तिमात्रञ्चेत्, निमित्तनैमित्तिकयोरपि तथाभावप्रसङ्गः। (४)उपादानोपादेयभावश्चेत्, कथं तेनैव तद्व्यवस्थाप्येत।

काष्ठस्येति। यावता यत इत्यर्थः। सभागेषु सदृशेषु, काष्ठेभ्यः काष्ठान्तरेष्वेवोत्पद्यमानेष्वित्यर्थः। यदि साजात्यमिति। तदा शिष्याचार्यधियोरपि साजात्येनातिव्याप्तिः। वास्तवस्य सादेश्यस्याभावः, आभिमानिकस्य तु शरीरबुद्ध्योरतिप्रसक्तिरिति तु प्रागेवैतन्निरस्तमित्यर्थः। तदुत्पत्तिमात्रमिति। कार्यकारणमात्रमित्यर्थः। निमित्तेति। निमित्तनैमित्तिकयोरग्न्यङ्गारयोरपि प्रकृतिविकारभावप्रसङ्गादिति(५)। कथं तेनैवेति। उपादानोपादेयलक्षणत्वेन समतोपन्यस्ता, तत्र चोपादानोपादेयभाव एव समतेत्युच्यमाने लक्ष्यलक्ष-

(१) शङ्कते पार्थिवमिति। अङ्गार पार्थिवमतः पार्थिवात्काष्ठादेव तदुत्पत्तिर्न वह्नेरिति शङ्कार्थः। सजातीयमेवोपादानमित्यभिमानः।

(२) शङ्कते सभागेष्विति। सभागसन्ततौ तावदुपादानोपादेयभावं प्रति साजात्यमेव तन्त्रमतो विसभागसन्ततावप्येतदेव तन्त्रं कल्पनीयमित्याशङ्कार्थः।

(३) आक्षिपति अभ्रान्तेति। घटो घटोऽयमिति अनुगतावसायस्तेन तत्र साजात्यं निश्चितमित्यर्थः।

(४) ननु तदुत्पत्तिशब्देनोपादेयभाव एव विवक्षितस्तथाच कुतोऽतिप्रसङ्ग अत आहोपादानेति।

(५) पुञ्जात्पुञ्जोत्पत्तिस्तथा च पूर्वरूपस्वरूपं प्रत्युपादानत्वं रसं प्रति निमित्तत्वमिति त्वदभ्युपगमरीत्या रूपस्यापि रसं प्रत्युपादानत्वं स्यादित्यथ इति मिश्राः।

"तज्ज्ञानेषु तत्प्रतिसन्धानमेवोपादानोपादेयलक्षणमिति चेत्"। न, आत्माश्रयप्रसङ्गात् ।

"तद्योग्यतेति चेत्" । सैव केति चिन्त्यम् । "(१)शक्तिविशेष इति चेत्"। स तावन्न प्रतिक्षणनियतः, यथाहि तेन तत्कर्तव्यं तथा तादृशापि तत्कर्तव्यमित्यपि नियम एव, अन्यथा तेन तत्कृतमित्यपि न निश्चीयेत क्षणस्य दुरुन्नेयत्वात्, (२)तथा च निरीह जगज्ज्ञाणयोरभेद एव प्रसज्यत इत्यर्थः(३) । तज्ज्ञानेष्विति । प्रकृते ज्ञानविषये तावत्प्रतिसन्धानान्तेष्वेवोपादानोपादेयभाव इति प्रतिसन्धानमेवोपादानोपादेयलक्षणमित्यर्थः । आत्माश्रयेति । एककर्तृकत्वमन्तरेणापि प्रतिसन्धानमुपादानोपादेयभावतोऽप्युपपद्यत इति वदता उपादानोपादेयत्वमेव प्रतिसन्धानमित्युच्यमाने प्रतिसन्धानमुपपद्यत इत्युक्तं स्यादिति ।

प्रतिसन्धानयोग्यतैव तर्हि उपादानोपादेयभावलक्षणमिति शङ्कते तद्योग्यतेति । शक्तिविशेषस्य प्रतिक्षणनियतत्वे तज्जातीयासु शिष्याचार्यबुद्धिष्वतिप्रसङ्गः स्यादित्यतिप्रसङ्गापादनार्थं प्रतिक्षणनियतत्वं दूषयति स तावदिति । तादृशापीति । तज्जातीयेनापीत्यर्थः । 'तद्वा तादृग्वेति न कश्चिद्विशेष' इति न्यायेनेत्यभिप्रायः । अविशेषमेव दर्शयति अन्यथेति । दुरुन्नेयत्वादिति । अन्वयव्यतिरेकाभ्यां हि कारणत्वनिश्चये सति हि जगति प्रवृत्तिः, न च क्षणरूपया(त्वयो)स्या

(१) बुद्धीनां स तादृशः शक्तिविशेषो येन प्रतिसन्धाननियमः कार्यकारणभावे सत्युपपद्यते, शिष्याचार्यधियोश्च स नास्तीति न प्रतिसन्धानमित्याशयेन शङ्कते शक्तिविशेष इति ।

(२) तथा चेति । प्रतिव्यक्तिकार्यकारणभावस्यानागतकार्यव्यक्तेरनुपस्थित्या गृहीतुमशक्यत्वात्सामान्यरूपेण तदग्रहे इष्टानिष्टोपायताग्रहस्य कारणस्याभावात्क्वचिदपि प्रवृत्तिनिवृत्ती न स्यातामित्यर्थः ।

(३) तथाचात्माश्रयदोष इत्यर्थः ।

द्येत। आकस्मिकश्च कार्यस्य तादृशत्व(१)मापद्येत, तथा च न नियम उपपद्येत। नापि प्रतिसन्ताननियतो(२), विशेषाभावात्।

(३)अस्तु वैजात्यमिति चेत्"। न, अनुपलब्धिबाधितत्वात्। नहि शिष्याचार्यनीलधियोर्मात्रयापि जातिकृतं विशेषमुपलभामहे। "(४)अदृश्यत्वादयमदोष इति चेत्"। न, दृश्यसमवायिन्या जातेरदृश्यत्वानुपपत्तेः, (५)उपपत्तौ वा धूमादावपि अवकाशप्रसङ्गात्। (६)तथा चावान्तरसत्त्ववदवान्तरधूम एव वह्नेः कार्यः स्यात् इति शङ्काकलङ्कितत्वान्न (च) धूमसामान्यमग्निसोऽस्तीति निरीहं जगदापद्येतेति। किञ्च कारणजातिप्रयुक्ता कार्यजातिः, तत्र कारणजातेरप्रयोजकत्वे कार्यजातेराकस्मिकत्वमापद्येतेत्याह आकस्मिकं चेति। आकस्मिकत्वे च कस्यचिदेव काचिदेव जातिरिति जातिप्रतिनियमो न स्यादित्याह(७) तथा चेति। न प्रतिक्षणनियतः नापि जातिनियतः, किन्तु प्रतिसन्ताननियतः, ततश्च शिष्याचार्यबुद्धिषु नातिप्रसङ्ग इति चेत तत्राह नापीति। सन्तानान्तरनीलबुद्धिभ्यः सन्तानान्तरनीलबुद्धेर्विशेषाभावादित्यर्थः। अथका-

(१) नियतजातीयत्वम्।

(२) शक्तिविशेष इति शेषः।

(३) शङ्कते अस्त्विति। वैजात्यमेव प्रतिसन्धानयोग्यताऽस्त्वित्यर्थः। समाधत्ते नानुपलब्धीति। यदि वैजात्यं स्यादुपलभ्येत नोपलभ्यतेऽतो नास्तीति भावः। वैजात्याभावेऽपि प्रतिसन्धानदर्शनाच्च नोक्तयोग्यतोपादानोपादेयलक्षणमित्याह नहीति।

(४) शङ्कते अदृश्यत्वादिति। शिष्याचार्यधियोरदृश्यत्वे विशेषसत्त्वेऽप्यदर्शनान्नोक्तदोष इत्यर्थः। (५) दृश्यवर्तिजातेरदृश्यत्वे।

(६) दृश्यधूमेऽप्यदृश्यजातिस्वीकारे को दोष इति चेत्तत्राह तथाचेति।

(७) धूमजातीयं वह्निजातीयजन्यमिति नियमो न स्यादित्यर्थ इति मिश्राः।

गमयेत् । "(एवमेतत्) आद्यस्यैव तथाभावादिति चेत्" न, तत्रापि शङ्कायास्तदवस्थत्वात् ।

तस्मात्कारणवैजात्ये प्रमाणसिद्धे कार्यस्य सौसादृश्ये(१)ऽप्यवान्तरजातिभेदः कल्प्यते, हेतुवैजात्यस्य फलवैजात्यम्प्रति प्रयोजकत्वात्, (२)अप्रयोजकत्वे तस्याकस्मिकत्वप्रसङ्गात् । कारणसाजात्येऽपि कार्यस्य वैजात्यं सहकारिवैजात्ये पर्यवस्यतीति युक्तमुत्पश्यामः (३) ।

शेति । अदृश्यजात्यवकाशप्रसङ्गादित्यर्थः । आद्यस्यैवेति । अग्निक्षणानन्तरवर्तिन आद्यस्य धूमक्षणस्यैवाग्निजन्यत्वं तदुत्तरधूमक्षणानान्तु धूमजन्यत्वमेवेति (४)धूममात्रस्याग्निजन्यत्वमित्यर्थः । (५)तत्रापीति । आद्यक्षणेऽप्यवान्तरजातिमाश्रित्यैवाग्निजन्यत्वमिति शङ्कायास्तदवस्थत्वादिति।

ननु यदि दृश्यसमवायिष्वदृश्यजातिर्नाभ्युपगम्यते कथन्तर्हि तृणारणिजन्येष्वग्निष्वदृश्यावान्तरजातिस्वीकारस्तत्राह तस्मादिति । तत्रापि नातीन्द्रिया जातिः स्वीक्रियते, किन्तु सौसादृश्येन तिरस्कृता कार्यजातिः कारणवैजात्येन प्रमाणसिद्धेन व्यज्यत इत्यर्थः । तस्येति । तस्य सर्वस्य कार्यवैजात्यस्याकस्मिकत्वप्रसङ्गादित्यर्थः । ननु यदि कार्यवैजात्यं कारणवैजात्यप्रयुक्तमिष्यते कथन्तर्हि सेवाध्ययनतुल्यत्वे फलवैजात्यमत आह (६)कारणेति । सर्वत्र सामग्रीवैजात्यमेव कार्यवैजात्यप्रयोजकम्,

(१) समानत्वेऽपि ।

(२) अत्रैव विपक्षे दण्डमाहाहेतुकत्व इति मिश्रसम्मतं पाठान्तरम् ।

(३) सहकारिवैजात्यप्रयुक्तमिति युक्तमालोचयाम इत्यर्थः ।

(४) परम्परासत्वात्सर्वस्य धूमस्याग्निजन्यत्वमुच्यते नतु वस्तुत इति पूर्वपक्षार्थः ।

(५) आद्योऽपि धूमः पिशाचादेव किं नेत्याशङ्कायास्तत्रापि सम्भवादित्याह तत्रापीति मिश्राः ।

(६) नन्वात्ममनःसंयोगजन्यमपि ज्ञानसुखादि कथं विजातीयमित्यत आह कारणेति मिश्राः । इन्द्रियविषयादिसहकारिप्रयुक्तन्तद्वैजात्यमित्यर्थः ।

अन्यथा-प्रकृते परलोकोऽपि न सिद्ध्येत् अचेतनोपादानमपि ज्ञानमवान्तरजातीयं स्यात् , अचेतनमप्यवान्तरजातीयमुपादानं स्यात्, दृश्यजात्यभेदेऽपि किञ्चिदेव निमित्तं भविष्यति-इति शङ्कायाः समुत्थापयितुं शक्यत्वादिति ।

"अस्तु तर्हि सहकारिभेदान्नियम इति चेत्" । स

तच्च क्वचिदुपादानकारणवैजात्येन क्वचित्सहकारिवैजात्येन भवतीत्यर्थः(१)। अन्यथेति(२) । दृश्येष्वदृश्यवैजात्याभ्युपगमे भवत्पक्षे परलोको न सिद्ध्येत । अपि शब्दोऽनुमानासिद्धिसमुच्चयार्थः(३) । परलोकासिद्धिमेव दर्शयति अचेतनेति । विज्ञानस्य विज्ञानान्तरपूर्वकत्वनियमे हि(४) देहान्तरविज्ञानस्यापि देहरूपपरिणतभूतोपादानत्वं परित्यज्य ज्ञानान्तरोपादानत्वमेवन्तस्यापीत्यनेन न्यायेन ज्ञानसन्तानस्याविच्छेदात् जन्मान्तरलक्षणपरलोकसिद्धिर्न स्यात् , अदृश्यावान्तरजात्यभ्युपगमे तु न स नियमः(५) सिद्ध्येत् , विज्ञानावान्तरजातीयस्याचेतनभूतोपादानस्यापि सम्भवात् , अचेतनावान्तरजातीयस्य विज्ञानोपादानत्वसम्भवाच्च, तथा दृश्यजात्यभेदेऽपि किञ्चिदेवावान्तरजातीयनिमित्तं भवेदिति शङ्कासम्भवाच्चेति ।

(६)अस्तु तर्ह्येककर्तृकत्वनिश्चयनियमः(७) सहकारिभेदेनैवोपपद्यतामिति शङ्कते अस्तु तर्हीति । परिहरति स एवेति । पूर्वापर-

(१) तथाच सेवाध्ययनादेस्तुल्यत्वेऽपि बुद्ध्यादिसहकारिवैजात्येन फलवैजात्यमिति न दोष इत्यर्थः ।

(२) वैभाषिकं प्रत्याहान्यथेति मिश्राः ।

(३) धूमादेर्विजातीयतया सामान्यमुखव्याप्तेरसम्भवादित्यर्थः ।

(४) नियमे हि-नियम एव ।

(५) स नियमः-विज्ञानस्य ज्ञानान्तरपूर्वकत्वनियमः ।

(६) अतिप्रसङ्गापादनेन भग्नः परः प्रतिसन्धाननियामकं शिष्याचार्यबुद्धिलक्षणं शङ्कतेऽस्तु तर्हीति । (७) प्रतिसन्धान इत्यादिः ।

एवैकः कर्तेति गीयते । "अथैक एव कर्ता न तु तादृक्सहकारिपरम्परेति कुतो विशेषादिति चेत्" । न, तत्कर्तृत्वं भिन्नकर्तृकेभ्यो व्यावर्तते, न तु (१)तादृक्सहकारित्वमित्यतो विशेषात् । (२)"कुतश्चिदेवमपि स्यादिति चेत्" । ननु स एव विशेषश्चिन्त्यते । स च तत्स्वभावत्वं वा तज्जातीयत्वं(३)वा तत्सहकारित्वं वा तादृक्सहकारित्वं वेत्यतो नातिरिच्यते । तत्र प्रथमोऽसम्भवी, द्वि-

धियोरेककर्तृकत्वनिश्चयहेतुः(४) सहकारिभेदस्तत्ताद्विषय एकः कर्तैव परिशिष्यत इत्यभिप्रायः । तमेवातिशय(५)माविष्कर्तुं पृच्छति अथेति । एक एव व्यक्तिरूपेण न जात्या, कर्तैव न तु सहकारिमात्रमित्यर्थः । (६)उभयव्यतिरेकं क्रमेण दर्शयति न तु तादृगिति । एकजातीयक्षणिकसहकारिपरम्परेत्यर्थः । विशेषं दर्शयति तत्कर्तृत्वमिति । सम्प्रतिपन्नाभिन्नकर्तृकाभ्यः शिष्याचार्यबुद्धिभ्यः प्रतिसन्धानरहिताभ्यो व्यावर्तमान एव प्रतिसन्धाननियमे सहकारी वक्तव्यः, स च एक एव कर्तेत्यतो विशेषादित्यर्थः । कुतश्चिदिति । यतः कुतश्चिदेव विशेषात्प्रतिसन्धाननियम उपपद्यते इत्यर्थः । अनिर्धारितरूपं न परीक्षकव्यवहाराङ्गमिति मत्वा स एव विशेषो निर्धारणाय चिन्त्यत इत्याह नन्विति । तत्स्वभावत्वमिति । पूर्वापरधियामेकस्वभावत्वमित्यर्थः । असम्भवीति । नहि पूर्वापरधियामत्यन्तभिन्नानामेकस्वभा-

---

(१) समानजातीयक्षणिकसहकारित्वमित्यर्थः ।

(२) सजातीयक्षणिकसहकारिपक्षेऽपि यतः कुतश्चिद्विशेषात्प्रतिसन्धाननियमः स्यादित्याशयेनाशङ्कते कुतश्चिदिति ।

(३) बुद्धिसन्तानजातीयत्वम् । तत्सहकारित्वं बुद्धिसन्तानेऽप्येकमात्रसहकारिसापेक्षत्वम् । तादृगिति । दृष्टसहकारिजातीयत्वं वेत्यर्थः ।

(४) प्रतिसन्धाननियामक इत्यर्थः ।

(५) एककर्तृकरूपसहकारिभेदातिशयमित्यर्थः । सिद्धेऽपि प्रतिसन्धातरि तदभेदसिद्धिः कथमिति शङ्कते अथेति मिश्राः ।

(६) सजातीय-सहकारिमात्रोभयभेदमित्यर्थः ।

तीयोऽतिप्रसङ्गकः, चतुर्थे नियमकाभावः, (१)तृतीय एव परिशिष्यते गत्यन्तराभावादिति।

अथवा सम्भवन्नपि नायमुपाधिः, तत्र तावन्मात्रस्यानिबन्धनत्वात्, तथाहि (२)सर्वज्ञः स प्रत्ययानेककर्तृकतया प्रतिसन्धत्ते न वा? आद्ये तत्प्रतिसन्धानादेव प्रतिसन्धातुरेकत्वं सिद्धम्, ज्ञानाद्भेदश्च। धियामस्थैर्यस्य सर्वैरेव प्रतीतेः, प्रतिसन्धातुः क्षणिकतायाः सर्वज्ञेनाप्यनाकलनात्(३)। अथ न प्रतिसन्धत्ते, न तर्हि

वस्त्वं सम्भवतीति। **अतिप्रसङ्गक इति**। (४)शिष्याचार्यधीष्वपि प्रतिसन्धानप्रसङ्गक इति। **नियामकाभाव इति**। नहि तादृक्सहकारिपरम्पराभिन्नकर्तृकेभ्यः सम्प्रतिपन्नेभ्यो व्यावर्त्य क्वचिदेककर्तृकत्वाभावेऽपि एककर्तृकतया विनिश्चयं नियन्तुं शक्नोतीति(५)।

अथ कार्यकारणभूतानां पूर्वापरधियामेकस्वभावत्वसम्भवेऽपि नास्य(६) प्रतिसन्धानं प्रत्युपाधित्वं—प्रयोजकत्वं सम्भवतीत्याह **अथवेति**। **तत्रेति**। एककर्तृकत्वप्रतिसन्धान उक्तविशेषणविशिष्टकार्यकारणभावमात्रस्यानिबन्धनत्वादित्यर्थः। अनिबन्धनत्वमेव दर्शयति **तथाहीति**। **सर्वज्ञ इति**। अत्र सर्वज्ञोदाहरणप्रयोजनं स्वयमेव दर्शयिष्यति 'तर्हि किं सर्वज्ञस्यापी'त्यादिना। **ज्ञानाद्भेदश्च** प्रतिसन्धातुः सिद्ध इत्यर्थः(७)। भेदसिद्धिश्च विरुद्धधर्माध्यासादित्याह **धियामि**-

(१) तत्सहकारित्वरूपविशेषपक्ष एव।

(२) सर्वज्ञ इति। बौद्धाभिमतस्स सर्वज्ञस्सुगतो प्रत्ययानेककर्तृकत्वेन प्रतिसन्धत्ते न वेत्यर्थः।

(३) प्रतिसन्धातुः क्षणिकत्वं च प्रतिसन्धानानुपपत्त्या नैव सम्भवतीत्याशयः। (४) समानजातीयास्वित्यादिः।

(५) तथा च चैत्रदृष्टेऽपि मैत्रस्मरणप्रसङ्ग इत्यर्थः।

(६) उपादानोपादेयभावस्य।

(७) योऽहमन्वभवं सोऽहं स्मरामीति अनुभवस्मरणयोः कर्त्रभिन्नत्वेनैव स्फुरणादिति भावः।

कार्यकारणभावमात्रनिबन्धनं प्रतिसन्धानम्(१)। न ह्यस्ति सम्भवो—यदन्वयेऽपि यत्स्थानन्वयस्तत्तावन्मात्रनिबन्धनम्—इति। "(२)प्रतिसन्धत्ते न तु सत्यं तत्प्रतिसन्धानमतो न तावन्मात्रादेककर्तृकत्वसिद्धिरिति चेत्"। तत्किं सर्वज्ञस्यापि विपर्ययः।

"आहार्योऽपि न दोषावह इति चेत्"। निबन्धनाभेदेऽपि कथमेक आहार्योऽन्यस्तु स्वरसवाहीति वाच्यम्। (३)"भेददर्शनादर्शनाभ्यामिति चेत्"। न, प्रवृत्तिविज्ञानानां भेदस्यासर्वज्ञैरपि दर्शनात्। "विषया एव

---

ति(४)। आहार्य इति। न सर्वज्ञस्य स्वरसवाहिनी भ्रान्तिः किन्तु स्वयमभ्रान्तोऽपि भ्रान्तिमाहार्य(५) तदनुकूलं व्यवहरतीति भ्रान्तिमूलविशेषदर्शनेन न सर्वज्ञत्वाभावदोष इत्यर्थः। भेददर्शनेन प्रतिसन्धातुर्ज्ञानस्याभेददर्शनं सर्वज्ञस्याहार्यः, तददर्शनादसर्वज्ञस्य स्वरसवाहीति। प्रवृत्तीति। द्विविधं हि बौद्धानां ज्ञानं प्रवृत्तिज्ञानालयज्ञानभेदेनेति, तत्र प्रवृत्तिविज्ञानानां भेदाग्रहोऽसर्वज्ञस्यापि नास्तीत्यर्थः, तथाहि प्रवृत्तिज्ञानमिति नीलपीतादिविषयाकारोल्लेखि ज्ञानमिष्यते, तेषाञ्च भेदोऽसर्वज्ञैरपि दृश्यत एवेति। विषया एवेति। नीलपीतादिज्ञानेषु विषय-

---

(१) अन्वयव्यभिचारादित्यर्थः। नन्वेवं दण्डादिरपि घटादकारणं स्याद्व्यभिचारादत आह नहीत्यादिना। एकभावकारणकत्वान्वयव्यभिचारस्यापि कारणताखण्डकत्वात्।

(२) ज्वालादिप्रतिसन्धानादिवत्प्रतिसन्धानमन्यत्रामिति शङ्कते प्रतिसन्धत्त इति। तावन्मात्रात्सत्यप्रतिसन्धानमात्रात्। समाधत्ते तत्किमिति। सर्वज्ञस्यापि भ्रमे को भवन्तं प्रत्यस्तस्य विशेष इत्याशयः।

(३) शङ्कते भेदेति। विज्ञानानां भेददर्शी सर्वज्ञोऽसर्वज्ञस्तु न तथेति सर्वज्ञस्याहार्यः स्वरसवाही चासर्वज्ञस्येति शङ्कार्थः।

(४) ज्ञानाद्भेदज्ञानमाह धियामिति। अनुभवमज्ञानिर्णामस्यती तत्त्वेनैव ज्ञानाभावादित्यर्थ इति मिश्राः। (५) लोकसिद्धां भ्रान्तिमाक्षिप्य।

भिन्नाः प्रतिभान्ति न बुद्धय इति चेत्" । न, (१)तासामपि भेदानिश्चयात् , (२)विषयभेदाप्रथनेऽपि ज्ञानान्यात्वदर्शनात् । यदि च भेदग्रहेऽपि बुद्धिमात्रेण तदग्रहोऽभेदारोप उपयुज्यते, पार्थिवतया वृक्षात् काष्ठं काष्ठादङ्गारस्ततो भस्माप्यभेदेन प्रतिसन्धीयेत, न चैवम् ।

(३)"स्यादेतत् , आलयभेदाग्रहात् प्रतिसन्धानमिति चेत्" । न, (४)स ह्यहमास्पदं प्रवृत्तिविज्ञानादन्य एव

---

भेद एव स्फुरति(५) नतु ज्ञानभेद इति । विषयभेदाप्रथन इति । एकस्मिन्नेव विषयेऽभ्यस्यमानानां ज्ञानानां स्वरूपभेदस्यापि दर्शनादित्यर्थः । तत्रापि बुद्धित्वाकारेण भेदाग्रहोऽभेदारोप उपयुज्यत इति चेत्तत्राह यदि चेति । (६)एवं सति वृक्षकाष्ठाङ्गारभस्मनामप्यभेदप्रतिसन्धानप्रसङ्ग इत्यर्थः ।

आलयादिति(७) । अत्रालयाद्भेदाग्रहः कस्येत्यपेक्षायां यावत्सम्भवमर्थो द्रष्टव्यः । स्वालयस्यैव वा प्रवृत्तिज्ञानानामपि चेति(८) । अयमर्थो दूषणावसरे स्पष्टीभविष्यति । अहमास्पदेति । अहमा(९)

---

( १ ) बुद्धीनामपि ।

( २ ) धारावाहिकादौ विषयभेदप्रथनं नास्ति तथापि बुद्धीनां भेदो गृह्यत इत्यत आह विषयेति ।

( ३ ) ननु प्रवृत्तिविज्ञानानां भेदाभानेऽप्यहमित्याकाराळयविज्ञानानां भेदाग्रहादभेदारोपः स्यादित्याशङ्कते स्यादेतदिति ।

( ४ ) आलयो हि । अत्र नारायणमतेन 'अहमास्पदग्रहाति' इति समस्यन्तं पाठान्तरं द्रष्टव्यम् ।

( ५ ) असर्वज्ञानामिति शेषः । तथा च बुद्धिभेदग्रहो विषयभेदग्रहेणान्यथासिद्ध इति शङ्कातात्पर्यम् । (६) उत्तरार्थमाह एवंसतीति ।

( ७ ) अत्र 'आलयभेदाग्रहात्' इति, आलयेति वा प्रतीकग्रहणं युक्तम् । ( ८ ) भेदाग्रहादिति शेषः ।

( ९ ) स हीत्यस्यार्थोऽयं द्रष्टव्यः । वर्तमानानागते आदिपदार्थः । अन्यत्सुगमम् ।

वा स्यात् तदन्तःपातिकादाचित्कानेकाहंप्रत्ययरूपो वा? न तावदाद्यः, (१)न ह्यहमहमिकया मिथः स्वतन्त्रं सन्तानद्वयमनुभूयते, सत्यपि वा परस्परमनुपादानोपादेयस्वभावान्न परस्परप्रत्याकलितार्थानुसन्धानबन्धः, तथात्वे वा चैत्रमैत्रादिष्वपि प्रसङ्गः(२)। उभयोर्वोभयोपादानत्वे एकमप्यनेकाश्रयमिति किमपराद्धमवय-

---

भूतादिकादाचित्कानेकाहंप्रत्ययावगाहिप्रवृत्तिसन्तानादन्य एव वा स्यात्, तदन्तःपातिकादाचित्कानेकाहंप्रत्ययरूपो वेति चेति। अहमास्पदमिति तु पाठे व्यक्त एवार्थः(३)। सत्यपि वेति। सत्यपि वा सन्तानद्वये समानसन्ततिज्ञानामेवोपादानोपादेयभावाभ्युपगमा(त)त् सन्तानद्वयस्य प्रतिसन्धाननिबन्धनस्य परस्परमुपादानोपादेयभावस्याभावान्न परस्परावगतार्थप्रतिसन्धानसिद्धिरिति। उपादानोपादेयभावाभावेऽपि प्रतिसन्धानाभ्युपगमेऽतिप्रसङ्गः स्यादित्याह तथात्वे वेति। अथ परस्परावगतार्थप्रतिसन्धानाभावेप्युभयोरुपादानोपादेयत्वमिष्यते, तत्राह उभयोरपीति(४)। प्रवृत्तिविज्ञानमालयविज्ञानप्रवृत्तिविज्ञानोभयोपादानम्, आलयविज्ञानमपि प्रवृत्तिविज्ञानालयविज्ञानोभयोपादानम्, एवञ्चोपादानस्याश्रयत्वादुभयाश्रयत्वं स्यात्, ततश्चैकस्यैवानेकाश्रयत्वाभ्युपगमेऽनेकाश्रयैरवयविसंयोगादिभिः किमपराद्धं येन वृत्तिविकल्पादिभिर्दूष्येरन्। आदिशब्देन सामान्यमुपादत्त इति(५)। न च नोभयोरुभयोपादानत्वं

(१) आलयविज्ञानसन्तानस्य प्रवृत्तिविज्ञानसन्तानाद्भेदे दोषमाह नहीति। अभ्युपगम्याह सत्यपीति।

(२) चैत्रदृष्टस्य मैत्रेण प्रतिसन्धानं स्यादित्यापत्तिरिति भावः।

(३) अहम्पदवाच्यस्स आलय इति स्पष्ट एवार्थ इत्यर्थः।

(४) उभयोरपीति। प्रवृत्तिविज्ञानं समनन्तरप्रवृत्तिविज्ञानं प्रत्युपादानमालयविज्ञानं चैतदुपादानं भवत्येवेत्यर्थ इति मिश्राः। नारायणमतेनात्र मूले 'उभयोरप्युभयोऽपादानत्वे' इतिपाठो द्रष्टव्यः।

(५) येन वृत्तिविकल्पादिभिः सामान्यमपि दूष्येतेत्यर्थः।

विसंयोगादिभिः । न चालयविज्ञानोपात्तं प्रवृत्तिविज्ञानं न किञ्चिदुपादत्त इति युक्तम् । तथात्वे निमित्ततामपि न यायादुपादानत्वव्याप्तत्वान्निमित्ततायाः, अन्यथा निमित्ततामात्रमुपगम्यैकस्य निवृत्तौ सर्वसन्तानोच्छेदः, अविशेषात् । ओमिति ब्रुवतः(१) चरमक्षणानां किञ्चित्करणशक्तिविरहेऽसत्त्वप्रसङ्गः, तथाच तत्पूर्वक्षणानामपीत्यनेन पर्यायेणाकिञ्चित्करं जगदापद्येतेति (२)साधु कार्यकारणभावः प्रतिसन्धाननिबन्ध-

येनैकस्यानेकाश्रयत्वं स्यात्, किन्त्वालयविज्ञानमेवोपादानं प्रवृत्तिविज्ञानमुपादेयमेव, न तदन्यत्किञ्चिदुपादत्त इत्याह नचाति । निमित्ततामपीति । निमित्तता चेष्यते प्रवृत्तिविज्ञानस्यापि बाह्यप्रवृत्त्यादि प्रतीत्यभिप्रायः । उपादानत्वेति । भवत्पक्षे इति शेषः । यदेव क्वचिदुपादानन्तदेव क्वचिन्निमित्तमिति भवतां पक्षः । विपक्षे बाधकोपन्यासेन व्याप्तिं(३) दृढयति अन्यथेति । यद्येवं किञ्चिदनुपादायैव क्वचिन्निमित्तत्वमात्रमनुभूय निवृत्तं स्यात्, तर्हि सर्वेषां ज्ञानसन्तानानामुच्छेदः प्रसज्येत, तत्तत्सन्तानवर्तिनां ज्ञानकारणानामवश्यं ज्ञानान्तरोपादानत्वनियमाभावात्तेषामपि ज्ञानत्वाविशेषादिति । ओमिति ब्रुवतः, तत्तत्सन्तानवर्तिनां चरमज्ञानक्षणानामन्योपादानत्वाभावेन किञ्चित्करणशक्तिविरहे अर्थक्रियाकारित्वलक्षणसत्त्वाभावप्रसङ्गः, तथाच तस्यासत्त्वे तत्पूर्वक्षणानामप्यकिञ्चित्करत्वम्, एवं तत्पूर्वक्षणानामपीत्यनेन न्यायेन जगतः सर्वस्याकिञ्चित्करत्वे कार्यकारणभावस्याभावात्तन्निबन्धनं प्रतिसन्धानं न

(१) क्षणिकत्वात्सर्वेषां ज्ञानसन्तानानामुच्छेदः स्वीक्रियत एवेतीष्टापत्तौ । ननु किञ्चिन्निमित्तमपि मा भूत्को दोष इत्यत आह ओमिति मिश्राः ।

(२) नन्वस्तु शून्यतैव परमं निर्वाणमत आह साध्विति । तथा च प्रतिसन्धानाय त्वदाभिमतः कार्यकारणभावोऽपि न स्यादित्यर्थः ।

(३) उपादानमेव निमित्तमिति व्याप्तिमित्यर्थः।

नः समन्वितः स्यात् । तस्मादन्यदेव निमित्तं किञ्चिदु-पाददीत, तथाच न प्रतिसन्धानमपूर्वानन्तसन्तानप्रवृ-त्तिश्च प्रसज्येत । एवं च

अशक्तिरनुपादानादन्यदानादनन्तता ।
मिथो न प्रतिसन्धिश्च सङ्करेऽनेकसंश्रितिः ॥

इति सङ्ग्रहः । नापि द्वितीयः, तस्यापि भेदाग्रहः स्वरू-पतो वा स्याद्विषयतो वा स्यात्? आद्येऽपि (१)पूर्वाहमि-ति-प्रत्ययमात्राग्रहा प्रवृत्तिज्ञानेभ्योऽपि वा । न तावदाद्यः, अहमित्यज्ञासिषम् अहमिति जानामि अहमिति ज्ञा-स्यामीति त्रैकाल्योल्लेखस्य भेदनिश्चयमन्तरेणानुपप-त्तेः(२) । कथञ्चिदुपपत्तौ तदर्थस्यैव प्रतिसन्धिरुचितो न

---

स्यादिति । अन्यदेवेति । आलयविज्ञानोपात्तं प्रवृत्तिविज्ञानमपि स्व-सन्तानवर्तिज्ञानान्तरोपादानस्यैकस्यानेकाश्रयत्वप्रसङ्गेनान्यदेव सन्तानान्त-न्तरवर्त्यैव किञ्चिदुपाददीत, तथाचैकसन्तानवर्तिनामुपादानोपादेयभावा-भावात् आत्मतत्त्ववत्तत्सन्तानवर्त्तिनां परस्पराकलितार्थप्रतिसन्धानं न स्या-दिति सर्वेषां सन्तानान्तरोपादानेनापूर्वानन्तसन्तानप्रवृत्तिश्च प्रसज्येतेति । पूर्वोक्तमर्थं श्लोकेन संगृह्णाति अशक्तिरिति । चरमक्षणानामन्योपादा-नत्वाभावान्न किञ्चित्करणशक्तिः, अन्यस्यैवोपादानात्सन्तानानन्तता, एकस-न्तानवर्तिनां परस्पराकलितार्थाऽप्रतिसन्धिश्च, आलयविज्ञानस्य प्रवृत्तिविज्ञा-नस्य चैकसन्तानवर्तिज्ञानं प्रति उपादानत्वे एकस्यानेकाश्रयत्वं स्यादित्यर्थः।

तदन्तःपातिकादाचित्कानेकाहम्प्रत्ययरूप इति द्वितीयं पक्षं निरा-करोति नापि द्वितीय इति । कथञ्चिदुपपत्ताविति । अहम्प्र-त्ययाकारेण भेदनिश्चयाभावेऽपि उपाधिभेदनिश्चयमात्रेणैवोपपत्ताविरयर्थः । तदर्थस्यैवेति । येषां हि भेदाग्रहस्तदर्थस्यैव प्रतिसन्धानं सम्भवति

---

(१) पूर्वाहमिति । आलयविज्ञानमात्राद्भेदाग्रह इत्यर्थः ।
(२) क्रियात्वेन कर्तृत्वेन च भेदस्यैव ग्रहाद्वर्तमानागतत्वादिना चेति भावः॥

तु प्रवृत्तिविज्ञानार्थानामपि । न च तेभ्योऽपि भेदाग्रह इति चोक्तमेव । नापि विषयतः(१), स हि आकारो वा वस्त्वन्तरं वा अलीकं वेति । नाद्यो, दूषितत्वात् । न द्वितीयः, स्वयमनभ्युपगमात्, यो वाऽभ्युपगच्छेत्, सोऽपि विरुद्धधर्माध्यासाद्भेदमिच्छेत्, तन्निवृत्तौ च तन्निवृत्तिम् । न तृतीयः, अहमिति-विकल्पस्य सवस्तुकतायाः प्रागेव प्रतिपादनात्(२) । अवस्तुकत्वेऽपि न

नान्येषां (न)भेदाग्रहादन्यस्य प्रतिसन्धानमुचितम्, अन्येषाञ्च प्रवृत्तिविज्ञानानामर्थस्यापि प्रतिसन्धानं दृश्यते -यमेव घटं दृष्टवान् तमेव स्मरामीति, स एवायं घट इति(३) । प्रवृत्तिविज्ञानेभ्योऽपि वेति विकल्पं दूषयति न च तेभ्योऽपीति(४) । उक्तमिति । 'प्रवृत्तिविज्ञानानां भेदस्यासर्वज्ञैरपि दर्शनात्' इत्यत्रोक्तमिति(५) । दूषितत्वादिति । द्वितीयपरिच्छेदे दूषितत्वादिति । स्वयमनभ्युपगमादिति । योगाचारैः(६) स्वयमनभ्युपगमादिति । यो वेति । यो वा सौत्रान्तिकोऽभ्युपगच्छेत्, सोऽपि विरुद्धधर्माध्यासानध्यासाभ्यां भेदाभेदावभ्युपगच्छेत्, तथा चाहम्प्रत्ययार्थे विरुद्धधर्माध्यासाभावाद्भेद

(१) आलयविज्ञानानां परस्परं विषयतो भेदाग्रहो न प्रतिसन्धानहेतुरित्यर्थः । स=आलयविज्ञानविषयः ।

(२) प्रत्यक्षपृष्ठभाविन इत्यादिना साक्षादेव सवस्तुक इत्यादिनेत्यर्थः । अत्र 'प्रागेव प्रसाधनादिति' पाठान्तरम् ।

(३) यद्भेदाग्रहस्तस्यैव प्रतिसन्धानं न तु पूर्वं भेदेन गृहीतस्यापि विज्ञानस्य विषयप्रतिसन्धानं दृश्यत इत्यर्थ इति मिश्राः ।

(४) प्रवृत्तिविज्ञानेभ्यः ।

(५) 'त्रैकाल्योल्लेखस्य भेदनिश्चयमन्तरेण' इत्यादिनेति मिश्राः ।

(६) बाह्यार्थशून्यत्ववादिभिः अहमिति-विज्ञानस्य वस्त्वन्तरविषयत्वानभ्युपगमादभ्युपगमे वा स एवांशमेत्यर्थः ।

तत्र प्रकृतोपयोगिभेदाग्रहसम्भवः, सदसदारोपितस- त्त्वारोपितासत्त्वव्यधिकरणाव्यपदेश्यभेदेन षड्विध- स्यापि भेदस्याग्रहो अभेदारोपौपयिकतया न तत्र स- म्भवतीत्युक्तत्वादिति।

अथवा इहानुभवः किं कालान्तरभाविनीं स्मृतिं जनयेत्, तज्जनितो वा संस्कारः। सोऽप्यतीन्द्रियः प्र- त्यक्षसिद्धो वा। अतीन्द्रियोऽपि (१)तावत्कालावस्था- यी सन्तन्यमानो वा। अध्यक्षसिद्धोऽपि तदुत्तरबुद्धि- धारारूपस्तदन्यो वा तद्विशेषो वा। विशेषोऽप्यनुभवप्र- भवत्वमात्रं वा अनुभवितृसन्तानवैजात्यं वेति। तत्र न

एव नास्ति कुतस्तदग्रह इति भावः। प्रकृतोपयोगीति। अभेदा- रोपोपयोगीति। कथमित्याह सदसदेति। भेदस्य परमार्थसत्त्वे अली- कत्वानुपपत्तिः, परमार्थासत्त्वे परमार्थभेदप्रसङ्गादलीकत्वानुपपत्तिः, आरोपितसत्त्वस्य भेदस्याग्रहानुपपत्तिः, (२)आरोपितासत्त्वस्य परमार्थ- सत्त्वप्रसङ्गादलीकत्वानुपपत्तिः, व्यधिकरणस्य भेदस्याग्रहादारोपे वस्त्व- न्तरवर्तिनो भेदस्याग्रहात् घटपटयोरभेदारोपप्रसङ्गः, अव्यपदेश्यस्य चतुष्कोटिविनिर्मुक्तस्य भेदस्याग्रहात् अभेदारोपे त्रैलोक्यस्याभेदारोपप्रसङ्ग इति द्वितीयपरिच्छेद एवोक्तत्वादित्यर्थः।

एवं प्रतिसन्धानेन स्थिरमात्मानं प्रसाध्य प्रकारान्तरेण साधयितुं प्रक्र- मते (३)अथवेति। तत्कालस्थायी=स्मरणकालं यावत्स्थायी- त्यर्थः। तद्विशेष वेति। उत्तरबुद्धिधारागतो विशेषो वेत्यर्थः।

(१) अत्र तत्कालस्थायीति नारायणाभिमतः पाठः।

(२) विरोधादारोपे सति अग्रहानुपपत्तिरित्यर्थः। व्यधिकरण- स्येति। व्यधिकरणाव्यपदेश्यभेदाग्रहो यद्यभेदारोपहेतुस्तदा सर्वत्राभे- दारोपः स्यादित्यर्थ इति मिश्राः।

(३) प्रतिसन्धानबलात्प्रत्यक्षतः कर्त्रैक्यं प्रसाध्याधुना स्मृत्यन्यथा- नुपपत्त्याऽनुभवितृस्मर्त्रोरभेदं साधयितुमुपक्रमतेऽथवेति मिश्राः।

प्रथमः, अनुत्पन्नानन्वयध्वस्तयोरविशेषात् । (१)नापि दृश्योऽन्यः, तस्यानुपलब्धिबाधितत्वात् । नाप्यनुभवप्रभवत्वमात्रं विशेषः, नहि कर्मकरकरोपनीतमेव बीजं क्षितिमासाद्याङ्कुरं कुरुते न तु प्रमादपतितम्, तथा नीलाद्यनुभवप्रभवसन्तानः पीताद्यनुभवेनैवोपनीयतां नीलाद्यनुभवेनैव वेति न कश्चिद्विशेषः । एवञ्चाननुभूतेऽपि स्मरणप्रसङ्गो न वाऽनुभूतेऽपीति ।

"शालिप्रभवस्य बीजस्य शालि(त्व)प्रतिसन्धानवन्नियम इति चेत्"। न, क्षीरजम्बुरसपायिनीलधवलकलरवजनितविपरीतपारावतवदनियमदर्शनेन तस्याप्रयो-

---

अनुत्पन्नेति । ततो निरन्वयध्वस्तस्यानुभवस्य न कालान्तरवर्त्तिस्मृतिजनकत्वमित्यभिप्रायः । तदन्यो वेति विकल्पं दूषयति नापि दृश्य इति । तदुत्तरबुद्धिधाराव्यतिरेकेणानुभवजनितं दृश्यमन्यन्नोपलभामह इति । नहि कर्मकरेति । स्वगतविशेषादेव बुद्धिः कार्यविशेषो भवति नोपनेतृभेदादित्यर्थः । न चोपनेतृभेद स्वगतोऽपि विशेषो भवतीत्याह तथेति । एवञ्चाननुभवितृसन्तानेभ्योऽपि तादृग्बुद्धिधारोपपत्तेरननुभूतेऽपि स्मरणप्रसङ्ग इत्याह एवञ्चेति ।

तत्प्रभवत्वमात्रेणापि कार्यविशेषो दृश्यत इति शङ्कते(२) शालिप्रभवस्येति । शालिप्रभवमेव हि बीजं शालिप्रतिसन्धानं करोति न त्वन्यप्रभवम्, एवमनुप्रभवबुद्धिसन्तानः स्मृतिं जनयेत् इति । तत्प्रभवत्वस्य तादृक्प्रतिसन्धानजनकत्वव्यभिचारेण तस्याप्रयोजकत्वान्नैतद्युक्तमित्याह क्षीरेति । विपरीतेति । धवलनीलपारावतवत् ( भवत् ),

---

( १ ) ननु नीलानुभवप्रभवानुभवसन्तान एव नीलस्मृतिं जनयेदित्यत आह नापीति ।

( २ ) नीलादिविषयस्मृतावनुभवप्रभवत्वमात्रं बीजत्ववत्प्रयोजकमित्यभिप्रायेण शङ्कते इत्यर्थः ।

जकत्वात् । वैजात्यन्तु(१) विशेषो भवेत्, यथा क्षीरा-
वसेकादम्लत्वं परिहृत्य माधुर्यमुपादायानुवर्त्तमानाऽऽ-
मलकी कालान्तरेऽपि माधुर्यमुन्मीलयति, लाक्षारसाव-
सेकाद्वा धवलिमानमपहाय रक्ततामुपादायानुवर्त्तमानं
कार्पासबीजं कुसुमेषु रक्तताम् । नचैवं प्रकृतेऽपि, ज-
पाकुसुमाद्युपधानसन्निधानेऽपि तद्रूपतामनादाय धवलि-
मानमेव सन्तन्वानस्य स्फटिकस्येव ज्ञानस्य विषयोप-
रागमपगमय्य चिद्रूपतामात्रेणानुवृत्तेः । "सर्वाकारत्व-
मेव सर्वज्ञानानां, किन्तु कश्चिदाकारः पटुरन्ये स्वपट-
व" इति तु स्वदर्शनश्रद्धावतो विरुद्धधर्माध्यासादपि
न भीः । नहि स एव पटुरपटुश्चेति सम्भवति ।

---

अनियमदर्शनेन ताद्दक्प्रतिसन्धानानियमदर्शनेनेत्यर्थः । अनुभवितृसन्तान-
वैजात्यं वेति विकल्पं दूषयति वैजात्यन्त्विति । वैजात्ये विशेषो
भवत्येव, न चात्र वैजात्यं सम्भवति, नहि यथा क्षीराऽवसिक्ताऽऽम-
लकी माधुर्यवासनानुरक्ता कालान्तरेऽपि फले माधुर्यमुत्पादयति, यथा
वा लाक्षारसावसिक्तं कार्पासबीजं तद्वासनया कुसुमेऽपि रक्ततामुत्पादयति,
एवं नीलानुभवजनितस्य बुद्धिसन्तानस्य तदाकारवासनाक्रमेण तदाका-
रस्मृतिजनकत्वेन सम्भवेत्, न चैतत्सम्भवति, स्फटिकस्येव ज्ञानस्यापि
नीलाद्याकारस्योपाधित्वेन नात्मीयत्वादिति । नायं नीलाद्याकार औपा-
धिकः येन वैजात्यं न भवेत्, किन्तु स्वाभाविक एवेत्याशङ्क्य परिहरति
(२)सर्वाकारत्वमेवेति । सर्वाकारत्वोपन्यासेन यदि नीलपीतादि
ज्ञानाकारः स्यात् कथं नीलाकारज्ञानानन्तरं पीताकारज्ञानं स्यादिति
शङ्कां निरस्यति । कथं विरुद्धधर्मसंसर्ग इत्याह नहीति । एकज्ञाना-

---

(१) यत्र सन्ताने नीलाऽनुभवो न तत्र तत्स्मृतिरित्यनियमार्थः । तथा
च नानुकूले स्मरणप्रसङ्ग इति भाव इति मिश्राः ।

(२) ननु नीलानुभवपरम्परापि नीलविषयैव तथापि किमन्येन
विशेषेणेत्यत आह सर्वाकारेति मिश्राः ।

न च स्वसंविदितरूपत्वापाटवार्थं पश्यामः। निराकारपक्षेऽपि यावानर्थो बुद्धेर्विषयः तावति स्फुटैव सा, यत्र तु अस्फुटा नासौ तद्विषयः। तथात्वे(१) वा विषयेतरव्यवस्था न स्यात। सांशे त्वर्थे युक्तमेतदिति दर्शितं प्राक्।

(२)तस्मादतीन्द्रियः संस्कारः परिशिष्यते। स च न मन्यमानः, तत्रैव स्मृत्यादिप्रसङ्गे प्रवृत्तिसन्ताने फलानवकाशप्रसङ्गात्, अन्यत्र संस्कारेणान्यत्र फलेऽ-

---

त्मनाऽऽकाराणां परस्पराभेदे कथं स एव पटुरपटुश्च सम्भवति। किञ्चा-त्माकारस्य ज्ञानात्मकत्वं ज्ञानस्य स्वसंविदितरूपत्वात् पटुत्वमपि न सम्भवतीत्याह (३)नचेति। ननु निराकारज्ञानपक्षेऽपि दूराद(न)दृश्यमानेषु वस्तुषु एकैव प्रतिपत्तिः सामान्याकारेषु स्फुटा विशेषाकारेष्वस्फुटा दृश्यते, तथा साकारत्वपक्षेऽपि को दोष इत्याशङ्क्याह **निराकारेति**। **अयमर्थः**-यत्र प्रतिपत्तिः स्फुटा स एव तस्या विषयः, यत्र त्वस्फुटा नासौ विषयः, ततश्चैकस्याः कश्चिद्विषयः कश्चिन्नेत्युक्तं स्यात, तत्र च को दोष इति। तर्ह्येकस्मिन्नर्थे कश्चिदाकारः पटुः कश्चिदस्फुट इति विरुद्धधर्मसंसर्गः स्यात्तत्राह (४)**सांशे त्विति**। अर्थस्यास्माकं सांशत्वाभ्युपगमात् अंशानां च भेदादत्र न विरुद्धधर्मसंसर्गदोष इत्यर्थः। **दर्शितं प्रागिति**। प्रथमपरिच्छेद इति।

---

(१) विषयत्वे सर्वं ज्ञानं सर्वविषयं स्यादित्यर्थः।

(२) स्वाभिमतमुपसंहरति तस्मादिति। तत्रैव स्मृतिसन्तान एव, फलं स्मृतिः प्रत्यभिज्ञा च, प्रवृत्तिविज्ञानसन्ताने तूक्तफलं दृश्यते, गेहे स घट इति स्मरणात्प्रवृत्तेरिति भावः।

(३) ननु नीलपीतादिविषयावच्छेदेनैकत्रैव पटुत्वमपटुत्वं च स्यादित्यत आह नचेति। त्वन्मते ज्ञानं साकारं स्वप्रकाशं च, तथा च नीलपीताद्याकारानेकरविशिष्टमेव स्वयं प्रकाशत इत्यर्थः इति मिश्राः।

(४) नन्वेवं संयोगतदभावावपि नैकत्र स्यातामित्यत आह सांशे त्विति। तत्रावच्छेदकभेदस्य दर्शितत्वादित्यर्थः इति मिश्राः।

तिप्रसङ्गात्। परम्परयैकोपादानतानियमे संस्कारान्तरेऽतिप्रसङ्गात्। तस्मात् स्वोपादान एव स्मृतिं करोतीति गत्यन्तराभावादापातितक्रमभ्युपेयमेव। तथाच स्मृतेः कालान्तरसम्बन्धात्संस्कारतदुपादानयोः स्थैर्यमयत्नसिद्धमवर्जनीयञ्चेति।

(१)एतेन-धर्माधर्मलक्षणोऽपि संस्कारो व्याख्यातः। तथा च यो यः संस्कारः क्वचित्सन्ताने आहितः स तत्रैव

---

"ननु तस्मादर्तीन्द्रियः संस्कारः परिशिष्यते इत्यनुपपन्नम्, तदुत्तरबुद्धिधारारूपद्रव्य(स्य) पक्षस्यानिरस्तत्वात्" तदुच्यते -अनुभवप्रभवत्वमात्रं विशेष इत्यनेन पक्षेण तुल्यन्यायत्वादयमपि पक्षो निरस्त इति बुद्ध्वा तथोक्तमिति सन्तोष्टव्यमिति। अतिप्रसङ्गादिति। देवदत्तसंस्कारसन्तानेऽपि स्मरणप्रसङ्गादित्यर्थः। देवदत्तसन्तानवर्तिसंस्कारसन्तानस्य च परम्परयैकानुभवोपादानत्वात्तत्रैव स्मरणं नान्यत्रेति नियम इति चेत्तत्राह (२)परम्परयेति। देवदत्तवर्तिनीलसंस्कारसन्तानस्य पीतसंस्कारसन्तानस्य च परम्परयैकोपादानत्वात् पीतसंस्कारसन्तानेऽपि नीलस्मरणप्रसङ्गादित्यर्थः। स्वोपादान एवेति। स्वसमवायिदेश इत्यर्थः। स एव चास्माकमात्मेत्यभिप्रायः। तथापि तस्य स्थैर्यं कुतस्त्यमित्याह तथाचेति(३)। व्याख्यात इति। 'स्वोपादान एव भोगं

(१) एवं च यागहिंसादिजनितौ धर्माधर्मावपि स्वस्वाश्रयोपादानस्य स्थैर्यमन्तरेण कालान्तरभावित्वेन फलजनकौ न भवत इत्याह एतेनेति। ननु परोक्तव्याप्तौ को दोष इत्यत आह तथा चेति।

(२) ननु यत्र नीलानुभवो मूलकारणं तज्जनितः संस्कारस्तत्र फलं जनयतीति नोक्तदोष इत्यत आह परम्परयेति। नीलानुभवानन्तरोत्पन्नपीतानुभवरूपानुभवाद्यैः प्रत्येकं संस्कारसन्तानो जनितः सर्वत्र नीलानुभव एव मूलं, तथाच पीतानुभवजनितसंस्कारसन्तानादपि नीलस्मृतिः स्यादित्यर्थ इति मिश्राः।

(३) तथाचेतीति। अनुभवानन्तरं संस्कारात्संवत्सरानन्तरमपि भवती स्मृतिः संस्कारस्य तदुपादानस्यात्मनश्च स्थैर्यमाक्षिपतीत्यर्थः।

फलदानयोग्यो नान्यत्र—इत्यादि निरस्तम्, अतिरिक्तसंस्कारपक्षे हेतोर्व्यधिकरणत्वात्, (१)विशेषलक्षणस्य च स्वरूपासिद्धत्वात्, (२)अविशिष्टोत्तरकार्यप्रवाहमात्रस्य च विरुद्धत्वादिति।

न चातीन्द्रियोऽपि संस्कारः सौगतनये सम्भवति, (३)तस्य ज्ञानत्वे पारोक्ष्यानुपपत्तेः, अज्ञानत्वे ज्ञानोपादानकत्वायोगात्। सन्तानान्तरत्वेन ज्ञानस्यापि पारो-

---

करोति' इत्यादिना व्याख्यात इति। अतिरिक्तेति। तदुत्तरबुद्धिधारातोऽतिरिक्तसंस्कारपक्षे हेतोस्संस्कारस्य सन्तानान्तरवर्त्तित्वेन प्रवृत्तिसन्तानापेक्षया व्यधिकरणत्वादित्यर्थः(४)। विशेषलक्षणस्येति। वैजात्यलक्षणस्य संस्कारस्य स्वरूपासिद्धत्वादिति। नियमपक्षविपक्षस्यानियमस्यैव साधकत्वादित्यर्थः।

अतीन्द्रियसंस्कारपक्षं दूषयति (५)न चातीन्द्रियोऽपीति। परोक्षत्वानुपपत्तेरतीन्द्रियत्वानुपपत्तेः। तथाभावप्रसङ्गादिति। परोक्षत्वप्रसङ्गादिति। तदेवं प्रतिसन्धानस्योक्तप्रकारेण व्यतिरेकमुखेन

---

(१) अथ ज्ञानगतो जातिविशेषः संस्कारस्तत्राह विशेषलक्षणस्येति। त्वया जातिमात्रस्य मया ज्ञाने संस्कारत्वजातेरनभ्युपगमात्स्वरूपासिद्धिरिति मिश्राः।

(२) ननु कार्यप्रवाहः संस्कारस्तथाच नाश्रयासिद्धिस्वरूपासिद्धीत्यत आह विशिष्टेति। नीलानुभवोत्तरकार्यप्रवाहोत्तरकार्यं घटपटादिसन्तानेऽपि भवति तत्र स्मृतिरूपफलजनकत्वाद्विरुद्धमित्यर्थः।

(३) कुत इत्यत आह तस्येति। अज्ञानत्वे इति। स यदि ज्ञानभिन्नस्तदा ज्ञानोपादानको न स्यात्, परोक्षज्ञानधारैव चेत्तदा तत्सन्ताने स्मृतिसुखादेरपि परोक्षत्वप्रसङ्ग इत्यर्थः।

(४) संस्कारः सन्तानैकफलजनकः संस्कारत्वादिति व्यधिकरणो विमताधिकरणः, त्वया संस्कारस्यानभ्युपगमादित्याश्रयासिद्धिरित्यर्थ इति मिश्राः।

(५) नन्वतीन्द्रियः संस्कारः स्थिरस्तथाच न स्वरूपासिद्धिरित्यत आह नचेति मिश्राः।

क्ये तदन्तःपातिनः स्मृतिसुखादेरपि तथाभावप्रसङ्गा-दिति । तदिदमुक्तरूपं प्रतिसन्धानं निमित्तवत्तया व्याप्तम्, अनिमित्तकत्वे नियमानुपपत्तेः, तच्चानेककर्तृकत्वे नास्तीति व्यापकानुपलब्ध्या विपक्षान्निवर्तमानं तन्निमित्तवत्येककर्तृकत्वे विश्राम्यतीति प्रतिबन्धसिद्धिः । एवंसति चान्वयोऽपि नर्तकीभ्रूलताक्षेपादौ द्रष्टव्यः ।

---

एककर्तृकत्वेन प्रतिबन्धः सिद्ध इत्याह तदिदमिति । कथं निमित्तवत्तया व्याप्तिस्तत्राह अनिमित्तकत्व इति । एकसन्तान एव प्रतिसन्धानमिति नियमानुपपत्तेरित्यर्थः । तच्च निमित्तमुक्तेन नयनानेककर्तृकत्वे नास्तीति व्यापकभूम्नि निमित्तानुपलब्ध्या विपक्षात् एककर्तृकविपक्षादनेककर्तृकत्वात् निवर्तमानं प्रतिसन्धानं निमित्तवदिति स्वव्यापकवति एककर्तृकत्व एव विश्राम्यति पर्यवस्यतीति (१)प्रतिसन्धानस्यैककर्तृकत्वेन प्रतिबन्धसिद्धिरिति । एवं व्यतिरेकव्याप्तिसिद्धौ अन्वयोऽपि नर्तकीभ्रूलताक्षेपादौ साधर्म्यदृष्टान्ते द्रष्टव्य इत्याह (२)एवमिति । अत्र नानाज्ञानकर्तृकतया प्रतिसन्धीयमानस्य नानाज्ञानकर्तुरात्मनः साध्याद्व्यतिरेकेण सिद्धेरन्वयेन नानाज्ञाननिमित्तमात्रभूतभ्रूलतादृष्टान्तेन पक्षेऽपि नानाज्ञाननिमित्तमात्रस्य सिद्धेः साक्षाज्ज्ञानकर्तुरात्मनः सिद्ध्यभावात्तु व्यतिरेकापेक्षयाऽन्वयस्य जघन्यत्वात्पश्चादुपन्यास इति मन्तव्यम् ।

(१) अत्रोक्तरूपं प्रतिसन्धानं पूर्वापरप्रत्ययमर्शो ग्राह्योऽथवा स्मृतिरित्येके । स्मृतिः स्वहेत्वनुभवसमानाधिकरणा स्मृतित्वादिति केवलव्यतिरेकी । न च संस्कारसुखादेः सपक्षाद्व्यावृत्तावसाधारण्यं, परेण सपक्षास्वीकारदशायां व्यतिरेकप्रवृत्तेः, सपक्षाङ्गीकारे सिद्धं नः समीहितमित्यर्थ इति मिश्राः ।

(२) इदानीमन्वयव्यतिरेकिणमाह एवं च सतीति । विवादपदं प्रतिसन्धानात्मकविषयं प्रतिसन्धानत्वान्नर्तकीभ्रूक्षेपप्रतिसन्धानवदित्यन्वयी, भवति हि तत्र निपुणानां य एव भ्रूलताक्षेपस्त्वया दृष्टस्स एव मयेति प्रतिसन्धानम् इति मिश्राः ।

सैव हि भ्रूलता त एव वा परमाणवः प्रतिसन्धीयमाना नानाज्ञाननिमित्तत्वेनावस्थिताः । (१)विरुद्धधर्मविरहिविषयत्वेन तु विशेषणीयमत्र प्रतिसन्धानम् , अन्यथा य एव बालस्त्वया दृष्टः स एव युवा मया दृश्यत इत्यनेनानैकान्तात् ।

(२)ननु सिद्धमिदं विशेषणं देहस्यैव चेतनत्वात्" । मैवम् , देहत्वभूतत्वमूर्तत्वरूपादिमत्त्वादिभ्यः । न च भूतानां समुदायपर्यवसितं चैतन्यम् , प्रतिदिनं तस्या-

परिणामभेदेन प्रतिक्षणं भ्रूलताभेदमाशंक्याह (३)त एव वा परमाणव इति । य(४) एव वा बाल इति । दृश्यद्रष्टृगोचरस्य प्रतिसन्धानस्य दृश्यांशे विरुद्धधर्माध्यासो दर्शितः बालो युवेति, द्रष्ट्रंशविरुद्धधर्माध्यासस्त्वया मयेति, देहस्य परिणामभेदेनास्त्येव विरुद्धधर्माध्यास इति भावः । देहत्वेति । देहत्वहेतौ मृतदेहो दृष्टान्तः(५) । इतरेषु बाह्यभूतानि पृथिव्यादीनि दृष्टान्त इति । द्वितरथैवमित्याह (१)न चेति । भूतानामवयवानां न समुदायपर्यवसितमिति, परेषामवयव्यभावात् तत्स्थाने समुदायोपन्यासः, तस्यान्यत्वेन परिणामित्वात् अन्यत्वे-

---

( १ ) जातिप्रत्यभिज्ञाने व्यभिचारदर्शनादाह विरुद्धेति ।

( २ ) शङ्कते नन्विति । देह एव चेतनस्तस्य च परिणामभेदेन प्रतिदिनं विरुद्धधर्माध्यासादित्यर्थः । समाधत्ते मैवमिति । देहत्वादिहेतुभ्यो न देहस्य चेतनत्वं साधयितुं शक्यत इत्यर्थः । रसगन्धादिरादिपदार्थः ।

( ३ ) ननु नर्तकीभ्रूलताक्षेपो न ह्येकः पारमार्थिकः, अनेकार्थसमूहत्वादित्यत आह त एवेति । तादृशसमूहस्यापि त्वया प्रत्यक्षत्वेनाभ्युपगमादित्यर्थ इति मिश्राः ।

( ४ ) भूतचैतनिकमुत्थापयितुं व्यभिचारिप्रत्यभिज्ञानाविशेषमुदाहरति य एवेति मिश्राः ।

( ५ ) अत्र देहो न चेतनः देहत्वान्मृतदेहवदित्याद्यनुमानप्रयोगाः स्वयमूहनीयः ।

न्यत्वेन पूर्वपूर्वानुभूतस्यास्मरणप्रसङ्गात्, न च प्रत्येकपर्यवसितम्, करचरणाद्यवयवविगमे तदनुभूतस्य स्मरणायोगात् । (१)देहस्य चेतनत्वे च बालस्य प्रथममप्रवृत्तिप्रसङ्गात्, इच्छाद्वेषावन्तरेण प्रयत्नानुपपत्तेः, इष्टाभ्युपायताप्रतिसन्धानं विना चेच्छानुपपत्तेः, इह जन्मन्यननुभूतस्य प्रतिबन्धस्यास्मृतौ प्रतिसन्धानायोगात्, जन्मान्तरानुभूते चानुभवितरि भस्मसाद्भूते अन्येन स्मरणायोगात्, अनुभवादीनां प्रवृत्त्यन्तानां च कार्यकारणभावस्य इहैव जन्मनि निश्चितत्वात्, तथाच तदभावे तदभावस्य सुलभत्वात्, अन्यथा स्वतस्त्वप्रसङ्गात् ।

---

नेति । प्रथममप्रवृत्तीति । जातमात्रस्य स्तन्यपानादौ प्रथममप्रवृत्तिप्रसङ्गादित्यर्थः । कथमित्याह इच्छाद्वेषाविति । अयमर्थः—इच्छाद्वेषावन्तरेण प्रवृत्त्यनुपपत्तिः, इच्छाद्वेषयोस्स्वविषयेष्टानिष्टसाधनत्वादिष्टानिष्टसाधनत्वानुसन्धानमन्तरेणानुपपत्तिः, इष्टाभ्युपायताद्यनुसन्धानस्य च तज्जातीयस्य च लिङ्गस्य च प्रतिबन्धस्मरणमन्तरेणानुपपत्तिः, स्मरणस्यानुभवं विना, अनुभवश्च जातस्य नास्मिन् जन्मनि सम्भवतीति जन्मान्तरे कल्पनीयः, जन्मान्तरानुभवितृत्वे च देहस्येष्यमाणे जन्मान्तरवर्तिनो देहस्य भस्मसाद्भावेन अद्यतनस्य तदन्यत्वादन्येनानुभूतेऽन्यस्य स्मरणायोगः । नन्वनुभवादीनां प्रवृत्त्यन्तानां कार्यकारणभावे सिद्धे सत्ययं दोषः स्यात्, स एव तु कथं सिद्ध इति चेत्, तत्राह अनुभवादीनामिति । तदभाव इति । तस्य कारणस्याभावे तस्य कार्यस्याभावस्य सुलभत्वात्(२), अन्यथा अतस्त्वस्याकार्यकारणभावस्य प्रसङ्गादित्यर्थः ।

---

(१) दोषान्तरमाह देहस्येति ।

(२) अनुभवाभावे संस्काराभावस्तदभावात्स्मरणाभावस्तदभावादनुमानाभावस्तस्मादिच्छाभावस्तदभावात्प्रवृत्त्यभाव इति मिश्राः ।

अत एव नेन्द्रियाणि चेतयन्ते, दर्शनस्पर्शनाभ्यामेकार्थग्रहणाच्चेति । न च मनस्तथा, तस्य करणत्वेनैवानुमानादित्येवं प्रतिबन्धासिद्धिः ।

परलोकात्मसिद्धिश्च(१) । अनादिश्चासौ, वीतराग जन्मादर्शनात् । अनन्तश्च सतोऽनादित्वात् । द्रव्यश्च समवायिकारणत्वात् । विभुश्च नित्यद्रव्यत्वे सत्यमू

---

देहचैतन्यनिराकरणमार्गेण इन्द्रियाणामपि चैतन्यं निषिद्धमित्याह अत एवेति । इन्द्रियचैतन्ये दूषणान्तरमप्याह दर्शनेति । इन्द्रियचैतन्ये दर्शनस्पर्शनचेतनभेदात् 'यमेवाहमद्राक्षं तमेवाहं स्पृशामी'त्येकार्थप्रतिसन्धानं न स्यादित्यर्थः । ननु मनसश्चेतनत्वात्तस्य चैकत्वादेकार्थप्रतिसन्धानमुपपद्यत इति चेत्तत्राह न च मन इति । तथा=चेतनमित्यर्थः । करणत्वेनेति । सुखदुःखादिज्ञानानां क्रियात्वेन तत्करणतया मनसोऽनुमानादित्यर्थः । प्रतिबन्धासिद्धिरिति । एवमुक्तेन न्यायेन विपक्षे बाधकरूपेणानुकूलतर्केण देहत्वादीनां न प्रतिबन्धासिद्धिरित्यर्थः(२) ।

एवं देहादीनां चैतन्यनिषेधेन परलोकफलोपभोक्तात्मा सिद्ध इत्याह परलोकेति । वीतरागजन्मादर्शनादिति । अस्य सूत्रस्यायमर्थः—सर्वेष्वपि जन्मसु वीतरागस्य न जननं दृश्यते, किन्तु स्तनपानादिषु सरागस्यैव, रागश्च नेष्टसाधनप्रतिसन्धानमन्तरेण, प्रतिसन्धानं च न प्रतिबन्धस्मरणमन्तरेण, स्मरणं च न पूर्वजन्मानुभवमन्तरेणेति सर्वेष्वपि जन्मसु पूर्वपूर्वसिद्धानादिता चेतनस्य सिद्धेति । सतोऽनादित्वादिति । प्रागभावेन व्यभिचारो मा भूदिति सत्त्वेन विशिनष्टि । समवायिकारणत्वादिति । ज्ञानादिगुणानां समवायिकारण-

---

(१) परलोकात्मसिद्धिश्च न पाठान्तरम् । आद्यप्रवृत्तेरन्यथानुपपत्तेरेव परलोकात्मसिद्धिरित्यर्थः, एतच्च व्याहानिरिति ।

(२) विरुद्धधर्मविरहिप्रतिसन्धानाविषयत्वादेकः कर्तेति प्रतिबन्धासिद्धिरित्यर्थ इति मिश्राः ।

र्तत्वात्(१) । अमूर्तश्च निष्क्रियत्वात् । निष्क्रियश्च नित्य(द्रव्य)त्वे सति अस्मदादिप्रत्यक्षत्वात्, प्रत्यक्षधर्माश्रयत्वाच्चेति(२)।

तर्काश्चात्र(३) भवन्ति—आदिमत्वे प्रथमप्रवृत्त्यनुपपत्तौ सर्वदैवाप्रवृत्तिप्रसङ्गः । सान्तत्वेऽनादेः सत्त्वानुपपत्तिप्रसङ्गः । अद्रव्यत्वे निर्गुणत्वप्रसङ्गः । अविभुत्वे दहनपवनादेः क्रियानुपपत्तिप्रसङ्गः । न च संयुक्तसंयोगात्तदुत्पत्तिः, साक्षात्क्रियावद्द्वारकस्य तस्याभावात्, त्वादिति । नित्यत्वे सतीति । अत्रापि(४) सामान्यादिदृष्टान्त इति । प्रत्यक्षधर्माश्रयत्वाच्चेति । अत्रापि नित्यत्वे सतीति विशेषणं द्रष्टव्यम्(५) । अत्र चाकाशो दृष्टान्तः ।

प्रतिबन्धसिद्ध्यर्थं विपक्षे बाधकतर्कानाह तर्काश्चात्रेति । सर्वदैवेति । प्रथमप्रवृत्त्यभावे इहजन्मन्यपीष्टसाधनताभावादिच्छानुपपत्तौ सर्वदा प्रवृत्त्यनुपपत्तेरिति । दहनपवनादेरिति । अदृष्टवदात्मसंयोगेन हि दहनपवनादीनां क्रियासिद्धिः संयोगश्चात्मनामविभुत्वे सर्वत्र तेषां क्रियावत्त्वनियमो न स्यादिति । नन्वदृष्टवदात्मसंयुक्तानामाकाशादीनां संयोगाद्दहनादीनां क्रिया सिध्यतीत्याशङ्क्याह न च संयुक्तेति । साक्षात्क्रियावद्द्वारक एव हि संयुक्तसंयोगः क्रियाहेतुर्दृष्टः, यथा प्रयत्नवदात्मसंयुक्तेन साक्षात्क्रियावता शरीरेण द्वारभूतेन संयोगात् शरीरसम्बन्धादण्डादौ क्रिया निष्पद्यते, इह तु द्वारभूतानामाकाशादीनां न साक्षात्क्रियावत्त्वमस्तीति कथं तद्द्वारिका दहनादीनां क्रिया सिध्यती-

(१)अत्रामूर्तत्वमवच्छिन्नपरिमाणायोगित्वमाद्यक्षण घटादावपीति व्यभिचारनिरासार्थं नित्यपदम् ।

(२) त्वाच्चेति पाठान्तरम् । (३) उक्तहेतुषु ।

(४) अपिना मूर्तत्वसाधकपूर्वानुमानेऽपि सामान्यस्य दृष्टान्तत्वं सूचितम् ।

(५) अन्यथा सक्रिये पृथिव्याद्यवयविनि व्यभिचारात् ।

अतथाभूतस्य च तद्धेतुत्वेऽतिप्रसङ्गात् । मूर्तत्वे नित्यस्यास्मदादिप्रत्यक्षधर्मानाधारत्वप्रसङ्गः(१), विशेषगुणवतश्चारम्भकत्वप्रसङ्गश्च(२)। सक्रियत्वे मूर्तत्वप्रसङ्ग इति शास्त्रार्थसङ्ग्रहः ।

"अणुरेवासौ विज्ञानासमवायिकारणसंयोगाधारत्वात् मनोवत्, 'अणीयांसमणोरपी'ति बाधविरोधाविति(३) कश्चित्" । तदयुक्तम्, आत्मन्याविभौ मनसोऽणुत्वासिद्धेः, तत्संयोगक्रमादेव क्रियाक्रमोपपत्तेः । आगमस्तु 'महतोऽपि महीयांसम्' इति प्रथमपादमप-

---

ति । अतिप्रसङ्गादिति । अन्येषामपि तादृशसंयोगेन क्रियासिद्धिप्रसङ्गादित्यर्थः(४) । मूर्तत्व इति । प्रसङ्गद्वयेऽपि(५) पृथिव्यादिपरमाणुर्दृष्टान्तः । विशेषगुणवत इति । विशेषगुणेन मनो व्यवच्छिनत्ति(६) । अयञ्चात्मनोऽनादिरर्थो न्यायशास्त्रे विस्तरेणोक्तः, इह सङ्गृह्य कथित इत्याह इति शास्त्रार्थेति ।

तत्संयोगेति । अयमर्थः—युगपज्ज्ञानानुत्पत्त्या ज्ञानक्रियाक्रमसिद्ध्यर्थं क्रमेण बाह्येन्द्रियैः संयुज्यमानमणुत्वेन मनः कल्प्यते, तत्र यद्यात्मैवाणुः स्यात् तदा तत्संयोगक्रमादेव क्रियाक्रमोपपत्तेर्मनसो नाणुत्वं सिद्ध्यतीति । आगमस्त्विति । 'महतो हि महीयांसमणीयांसमणो-

---

(१) अत्र धर्मपदं गुणपरन्तेन जातिमत्तया न व्यभिचारः । नाश्रयत्वप्रसङ्ग इति मिश्रसंमतोऽत्र पाठो द्रष्टव्यः ।

(२) गुणवतामारम्भक, गुणवदारम्भक, इति च पाठान्तरम् ।

(३) आगमेन बाधोऽनुमानेन प्रतिरोध इत्याह बाधविरोधाविति । क्रियेति । ज्ञानायौगपद्योपपत्तेरित्यर्थः ।

(४) शरीरसंयुक्ताकाशादितस्तत्र क्रियोत्पत्तिप्रसङ्गादित्यर्थं इति मिश्राः । (५) प्रत्यक्षगुणानाश्रयत्व-आरम्भकत्वप्रसङ्गद्वयेऽपि ।

(६) अत्र विशेषगुणवन्नित्यमारम्भकमेवेति व्याप्तिः । आद्यविशेषणेन मनसो द्वितीयेनान्त्यावयविनो व्युदास इति मिश्राः ।

हायोपन्यस्तस्तदलमनेन ।

(१)"स्यादेतत्, सिद्धोऽप्ययमीदृशो हेय एव, आत्मदर्शी हि तदुपकारिणि रज्यते तदपकारिणश्च द्वेष्टि, रागद्वेषौ च मूलं संसारस्य, यस्तु तं न पश्येत् नासौ तदुपकारापकारिणमपि, ततो न च रज्येत् न द्विष्यात् न संसरेदिति जाङ्गलिकेन नैर्विष्यवन्मुमुक्षुणापि नैरात्म्यमेव भावनीयमिति चेत्"। न,(२) अनात्मदर्शिनो मुमुक्षुत्वव्याघातात् । न ह्यात्मानमप्रतिसन्धाय कश्चिद्दुःखं हातुमिच्छेत् सुखं वा अवाप्तुम्(३)। मया स्वर्गापवर्गफलभागिना भवितव्यमित्यभिप्रायस्य यावदभियोगमनुवृत्तेः, अननुवृत्तावभियोगनिवृत्तौ फलासिद्धेः। इयञ्च नै-

---

रपि' इत्येवंरूप आगमोऽणुत्वपक्षपातात् प्रथमपादमपहाय त्वयोपन्यस्तः, अनणुत्वेऽप्यागमस्य विद्यमानत्वात्, यतरस्मिन्पक्षे प्रमाणान्तरानुसारः सतरः पक्षः समाश्रणीय इत्यभिप्रायः ।

तादृशः=अनादित्वादिविशेषणविशिष्टः । तदुपकारापकारिणमपीति । पश्येदित्यनुषङ्गः । जाङ्गलिकेनेति । विषचिकित्सकेन नैर्विष्यभावनयैव भवचिकित्सा क्रियत इति हि तच्छास्त्रेषु प्रसिद्धिरिति । यावदभियोगमिति । अभियोगशब्देन तत्रेच्छाऽभिधीयत इति (४)। किञ्चेयं नैरात्म्यदृष्टिर्न केवलमास्तिक्यानुकूला न भवति प्रत्युत नास्तिक्यमेव दृढयेदित्याह इयञ्चेति । परलोकफलोपभोक्ता

---

(१) महतापीत्यादिरागमः स्तुतिपर इत्याशयेनाह पूर्वपक्षी स्यादेतदिति । अत्र नारायणमतेन 'तादृश' इति पाठः । हेयत्वे हेतुमाह आत्मेति ।

(२) समाधत्ते नेति । दुःखवन्तमात्मानं दृष्ट्वैव दुःखहानेच्छा मुमुक्षात्मदर्शिन एवेत्यर्थः, एतदेवाह नहीति ।

(३) इदं दृष्टान्तार्थमिति मिश्राः ।

(४) सुखावाप्तिदुःखहानानुकूलो व्यापारोऽभियोग इति मिश्राः ।

रात्म्यदृष्टिर्नास्तिक्यं दृढयेत्, (१)तच्च प्रबलविषयतृष्णा-परिलुप्तमनर्थमनन्तं प्रसुवीत, न चेदेवं कुतो 'यावज्जीवं सुखं जीवेत्' इत्यादयो निःशङ्कप्रलापाः ।

यत्तूक्तमुपकारिणि रज्येदपकारिणि द्विष्यादिति । तदेवमेतत्, यो हि मोक्षमुपकारं मनुते स तद्धेतौ रक्त-स्तमुपाददानस्तत्परिपन्थिनं द्वेषादलंप्रत्ययाद्वा परिहर-न्नेव समीहितं समासादयेत् न तु विपर्ययात् । यश्च भोगं सोऽपि तथेत्यनुकूलमेव प्रतिकूलं गृहीतं मन्दैः (बोद्धैः) । अन्यत्राप्यनुरज्येदन्यदपि(२) द्विष्यादिति तु न दृष्टं गोवैद्यकेऽपीति ।

---

आत्मा नास्तीति पश्यत ऐहिकविषयतृष्णया स्वरसप्रवृत्तं परलोकं प्रति नास्तिक्यं(३) दृढीकृतं स्यादिति । अनर्थप्रसाधकत्वाभावे नास्तिक्यस्य नास्तिकानां विषयतृष्णानिमित्ता 'यावज्जीवेत् सुखं जीवेत्' इत्यादयः समुल्लापाः प्रतिषिद्धगोचराः कुतो भवेयुरित्याह नचेदेवमिति । नैरात्म्यदृष्टेर्नास्तिक्यदार्ढ्यनिमित्तत्वं न चेदिति वाऽर्थो वर्णनीयः ।

यदुक्तं—आत्मदर्शिनो रागद्वेषौ भवत-इति, तदस्त्येव, तत्तु न दोषाय प्रत्युत गुणायैवेत्याह यत्त्विति । मुमुक्षोः कलयाऽपि विद्वेषो न युक्त इति चेत्तत्राह अलम्प्रत्ययाद्वेति । यश्च भोगमिति । उपकारं मनुत इत्यनुषञ्जनीयमिति । दृष्टान्ततया भोगस्योपन्यासः । अन्यत्रेति । उपकारानुकूलादन्यत्र(४) । अन्यदपि=प्रतिकूलाद-न्यदपीत्यर्थः ।

---

( १ ) ततः किमित्याह तच्चेति । तच्च नास्तिक्यं, विषयतृष्णा तावद्गम्यागम्यागमनाभक्ष्याभक्षणाद्यभिलाषः, तत्परिप्लुतन्तदुपरक्तमनर्थं नरकहेतुभूतमधर्मं जनयेदित्यर्थः ।

( २ ) अत्र 'अन्यत्रापीति' 'गोवैद्यकेपीति' च मूले-पाठान्तरम् ।

( ३ ) नास्ति कर्म नास्ति कर्मफलमिति निश्चयो नास्तिक्यम् ।

( ४ ) समीहितादन्यत्रेति मिश्राः ।

(१)"तथापि दुःखहेतुत्वादिन्द्रियादिवदसौ हीयता-मिति चेत्" यादृशो दुःखहेतुस्तादृशो हेय एव, सोपा-धिश्च तथा। "निरुपाधिरपि हीयतामिति चेत्"। अश-क्यत्वान्निष्प्रयोजनकत्वाच्च, (२)न हि तस्य हानं विना-शो, नित्यत्वात्। नापि विप्रयोगो(३), व्यापकत्वात्। नाप्यविप्रतिपत्तिः, यथा यथा तदर्थं यत्नस्तथातथा प्रति-पत्तेः प्रत्यापत्तेः। "उपेक्ष्यत इति चेत्"। कृतैवेतावन्तं कालमुपेक्षा तथापि तद्धानासिद्धेः। (४)निष्प्रयोजनश्चैतत्-सोपाधेर्हि विनाशो दुःखहानाय, निरुपाधेस्तु किमर्थम्। (५)"पुनः सोपाधित्वशङ्कयेति चेत्"। न, बीजाभावादिति।

---

इन्द्रियादिवदिति। इन्द्रियविषयतद्बुद्धिशरीरवदित्यर्थः। सोपाधिरिति। शरीरेन्द्रियाद्युपहित एव, तथा दुःखहेतुरित्यर्थः। यथायथेति। आत्मानं प्र(ती)ति अभितः प्रतिपत्त्यर्थं यत्नः कर्तव्य इत्यभिप्रायः। उपेक्ष्यत इति। तद्धानमिति शेषः। कृतैवेति। आत्महितार्थं प्रवर्तमानैरिति शेषः(६)। बीजाभावादिति। मिथ्या-ज्ञानस्य बीजस्याभावादिति(७)।

---

( १ ) शङ्कते तथापीति। असौ आत्मा।

( २ ) निरुपाध्यात्महानस्याशक्यत्वमेव विकल्पनिरासपूर्वकमुप-पादयति नहीति।

( ३ ) विप्रयोगो विप्रकर्षः, हानमित्यनुषञ्जनीयम्। एवमग्रेपि।

( ४ ) आत्महाने निष्प्रयोजनकत्वादिति द्वितीयं हेतुमुपपादयति निष्प्रयोजनं चैतदिति। सोपाधेर्हि त्याग इति पाठान्तरम्।

( ५ ) शङ्कते पुनरिति। पुनः शरीरादिप्रवृत्तिशङ्कया निरुपाधेरप्या-त्मनस्त्यागः स्यादिति शङ्कार्थः।

( ६ ) कृतैवेति। आत्मप्रतिपत्तावुपेक्षा कृता श्रवणादौ यत्नो न कृतस्तथाप्यात्महानं न सिद्धमिति मिश्राः।

( ७ ) संसारबीजं धर्माधर्मौ तदभावादेव न पुनरावृत्तिरिति मिश्राः॥

"कुतः पुनरयमुपादेयः"। (१)तथासति भावनाक्रमेण निःश्रेयससिद्धेः। "किमस्योपादानम्?" विवेकः। (२)"कुतः?"अनात्मनः शरीरादेः। "किं पुनरत्र"प्रमाणम्? न्याय आम्नायश्च। शरीरमेव हि तावन्मूर्धाभिषिक्तमनात्मानमात्मानं मन्यमानस्य तदुपादाय(३) तदनुकूलश्रीलोकविषया तृष्णा विजृम्भते, तथा (च)तत्प्रतिकूलविषये द्वेषः। न चैतत्केवलात्मदर्शिनः सम्भवति, निरुपाधेः पुत्रवित्तलोभाभावात्, तैरनुपकार्यत्वात्, छेदक्लेददाहशोषणाद्यनुपपत्तेः, विधिनिषेधानधिकाराच्च जन्मजातिव-

कुतः पुनरिति। (४)कुतः प्रयोजनादित्यर्थः। किम्पुनरत्रेति। आत्मोपादाने निःश्रेयससिद्धिरित्यत्र(५) किंप्रमाणमित्यर्थः। न्यायं तावद्दर्शयति शरीरमेवेति। सर्वथात्मप्रत्यनीकधर्माश्रयतया शरीरस्यानात्मत्वे मूर्धाभिषिक्तेति। अनुपकार्यत्वमेव दर्शयति छेदेति(६)। छेदक्लेदाद्यभावेन तन्निवर्तकत्वेन न तावत्पुत्रादेरुपकारकत्वमित्यर्थः। नापि हितप्रतिषिद्धानुष्ठानपरित्यागसिद्ध्यर्थं तदपेक्षेत्याह विधीति। जन्मेति। जन्मोपग्रहेण जातेष्ट्यादेः प्रवृत्तिः, ब्राह्मणत्वादिजात्युपग्रहेण 'ब्राह्मणो न सुरां पिबेत्'

(१) मननार्थं न्यायानुरागेण मननजातभावनया निदिध्यासनेन साक्षात्कारान्निःश्रेयससिद्ध्यर्थमित्याह तथासतीति। नित्याविभुतया हानवदुपादानमशक्यमित्यत आह किमिति मिश्राः।

(२) विवेको भेदज्ञानम्, कस्मात्? अत आहानात्मनः शरीरादेरात्मन इति शेषः। आत्मन इति पाठान्तरे तु न शेषः।

(३) तदुपादानायेति पाठान्तरम्।

(४) निरुपाधेरात्मनः प्रतिपत्त्यर्थं प्रणिधानं किमर्थमिति पृच्छति कुतः पुनरिति मिश्राः।

(५) अनात्मनः शरीरादेर्भेदनात्मा प्रतिपत्तव्य इत्यत्रेति मिश्राः।

(६) द्वेषाभावे हेतुमाह छेदेति। केवले ह्यात्मनि छेदादिदुःखाभाव इति न तद्धेतुकद्वेष इत्यर्थ इति मिश्राः।

योविस्तसंस्कारागुपग्रहेण (१)तत्प्रवृत्तेः । ततोऽनात्मन्यात्मग्रहो निदानं संसारस्य । मिथ्याज्ञानं (च) तत्त्वज्ञानान्निवर्तते, तच्च श्रवणमननादिक्रमेणोत्पद्यते, कारणनिवृत्तौ च कार्यं न जायते, उत्पन्नश्च धर्माधर्मप्रचयो भोगेन क्षीयत इति न्यायानुसारेण सङ्क्षेपः । आम्नायसारसङ्क्षेपस्तु 'अशरीरं वा वसन्तम्' इत्यादि ।

"तदप्रामाण्यं प्रपञ्चमिथ्यात्व-सिद्धान्तभेद-तत्त्वोपदेशपौनःपुन्येभ्योऽनृतव्याघातपुनरुक्तदोषेभ्य इति चेत्" ।

---

इत्यादेः प्रवृत्तिः, 'कृष्णकेशोऽग्नीनादधीत' इत्यादेर्वयउपग्रहेण, एवं वृत्तसंस्कारादिष्वपि द्रष्टव्यम् । मिथ्याज्ञानं चेति । अनात्मन्यात्मग्रहो मिथ्याज्ञानम्, तत्त्वज्ञानादनात्मविवेकेनात्मज्ञानान्निवर्तते । तच्च तत्त्वज्ञानं श्रवणमननादिक्रमेणोत्पद्यते, मिथ्याज्ञानात्मककारणनिवृत्तौ तत्कार्यधर्माधर्मप्रचयानुत्पत्तिः, उत्पन्नस्य च भोगेन क्षयः, ततश्च संसारनिवृत्तिरिति । न्यायानुसारसङ्क्षेप इति(२) । न्यायनिरूपणसंक्षेप इति । आम्नायेति । 'अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशतः' इत्यादिराम्नायः आत्मस्थदेहेन्द्रियाद्युपाधिविगमे संसारनिवृत्तिं दर्शयतीति ।

अत्र पूर्वपक्षी सूत्रेणैवाम्नायस्याप्रामाण्यमाशङ्कते तदप्रामाण्यमिति । अयमर्थः—प्रपञ्चमिथ्यात्वश्रुतीनां (३)प्रत्यक्षादिप्रमाणान्तरविरोधादनृतवादित्वम्, नानासिद्धान्तप्रतिपादिनीनां श्रुतीनां परस्पर-

---

(१) ननु केवलात्मदर्शिनोऽपि विधिनिषेधबलाद्यागाहिंसादौ प्रवृत्तिनिवृत्ती स्यातामत आह तत्प्रवृत्तेरिति । ततः प्रवृत्तेरित्यत्र पाठान्तरम् ।

(२) न्यायानुसारेणेति । एतदात्ममननानुकूलस्य न्यायानुसरणमित्यर्थ इति मिश्राः । अत्र मूले नारायणमतेन 'न्यायानुसारसंक्षेप' इति, मतान्तरेण 'न्यायार्थसारसंक्षेप' इति च पाठान्तरं द्रष्टव्यम् ।

(३) प्रपञ्चस्य प्रत्यक्षत एवोपलब्धेस्तन्मिथ्यात्वप्रतिपादकाम्नायस्यानृतवादित्वमित्यर्थः ।

(१)न, स्वतात्पर्यत्वात् । निष्प्रपञ्च आत्मा ज्ञेयो मुमुक्षुभिरिति तात्पर्यं प्रपञ्चमिथ्यात्वश्रुतीनाम्, आत्मन एवैकस्य ज्ञानमपवर्गसाधनमिति अद्वैतश्रुतीनाम्, दुरूहोऽयमिति पौनःपुन्यश्रुतीनाम्, (२)बहिःसङ्कल्पत्यागो निर्मनस्कश्रुतीनाम्, आत्मैवोपादेय इत्यानन्दश्रुतीनाम्, (३)गारुडवदनुष्ठाने तात्पर्यं प्रकृत्यादिश्रुतीनाम्,

व्याघातः(४), एकस्मिन्नेव तत्त्वे पुनःपुनरुपदिश्यमाने पौनरुक्त्यम् (५), एभिर्हेतुभिस्तस्याम्नायस्याप्रामाण्यमित्यर्थः । निष्प्रपञ्च इति । प्रपञ्चस्य मिथ्यात्वाद्देहादिप्रपञ्चशून्य एवात्मा ध्येय इत्यत्र तात्पर्यम्, न तु मिथ्यात्वस्वरूप इति । आत्मन एवेति । अद्वितीय एव स्वात्माऽपवर्गसाधनतया ज्ञेय इत्यत्र तात्पर्यमद्वैतश्रुतीनां न तु द्वितीयात्मनास्तित्व इत्यर्थः । दुरूह इति । दुरूहत्वादात्मनः पुनःपुनरावृत्त्या तत्त्वोपदेश इत्यर्थः । निर्मनस्केति । समनस्कस्यैवात्मनो बहिर्मनस्कत्यागो निर्मनस्कत्वश्रुतीनां तात्पर्यगोचर इत्यर्थः । आत्मैवेति । आनन्दधर्मकस्याप्यात्मन आनन्दस्वरूपप्रतिपादिनीनां श्रुतीनाम्, अथवा मोक्ष-

( १ ) तासां श्रुतीनामन्यतात्पर्यान्नैते दोषा इत्याह नेति । तदेवाह निष्प्रपञ्च इत्यादिना ।

( २ ) इदानीं सिद्धान्तभेदप्रतिभासश्रुतीनामन्यपरत्वं दर्शयति बहिरिति । निर्ममश्रुतीनामिति पाठान्तरम् ।

( ३ ) गारुडवदिति । शरीरादितो भिन्नं स्वकीयं तत्त्वमजानत एवात्मनस्तत्त्वज्ञानार्थं प्रणिधानं विधेयमित्येतदर्थं साङ्ख्यमतोत्थापनम्, तत्रापि चाहमाऽचेतनाया एव प्रकृतेर्महत्तत्त्वस्य वा चेतनोपरागप्रतिपादनं, यथा जाङ्गलिकेनाचेतनस्यैव दष्टस्य कष्टेन चैतन्यमुत्पाद्यत इत्यर्थं इति मिश्राः ।

( ४ ) 'सदेव सौम्येदमग्र आसी आहरासीन्न रात्रिरासीदि'त्यादौ सिद्धान्तभेदप्रतिपादनाद्व्याघातः ।

( ५ ) तत्त्वोपदेशः सिद्धान्तभेदोपदेश आम्नायोपदेशो वा, 'त्रिःप्रथमामित्याह त्रिरुत्तमामि'त्यादौ च पौनरुक्त्यमित्यर्थं इति मिश्राः ।

**तन्मूलानाञ्च सांख्यादिदर्शनानाञ्चेति नेयम् । अन्यथा(१)**

**जैमिनिर्यदि वेदज्ञः कपिलो नेति का प्रमा ।**
**उभौ च यदि वेदज्ञौ व्याख्याभेदस्तु किंकृतः ।**

**"प्रामाण्यन्तु तस्य कुत इति चेत्" । न, आप्तोक्तत्वात् । (२)"तदसिद्धमिति चेत्" । न, विश्वस्य कर्तुरनुमानसिद्धत्वात्—विवादाध्यासितकर्तृकं हि सकर्तृकं कार्यत्वात् इति । "विशेषविरुद्धोऽयं हेतुरिति चेत्" । न, विरोधिविशेषाप्रतीतौ विरोधस्य प्रत्येतुमशक्यत्वात् । तत्प्रतीतौ वा सहोपलम्भनियमेन विरोधस्य बा-**

---

दशायामानन्दस्यापि विशेषगुणस्योच्छेदात्तत्प्रतिपादिनीनां आनन्द इवात्मैवोपादेय इत्यत्र तात्पर्यमिति । कथं प्रकृत्यादिश्रुतीनां सांख्यादिदर्शनानाञ्च कर्मानुष्ठाने तात्पर्यमित्यत्राह **अन्यथेति** । जैमिनिवत् कपिलोऽपि वेदज्ञ एव, तत्र यथा जैमिनिः कर्मानुष्ठानपरतया वेदं व्याचष्टे तथा कपिलोऽपि वेदं व्याचक्षाणः कर्मानुष्ठानमभिप्रैति, न ह्येकस्य वेदस्य तदभिज्ञयोर्व्याख्याभेद उपपद्यत इति ।

ननु मा भूद्वेदस्याप्रामाण्यनिश्चयः प्रामाण्यनिश्चयोऽपि कुतस्त्य इत्याशङ्कते **प्रामाण्यन्त्विति । विश्वस्य कर्तुरिति** । न चासर्वज्ञ(त्व)स्य विश्वकर्तृत्वं सम्भवति, न च सर्वज्ञस्य विशेषादर्शनसम्भवः, तदभावे च मिथ्याज्ञानासम्भवात्तन्मूलयो रागद्वेषयोरसत्त्वेन तन्मूलस्य विप्रलम्भस्य मिथ्याज्ञानाभावादेव भ्रमस्याप्यभावात् नानाप्तत्वशङ्काऽस्तीत्याप्तस्तत्प्रणेतृत्वं वेदानां साधयिष्यत इत्यभिप्रायः । **विरोधिविशेषेति**(३) । प्रकृतहेतुना विरुद्ध्यन्ते विशेषास्ते प्रतीता न वा ? यदि न प्रतीताः, कथं विरोधः प्रत्येतव्यः, प्रतीतस्वरूपयोर्हि द्वयोर्मिथो धर्मिप-

---

(१) तात्पर्यभेदाकल्पने । (२) शङ्कते तदिति । आप्तासिद्ध्या वेदे आप्तोक्तत्वमसिद्धमिति शङ्कार्थः । समाधत्ते नेति ।

(३) विरोधो ह्यशरीरिकर्त्रा स च न सिद्धः, सिद्धश्चेन्न विरोध इत्याह न विरोधिविशेषेति मिश्राः ।

धितत्वात् । "सर्वथैवाप्रतीतस्याभिप्रायगोचरत्वमपि कथमिति चेत्" । न, स्वार्थानुमानसिद्धत्वात् । "ततोऽपि कथं सिद्ध्यत्विति चेत्" । (१)अप्रतीतप्रत्यायकं प्रमाणं न स्वप्रतीतेन विरोधः शक्यनिश्चय इत्यतो विशेषात् । "का पुनरत्रानुमानस्यैवम्भूतप्रत्यायने शक्तिरस्तीति चेत्" । (२)आकाङ्क्षानुपपत्तिनियमभेदेन त्रिवि-

रहेऽप्युपलब्धेर्विरोधो निश्चीयते, अथ प्रतीताः, तर्हि हेतुयुक्त पक्षधर्मिण्येव तेषां प्रतीतेर्हेतुना सहोपलब्धानां कुतो विरोधनिश्चयः, न हि पक्षधर्मव्यतिरेकेण सर्वज्ञपूर्वकत्वादीनां विशेषाणां क्वचित्सिद्धिरिति । ननु क्षित्यादिकर्तुरलौकिका विशेषा ये भवदभिप्रेतास्तेषां सर्वथैवाप्रतीतानां कथं भवदभिप्रायगोचरत्वमपीति शङ्कते (३)सर्वथैवेति । स्वार्थानुमानेनेति । स्वार्थानुमानेन प्रथमं प्रतीतं विशेषमभिप्रेत्य परार्थानुमानेन परं प्रति प्रतिपादनं क्रियत इति(४) । किन्तत् स्वार्थानुमानमिति चेत् । शृणुष्व—प्रतीतिसमारूढमिदमेव कार्यत्वं स्वार्थानुमानं भवति, इदमेव पञ्चावयववाक्यारूढं परार्थानुमानमिति व्यवह्रियत इति बोद्धव्यमिति । स्वार्थानुमानेनाप्यप्रतीतं कथं सिद्ध्यत्विति शङ्कते (५)ततोऽ-

---

(१) प्रमाणमहिम्ना तदुपस्थितिरित्याहाप्रतीतेति । ननु विरोधोऽपि तादृशेनैव निरूप्यतामत आह न त्विति । प्रतीतिदशायां च सहोपलम्भादेवाविरोध इत्यर्थः ।

(२) सहकारिविशेषस्य नियामकत्वान्नातिप्रसङ्ग इत्याहाकाङ्क्षेति । एकविशेषबाधे विशेषान्तरविषयत्वं विना सामान्यप्रतीतेरपर्यवसानमाकाङ्क्षा, विशेषान्तरं विना पक्षे साध्यस्यासद्भावोऽनुपपत्तिस्ताभ्यां तदुभयरूपेण वा नियमस्य व्याप्तेर्भेदो विशेषस्तेनाकाङ्क्षानुपपत्तिभ्यामिति यावत्, इति दीधितिः ।

(३) तथा च न तल्लिङ्गे न्यायप्रयोगादिसम्भव इत्यर्थः ।

(४) पक्षधर्मताबलेन स्वार्थानुमाने तद्भानमावश्यकमित्यर्थ इति मिश्राः

(५) पक्षधर्मता व्याप्तिबलानीतमर्थं पक्षे साधयति न तु सर्वथैवाप्रतीतमिति मिश्राः ।

**धः सम्बन्धः, तत्राकाङ्क्षानियमाभ्यामन्वयी, अनुपपत्तिनियमाभ्यां व्यतिरेकीति विभागः।**

**"अस्तु तर्हि सत्प्रतिपक्षत्वं शरीराजन्यत्वादिति चेत्"। न, असमर्थविशेषणत्वेनासिद्धभेदस्यातुल्यब-**

---

**पीति। एवम्भूतेति।** अत्यन्ताप्रतीतार्थप्रत्यायन इति। **त्रिविधः सम्बन्ध(१) इति।** का शक्तिरिति शक्तिपश्ने सम्बन्धेनोत्तरं, सम्बन्धस्यैव कारणसहकारित्वेन शक्तिशब्दाभिधेयत्वं मन्वानस्येति मन्तव्यम्। **आकाङ्क्षानियमाभ्यामिति।** लिङ्गसामानस्य लिङ्गिसामान्येन नियमात्तन्मात्रे प्रथमं प्रतिपन्ने पक्षविशेषस्य स्वानुकूललिङ्गिविशेषापेक्षया तस्यादृष्टपूर्वस्यापि प्रतीतिरन्वयिना, यथा वेदस्य वाक्यत्वेन पौरुषेयत्वमात्रे प्रमिते तस्यालौकिकार्थस्य तदभिज्ञसर्वज्ञप्रणीतत्वसिद्धिः। व्यतिरेकिणा तु विपक्षव्यावृत्ततया दृष्टेन तदभावनियतेन तत एव विपक्षेऽनुपपन्नेनादृष्टपूर्वस्यापि विपक्षविरोधिनः साध्यस्य सिद्धिः, यथा वेदस्य वेदत्वेन हेतुनाऽसर्वज्ञप्रणीतेभ्यो व्यावृत्तत्वेन तत्रैवाऽनुपपत्त्या तद्विरोधिनः सर्वज्ञप्रणीतत्वसिद्धिरिति।

ननु मा भूद्विशेषविरुद्धत्वम्, अस्तु सत्प्रतिपक्षत्वमिति शङ्कते **अस्तु तर्हीति।** विवादपदमकर्तृकं शरीराजन्यत्वात् व्योमादिवादित्यनेन सत्प्रतिपक्षत्वमित्यर्थः। **असमर्थेति। अयमर्थः**-केवलस्याजन्यत्वस्याकर्तृत्वस्य व्यभिचारे हि सति तद्व्यावर्तनेन विशेषणस्य सामर्थ्यं स्यात्, न चात्र केवलस्य व्यभिचारोऽस्तीति। केवलस्याजन्यत्वस्य

---

(१) आकांक्षानुपपत्तिनियमयोर्भेदेन त्रिविधः सम्बन्धः। एकोऽन्वयसहचारमात्रग्राह्योऽपरोऽन्वयव्यतिरेकसहचारग्राह्योऽन्यश्च व्यतिरेकसहचारमात्रग्राह्यः। तत्राकांक्षा प्रतीत्यपर्यवसानम्, अनुपपत्तिश्च प्रतीतापर्यवसानमनयोरन्यतरस्यानुमितौ नियम एवेत्यर्थः। क्वचित्तु द्विविधः सम्बन्ध इति पाठः। स तु सुगमः। इममेव पाठं विषदयति मूले तत्रेति भिन्नाः।

त्त्वात् । "असिद्धिपरिहारेण विशेषणं समर्थमिति चेत्" । न, एकामसिद्धिं परिहरतो द्वितीयापत्तेः, अन्यथा विवादाध्यासितं नादृष्टहेतुकं शरीराजन्यत्वादित्यनेनापि जन्यत्वस्य सत्प्रतिपक्षत्वप्रसङ्गात् ।

"तर्हि तर्कापरिशुद्धिरस्तु, शरीरानिवृत्तौ बुद्धिनिवृत्तेः, बुद्धिनित्यत्वे शरीरानुपयोगवद्वा प्रयत्ननित्यतायां ज्ञानेच्छानुपयोगादिति चेत्" । (१)न, प्रयत्नस्य द्विधर्म(क)त्वात् । सहि ज्ञानकार्यो ज्ञानैकविषयश्च कर्तृत्व-

---

स्वरूपासिद्धत्वेन तत्परिहारेण विशेषणसामर्थ्यमस्तीति शङ्कते असिद्धिपरिहारेणेति । स्वरूपासिद्धिं परिहरतो विशेषणस्य व्याप्यत्वासिद्ध्यापत्तेरसामर्थ्यं तदवस्थमिति परिहरति एकामिति । अन्यथेति । हेतुविशेषणस्य विपक्षव्यवच्छेदकत्वमितरेण स्वरूपासिद्धिमात्रेणैव सामर्थ्यं चेदित्यर्थः । नादृष्टेति । मीमांसकैश्चापि विवादाध्यासितस्यादृष्टहेतुकत्वं कर्मभिस्सर्वजीवानां तत्त्वसिद्धेः सिद्धसाधनमिति वदद्भिरिष्यत एवेत्यभिप्रायः । इदं च तेषां साधनम्–विवादास्पदमदृष्टहेतुकं जन्यत्वात्सम्प्रतिपन्नवदिति ।

ननु यदि न विशेषविरुद्धत्वं दूषणं यदि वा न सत्प्रतिपक्षत्वं तर्हि प्रतिकूलतर्कोपहतिरस्तु दूषणमिति शङ्कते तर्हि तर्केति । बुद्धेः (२)शरीरहेतुकत्वाच्छरीरपूर्वकत्वनिवृत्तौ बुद्धिपूर्वकत्वस्यापि निवृत्तिः । यदि बुद्धेर्नित्यत्वं शरीराभावेऽपि बुद्धिः स्यात्, तर्हीश्वरप्रयत्नस्यापि नित्यत्वात् प्रयत्नहेतुभूतयोर्ज्ञानेच्छयोरभावेऽपि प्रयत्नपूर्वकत्वसम्भवात् ज्ञानेच्छापूर्वकत्वमपि न स्यात् इति । ज्ञानकार्य इति । ज्ञानकार्यत्वं

---

( १ ) नित्यावपीच्छाप्रयत्नौ विषयलाभार्थं ज्ञानमपेक्षेते इति परिहरति नेति ।

( २ ) काशिकाकारोक्ततर्कापरिशुद्धिं शङ्कते शरीरेति । अपरिशुद्धिरनुमानस्येत्यर्थः ।

म्, (१)तत्र कार्यत्वनिवृत्तौ कारणतया ज्ञानं माऽपेक्षि-ष्ट विषयार्थन्तु तदपेक्षा केन वार्यत । (२)न च तस्य स्वरूपेणैव विषयप्रवणत्वम्, ज्ञानत्वप्रसङ्गात्। अयमेव हि ज्ञानात्प्रयत्नस्य भेदो यदयमर्थाप्रवण(३) इति। न च निर्विषय (४)एवास्त्विति वाच्यम्। अकारणत्वप्रसङ्गात्, तथाच सोऽप्येकः कथं सिद्ध्येत्। "मा सैत्सीदिति चेत्" न, तत्र साधनस्य निर्दोषत्वात्। दोषे वा स एव वा-च्यः। "सर्वविषयत्वात्तस्य(५) किं विषयनियमार्थेन ज्ञानेनेति चेत्"। न, तस्य स्वरूपेणार्थप्रवणत्वाभावा-त्, भावे वा ज्ञानत्वप्रसङ्गादित्युक्तम्। "जीवनपूर्वकप्र-

---

ज्ञानैकविषयत्वं च द्वौ धर्मौ प्रयत्नस्य(६), तत्र नित्यस्यात्मलाभाय कारणापेक्षाभावेऽपि सविषयत्वास्पदप्रयत्नस्य ज्ञानापेक्षाऽस्त्येवेति। यदि प्रयत्नस्य स्वरूपेणैव हि विषयप्रवणत्वं यदि वा निर्विषयत्वं तदा विष-यलाभाय ज्ञानापेक्षा न स्यादपि, नचैवं सम्भवतीत्याह न च तस्येति। अकारणत्वप्रसङ्गादिति। कारकविषयस्य प्रयत्नस्य प्रवर्तकत्वेन कार्यहेतुत्वं न स्वरूपत इत्यभिप्रायः। सोऽप्येक इति। प्रयत्नपू-र्वकत्वमात्रमपि कार्यत्वेन हेतुना कथं सिद्ध्येदित्यर्थः। तत्र साध-नस्येति। प्रयत्नपूर्वकत्वमात्रसाधने साधनकार्यत्वस्य निर्दोषत्वात् ताव-

---

(१) तत्किमीश्वरस्यापि कार्यः प्रयत्न इत्यत्राह तत्रेति।

(२) अत्र 'नवास्येति' पाठान्तरम्। विषयप्रवणत्वं=विषयनिरूप-णाधीननिरूपणत्वम्।

(३) अर्थाप्रवण इति। न स्वरूपसम्बन्धेन विषयनिरूपणाधीन-निरूपणः, ज्ञानद्वारा तत्स्यादित्यर्थः।

(४) निर्विषयत्वमेवास्त्विति पाठान्तरम्।

(५) प्रयत्नस्य, पूर्वपक्षः स्फुटार्थः।

(६) प्रथम एव कर्तृत्वपर्यवसन्नः, स च ज्ञानकार्यः सन् ज्ञानस-मानविषयोऽवश्याभ्युपगन्तव्य इत्यर्थ इति मिश्राः।

यत्नवद्विषयव्यवस्था भविष्यतीति चेत्" । न, तस्य जात्यन्तरत्वात्, (१)एकजातीयत्वे तस्यापीच्छापूर्वकत्वप्रसङ्गात्, इच्छाया वा तत्कारणत्वं(२) न स्यात् तामन्तरेणापि तज्जातीयस्योत्पत्तेः । (३)तस्मात् कृतिजातीयस्य ज्ञानेच्छाभ्यामेव विषयव्यवस्था, स च साधयितुमिष्ट इति ।

तार्किकगर्ववाह(४)स्त्वाह—"ननु सपक्षविपक्षयोर्दर्शनादर्शनमात्रस्य शतशः प्रवृत्तावपि व्यभिचारोपलम्भात्(५) तल्लक्षणस्यानुपलब्धव्यभिचारस्यापि

न्मात्रसाधने तर्कापरिशुद्धेरप्यभावादित्यर्थः(६) । जीवनपूर्वकेति । जीवनमात्रपूर्वकस्य प्रयत्नस्य सुषुप्त्यवस्थायां ज्ञानाभावेऽपि अनुवर्तमानस्य यथा स्वत एव विषयनियमः तथेश्वरप्रयत्नस्यापि भविष्यतीत्यर्थः(७) । जीवनपूर्वकप्रयत्नस्य कृतिजातीयत्वाभावात्प्रयत्नाज्जात्यन्तरत्वान्न तन्निदर्शनमिति परिहरति नेति । स चेति । क्षित्यादीनां कार्यत्वेन हेतुना कृतिमतः कर्तुरेव साधनमुपक्रान्तमित्यर्थः ।

तल्लक्षणस्येति । दर्शनादर्शनमात्रलक्षणस्य हेतोः, यद्वा प्रतिब-

---

(१) विजातीयत्वात्, तत्र हेतुमाहैकजातीयत्व इति । वैजात्यविरहे इत्यर्थः । तस्यापि जीवनयोनियत्नस्यापि । (२) कृतिकारणत्वम् ।

(३) उपसंहरति तस्मादिति । चिकीर्षाधीनस्य कृतिजातीयस्येत्यर्थः । इच्छया कृतेरिच्छायाश्च ज्ञानेन विषयनियम इति भावः ।

(४) नैयायिकम्मन्यो बौद्ध इत्यर्थः ।

(५) पार्थिवत्वलोहलेख्यत्वादौ व्यभिचारोपलब्धेरित्यर्थः । तल्लक्षणस्य=अव्यभिचारित्वलक्षणस्याविनाभावस्य निश्चेतुमशक्यत्वाद्‌तिरिक्तमविनाभावलक्षणं वक्तव्यमित्यर्थः ।

(६) कार्यत्वेन कृतिमज्जन्यत्वे साध्ये दोषाभावादित्यर्थ इति कल्पलता ।

(७) जीवनयोनियत्नस्य ज्ञानमन्तरेणैव यथा श्वासादिविषयत्वं तथाऽत्रापि स्यादित्यर्थ इति मिश्राः ।

तथाभावसम्भावनाक्रान्तत्वाल्लक्षणान्तरं प्रतिबन्धस्य वक्तु-मुचितम्, तच्च उपाधिविरहो वा(१) स्यात्, तदुत्पत्ति-र्वा विपक्षबाधकं वेति सङ्क्षेपः ।

तत्र न प्रथमः(२), अदृश्योपाध्यभावानिश्चये अभ्यु-पायाभावात्, दृश्येनैवोपाधिना च भवितव्यमिति निय-मानुपपत्तेः । नापि द्वितीयः(३), सा ह्यन्वयव्यतिरेका-भ्यां निश्चीयते । तौ च दृश्यशरीरवच्चेतननिष्ठौ वा स्याताम्, (४)उपाधिविधुरदृश्यादृश्यसाधारणचेतन-निष्ठौ वा । न प्रथमः, विटपादौ व्यभिचारात्, (५)प्रकृ-

---

ऽघस्येति । तथाभावेति । सव्यभिचारत्वसम्भावनाक्रान्तत्वादित्यर्थः ।

अदृश्यस्योपाधिमत्त्वमेव नास्ति किन्तु दृश्यस्यैव तथादर्शनादिति चेत्, तत्राह दृश्येनैवेति । सा हीति । अयमर्थः । अन्वय-व्यतिरेकाभ्यामेव तावत्तदुत्पत्तिः कार्यकारणभावोऽवधार्यते, (६)तौ च कार्यस्य चेतनकारणत्वं बोधयन्तौ दृश्यशरीरावच्छिन्नचेतनगोचरौ वा स्याताम्, शरीरोपाधिविधुरदृश्यादृश्यशरीरसाधारणचेतनमात्रगोचरौ वा स्यातामिति । विटपादाविति । न हि विटपादीनां कार्यभूतानां दृश्य-शरीरोपहितचेतनपूर्वकत्वं सिद्धमिति(७) । प्रकृतेति । साधयितुं प्रक्रा-न्तस्य निरुपाधेः कर्तुरसिद्धश्चेति । एवं प्रथमस्यान्वयासिद्धिरुक्ता व्यतिरे-

---

(१) अनौपाधिकसम्बन्धो वा इत्यर्थः ।

(२) उपाधिविरहपक्षः । निश्चयोपायाभावादिति पाठान्तरम् ।

(३) तदुत्पत्तिपक्षः । सा—तदुत्पत्तिः ।

(४) उपाधिः शरीरमिति मिश्राः ।

(५) प्रकृतेति । त्वदभिमताशरीरिकर्त्रसिद्धेरित्यर्थः ।

(६) अन्वयव्यतिरेकौ ।

(७) व्यभिचार इति शेषः । शरीरिचेतनमन्तरेणाप्यङ्कुरदर्शना-दित्यर्थः ।

तासिद्धेश्च । न द्वितीयः, घटादिकार्यव्यतिरेकसमये तत्प्रयोजककुलालादिव्यतिरेकवददृश्यचेतनमात्रव्यतिरेकस्य निश्चेतुमशक्यत्वात्, नहि कुलालादिदृश्यव्यतिरेके तस्यावश्यं व्यतिरेको विटपादावपि तथाभावप्रसङ्गात् ।

'तर्हि सन्तानानां तत्रानुमानमपि कथम्? कुम्भकारव्यतिरेके दृश्यादृश्यसाधारणचिन्मात्रव्यतिरेकासिद्धिवत् स्वचित्तव्यतिरेकेऽपि कम्पं प्रति चिन्मात्रव्यतिरेकासिद्धेरिति चेत्'। न,(१) वादान्तरत्वात् ।

---

कासिद्धेर्द्वितीयोऽपि पक्षो न सम्भवतीत्याह न द्वितीय इति । कुलालादिव्यतिरेक एव निरुपाधिचेतनव्यतिरेकेऽपि प्रमाणमिति चेत्, तत्राह नहीति । विटपादावपि सोपाधिव्यतिरेकेऽपि निरुपाधेरपि व्यतिरेकप्रसङ्गात्तथा।निष्टं भवतामित्यभिप्रायः(२) ।

कार्यत्वाच्चेतनमात्रानुमानासिद्धिवत् बौद्धमतेऽपि परचेष्टया सन्तानान्तरानुमानमपि न सिद्ध्येदित्याशङ्कते (३)सन्तानेति । अयमर्थः—चेष्टाचित्तसन्तानयोरप्यन्वयव्यतिरेकाभ्यामेव कार्यकारणभावो निश्चीयते तत्रापि भवदुक्तनयेन व्यतिरेकनिश्चयशक्तेः परचेष्टया चित्तसन्तानानुमानं न स्यात , स्वचित्तव्यतिरेकेऽपि चिन्मात्रव्यतिरेकासिद्धेः स्वचेष्टायां

(१) बौद्ध एव परिहरति नेति । अर्थान्तरमेतदित्यर्थः । ननु तत्रापि तदुत्पत्तिग्रहस्त्वयाऽवश्यं वक्तव्य इत्यत आह यदापीति मिश्राः ।

(२) तत्रापि कुलालादिव्यतिरेकग्रहे चेतनमात्रव्यतिरेकोऽपि गृह्येतेति हेतोस्तत्रैव सकर्तृकत्वव्यभिचारः स्यादित्यर्थ इति मिश्राः ।

(३) बौद्धः शङ्कते कथन्तर्हीति । कम्पेन चेष्टया तावत्परचित्तसन्तानोऽनुमीयते तत्रापि व्यतिरेको दुर्ग्रह एव, यथा कुलालव्यतिरेके तृणादौ चेतनभावव्यतिरेको दुर्ग्रहस्तथाच परचेष्टां प्रति स्वचित्तव्यतिरेकस्य दुर्ग्रहत्वेनान्वयव्यतिरेकाभ्यां चेष्टां प्रति स्वचित्तसन्तानस्य कारणता न स्यादित्यर्थ इति मिश्राः । अत्र 'चेष्टया तर्हि सन्तानान्तरानुमानमिति' मूले पाठान्तरं द्रष्टव्यम् ।

यद्यपि तत्प्रस्तावः, तदापि स्वदेहे स्वपरसन्तानसाधारणचिन्मात्राविनिर्भागवृत्तिदृश्यदेहमात्रस्यैव प्रत्यक्षानुपलम्भाभ्यां कम्पम्प्रति कारणत्वप्रतीतेः परचित्तस्यापि कारणत्वं प्रतीयत इति । नापि तृतीयः(१) । विपक्षेऽपि बाधकाभावात् । देशकालनियमादीनां स्वकारणायत्तसान्निधिना कादाचित्केन प्रतिनियतशक्तिना कारणेनाचेतनेनाप्युपपत्तेरिति" ।

(२)उत्तानोल्लपितमेतत् । विकल्पत्रयस्याप्युपपत्तेः ।

व्यतिरेकासिद्धेरिति । स्वपरसन्तानेति । अयमर्थः—नात्र चिन्मात्रस्य चेष्टाकारणत्वमिष्टं येन व्यतिरेकासिद्धिः स्यात्, किन्तु चिदुपहितं दृश्यदेहस्यैव, तत्र स्वदेह एव स्वपरसन्तानचिन्मात्रसंवलितदृश्यदेहमात्रस्यैव कम्पम्प्रत्यन्वयव्यतिरेकाभ्यां कारणत्वावधारणात् परचित्तस्यापि कारणत्वं प्रतीयत इति । विपक्षेऽपि=चेतनपूर्वकत्वाभावेऽपि कार्यत्वस्य बाधकाभावादिति । ननु कार्यस्य देशनियमः कालनियमः कारणनियमश्च प्रेक्षावत्स्वतन्त्रचेतनपूर्वकत्वाभावे कथं सिद्ध्येयुरित्याशङ्कयाह देशेति(३) । स्वकारणायत्तसान्निधिनेत्यनेन यस्मिन्देशे स्वकारणैः सन्निधाप्यन्ते कारणानि तस्मिन्नेव देशे कार्यमिति देशनियमो दर्शितः, कादाचित्केत्यनेन कालनियमः, प्रतिनियतशक्तिनेत्यनेन कारणनियम इति ।

---

(१) विपक्षबाधकपक्षः ।

(२) समाधत्ते उत्तानेति । विकल्पेति। प्रकारत्रयेणापि प्रतिबन्धः सुग्रहः इत्यर्थः ।

(३) देशकालेति । यदि कर्ता न स्यादिहेदानीं कार्यं न स्यादित्यनेन विपक्षबाधकेन व्याप्तिर्ग्राह्या, तत्र कर्तव्यतिरेकप्रयुक्तो न कार्यव्यतिरेकः न वा कर्त्रन्वयप्रयुक्तस्तदन्वयः किन्तु कारणान्तरप्रयुक्तव्यतिरेकप्रयुक्त एवेत्यर्थ इति मिश्राः ।

तथाहि चत्वारो हि जगति भावा भवन्ति-(१)विरोधी-बहिर्वृत्तिः सहवृत्तिरन्तर्वृत्तिश्चेति, न तु पञ्चमः प्रकारः शङ्कितुमपि शक्यः, विरोधाविरोधयोः साहित्यासाहित्ययोराधिक्यानाधिक्ययोः परस्परनिषेधरूपत्वात् ।

तत्र द्वय(२)मत्र नोपाधित्वेन शङ्कनीयम्, अकार्यस्यैवाकार्यस्यापि वा सकर्तृकत्वप्रसङ्गात, न चेदमिष्टम्, (३)अकार्यस्य कारणवत्तामात्रेण सहजविरोधे कारकविशेषस्य कर्तुरनवकाशात् । नापि तृतीयः, तुल्ययोग-

विरोधीति । प्रथमन्तावद्विरोधाविरोधव्यतिरेकेण प्रकारान्तराभावः, तयोरेकस्य विधिरूपत्वादितरस्य तन्निषेधरूपत्वाद्विध्यभावे निषेध एव निषेधाभावे विधिरेवेति न तृतीयप्रकारावकाशः । एवमविरुद्धोऽपि सहितासहितभेदेन द्विविध एव, असहितोऽपि बहिर्वृत्तिरन्तर्वृत्तिश्चेति द्विविध एव । कथं हि परस्परविधिनिषेधाभ्यां प्रकारान्तरं वदन् विध्यभाववचनेन निषेधं विधाय पुनरनुन्मत्तस्तमपि निषेधेत्सोऽपि नेति ।

अकार्यस्यैवेति(४) । कार्यत्वविरोधेन उपाधित्वे उपाधेः साध्यसमव्याप्त्या अकार्यस्यैव सकर्तृकत्वप्रसङ्गः, बहिर्वृत्तेरुपाधित्वे कार्यत्वव्यतिरेकेणाप्युपाधिसद्भावात् अकार्यस्यापि सकर्तृकत्वप्रसङ्ग इति । (५)तुल्य

---

(१) विरोधीति । साधनविरोधी, बहिर्वृत्तिः साधनव्यापक सहवृत्तिः साधनसमनियतः, अन्तर्वृत्तिः साधनव्याप्यः । चत्वार एव कथमत आह विरोधेति । (२) विरोधी बहिर्वृत्तिश्चेति द्वयम् ।

(३) ननु भवत्वकार्यमपि सकर्तृकं को दोष इत्यत आह अकार्यस्येति । यस्य कारणत्वमेव विरुद्धं तस्य सकर्तृकत्वं सुतरां विरुद्धमित्यर्थः ।

(४) साधनविरोधी चेदुपाधिः स साध्यव्यापकत्वे सति साध्यव्याप्यो वक्तव्यस्तथा च साध्यव्याप्येनोपाधिना कार्यविरोधिनाऽकार्यस्य ज्ञानाद्धेरेव सकर्तृकत्वं सिद्ध्येदित्यर्थः । साधनव्यापकस्योपाधेर्दूषमाहाकार्यस्यापीति । इदमपि समव्याप्ताभिप्रायेण ।

(५) साधनसहवृत्तिरुपाधिरित्यत्राह तुल्येति मिश्राः ।

**क्षेमयोरविशेषात्, व्यभिचारशङ्कानाधायकत्वाच्च(१)। चतुर्थस्तु स्यात्, सोऽपि न शरीरान्तर्भूतवृत्तिः, (२)चेष्टमानशरीरहेतुकस्यापि कस्यचिदचेतनपूर्वकत्वप्रसङ्गात्। न चेदमिष्टम्, चेष्टाचेतनयोरविनाभावभङ्गप्रसङ्गात्। नापि सहवृत्तिः,(३) देहस्यानुपाधित्वे तस्यानुपाधित्वात्, तयोस्तुल्ययोगक्षेमत्वात्। अतथाभावे वा**

---

**योगेति।** परस्परपरिहारेण वर्तमानयोरेकस्येतरं प्रत्युपाधित्वे विपरीतं किं न स्यादिति अस्य वाचाटवचसोऽपि सावकाशत्वादिति। किञ्च साधनस्य साध्यव्यभिचारशङ्कोत्थापनेनोपाध्युद्भावनस्य दूषणत्वम्, न चात्र साध्यव्यापकत्वमात्रेणोपाधेर्व्यभिचारशङ्कोत्थापकत्वमित्याह(४) **व्यभिचारेति।** अन्तर्वृत्तेस्तूपाधित्वं सम्भवेत्, स च तादृशो न प्रकृते सम्भवतीत्यभिप्रायेणाह **चतुर्थस्त्विति।** अभिप्रायमाविष्करोति **सोऽपीति।** कार्यत्वावान्तरवृत्तित्वेनोपाधिर्भवच्छरीरान्तरवृत्तिः सहवृत्तिः बहिर्वृत्तिर्वा भवेत्। तत्र न प्रथमः कल्पः, तत्र शरीरस्य कर्तृप्रयोजकोपाधिव्यतिक्रमेणापि स्थितस्य कर्तृव्यतिरेकेणापि स्थितिश्चेत् समानं शरीरहेतुकस्यापि कस्यचित्कार्यस्य चेतनपूर्वकत्वाभावप्रसङ्गादिति। **अतथाभाव इति।** तुल्ययोगक्षेमत्वाभाव इत्यर्थः। अस्तु तर्हि

---

(१) शङ्कानापादकत्वाच्चेति पाठान्तरम्। चतुर्थः–साधनव्यापकः।

(२) कुत इत्यत आह चेष्टमानेति। कुलालजन्यत्वं चेतनपूर्वकत्वस्य साध्यस्य व्यापकश्चेत्तदा कुविन्दजन्यपटादौ तन्निवृत्त्याचेतनपूर्वकत्वं निवर्तेतेत्यर्थः। ननु चेष्टमानशरीरहेतुकमपि चेतनपूर्वकं मास्तु किन्तत इत्यत आह चेष्टेति।

(३) देहसहवृत्तिः। शरीरजन्यत्वसमव्याप्त इति यावत्। तयोः= देहतदुपाध्योः।

(४) नन्वेवं साधनस्य सोपाधित्वं स्यादेवेत्यत आह व्यभिचारेति। साध्यव्यापकेन साधनाव्यापकेन चोपाधिना व्यभिचारशङ्काधानं भवेन्न तु साधनसमनियतेनेत्युपाधिः परिभाषामात्रमित्यर्थ इति कल्पलता।

**सहवृत्तिनियमानुपपत्तेः। शरीरस्य च नोपाधित्वं कर्त्र-व्यापकत्वात् , तत्कार्य(त्व)स्योपाधेर्विद्यमानत्वात् । ना-प्यायतनतया तथाभावो, भोगोपाधित्वात् । (१)ना-प्युकरणप्रापकतया, साक्षात्प्रयत्नानधिष्ठेयत्तोपाधि-त्वात्, अन्यथापि तत्प्राप्तेरिति । नाप्यधिकवृत्तिः,**

शरीरस्याप्युपाधित्वमिति चेदत्राह **शरीरस्य च नोपाधित्वमिति** । **कर्त्रव्यापकत्वादिति** । कर्तुरुपाधेः कर्तृव्यापकत्वं स्यात्, न च शरीरं कर्तृव्यापकमतो न कर्तुरुपाधिः शरीरमिति(२) । कथमव्यापकं शरीरमित्याह **तत्कार्यस्येति** । **अयमर्थः**–ज्ञानचिकीर्षाकृतिसमवा-यित्वं कर्तृत्वम् , तद्यत्र ज्ञानादीनां शरीरकार्यत्वेन तद्रूपस्यापि कर्तुः शरीरकार्यत्वं भवति तत्रैव शरीरवतः कर्तृत्वं, यत्र तु न तत्कार्यत्वं तत्र शरीरमन्तरेणापि कर्तृत्वान्न शरीरं कर्तृव्यापकमिति । ननु कारणतया शरीरं माऽपेक्षिष्ट कर्ता, आयतनतया त्वपेक्षमाणस्य कर्तुः शरीरं व्यापक-मेवेत्याशङ्क्याह **नाप्यायतनतयेति** । **तथाभावः**=व्यापकत्वमि-त्यर्थः । **भोगोपाधि(क)त्वादिति** । भोगप्रयुक्ता ह्यायतनापेक्षा, न चेश्वरस्य भोगसम्भव इति । ननु यथा कुलालशरीरस्योपादानदेशे दण्डाद्युपकरणप्रापकतयाऽपेक्षा, तथेश्वरस्याप्युपकरणप्रापकतया शरीरा-पेक्षा स्यादित्याशङ्क्याह **नचेति** । कुलालप्रयत्नेन साक्षादनधिष्ठितानां दण्डादीनां स्वतः परस्परप्राप्त्यसम्भवात साक्षात्प्रयत्नाधिष्ठितशरीरद्वा-रिकैव तेषां प्राप्तिः स्यात्, न त्वेवं प्रकृते, साक्षादीश्वरप्रयत्नेन जग-त्कारणोपकरणानामनधिष्ठानात् शरीरमन्तरेणापि प्राप्तेरिति ।

नापि कर्त्रुपाधिः (३)शरीराधिकवृत्तिरित्याह **नापीति** ।

---

(१) न चोपकरणतयेत्यत्र नारायणसम्मतः पाठो द्रष्टव्यः ।

(२) सकर्तृकत्वे साध्ये शरीरजन्यत्वं नोपाधिः, कर्तृत्वे साध्ये शरीरित्वं नोपाधिरिति मिश्राः ।

(३) शरीराऽपेक्षयाऽधिकवृत्तिरित्यर्थः ।

शरीरविनाकृतस्य कर्तुः स्वयमनभ्युपगमात् ।

"अस्तु (वा) पाक्षिकोऽभ्युपगमः, तेन न कार्यत्वमात्रात् कर्तृमत्त्वसिद्धिः शङ्कितोपाधित्वात् । (१)न चोपाधेरेव तत्सिद्धिः, तस्य स्वयं सन्दिग्धासिद्धत्वादिति चेत्" । न, उभयथाप्यशरीरिकर्तृव्यवस्थितिनियमात्, किन्तु कञ्चिदुपाधिमादाय स व्यवतिष्ठताम् । यद्वा कार्यत्वमेवेति(२) सन्देहः परिशिष्यते गत्यन्तराभावात्

---

शरीरेति । कर्त्रुपाधेः शरीराधिकवृत्तित्वेऽशरीरस्यापि कर्तृत्वं स्यात्, न चाशरीरस्य कर्तृत्वम् अनीश्वर(स्य)वादिभिरभ्युपगम्यत इत्यर्थः(३) ।

अस्तु शरीरविनाकृतस्यापि कर्तुः पाक्षिकोऽभ्युपगमः, ततश्च न (च) कार्यत्वमात्रात्कर्तृत्वसिद्धिः शङ्कितोपाधित्वात्, न चोपाधेरेव पक्षे कर्तृत्वसिद्धिः, उपाधेः पक्षे सन्दिग्धासिद्धत्वादित्याशङ्कते अस्तु वेति । परिहरति नोभयथेति । कार्यप्रयुक्तत्वे उपाधिप्रयुक्तत्वे चोभयथापीत्यर्थः(४) । अशरीरिकर्तृकत्वव्यवस्थितिनियमेन वक्ष्यमाणन्यायेन कार्यत्वस्यैव कर्तृपूर्वकत्वे प्रयोजकत्वं भविष्यतीत्यभिप्रायः । अभिप्रायं स्फोरयति किन्त्विति । कर्तृव्यवस्थायास्तु प्रयोजकविशेषसन्देह एव निवार्यतयाऽवशिष्यत इत्यर्थः । गत्यन्तरेति । उपाधिकार्यत्वमन्तरेण

---

(१) ननु साध्यस्य सकर्तृकत्वस्य व्याप्योऽप्युपाधिरिति तद्बलादशरीरस्यापि कर्तृत्वं सेत्स्यतीति स एवापसिद्धान्त इत्याह न चेति । त्वया तस्योपाधित्वं न च स्वीक्रियते येन तद्बलात्साध्यं सिद्ध्येदित्यर्थः ।

(२) कार्यत्वमादाय वेति पाठान्तरम् । सन्देह इति । उपाधिमत्वाद्वा स्यादशरीरी कर्ता निरुपाधिहेतुकत्वाद्वेति सन्देह इत्यर्थः । सोपि-सन्देहोऽपि ।

(३) शरीराधिकवृत्तिरुपाधिः सकर्तृकस्य साध्यस्य व्यापकत्वे सति साध्येऽपि बाध्यस्तथा च शरीरनिराकृतस्यापि कर्तृत्वमायातमतस्त्वयापि सिद्धान्तभयेन नैतादृश उपाधिर्वाच्य इत्यर्थ इति मिश्राः ।

(४) शरीराधिकवृत्तेरुपाधित्वे वेत्यर्थः । यदि तस्योपाधित्वं तदा तद्बलादेवाशरीरी कर्ता सिद्धः,अनुपाधित्वे तु निरुपाधेः कार्यत्वादेव

सोऽपि निवार्यते । न तावद्देहव्यतिरेकेणानित्यज्ञानसम्भवः, तयोः कार्यकारणभावनियमात्, ततो नित्यं भवेत्, ततः सर्वविषयञ्च, नियतविषयताया अनित्यत्वेन व्यापनात् । विषयनियमस्य सामग्रीशक्तिसमवधानाधीनतया नित्यात्तस्याः स्वव्याप्यमुपादाय निवर्तमानाया अनित्ये विश्रामात् । सर्वगोचरे च ज्ञाने सिद्धे चिकीर्षाप्रयत्नयोरपि तथाभावः, तदेकविषयत्वात्तयोः । तथाच कश्चिदुपाधिमादायाशरीरपूर्वकमपि किञ्चिदेव कार्यं कर्तृपूर्वकं भविष्यतीति शङ्कापिशाच्याः क्वावका-

---

गस्यन्तराभावादिति । तयोरिति । अनित्यज्ञानदेहयोः कार्यकारणभावनिश्चयात्कारणाभावे कार्यासम्भवादिति शेषः । सर्वविषयश्चेति । नित्यत्वे सति तज्ज्ञानं सर्वविषयं भवेदित्यर्थः । कथमनित्यस्य व्यापकत्वमित्याह विषयेति । विषयनियमस्य ज्ञानसामग्रीशक्तिर्नियामिका, सा च नित्ये विरोधात् स्वव्याप्यं विषयनियममुपादाय ततो व्यावर्तमानाऽनित्ये विश्रान्ता, एवञ्चानित्यत्वव्यतिरेकेण विषयनियमस्यानवकाशात् अनित्यत्वं तद्व्यापकमेवेत्यभिप्रायः । तदेकविषयत्वादिति । विषयनियतज्ञानसामग्री--यत्र हि ज्ञानं तत्रैव चिकीर्षा, यत्र चिकीर्षा तत्रैव प्रयत्न इति नियमः, तथाच सर्वकारकगोचरत्वेन ज्ञानचिकीर्षाप्रयत्नानां यद्यत्कार्यं तत्तज्ज्ञानचिकीर्षाप्रयत्नपूर्वकमिति नियमेन तल्लक्षणस्य कर्तृपूर्वकत्वस्य सर्वेषु कार्येषु सिद्धिरनिवार्येति सिद्धमिति(१) । एवमनुमानान्त-

---

हेतोः क्षित्यादावशरीरी कर्ता सिद्ध इति भाव इति मिश्राः ।

(१) उपाधिशङ्काऽस्य शरीरपूर्वकमपि किंचित्कार्यं सकर्तृकमेव स्यादित्याशङ्कामावेदयेत्, सा च न सम्भवति, अशरीरिकर्तरि सिद्धे तस्य ज्ञानेच्छाप्रयत्ना नित्याः सर्वविषयाश्च वाच्यास्तथा च यत्कार्यं सकर्तृकत्वेन शङ्क्येत तदुपादानमपि तज्ज्ञानादिभिर्विषयीकर्तव्यमिति कुतः कस्याप्यकर्तृकत्वशङ्केति न तावद्देहव्यतिरेकेणेत्यादिशङ्कापिशाच्यवकाश इत्यन्तफक्किकार्थ इति मिश्राः ।

णः । (१)एवमन्यत्राप्यनया दिशोपाधिशङ्कानिराकरणीयेति निरुपाधिसम्बन्धसिद्धिः । विपक्षसम्भवे च साधनप्रयुक्तसाध्यसद्भावसिद्धौ साध्याभावप्रयुक्तसाधनाभावलक्षणस्य व्यतिरेकस्यापि सिद्धेर्न तदर्थं पृथगपेक्षेति ।

(२)द्वितीयेऽपि श्रवणसंपुटमवधाय कलकलस्त्यज्यताम्, तथाहि दण्डादिषूदासीनेषु दृश्योऽदृश्यो वा कारकव्यापाराविनिर्भागवृत्तिश्चेतनो निवृत्तो न वेति त्वमेव प्रष्टव्यः । न चेत् कारणान्युदासते, निवृत्तश्चेत् कथमदृश्य-

रेऽपरि साधनधर्मविरोधनी बहिर्वृत्तिः सहवृत्तिरन्तर्वृत्तिर्वोपाधिरित्यनया दिशा उपाधिशङ्का निरसनीयेत्याह एवमिति । एवमन्वयस्य निरुपाधिकत्वसिद्धौ व्यतिरेकस्यापि तत एव निरुपाधिकत्वसिद्धेर्न तत्र पृथगुपाधिविधूननापेक्षेत्याह विपक्षेति । अविद्यमाने विपक्षे व्यतिरेकस्यैवासम्भवाद्विपक्षसम्भव इत्युक्तम् ॥

एवन्तावदुपाधिविरहः प्रतिबन्धलक्षणमिति प्रथमो विकल्प उपपादितः, इदानीं तदुत्पत्तिः प्रतिबन्धलक्षणमिति द्वितीयं विकल्पयितुमुपपादयति द्वितीयेऽपीति । यद्यपि चेतनमात्रव्यतिरेको न निश्चेतुं शक्यते तथापि कारकप्रयोक्तृव्यतिरेको निश्चेतुं शक्यत इत्यभिप्रायेणाह दृश्योऽदृश्यो वेति । कारकव्यापाराविनिर्भागवृत्तिः= अविनाभूतवृत्तिः(३) तत्प्रयोक्तेत्यर्थः । न चेदिति । न निवृत्तश्चेत्कुतः कारणानि न व्याप्रियन्ते, न हि कारकप्रयोक्तुरनिवृत्तौ कारकाणामौदासीन्यं युज्यत इति । ननु दृश्यादृश्यसाधारणचेतनमात्रव्यतिरेकसिद्धावपि

(१) विरोधासहवृत्तिरित्यादिविकल्पचतुष्टयमुखेनेत्यर्थः । निरुपाधिसम्बन्धः—यत्कार्यं तत्सकर्तृकमिति व्याप्तिः ।

(२) दृश्यादृश्यसाधारणचेतनसाधारण्येन तदुत्पत्तिग्रह इत्यत्रेत्यर्थः ।　(३) कारकव्यापारनियत इत्यर्थः ।

व्यतिरेकसंशयः। "तथापि यादृशस्यान्वयः तादृशस्य-व्यतिरेकोऽप्युपयुज्यत इति चेत्"। (१)कोऽत्र विप्रतिपद्यते कारकप्रयोक्तुरुभयत्रापि तुल्यत्वात्। "देही तादृश इति चेत्"। कोऽस्यार्थः? (२)किं देहद्वारैव कारकाणि प्रयुङ्क्ते चेतनः, आहो देहं प्रयुञ्जान एवेति। न पूर्वः, देहस्यापि कारकतया देहान्तरप्रयोज्यतायामनवस्थापातात्। न द्वितीयः, विषशकलचालनादौ व्यभिचारात्। "देहं धारयन्निति चेत्"। सोऽयं देहो धार्यः किं कारकतया, तत्कारकान्तरप्रयोगार्थम्, अथ स्वकर्मोपात्ततया-

यादृशस्य देहिनोऽन्वयो दृष्टः तादृशस्य व्यतिरेकः कारणत्वावधारण उपयुज्यते(३), अन्वयव्यतिरेकयोरेकविषययोरेव प्रमाणत्वादित्यभिप्रायेणाशङ्कते तथापीति। अन्वयोऽपि कारकप्रयोक्तुरेव देहसम्बन्धस्तु तस्याजागलस्तनकल्प एवेत्यभिप्रायेण परिहरति कोऽत्रेति। परः स्वाभिप्रायमाविष्करोति देहीति। देहिन एव कारकप्रयोक्तृत्वमित्यर्थः। देहद्वारैवेति। न साक्षात्कारकाणि प्रयुङ्क्ते किन्तु देहद्वारैवेति। देहं प्रयुञ्जान एवेति। साक्षात्कारकाणि प्रयुङ्क्त एव किन्तु देहमपि प्रयुञ्जान एवेत्यर्थः। विषशकलेति। जाङ्गलिको हि देहमप्रयुञ्जान एव ध्यानमात्रेणैव विषशकलं चालयन् दृश्यत इति। ननु न देहं प्रयुञ्जान इति वदामः किन्तु देहं धारयन् कारकाणि प्रयुङ्क्ते इति शङ्कते देहमिति। स्वकर्मेति। स्वकर्मोपात्तदेहं परित्यक्तुमशक्तस्तं धारयन्नेव

(१) गूढाभिसन्धिः परिहरति कोऽत्रेति। कारकप्रयोजकयोरिति पाठान्तरम्।

(२) आशयमुद्घाटयति पूर्वपक्षिणः सिद्धान्ती किमिति। चेतनस्य देहित्वं सर्वत्र कार्ये न प्रयोजकमिति समुदायार्थ इति मिश्राः।

(३) यथा दण्डादिव्यापारे शरीरिचेतनस्यान्वय इति व्यतिरेकोऽपि तस्यैव वक्तव्य इत्यभिप्रायः।

त्रेण । प्रथमे न विवादः,(१)देहस्यापि क्वचित्कार्ये कारण-तयाऽधिष्ठाननियमात् । यत्रापि(२) न तत्कारकं तत्रापि तदधिष्ठेयमिति तु कश्चेतनोऽभिदध्यात् । द्वितीयेऽपि(३) यः साक्षादधिष्ठातुमशक्तः स साक्षादधिष्ठेयमुपादाय तत्प्रयुञ्जीत, नचैकस्य साक्षादधिष्ठानयोग्यमन्यस्यापि तथेति नियमः, देह एव व्यभिचारात्(४) । तृतीये(५) स्व-जागलस्तनकल्पः कायो नोपयुक्तांशविवेचने स्वं निवेशय-ति,(६) तद्यथा धूममात्रं प्रति तार्णदहनान्वयव्यतिरेकयो-

कारकाणि प्रयुङ्क्त इत्यर्थः । क्वचित्कार्य इति । उपदेशादिरूप इति शेषः । यत्र त्विति । जगत्सृष्ट्यादाविति शेषः । यः साक्षा-दिति । यः कुलालादिः कारकानि साक्षादधिष्ठातुमशक्तः स एव साक्षादधिष्ठेयं देहमुपादायैव तद्द्वारेणैव तानि प्रयुञ्जीत नान्यः शक्तोऽ-पीत्यर्थः । एकवदन्योऽपि अशक्त एवेति चेत्तत्राह न चैकस्येति । देह एवेति । सर्वो ह्यन्यस्य साक्षादधिष्ठानायोग्यमपि देहं स्वयमधि-तिष्ठन् दृश्यत इति । नोपयुक्तेति । स्वकर्मोपात्तं देहं धारयतः कार-कप्रयोजकत्वेऽपि तस्य तत्रानुपयुक्तत्वान्नोपयुक्तांशे निष्कृष्टे प्रवेशः

(१) विरोध इति पाठान्तरमग्रे कारणतयेत्यत्र च कारकतयेति पाठान्तरं द्रष्टव्यम् ।

(२) अत्र नारायणमतेन 'यत्र त्विति' पाठान्तरं द्रष्टव्यम् ।

(३) कारकान्तरप्रयोगार्थं देहस्य धार्यत्वपक्षेऽपि । न चैकस्येत्यत्र न त्वेकस्येति पाठान्तरम् ।

(४) चैत्रशरीरं मैत्रानधिष्ठेयमपि चैत्राधिष्ठेयमेवेति व्यभिचारा-दित्यर्थः । (५) स्वकर्मोपात्ततामात्रेण देहस्य धार्यत्वे इत्यर्थः ।

(६) कारकव्यापारस्तादृशं देहमन्तरेणैवेत्यर्थः । अत्र 'उपयुक्तां-शविवेचन' इति समस्यन्तः पाठो मिश्रसम्मतः । आलोकवदेति । यथा धूममात्रं प्रति तार्णदहनस्यान्वयव्यतिरेकयोरुपयुक्तांशविवेच-ने कर्तव्ये यथालोकवत्ता नात्मानं निवेशयत्यप्रयोजकत्वात्तथा कार्यं प्रति चेतनस्यान्वयव्यतिरेकयोः शरीरवत्ताप्यप्रयोजिकैवेत्यर्थः ।

रालोकवत्तेति। यदि चाकारकस्यातत्प्रयोगद्वारकस्यापि दे- हस्यावश्यमपेक्षा स्यात्, य एव कुलालकायवान् घटस्य कर्ता स एव करभशरीरवानपि दण्डादीन् प्रयुञ्जीत, न खलु स्वकर्मोपात्ततामात्रेण करभकुम्भकारशरीरयोः कश्चिद्विशेषः।

"कार्यविशेषे कायविशेषोऽनुपयोग्यप्यपेक्षणीय इति चेत्"। तत्र कार्येऽनुपयुक्तश्चावश्यापेक्षणीयश्चेति व्याघातः। (१)अव्याघाते वा कुम्भे कर्तव्ये करभशरीरम-

सम्भवतीत्यर्थः। यथा धूममात्रम्प्रति ताणदहनस्यान्वयव्यतिरेकाभ्यां कारणत्वावधारणे तस्यालोकवत्ता नोपयुक्ताशनिष्कर्षे स्वात्मानं निवेशय- तीत्यर्थः। एवं अकारकस्याकारकप्रयोगद्वारकस्य देहस्य स्वकर्मोपात्तत्वमा- त्रेणापेक्षा न युक्तेत्युक्तम्, यदि तु तादृशस्यापेक्षा स्यात् तर्हि य एव चेतनः कुलालादिशरीरवान् घटस्य कर्ता स एव करभयोनिजन्मनिमित्ते- न कर्मणा करभशरीरवानपि घटकारणभूतान् दण्डादीन् प्रयुञ्जीत, स्व- कर्मोपात्तदेहस्य तदानीमप्यविशेषादित्याह(२) यदि चेति।

घटरूपकार्यविशेषे कुलालकाय एवानुपयुक्तोप्यपेक्षणीयः न तु करभ- काय इति शङ्कते कार्यविशेष इति। उपयोगिन एवापेक्षणीयत्वादनुप- युक्तापेक्षणीयत्वे एकस्य विरुद्ध्येते(३) इत्याह तत्रेति। यद्यनुपयुक्तस्या- प्यपेक्षा न विरुध्येत तर्हि प्रागुक्तातिप्रसङ्गादित्याह अव्याघात इति। तस्माद्यस्मिन्कार्ये यस्य शरीरस्य कारकत्वं कारकप्रयोजकत्वं वा तस्मिन्कार्ये तस्य शरीरस्याधिष्ठानमिति नियमः, नतु शरीरत्वेनैव, कुम्भे कर्तव्ये करभ-

(१) स्वकर्मोपात्ततामात्रेणैवापेक्षणीयत्व इत्यर्थ इति मिश्राः।

(२) एकस्यात्मनोऽदृष्टवशात् कुलालकरभशरीरोपग्रहः सम्भा- व्यते एव. तथाच करभशरीरावच्छेदेनापि तस्यात्मनो घटकर्तृकत्वं प्रसज्ज्येतेत्यर्थ इति मिश्राः।

(३) कार्यस्याप्रयोजकत्वमपेक्षणीयत्वं चेति व्याहतम्, स्वकर्मो- पात्तत्वमात्रेण तदवच्छेदकत्वे दोषस्योक्तत्वादित्यर्थ इति मिश्राः।

प्यवश्यमपेक्षणीयमविशेषादिति । तस्मात्सन्दंशवदयः-पिण्डवत्(१)कारकप्रयोजकतयैव शरीराधिष्ठाननियमो न तु शरीरत्वेनैव । न च शरीरस्य सर्वत्र कारकत्वं प्रयोजकत्वं चेति । "एवन्तर्हि न प्रतिनियतदेहाधिष्ठातृसिद्धिः, अङ्कुरादिकारकाधिष्ठात्रसिद्धेरिति चेत्" । न, वादान्तरत्वात्(२) । यदापि तत्प्रस्तावस्तदापि न कार्यमात्रेण कारकाधिष्ठानमात्रेण वा तदनुमानम्, ततः कर्तृमात्रसिद्धेः, (३)किन्तु हर्षभयशोकस्मितादिलिङ्गैस्तानु-

शरीरस्याप्यधिष्ठानत्वप्रसङ्गादित्याह तस्मादिति । अस्तु कारकतत्प्रयोजकतयैव सर्वत्र शरीराधिष्ठानमिति चेत् , तत्राह (४)न चेति । ननु यद्यशरीरस्यैव चेतनस्य साक्षादङ्कुरादिकारकाधिष्ठानं, तर्हि सर्वविषयज्ञानचिकीर्षाप्रयत्नवता तेनैव कारकीभूतसमस्तदेहाधिष्ठानोपपत्तेर्न प्रतिदेहमधिष्ठातृभेदः सिध्येदित्यात्मनानात्वं न स्यादित्याशङ्कते (५)तर्हीति । अस्ति तावदङ्कुरादिकाधिष्ठानाद्देहशून्यश्चेतनः, अयमेव च साधयितुमुपक्रान्तः, आत्मनानात्वविचारस्तु वादान्तरमतः किन्तदसिद्ध्या हीयत इति परिहरति नेति । यदा यर्हि तत्प्रस्तावः तदा कथं प्रतिनियतदेहाधिष्ठातृसिद्धिरिति चेत् , तत्राह यदापीति । अयमर्थः—भोक्तैव

---

(१) कारकत्वेन सन्दंशो दृष्टान्तः कारकव्यापाराश्रयत्वेन त्वयःपिण्ड इति मिश्राः ।

(२) ईश्वरः सिद्ध एव स च साधयितुमुपक्रान्तः किमधुना कुलालादिकर्तृत्वसाधनेनेति समाधानार्थः ।

(३) किन्त्वित्यादि । हर्षभयशोकानां यानि स्मितकम्परुदितानि लिङ्गानि तैस्तान् हर्षभयशोकानुन्नीयेत्यर्थः । 'हर्षभयशोकाद्यर्वत्वादिलिङ्गैस्तान्युन्नीयेति' पाठान्तरम् ।

(४) ननु क्षित्यादेरपि शरीरं कारकं प्रयोजकं वेत्यत आह नचेति । पूर्वं निरस्तत्वादित्यर्थ इति मिश्राः ।

(५) नन्वेवं किं कुलालादिना यावतेश्वरेणैव घटादिनिर्वाहादित्याह एवमिति मिश्राः । नारायणमतेन तर्हि नेत्येव मूले पूर्वपक्षारम्भः ।

ग्रीय तैर्भोक्तुरनुमानमिति न किञ्चिदेतत् ।

तृतीयेऽपीर्षाकषायिते(१) चक्षुषी निमील्य न्यायानुसारैः श्रूयताम्—इह जगति नास्त्येव तत्कार्यं नाम यत् कारकचक्रमवधीयात्मानमासादयेत् इत्यविवादम् । तत्र सर्वं चेतनोपहितमर्यादम्, अन्यथा तल्लक्षणव्यवस्थानुपपत्तेः । तथाहि (२)आधेयकारकोपहितमर्यादमधिकरणस्य रूपमाधारत्वात्, (३)अपनेयापगन्तृकारकोपहितञ्च रूपम् अपादानस्य, तदवधित्वात् । करणीभूतक-

प्रतिनियतदेहाधिष्ठातेष्यते, स च न कार्यमात्रेण कारकाधिष्ठानमात्रेण वाऽनुमीयते, तेन कर्तृमात्रस्यैव सिद्धेः, किन्तु स्मितादिलिङ्गानुमितैर्हर्षभयशोकैः, तेषां भोक्तृधर्मत्वात् तैश्च प्रतिनियतैः प्रतिनियता एव भोक्तारोऽनुमातुं शक्यन्त एवेति भावः ।

विपक्षे बाधकं वेति तृतीयं विकल्पमुपपादयति तृतीयेऽपीति । चेतनोपहितेति । साक्षात्परम्परया वा चेतनावच्छिन्नस्वरूपव्यवस्थितीत्यर्थः । तल्लक्षणेति । तत्कारकाणां लक्षणव्यवस्थानुपपत्तेरित्यर्थः । आधेयेति । अनाधेयस्याकर्मत्वात्कर्मोपहितत्वमधिकरणरूपस्य दर्शितम्, कथमित्याह आधारत्वादिति । 'आधारोऽधिकरणम्' इत्यधिकरणस्याधारत्वादाधारस्य चाधेयापेक्षत्वेन तदुपहितत्वादिति । अपनेयेति । अनेनाप्यपनेयस्य नयतिकर्मत्वात् कर्मोपहितत्वमुपादानस्य दर्शितम्, कथमित्याह तदवधित्वादिति । 'ध्रुवमपायेऽपादानमि'त्यपादानस्य तदवधित्वादिति । करणीभूतेति । अनेन सम्प्र-

(१) 'ईर्ष्याकषाये' इति पाठान्तरम् ।

(२) आधेयेति । आधेयं यत्कारकं कर्तृकर्मान्यतरत् तदुपहितं आधारत्वात् कर्तृकर्मान्यतरद्वारा क्रियाश्रयत्वात्, तथाच वृद्धाः—

कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम् ।
उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥ इति ।

(३) अपनेयस्त्याज्यो वृक्षादिः, अपगन्ता खगादिः, तदवधित्वात्=विभागावधित्वात् ।

र्मोपहितश्च रूपम् सम्प्रदानस्य, तदभिप्रेयत्वात् । करणोपहितश्च रूपम् कर्मणः,(१)तद्व्याप्यत्वात् । कर्त्रुपहितश्च रूपम् करणस्य, (२)साक्षात्तद्व्यापारविषयत्वात् । समस्तकारकोपहितञ्च रूपम् कर्तुः, तत्प्रयोजकत्वात् । ज्ञान·

दानस्यापि कर्मोपहितत्वं स्पष्टमेवोक्तम्, कथमित्याह तदभीति । 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इति कर्माभिप्रेयत्वा(३)त्सम्प्रदानस्येति । एवं कर्मोपहितत्वं कारकत्रयस्योक्तम्, कर्मणश्चापि करणोपहितरूपमित्याह करणेति । कथमित्याह तद्व्याप्येति । करणव्याप्य(त्व)त्वं सर्वकर्मानुगतं लक्षणमित्यभिप्रायः । करणस्यापि रूपं कर्त्रुपहितमित्याह कर्त्रुपहितमिति । कथमित्याह साक्षादिति । अन्योद्दिष्टकृतिव्याप्यं करणम्, कृतिश्च कर्तृव्यापार एवेत्यभिप्रायः । एवं चेतनरूपकर्त्रुपहितत्वात्करणोपहितत्वाच्च कर्मणः, कर्मोपहितत्वाच्चेतरकारकत्रयस्य साक्षात्परम्परया वा चेतनोपहितमर्यादत्वं कारकचक्रस्य दर्शितम्, इदानीं न केवलं कारकान्तराण्येव कारकान्तरोपहितरूपाणि कर्तृकारकमपि कारकान्तरोपहितरूपमित्याह समस्तेति । स्वव्यतिरिक्तसमस्तकारकोपहितं रूपं कर्तुः कारकप्रयोक्तृरूपत्वाचस्येति । ननु कर्त्रपेक्षत्वात्करणस्य, करणापेक्षत्वात्कर्मणः कर्मापेक्षत्वाच्चेतरकारकत्रयस्य तदपेक्षत्वाच्च कर्तुश्चक्रकं, तथा करणापेक्षं कर्तृरूपं कर्त्रपेक्षं करणरूपमितीतरेतराश्रयश्चा(४)पद्येतेत्याशङ्कयाह ज्ञानेति । अयमभिसन्धिः—ज्ञानचिकीर्षाप्रयत्नसमवायित्वं कारकप्रयोक्तृत्वं चेति द्वे रूपे कर्तुस्तत्र कारकप्रयोक्तृत्वस्य कारकान्तरसापेक्षत्वेऽपि इतरस्य तदनपेक्षत्वेन स्वरूप एव

(१) तद्व्याप्यत्वात् = तद्व्यापारविषयत्वात् ।

(२) कर्मव्यवच्छेदाय साक्षादिति ।

(३) कर्मणा देयद्रव्येण दातुरभिप्रेयत्वादित्यर्थः ।

(४) साक्षात्कर्तृव्यापार्यं करणं करणव्याप्यं कर्म कर्मप्रयोजकश्च कर्तेति चक्रकम्, एवं साक्षात्कर्तृव्यापार्यं करणं करणप्रयोक्ता च कर्ता इत्यन्योन्याश्रय इत्यर्थः ।

चिकीर्षाप्रयत्नाधारत्वव्यवस्थितेश्च न चक्रकेतरेतराश्रयदोषः। एवं च सति कर्तृव्यावृत्तेस्तदुपहितसीमसमस्तकारकव्यावृत्तावकारककार्योत्पत्तिप्रसङ्ग इति स्थूलः प्रमादः(१)। "भवेदेवं यदि कर्त्रा कारकमात्रस्य व्याप्तिः स्यात्, सैव तु कुत इति चेत्"। कुतः पुनरियमव्याप्तिः, नहि षड्भ्योऽन्यत् कर्त्रनुपहितं कारकमस्ति। (२)न चैषामेव कर्त्रुपधानशून्यं लक्षणमस्ति, एवमेकै-

---

व्यवस्थितत्वात् तद्रूपापेक्षित्वाच्चेतरकारकाणां न दोषद्वयप्रसङ्ग इति(३)। एवं विपक्षे बाधकप्रसिद्ध्यर्थं समस्तकारकचक्रस्य कर्त्रुपहितसीमत्वमुक्तम्, इदानीं तदुपजीवनेन विपक्षे बाधकमेवाह एवं चेति। ननु कर्तृव्यावृत्त्या कारकमात्रव्यावृत्तिं वदता कर्त्रा कारकमात्रव्याप्तिरङ्गीकर्तव्या, सैव तु कुतस्त्येत्याशङ्कते(४) भवेदेवमिति। कुतः पुनरियमिति। द्वेधा ह्यव्याप्तिः यदि कर्त्रनुपहितं षड्भ्योऽन्यत् कारकं स्यात्, यदि वा तेषामेव तदनुपहितं लक्षणं स्यात्, न चोभयथापि अव्याप्तिः सम्भवतीति कर्त्रा कारकमात्रव्याप्तिः सिद्धैवेति। एवं सर्वकारकाणां शृङ्खलितत्वेन यद्येकैकं कारकं विहायाविशिष्टेन विशिष्टेन वा कार्योत्पत्तिः सम्भाव्येत तर्हि सर्वापोहसम्भावनैव प्रसज्ज्येत एकनिवृत्तौ सर्वनिवृत्तिप्रसङ्गादित्याह (५)एवमेकैकमिति। सर्वकारकाविशेषव्या-

(१) कर्तारमन्तरेण कार्यमभ्युपेतुः पूर्वपक्षिण इति शेषः।

(२) नन्वेतेष्वेव मध्ये किंचित्कर्त्रव्यापारमस्त्वित्यत आह न चेति।

(३) उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वमित्यनेन प्रकारेण कर्तृलक्षणे करणादिनिरूप्यत्वं नास्तीति न चक्रकादिरित्यर्थ इति मिश्राः।

(४) तथाच किञ्चित्कार्यं कर्त्रव्यापार्यमिति तत एवाङ्कुरादिरिति कुतस्तत्कर्तृत्वेनेश्वरसिद्धिरित्याशङ्काशयः।

(५) अत्र मिश्रमतेन एवमिति नास्ति मूले, 'ननु कर्तारमन्तरेणापि कार्यं स्यादित्यत आह एकैकमि'ति प्रतीकदर्शनात्।

कमपोह्य शेषशेषतः कार्यसम्भावनायां सर्वापोहसम्भावनाप्रसङ्गात् । न च समस्तविशेषापोहे सामान्यस्थितिः, यतः षट्कव्यावृत्तावपि कारणमात्रतः कार्यप्रत्याशा स्यात् । एकप्रवृत्तौ तु सर्वप्रवृत्तिरप्रत्यूहा शृङ्खलाबन्धेन व्यवस्थितेः ।

"अथ मतं-तवैवेयं प्रक्रिया, अस्माकन्तु कार्येणानुविहितभावाभावं चेतनं वाऽचेतनं कारकमुच्यते, (१)सं-

वृतावपि कारणमात्रात्कार्यसिद्धिरिति चेत्तत्राह न च समस्तेति । अथ कारकसामान्यस्थित्यर्थमेककारकप्रवृत्तिराश्रियेत तदा सर्वकारकप्रवृत्तिरप्रत्यूहा स्यादित्याह एकेति ।

नन्वधिकरणादिकारकभेदानां परस्परोपहिततया लक्षणभेदकल्पनं यत्, यच्च कारकेषु चेतनः कर्ता प्रधानभूतः कारकान्तरप्रयोक्ता च इतरत्तु सर्वतः प्रयोज्यं तत्परतन्त्रमित्यादि, तत्सर्वं तवैव प्रक्रियामात्रमस्माकन्तु कार्येणानुविहितान्वयव्यतिरेकं चेतनमात्रमचेतनमात्रं वा कारणं संहितयोः क्वचित्कारणत्वाभ्युपगमेन तयोर्गुणप्रधानभावः, किन्तु सर्वं स्वप्रधानम्, उपादानेतरतया गुणप्रधानभावस्तु कथञ्चित्कल्प्यते इत्याशङ्कते (२)तवैवेति । यद्यप्येवं भवतां सिद्धान्तः, तथापि यथा कर्तारमन्तरेण कार्योत्पत्तिस्तथोपादानमन्तरेणापि कदाचित्कार्योत्पत्तिप्रसङ्गः,

(१) तत्किमस्मदाद्यकर्तृकं कार्यजातं सर्वथैव भवतामकर्तृकं, नेत्याह संहताविति । स्वप्रधानं-स्वीये व्यापारे प्रधानं कर्तृ, अत एवाहुः-'स्वव्यापारे च कर्तृत्वं सर्वत्रैवास्ति कारके' इति । कथञ्चित्= प्रधानक्रियामपेक्ष्य ।

(२) करणत्वं न कर्तृव्यापार्यत्वं गुणकर्मणोरतथात्वप्रसङ्गात्, परन्तु व्यापारवत्कारणत्वादिकं, न वा करणत्वेन कारणत्वं मानाभावात्, परन्तु कार्यविशेषे कारणतावच्छेदकतत्तद्रूपेण, कर्मत्वं च परसमवेतक्रियाफलशालित्वादिकम्, सम्प्रदानत्वादिकं च विना कार्यसामान्योत्पत्तिस्तवाप्यनुमता, निरुक्तयोश्च करणाधिकरणयोर्व्यतिरेको न क्वचिदपि कार्येऽस्माकमपीत्याशयवानाशङ्कते अथेति दीधितिकारः ।

हतौ च सर्वं स्वप्रधानम्, उपादानेतरव्यवस्था तु कथ-ञ्चिदिति चेत्"। न, तथापि निरुपादानत्वशङ्काप्रसङ्गात्। "जातिप्रतिनियमहेतुत्वेन तदवश्यमभ्युपेयम्, तस्य प्र-माणसिद्धतयाऽपह्नोतुमशक्यत्वादिति चेत्"। न, उपादा-नमात्रस्य तद्धेतुत्वे निमित्तवैचित्र्येऽप्येकजातीयत्वप्रस-ङ्गात्। निर्निमित्तत्वं वा प्रसज्येत, उपादानादेव तथावि-धात्तदुत्पत्तेः। "न किञ्चिदेकमेकस्मात्सामग्र्याः सर्वस-म्भव इति चेत्"। कुत एतत्? "निमित्तसहितस्य वो-पादानस्य प्रत्यक्षानुपलम्भाभ्यां कारणत्वावधारणादिति चेत्"। न, दृश्यमात्रविषयत्वात्तयोः। "दृश्यत्वं तस्य

---

न चैतादिष्टं भवतामपीत्यभिप्रायेण परिहरति तथापीति। शङ्कते जातीति। अयमर्थः—कार्यस्य जातिप्रतिनियम उपादानजात्येकत्व-निबन्धन', अतस्तद्धेतुतयोपादानमङ्गीकर्तव्यम्, तत्कार्यजातिप्रतिनिय-मस्य प्रमाणसिद्धतयाऽपह्नोतुमशक्यत्वादिति। अत्र सामग्री जातिरेव कार्यजातिनियामिका न तूपादानजातिमात्रम्, निमित्तवैचित्र्येऽपि कार्य-स्योपादानजात्येकत्वमात्रेणैकजातीयत्वप्रसङ्गादित्याशङ्कां(१) निरस्यति नेति। यदि वोपादानजातिमात्रनिबन्धनैव कार्यजातिः स्यात् निमित्तम-न्तरेणैव कार्योत्पत्तिः प्रसज्येतेत्याह (२)निर्निमित्तत्वमिति। तथा-विधात्=एकजातीयादित्यर्थः। न च किञ्चिदपि कार्यमेकस्मात्कारणा-त्सम्भवति किन्तु बहूनां कारणानां सामग्र्यैव सर्वसम्भव इति, अतो न निर्निमित्तत्वप्रसङ्ग इति शङ्कते न किञ्चिदिति। परिहरति न दृश्येति। दृश्यस्यैव निमित्तस्य साहित्यमन्वयव्यतिरेकाभ्यामवगतम्, अतो दृश्य-मात्रविषयावन्वयव्यतिरेकौ, अतो नादृश्यस्य निमित्तस्य विनाभावेऽपि

---

(१) इत्यभिप्रायेणाशङ्कामित्यर्थः।

(२) निमित्तवैचित्र्यस्थलेऽप्युपादानगतमेव वैचित्र्यं कल्पनीयं तत्राह निर्निमित्तं वेति। तथाविधात्=विचित्रात्।

कथञ्चिदविवक्षितमिति चेत्" । न, चेतनेऽपि तथा किं न स्यादिति। तस्मादुपादाननिमित्तयोर्यथा परस्परसहितयोरेककार्ये(१) शक्तिस्तथा चेतनाचेतनयोरपीत्येकनिवृत्तावितरनिवृत्तिप्रसङ्गः । अपि च मृत्पिण्डदण्डादिषु स्वव्यापारे पारतन्त्र्यं तावन्नियमेनोपलभ्यते, तदिदं दण्डादिमात्रानुबन्धं वा स्यात्, अदृष्टविशेषोपग्रहानुबन्धं, अचैतन्यमात्रानुबन्धं वेति निपुणं निरूपय। तत्र न प्रथमः, वेमादीनां स्वातन्त्र्यप्रसङ्गात् । "(२)तेषां वेमादिमात्रानुबन्धत्वमिति चेत्" । न, दण्डादीनां स्वातन्त्र्यप्रसङ्गात् । न चैतत्कार्यविषयनियतम् , गवाभ्याजनादौ

---

(न) कश्चिद्दोष इति। (३)निमित्तत्वमेव तत्र प्रयोजकम् दृश्यत्वं तु तस्याविवक्षितमिति । कार्यस्य चेतनपूर्वकत्वेऽपि तर्हि दृश्यत्वमविक्षितमिति किं न स्यादिति परिहरति चेतनेऽपीति । एवन्तावत्कारकाणां चेतनोपहितत्वात्कारकपूर्वकत्वे कार्यस्यावर्जनीयं चेतनपूर्वकत्वमित्युक्तम् , इदानीमचेतनमात्रस्य प्रवृत्तौ चेतनपारतन्त्र्येणापि तत्पूर्वकत्वमवर्जनीयमित्याह (४)अपि चेति । अदृष्टविशेषेति । भोक्तॄणामदृष्टविशेषेण तद्भोगायाचेतनं तत्परतन्त्रं न तु स्वत इत्यर्थः । कारणावान्तरजातिवत्कार्यावान्तरजातिरपि न नियामिकेत्याह (५)न चैतत्कार्येति । अदृष्टवि-

---

(१) रेव कार्ये शक्तिरिति पाठान्तरम् ।

(२) शङ्कते तेषामिति । वेमादीनां वेमादित्वेनैव पारतन्त्र्यमित्यर्थः ।

(३) अत्र 'शङ्कते दृश्यत्वमिति' प्रतीकावधारणं युक्तम् ।

(४) अचेतनत्वावच्छेदेनैव चेतनाधिष्ठेयत्वम् , तेन परमाण्वदृष्टादीनामपि चेतनाधिष्ठेयत्वमवश्यं वाच्यम् , न चास्मदादिभिस्तदधिष्ठानं सम्भवतीतीश्वरस्तदधिष्ठाताऽवश्यं स्वीकर्तव्य इत्यभिधातुं पीठं रचयति अपि चेति मिश्राः ।

(५) ननु दण्डादीनां पारतन्त्र्यं घटादावेव जनयितव्ये न सर्वत्रापीत्यत आह नचेति मिश्राः ।

दण्डादीनां स्वातन्त्र्यप्रसङ्गात्। न द्वितीयः(१), तस्य जातिविशेषानियतत्वे घटार्थमपि कदाचित्तेषां स्वातन्त्र्यप्रसङ्गात्। तन्नियतत्वे स एवोच्यताम्। (२)न च घटपटशकटकटाहादिगतं दण्डवेमवासीसन्दंशगतं वा सामान्यविशेषमुपलभेमहि। "अस्त्यसौ(३)यतः शरीरिकर्तृकत्वानुमानमिति चेत्"। न, घटत्वादेरेव तथाभावात्। अस्तु वा संस्थानविशेषः, (४)न च स एवात्र नि·

---

शेषानुबन्धोऽपि कार्यकारणान्यतरजातिनियतस्तदनियतो वा, अनियतत्वे तेषामेव कारणानां तस्मिन्नेव कार्ये कदाचित्स्वातन्त्र्यं स्यादित्याह—तस्येति। जातिनियतत्वेऽपि दण्डघटादिव्यभिचारात्सर्वानुगतो जातिविशेषो (५)वक्तव्यः, स च तादृशो नोपलभ्यत इत्याह तन्नियतत्व इति। अस्त्येव कार्यविशेषः यतः कार्यविशेषाद्भवद्भिरपि केषुचिच्छरीरकर्तृत्वमनुमीयत इति शङ्कते अस्तीति। न वयं शरीरकर्तृकाभिमतसर्वकार्यसाधारणजातिविशेषेण तादृशमनुमास्यामः, किन्तु घटत्वादिभिरेवावान्तर(६)जातिभिरित्याह नेति। अथ तादृशकार्यानुगतेन संस्थानविशेषेणैव तादृशकर्तारमनुमास्यामः, न च सोऽप्यदृष्टविशेषस्य नियामकः, तादृश·

---

(१) अदृष्टविशेषोपग्रहानुबन्धः। तस्येति। दण्डादौ अदृष्टविशेषोपग्रहोऽस्ति येन घटादिकं जनयति तत्रैव पारतन्त्र्यं क्षित्यादौ तु तत्तत्कारणानां स्वातन्त्र्यमेवेति तदा स्याद्यदि जातिविशेषनियतोऽदृष्टोपग्रहः स्यान्नच तादृशो जातिविशेषोऽस्ति, तथाच घटेऽपि अनियतत्वे घटादिः कदाचित्स्वतन्त्रः स्यादित्यर्थः।

(२) नचेति। कार्ये कारणे च तादृशं सामान्यं नास्ति यत्प्रयुक्तमचेतनानां पारतन्त्र्यमित्यर्थः।

(३) सामान्यविशेषः—शरीरकर्तृकत्वव्याप्यतावच्छेदकं सामान्यमस्तीत्यर्थः।

(४) ननु चेतनपूर्वकत्वेऽपि तदेव प्रयोजकमस्तु न त्वचेतनत्वमात्रमित्यत आह नचेति। तस्य—संस्थानविशेषस्य।

(५) यज्जात्यवच्छिन्नं यद्दण्डादि परतन्त्रं स एव जातिविशेषोऽभिधीयतामित्यर्थः। (६) व्याप्ये चाननुगमो न दोषावह इत्यर्थः।

बन्धनम् , तस्याभावेऽपि जलानलादीनाञ्चेतनप्रेर्यत्वद-र्शनात् । न च शरीरप्रेर्यं यत्तदेव चेतनप्रेर्यमिति नियमः, शरीरस्यैव स्वातन्त्र्यप्रसङ्गादित्युक्तप्रायम् । तस्मादचै-तन्यमात्रनिबन्धनमेतद्दण्डादिषु । तथा च परमाणवदृष्टा-दिष्वपि तस्य भावात्तथाभावो दुर्वारः । तदेतत्कार्यं कार-णवत्तया व्याप्तम् । सा च विपक्षेऽसम्भवन्ती स्वव्या-प्यमुपादाय व्यावर्तमाना सपक्षे विश्राम्यतीति उभय-मुखी प्रतिबन्धसिद्धिः ।

"कः पुनरयं प्रतिबन्धः" । स्वाभाविकसम्बन्धः । "कः स्वभावार्थः" । निरुपाधित्वम् । "कः पुनरुपाधिः" । साध्यप्रयोजकं निमित्तान्तरम्(१) । "किं वाऽस्य लक्ष-णम्" । साधनाव्यापकत्वे सति साध्यव्यापकत्वम् । "कथं पुनरेवंलक्षणकोऽर्थः प्रत्येतव्यो निराकर्तव्यो वेति" । विपर्ययाविरोधबाधकाभ्याम् । "किं बाधकम्" । अन्वय-

संस्थानविशेषाभावेऽपि जलानलादौ चेतनप्रेर्यत्वदर्शनादित्याह (२)अस्तु वेति । शरीरप्रेर्यत्वमेव (३)तन्नियामकमिति चेत्तत्राह—शरीरेति । उक्तप्रायमिति । शरीरसम्बन्धस्य कर्तृत्वं प्रत्यनङ्गत्वव्युत्पादनेनैव तद-प्युक्तप्रायमिति । तस्य भावात्=अचेतनत्वस्य भावात् , तथाभावः= पारतन्त्र्याभावः । विपक्षे=अचेतनपूर्वकस्वभावत्वे, स्वव्याप्यं=कार्य-त्वम् । सपक्षे=चेतनपूर्वकत्वे । उभयमुखी=अन्वयव्यतिरेकमुखी ।

विपर्ययाविरोधेति । विपक्षहेतुसम्भवे प्रमाणविरोधेन उपा-

(१) साध्यप्रयोजकान्तरमित्यर्थः ।

(२) ननु तथाप्यनुगमकं किञ्चिदास्थेयमेवेत्यत आहास्तु वेति । यत्र दृष्टे क्रियादर्शिनोपि कृतबुद्धिरुत्पद्यते तदङ्कुरादिव्यावृत्तं घटपटाद्यनुगतं संस्थानविशेषवत्त्वमेव शरीरिकर्तृकत्वव्याप्यतावच्छेदकमस्त्वित्यर्थः ।

(३) अचेतननिबन्धनं मास्तु किन्तु शरीरप्रेर्यत्वनिबन्धनमेवास्तु चेतनप्रेर्यत्वमित्याशङ्कार्थः ।

व्यतिरेकविषयभूयोदर्शनसाहाय्यकमाचरन्ननुत्तरस्तर्कः। स चात्माश्रय-इतरेतराश्रय-चक्रक-अनवस्था-अनिष्टप्रसङ्गभेदेन (१)पञ्चविधोऽपि क्वचिद्व्यभिचारं निराचक्षाणः क्वचित्तन्निबन्धनमुपाधिमवधूनयन् सहार्थामव-

धिसद्भावः, बाधकेन च तदभाव इति(२)। अन्वयेति। साधनस्य साध्यान्वये व्यतिरेके व्यतिरेकश्च येषां भूयसां दर्शनानां विषयः, तेषां साहाय्यकमाचरन्नित्यर्थः(३)। अनुत्तरः=अप्रतितर्क इति। व्यभिचारमिति। यथात्रैव कार्यत्वस्य, यदि कार्यत्वस्य कर्तृत्वव्यभिचारित्वं स्यात् तदा कारणमात्रस्याप्यभावेन कादाचित्कत्वं न स्यादिति व्यभिचारनिरासः। उपाधिमिति। यदि कार्यत्वस्य सन्निवेशविशिष्टत्वमुपाधिः स्यात् कर्तृपूर्वकत्वेनाभिमतयोरपि गुणकर्मणोस्तदभावेन(४)

(१) स्वापेक्षत्वमात्माश्रयः, स्वापेक्षापेक्षित्वमन्योन्याश्रयः, स्वापेक्षापेक्षापेक्षित्वादिश्चक्रकम्, आपादिप्रयोजकीभूतरूपवदाद्यापादनमनवस्था, अनभिमतार्थापादनमनिष्टप्रसङ्ग इति पञ्चविधस्तर्क इत्यर्थः। चक्रकान्तानां साक्षात्परम्परासाधारणमात्माश्रयत्वमेव बुद्धौ बीजं व्यवहारे पुनरवान्तरविशेषो, यद्यप्यात्माश्रयादावनिष्टप्रसङ्गस्तथापि गोबलीवर्दन्यायेन पृथगुपन्यास इति दीधितिः।

(२) विपक्षबाधकाभावेन प्रत्येतव्यः, विपक्षबाधकेन निराकर्तव्य इत्यर्थ इति मिश्राः। विपर्यये साध्यं विना साधनसत्त्वेऽविरोधेन बाधकाभावेन प्रत्येतव्यो बाधकेन च निराकर्तव्य इति दीधितिः।

(३) अन्वयसहचारग्रहे व्यतिरेकसहचारग्रहे वा साहाय्यकमाचरन्ननुत्तरस्तर्क एव विपक्षबाधक इत्यर्थः। अनुत्तर इत्यस्यार्थमाह अप्रतितर्क इति। नास्त्युत्तरं यस्मादित्यर्थः। कर्तारं विनापि कार्यं स्यादिति विपक्षशङ्का सा च न सम्भवति, एतावता प्रबन्धेनाचेतनव्यापारस्य कर्तृव्यापारसहभावनियमे दर्शिते अकारणकार्योत्पत्तिशङ्कापर्यवसानात्तस्याः स्वक्रियाव्याघातेनानुदयादित्यर्थ इति मिश्राः।

(४) सन्निवेशविशिष्टत्वाभावेन। तत्पूर्वकत्वं-कर्तृपूर्वकत्वम्। तद्विशेषोपाधित्वे=सन्निवेशविशिष्टोपाधित्वे। धूमादाविति। धूमस्या

नीति फलतो न कश्चिद्विशेषः। तदुदाहरणानि चात्रैव यथायथं परिचेयानीति।

"अथ न्यायदुर्बलस्य प्रतिबन्दीकरणम्—अर्थतः(१) शशविषाणस्यापि सिद्धिः स्यात्, द्रव्यमात्रनियतस्वास्यस्यबाधकस्य। न च द्रव्यत्वनिवृत्तेरेव विषाणत्वनिवृत्तिः, अव्यापकनिवृत्तावव्याप्यनिवृत्तेरयोगात्, विषाणगतकार्यत्वप्रयुक्तत्वाच्च द्रव्यत्वव्याप्तेः। तेन तन्निवृत्तावपि नाकार्यस्य शशशृङ्गस्य निवृत्तिरिति"। एतच्च महार्थसिद्ध्या कृतकृत्यस्य न परिभ्रंशाय, निष्प्रयोजनविषयत्वात्। "तथापि सम्भावितस्याकीर्तिभिया नोपेक्षामर्हति प्रतिबन्दिरिति चेत्"। तर्हि मा भैषी(२)रियमुन्मोच्यते। तथाहि—अर्थतः शशीयशृङ्गसाधन(३)प्रवृत्त इदं प्रष्टव्यः—किन्ते विषाणशब्देनान्यदेव किञ्चिद्विवक्षितं रोमादि, विषाणजातीयं वा द्रव्यम्? प्रथमे सिद्धसाधनं लोकविरोधश्च। लोके तद्विपरीतस्यैवार्थस्य विषाणशब्देनाभिधानात्। द्वितीये त्वन्वयव्यतिरेका-

---

त्पूर्वकत्वं न स्यात्, सामान्यस्य तद्विशेषोपाधिकत्वे धूमादावपि तथाभावप्रसङ्गाच्चेत्येवमुपाधिविधूननमिति। फलत इति। उपाधिनिरासेऽपि व्यभिचारनिरासो भविष्यतीत्यर्थः। तदुदाहरणानीति। बाधकतर्कोदाहरणानि चात्रैवास्मदीयग्रन्थ(४) एव यथायथमनुसन्धेयानीत्यर्थः।

अथेति। न्यायतो दुर्बलस्य न्यायेनैव स्वाभिमतं प्राप्तुमसमर्थस्य प्रतिवादिनः प्रतिबन्दीकरणं यदि स्यात्तथालोके इत्यभिप्रायः। अर्थत इति, तुल्यन्यायतया शशशृङ्गमप्ययं साधयितुमुपक्रान्त इत्यनेनैवमु-

---

(१) अत्र यदुतेति पाठान्तरम्।

(२) प्राणित्वादिना स्वशिरस्यपि विषाणसिद्धिभयं मा कार्षीरित्यर्थ इति मिश्राः। (३) स्वशरीरे शृङ्गसाधनेति पाठान्तरम्।

(४) क्षणिकतावादे अपोहवादे च परिचेयानीत्यर्थः।

भ्यां संस्थानविशेषकार्यत्वात् व्यवहारलक्षणायास्तदभिव्यक्तेः कथन्तद्रहितेषु परमाण्वादिषु तत्सम्भवः, सम्भवे वा न कथं तत्र घटत्वादिकमपि। ओमिति ब्रुवतः कथं न जातिसङ्करप्रसङ्गः, कारणं विना कार्यसम्भवप्रसङ्गो वा। न चाऽन्वयव्यतिरेकौ-कार्यकारणभावे प्रमाणमिति सर्वं समाकुलमेवाकुलमतेः। तस्मादतीन्द्रियं नित्यं वा विषाणमेव न भवति, यच्च विषाणं तच्च प्रत्यक्षबाधितमेवेति कुतस्तदनुमानावकाशः।

"एवन्तर्हि(१) नित्यं ज्ञानमित्यपि व्याहतम्, इन्द्रियादिविकारमात्रव्यक्तिव्यङ्ग्यत्वात् ज्ञानसामान्यस्येति चेत्"। (२)न, अतद्भावत्वादतदाक्षेपकत्वाच्च। नहि

पहसति। संस्थानेति। संस्थानविशेषेण विषाणैकनियतकार्यविशेषेण चाभिव्यङ्ग्यत्वात् विषाणव्यवहाररूपाया विशेषणजातिव्यक्तेः कथं संस्थानादिरहितेषु तज्जातिसम्भव इति। (३)कारणमिति। कारणं विनापि व्यवहारकार्यसम्भवप्रसङ्ग इति। न तयोः कार्यकारणभावप्रसङ्ग इति चेत्तत्राह न चान्वयेति।

द्वेधा हि नित्यत्वस्य ज्ञानत्वेन विरोधः—ज्ञानत्वस्य नित्यत्वाभावरूप-

(१) इन्द्रियादिविकारमन्तरेणैव ज्ञानत्वाभिव्यक्तौ तथापि ते दोषाः समाना एवेत्यर्थः। व्याहतं=विरुद्धम्।

(२) निराकरोति नेत्यादि। अभेदभावत्वादिति पाठान्तरम्। ज्ञानत्वनित्यत्वयोः परस्परविरहलक्षणस्तावन्न विरोधः, नहि ज्ञानत्वाभाव एव नित्यत्वं नित्यत्वाभावो वा ज्ञानत्वमित्यर्थः। कुत एवमित्यत आह नहीति। जनकस्त्रीत्वं मातृत्वमजनकस्त्रीत्वं च वन्ध्यात्वमत्र यथा जनकत्वाजनकत्वयोः परस्परविरहरूपत्वं न तथा प्रकृत इत्यर्थः। अचेतनानामिति। अचेतनानां नित्यत्वाभाववतां घटपटादीनां चेतनत्वप्रसङ्गो ज्ञानत्वप्रसङ्गः इत्यर्थः।

(३) तादृशावयवसंयोगं विना यदि विषाणरूपद्रव्यं स्यात्तदाऽकारककार्योत्पत्तिः स्यादित्याह कारणमिति मिश्राः।

ज्ञातृत्वस्य वन्ध्यात्ववन्नित्यत्वस्याभावे ज्ञानत्वम्, अचेतनानामपि चेतनत्वप्रसङ्गात् । (१)नापि नित्यत्वं ज्ञानत्वाभावमाक्षिपेत्, ज्ञानत्वेनाविरोधात्, विरोधमूलस्य विपक्षबाधकस्याभावात्, दर्शनादर्शनयोश्चार्थप्रवणत्वाप्रवणत्वोपाधिग्रस्तत्वात्, रूपत्वानित्यत्वयोश्चक्षुर्मात्रग्राह्यव्यक्तित्ववत् । (२)न चेन्द्रियादिविकारो ज्ञानत्वाभिव्यक्तिहेतुः, अर्थप्रवणव्यक्तिमात्रस्यैव तन्निरपेक्षस्यातथाभावात्, एतदनपेक्षस्य तु (३)तस्यातिप्रसञ्जकत्वात् ।

---

त्वेन वा नित्यत्वस्य ज्ञानाभावाक्षेपकत्वेन वा, नोभयथापि सम्भवतीत्याह—अतद्भावत्वादिति । ननु नित्यत्वे सत्याकाशादौ ज्ञानत्वं न दृश्यते तदभाव एव दृश्यत इति दर्शनादर्शनाभ्यामेव विरोधोऽवसीयत इति चेत्तत्राह (४)दर्शनादर्शनयोरिति । अर्थप्रवणत्वकृतं ज्ञानत्वदर्शनं न त्वनित्यत्वकृतं तथासत्यनित्यानां सर्वेषां ज्ञानत्वप्रसङ्गात्, तथा नानित्यत्वव्यावृत्तिकृतं ज्ञानत्वादर्शनमपि त्वर्थप्रवणत्वनिवृत्तिकृतमेवेत्यर्थः, अत उपाध्यभिग्रस्तत्वान्न तयोस्तस्मिन्प्रामाण्यमिति । रूपत्वेति । यथा रूपत्वस्यानित्यत्वेनान्वयव्यतिरेकयोश्चक्षुर्मात्रग्राह्यव्यक्तित्वमेवोपाधिरिति नाप्यादिपरमाणुषु रूपत्वस्य नित्यत्वेन विरोध इत्यर्थः(५) । यदपीन्द्रियादिविकाराऽभिव्यक्तिमात्रव्यङ्ग्यं ज्ञानत्वसामान्यमित्युक्तम्, तदप्यनुपपन्नमित्याह नचेति । अतिप्रसञ्जकत्वादिति । इन्द्रियगतदो-

---

(१) ननु परस्परविरहाक्षेपकत्वं विरोधोऽस्त्वित्यत आह नापीति । नित्यमपि भवतु ज्ञानं चेति, विपक्षे बाधकं नास्तीत्यर्थः ।

(२) नन्विन्द्रियादिविकारव्यंग्यत्वनिवृत्त्या तत्र ज्ञानत्वं निवर्ततामत आह नचेति । (३) तस्येन्द्रियविकारस्य ।

(४) ननु यद्यज्ज्ञानं तत्सर्वमनित्यमेव दृश्यते, तथाच नित्यं ज्ञानमित्यपि व्याहतमेवेत्यत आह दर्शनेति । नित्यमनित्यं वा यदर्थप्रवणं तदेव ज्ञानं नतु दर्शनादर्शने तन्त्रमित्यर्थ इति मिश्राः ।

(५) रूपत्वेति । अन्यथा यद्रूपं तदनित्यमेवेति व्याप्तया जलपर-

अथ क्षुद्रोपद्रवाः(१)-"केवलस्य कर्तृत्वे विश्वस्य वैश्वरूप्यव्याघातः, सततोत्पत्तिप्रसङ्गश्च । अदृष्टापेक्षायाश्च कल्पनागौरवम् , तत एव तदुपपत्तेः । स्वार्थे(२) प्रवृत्तावनीश्वरत्वप्रसङ्गात् , परार्थे प्रवृत्तावदुःखमयसर्गप्रसङ्गात् । एवमेव प्रवृत्तावचैतन्यम् । एकत्वे प्रमाणाभावः(३), अनेकत्वे त्वसार्वज्ञ्यम् , प्रतिनियतसामग्रीविज्ञत्वात्" इत्यादयः । तत्र कारणचक्रस्यैकदेशमुपा-

---

षादेरपि वह्निकारत्वे ज्ञानत्वप्रसङ्गादित्यर्थः(४) ।

वैश्वरूप्येति । कारणवैचित्र्याभावेन कार्यवैचित्र्यानुपपत्तेरिति । सततोत्पत्तीति । केवलमात्रस्य सदातनत्वे तावन्मात्रहेतुकस्य विश्वस्य सततोत्पत्तिप्रसङ्ग इति । तत एवेति । (५)अदृष्टादेवेत्यर्थः । अनीश्वरेति । अवाप्तसर्वकामत्वमेव ह्यैश्वर्यमिति भावः । अदुःखमयेति । परानुग्रहार्थं प्रवृत्तस्य तद्विपरीताचरणमयुक्तमिति भावः । नायं स्वप्रयोजनं परप्रयोजनं वोद्दिश्य प्रवर्तते किन्तु अनुद्दिश्यैव प्रयोजनं प्रवर्तते इति चेत्तत्राह एवमेवेति । मन्दोऽपि चेतनः प्रयोजनोद्देशेनैव प्रवर्तमानो दृष्टः, तदुक्तम्-'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति । एवमेव प्रवृत्तौ वा चैतन्येनास्य किं भवेदिति । जगत्कर्तुरेकत्वे प्रमाणाभावात् (६)न तस्यैकत्वमित्याह एकत्व इति । प्रतिनियतेति । अनेकेषां जगत्कर्तॄणां स्वस्वप्रतिनियतकार्यसामग्री

---

मानुरूपमपि न सिद्ध्येद्, तत्र सहचारदर्शने व्यभिचारादर्शने च चक्षुर्मात्रग्राह्यव्यक्तित्वोपाधिकत्वं यथा तथा प्रकृतेऽपीत्यर्थ इति मिश्राः ।

( १ ) पूर्वपक्षिणा वक्ष्यमाणा इत्यादय इत्यन्ताः कियन्त इत्यर्थः ।

( २ ) स्वार्थमिति। स्वार्थप्रवृत्तौ सुखवत्त्वेन संसारित्वापत्तेरित्यर्थः॥

( ३ ) प्रमाणाभावादिति मिश्रादिसम्मतोऽत्र पाठो द्रष्टव्यः।

( ४ ) अर्थप्रवणत्वस्यार्थनिरपेक्षस्य ज्ञानत्वव्यञ्जकत्वे सुखादीनामपि ज्ञानत्वप्रसङ्ग इति मिश्राः। ( ५ ) अङ्कुराद्युत्पत्तेरिति शेषः ।

( ६ ) मद्युक्तमीश्वरानुमानं तदेकत्वमपि विषयीकरोतीत्यर्थः ।

दाय शेषवैयर्थ्यप्रसञ्जने सर्ववैयर्थ्यप्रसङ्गः(१) । "अन्वयव्यतिरेकाभ्यां सिद्धकारणभावस्य न वैयर्थ्यमिति चेत्" । अनुमितकारणभावस्याप्येवम्, प्रमाणसिद्धत्वाविशेषात् । यच्च यदनुगुणत्वेन कल्पितं तस्य तेनैव विफलीकरणे सर्वत्रादृष्टमुपादाय दृष्टवैफल्यप्रसङ्गः । तथा च तदपि(२) न स्यात् प्रमाणाभावात् । न च दुःखसृष्ट्या कारुण्यापवादः, जनकाध्यापकचिकित्सकादिषु व्यभिचारात् ।

(३)"अथ दौर्जन्यादेव किं नैवमिति चेत्" । न,

---

मात्राभिज्ञत्वादित्यर्थः(४) । अन्वयव्यतिरेकाभ्यां प्रत्यक्षरूपाभ्यामिति । अनुमितेति । जगत्कर्ताऽपि ह्यनुमितकारणभाव इति । यत्त्वदृष्टस्वीकारे तदेवास्त्वित्युक्तं तत्राह(५)यच्चेति । अदृष्टकारणानुगुण्येन दृष्टकारणसमवधानहेतुत्वेन तत्सहकारित्वेन वाऽदृष्टं कल्प्यत इति भावः । जनकेति । जनकादिवत्परमेश्वरोऽपि हितबुद्ध्यैव जन्तूनां पूर्वकृतशुभाशुभकर्मफलोपभोगेन तत्क्षयाय दुःखमयमपि जगत्सृजतीति(६)भावः ।

---

(१) सिद्ध्यसिद्धिव्याघाते सत्यपि प्रकारान्तरेण परिहरति तत्रेति । अदृष्टमुपादायेश्वरवैयर्थ्योपादाने करणमुपादाय कर्तृवैयर्थ्यं कर्मोपादाय करणवैयर्थ्यमित्याद्यपि प्रसज्येतेत्यर्थ इति मिश्राः ।

(२) अदृष्टमपि ।

(३) आक्षिपति अथेति । कौटिल्यादेव दुःखमयं जगत्किं न सृजतीत्याक्षेपार्थः । समाधत्ते नेति । सर्वज्ञतया मोहाभावेन रागद्वेषरूपदोषयोरभावेन न तथाविधजगत्सर्जनं सम्भवतीति समाधानाभिप्रायः ।

(४) क्षितिकर्तुस्तदुपादानमात्राभिज्ञत्वमङ्कुरकर्तुस्तदुपादानमात्राभिज्ञत्वमित्यसार्वज्ञत्वमित्यर्थ इति मिश्राः ।

(५) उपजीव्यविरोधमाह यच्चेति । अदृष्टाधिष्ठातृत्वेन सिद्ध ईश्वरो नादृष्टेनान्यथासिद्धः कर्तुं शक्य इत्यर्थ इति मिश्राः ।

(६) यथा पिता पुत्रहितार्थं पुत्रादेः ताडनादिना दुःखमुत्पादयतीति भावः ।

दोषाभावात्, तदभावश्च मोहाभावात् तदभावोऽपि सर्वज्ञत्वादिति। (१)एकदा द्व्यणुककारी परमाणुमदृष्टमुप-कार्यं द्व्यणुकादिभोगपर्यन्तं द्रव्यादिपदार्थषट्कञ्च जानाति नूनमित्यपि अविवादम्, एषामुपादानादिरूपत्वात्, अवच्छेद्यावच्छेदकभावापरिज्ञाने(न) चोपादानादिपरि-ज्ञानानुपपत्तेः। यश्च यज्जातीयमेकं कर्तुं ज्ञातुं वा समर्थः स तज्जातीयं सर्वमेवेति नियमः, सामर्थ्यस्य जातिनिय-तत्वात्(२)। केवलं(३) समर्थोऽपि सहकार्यसन्निधेर्न कुर्यात् न जानीयात्।। तत्र प्रथममिष्यत एव, कार्यस्य देश-कालनियमोपलम्भात्। द्वितीयस्तु सम्भवेदपि यदि कार्यमस्य ज्ञानं स्यात्, न च तत् तथा। "कथमिति चेत्"। (४)शरीरापाये तदाश्रितानामिन्द्रियादीनामपा-

---

उपकार्यं सम्प्रदानम्। उपादानादीति। परमाण्वादीनामु-त्क्रमेणोपादानोपकरणसम्प्रदानप्रयोजनरूपत्वादित्यर्थः। ननु सामा-न्यसमवायविशेषाणामनुक्तरूपाणां किमर्थं ज्ञानमिति चेदत आह(५) अवच्छेद्येति। तेषामप्युपादानाद्यवच्छेदकतया तन्नियमाय तज्ज्ञान-मप्युपयुक्तमित्यर्थः। एकत्वे प्रमाणाभाव इति यदुक्तं तत्र सर्वज्ञेनै-केनैव कर्त्रा कार्यवर्गस्योपपत्तिरेव तदेकत्वे प्रमाणमिति तस्य सर्वज्ञत्व-साधनेनैव तत्परिहरति यश्चेति। जातिनियमादिति। कुलालकु-विन्दादिषु तथा दर्शनादित्यभिप्रायः। प्रथममिति। परमेश्वरस्यापि

---

(१) असार्वज्ञ्यं परिहरति एकदेति।

(२) अत्र 'जातिनियमादिति' नारायणसम्मतः पाठो द्रष्टव्यः।

(३) सततोत्पत्तिप्रसङ्गं निरस्यति केवलमिति।

(४) शरीरापाय इति। ज्ञानकारणं नास्ति ज्ञानं चास्तीति नित्य-त्वमवर्जनीयमित्यर्थः।

(५) तर्हि तदुपादानादिज्ञानात् तद्गतसामान्यादिज्ञानं कुतस्त्य-मित्याह-अवच्छेद्येति मिश्राः। तेषां=सामान्यादीनाम्।

यात् । (१)न च अन्वयव्यतिरेकसिद्धहेतुभावस्याभावेऽपि हेत्वन्तरात् कार्यजन्म, निर्हेतुकत्वप्रसङ्गात् । न चाहेतुकं कार्यं नाम, ततः स्वतःसिद्धैवास्य ज्ञानचिकीर्षाप्रयत्नशक्तिर्यद्गोचरा तज्जातीयसमस्तगोचरेति (२)सर्वज्ञसिद्धिः । "शरीरापाय एव कथमिति चेत्" । दृश्यस्य प्रत्यक्षबाधितत्वात् । अदृश्यस्यापि सावयवतया मूर्ततया च निविडतरपाषाणमध्यवर्तिनि भेकशरीरादौ कार्ये कर्तव्ये नाभग्नस्य प्रवेशः । न च परमाणुरूपं तच्छरीरं, अनन्तरालत्वेन निर्मनस्कतयेन्द्रियाश्रयत्वानुपपत्तेः । न च बहिर्वृत्ति मनो ज्ञानजननोपयोगि, शरीरवैयर्थ्यप्रसङ्गात् । न च दविष्ठ एव सूर्यादिव(३)त्कुर्यादिति

---

सहकार्यसन्निधानादकरणमिष्यत एवेत्यर्थः । इन्द्रियादीनामभावेऽपि हेत्वन्तरादेवास्य ज्ञानमिति चेत्, अत आह निर्हेतुकत्वेति । अनियतस्य हेतुत्वाभावेन कार्यस्य निर्हेतुकत्वप्रसङ्गादित्यर्थः । दृश्यस्येति । विटपाद्युत्पत्तौ कर्तृदृश्यस्य शरीरस्य प्रत्यक्षबाधितत्वादिति । अदृश्यमपि शरीरं सावयवं निरवयवं वा ? तत्र सावयवत्वे तस्य मूर्तत्वनियमात् निबिडतरमूर्तान्तरमध्ये नाभग्नस्य प्रवेश इत्याह अदृश्यस्यापीति । निरवयवत्वे दोषमाह न च परमाण्विति । इन्द्रियाश्रयेति । ततश्चेन्द्रियाश्रयत्वलक्षणं शरीरत्वं न स्यादिति भावः । तथापि शरीराद्बहिरेव मनो वर्ततामिति चेत्तत्राह न च बहिरिति । यदि शरीराद्बहिरेव वर्तमानं मनो ज्ञानजननोपयोगि तर्ह्यशरीरस्यैवात्मनस्तज्ज्ञानं जनयेदित्यर्थः । सूर्यादिवत् दूरस्थ एव परमेश्वरोऽपि पाषाणमध्यवर्त्यपि कार्यं कुर्यादिति चेत्तत्राह न च दविष्ठ एवेति । कार-

---

(१) ननु शरीरादिभिन्नमेव तत्र कारणं स्यादित्यत आह नचेति ।
(२) सार्वज्ञ्येति पाठान्तरम् ।
(३) सूर्यादिवदिति । पाषाणमध्यवर्तिभेकादिरिति शेषः ।

साम्प्रतम् । कारकानधिष्ठानात्, शरीरस्य च तदायतनतया प्रयत्नस्याव्यापकत्वात् । (१)तथापि च व्यापकत्वे असमवायिकारणाननुरोधेनाकारणकतया तदेव नित्यत्वम् । न चोद्देशमात्रसम्बन्धेन क्रियाहेतुत्वम्, अस्मदादिप्रयत्नस्यापि तथा भावप्रसङ्गात्(२) । न च संयुक्तोत्पादादधिष्ठानम्, साक्षादधिष्ठानस्य विवक्षितत्वात् । "विषा-

कानधिष्ठानादिति । इहैकशरीरारम्भक(३)कारकानधिष्ठानादित्यर्थः । कथमित्याह शरीरस्य चेति । असमवायीति । विभुकार्याणामपि द्रव्यसंयोगासमवायिकारणकत्वेन तदुत्पत्तेर्भवतस्तदकारणतया तदेव प्रयत्नादीनां नित्यत्वमित्यर्थः । न च शरीरप्रदेशे वर्तमानस्यैव प्रयत्नस्य तत्तत्कारकोद्देशमात्रेणैव तत्प्रवृत्तिहेतुत्वसम्भव इत्याह (४)न चोद्देशेति । न चेश्वरस्य शरीरद्वारतोऽपि कारकाधिष्ठानमिष्टं शरीरद्वारान्वेन साक्षादधिष्ठानस्यैव साध्यत्वादित्याह (५)न च संयुक्तेति । तर्हि कथं विषशकलचालनादौ संयुक्तसंयोगादधिष्ठानासिद्धिरिति शङ्कते विषेति । विषापनोदनार्थे ध्याने तावदस्मदीयस्यैव प्रयत्नस्य हेतुत्वं

(१) ननु तस्य प्रयत्नो व्यापक एवास्त्वित्यत आह तथापीति । तथा च सुर्वपदेन नित्यव्यापकप्रयत्नवानीश्वर एवाभिधीयत इत्यायातमिति भावः ।

(२) तथाभावेति । विदूरे क्रियाजनकत्वप्रसङ्गादिति मिश्राः ।

(३) कारकेति । भेकशरीरं प्रति यत् कारकं तदधिष्ठानं तत्र व्यापारोपधानं तद्विषयेण प्रयत्नेन भवेत्, न च विदूरवर्तिनां प्रयत्नेनान्यत्र व्यापार आधातुं शक्य इत्यर्थः ।

(४) ननु दविष्ठोऽपीच्छाविषयतया प्रयत्नविषयः स्यादित्यत आह नचेति । उद्देश इच्छेति मिश्राः ।

(५) ननु सूर्यादिशरीरसंयुक्तमाकाशं तत्संयुक्तं च भेककारकचक्रमिति तत्प्रयत्नेन तत्र क्रिया स्यादित्यत आह नचेति मिश्राः । साक्षादिति । प्रयत्नवदात्मसंयोगेनाधिष्ठानं विवक्षितम्, तत्रास्मदादीनां शरीरद्वारमीश्वरस्य न तद्द्वारमित्यर्थ इति मिश्राः ।

पनोदादौ कथमिति चेत्"। (१)न, तत्रास्मदादिज्ञानमात्रं प्रति यत्नस्याविरोधात् । विषापनोदादौ तु तत्सहकारिणस्तज्जन्यादृष्टसहकारिणो वाऽन्यस्यैव(२) तत्रत्यो यत्नः क्रियाहेतुरिति । सर्गादौ तु न शरीरगन्धोऽपीति सर्वथा कलेवरविगमादकारणकतया बुद्धेः सर्वज्ञत्वमनिवार्यं विशेषात् कर्तुरेकस्येति ।

"अस्तु तावदसौ सर्वज्ञः कर्ता, वक्ता तु कथमिति चेत्" । वचनशक्तौ सत्यां परार्थैकतानत्वात्(३)। यो हि हिताहितविभागं विद्वान् परार्थाभिप्रायः स स्थानकरणपाटवे सत्यविदुषेऽवश्यमुपदिशेत्, यथाऽन्धाय 'दक्षिणेन

---

न विरुद्धयते तद्धेतोर्मनसः साक्षादधिष्ठानादित्याह तत्रेति । विषापनोदनेऽपि ध्यानसहकारिणो वा तज्जन्यादृष्टसहकारिणो वाऽन्यस्यैव परमेश्वरस्य विषशकलगोचरो यत्नस्तत्क्रियाहेतुरित्याह विषेति(४) । सृष्ट्यादौ तु नेश्वरस्य तदानीं शरीरस्याप्यनुत्पत्तेः शरीरप्रसङ्गोऽपीत्याह(५) सर्गादाविति । कर्तुः(६) सार्वज्ञ्यादेव तत्सिद्धफलमाह एकस्येति ।

अशरीरस्य वागिन्द्रियशून्यस्य कथं वक्तृत्वमित्यभिप्रायेण शङ्कते वक्ता

---

(१) ननु गारुडिकप्रयत्नेन व्यवहितेनापि दष्टविषापनोदः कथं क्रियत इत्याशङ्क्याह न तत्रेति । गारुडिकमन्त्रपाठादिना गरुडदेवताधिष्ठातृत्वं ज्ञानं जन्यते येन दष्टो जीवति, तत्र चास्मदादेः गारुडिकस्य प्रयत्नो न विरुद्ध इति समाधानार्थः ।

(२) मन्त्रपाठजन्यादृष्टसहकारिणोऽन्यस्यैवेश्वरस्य वेत्यर्थः ।

(३) परप्रयोजनैकपरत्वादित्यर्थः, तदेवाह यो हीति ।

(४) ननु तथापि दष्टनिष्ठं विषं गारुडिकप्रयत्नेन व्यवहितेन कथं चलति कथं वाऽभिधानेन विषशकलं चलतीत्यत आह विषेति मिश्राः ।

(५) न सृष्ट्यादिशरीरगन्धोऽपि येन तत्प्रयत्नाधिष्ठेयत्वं स्यात्तथा चेश्वर एवाशरीरोऽप्यधितिष्ठतीति सिद्धमित्यर्थ इति मिश्राः ।

(६) अत एव ज्ञानकारणशरीराभावात्तद्धर्मिप्रतीतिनियमानुपपत्तेः सर्वज्ञत्वमनिवार्यमित्याह मूले सर्वथेति मिश्राः ।

याहि वामेन मा गा' इति पृथग्जनोऽपि, तथाच भगवा-
निति। "स्थानकरणपाटवमसिद्धम् , देहाभावात्, तेषां
ताल्वादिविवृतिरूपत्वात्(१), न च तदन्तरेणैव तन्निष्प-
त्तिः, तदुत्पत्तेरवधारणात्, न च तत्कारणमनधितिष्ठतस्त-
त्कर्तृत्वमीश्वरस्यापीति चेत्"। न, यस्य कार्यस्य यत्का-
रणमन्वयव्यतिरेकसिद्धं तत्कारणाधिष्ठानयोः(२) स्थूल-
सिद्ध्यर्थं तदवयवपरम्पराकारणाधिष्ठानवदवश्यम्भाव-
नियमात्। न च सर्वत्र कार्ये कायः कारणमिति प्रागु-
पेक्षितः। पितृत्वाद्वोपदेशानुमानम्। "(३)तथापि कतम
आगमस्तेन प्रणीत इति चेत्"। वेदायुर्वेदादिरित्यधिक-

रिवति। अभिप्रायं (४)विवृणोति स्थानकरणपाटवमसि-
द्धमिति। तस्याप्युपदेशाङ्गतया शरीरपरिग्रह इष्यत एवेति परिहरति
नेति। तर्हीदानीमेव तस्य शरीरसम्बन्धनिरासः कथं सङ्गच्छतेत्या-
शङ्क्याह (५)न च सर्वत्रेति। परमेश्वरस्य जगत्पितृत्वेनार्वाचीनपितृ-
वद्वोपदेशानुमानमित्याह पितृत्वाद्वेति(६)। तत्रायुर्वेदस्य दृष्टार्थ-
शास्त्रतया प्रमाणान्तरेणैव प्रामाण्ये सिद्धे सुखेन तस्येश्वरप्रणीतत्वं प्रति-

---

(१) वर्णं प्रति ताल्वादीनां कार्यकारणभावावधारणादित्यर्थः।
नन्वीश्वरस्तदन्तरेणापि वर्णान्सञ्जनयेदित्यत आह नचेति।

(२) अवश्यंभावनियमादित्यनेनान्वयः, मध्ये दृष्टान्तमाह
स्थूलेति।

(३) शङ्कते तथापीति। भवदभ्युपगतोऽस्मदभ्युपगतो वागमस्त-
त्प्रणीत इत्याशङ्कार्थः। (४) पूर्वपक्षीति शेषः।

(५) तर्ह्यङ्कुरादौ जनयितव्ये कथमीश्वरस्य कायो नाभ्युपेयत
इत्यत आह नचेति मिश्राः।

(६) पिता पुत्रं जनयित्वोपदिशत्येव यो यदाप्तः स तमनभिज्ञमु-
पदिशत्येवेत्यर्थः।

रि(१)कर्णज्वरः सिंहनादः । तथाहि न तावदयमायुर्वे- दोऽप्रमाणम्, संवादस्य प्रायिकत्वात्, विसंवादस्य काकतालीयतथा(२)कर्तृकर्मसाधनवैगुण्यहेतुकत्वात्, पुनस्तत्साद्गुण्ये तत एव फलसिद्धेः । न च निर्मूलस्तथा भवितुमर्हति, अतिप्रसङ्गात् ।

न चान्वयव्यतिरेकावस्य मूलम्(३), आवापोद्वापेन योगानामनन्ततयाऽर्वाचीनेनाशक्यत्वात् विषादौ तथाकरणे बहुतरानर्थप्रसङ्गाच्च । कश्च प्रेक्षावाननाकलितवस्तुतत्त्वः पाटनप्लोषणक्षारणशिरावेधनच्छेदनादियोग्या-

पाद्य तद्दृष्टान्तेनैव वेदस्यापि तत्प्रणीतत्वं साधयति तथाहीति । तथा भवितुमिति । प्रमाणं भवितुमित्यर्थः । अतिप्रसङ्गादिति । निर्मूलानामनाप्तवाक्यानामपि प्रामाण्यप्रसङ्गादित्यर्थः ।

आवापेति । औषधविशेषाणामावापोद्वापेन तत्संयोगानामित्यर्थः । विषादौ तु विशेषतश्च दोषोऽस्तीत्याह विषादाविति । विषादीनामन्वयव्यतिरेककरणे(४) मरणप्रसङ्गेन बहुतरानर्थप्रसङ्ग इति । तादात्विकदुःखहेतुषु पाटनप्लोषणादिषु नान्वयव्यतिरेकसम्भावनापीत्याह (५)कश्चेति । तर्हि नान्वयव्यतिरेकावुपदेशस्य मूलमुपदेशपारम्पर्यमेव

(१) अधिकरोति । तवातिदुःखसहमिदं वचनं समयतस्त्वद्धिष्ठीयमानमण्डलीकरणादीनामप्रामाणिकत्वेन तव श्रमवैयर्थ्यादिति भावः ।

(२) प्रथमं दृष्टान्तमुपपादयितुमाह कर्तृकर्मेति । आयुर्वेदप्रक्रियायां दशमूलीकषायस्य तुलनाद्यसाद्गुण्यं कर्मवैगुण्यं, कर्तुश्चाजीर्णवत्वाद्यसाद्गुण्यं बोध्यम् ।

(३) दशमूलीकषायपाने ज्वरोपशमनन्तदभावे तदभाव इत्यन्वयव्यतिरेकावेवास्य हेतुरिति न वक्तव्यमित्यर्थः । योगानां= तत्तद्भेषजसम्भेदानाम् । (४) स्वयमुत्प्रेक्ष्य योगकरण इति मिश्राः ।

(५) आप्तोपदेशमन्तरेण पाटनादौ प्रवृत्तिरेव न स्यादित्याह कश्चेति मिश्राः ।

ये(१) कारयेत् कुर्याद्वा । न चोपदेश(स्य)पारम्पर्यमात्रं मूलम्, अवश्यमुपदेशस्य क्वचित्प्रमाणे विश्रान्तेरिति हि व्याप्तेः। न च नित्यागमसम्भवः, वाक्यत्वात्। तस्माद् तीन्द्रियार्थदर्शिपूर्वकोऽयमिति विशेषः। (२)तथा चानेन दृष्टान्तेन महाजनपरिगृहीतत्वाद्वेदा अपि सर्वज्ञपूर्वका इत्युन्नीयते।

"ननु महच्छब्दो यद्यत्र पूज्यप्रामाणिकवचनस्तदा सन्दिग्धासिद्धविशेषणो हेतुः, अथ बह्वर्थः, तदा सुगताद्यागमैरनैकान्तः, तेषामपि वा सर्वज्ञपूर्वकत्वमिति चेत्"। न,(३) बहुत्वातिशयस्य विवक्षितत्वात्। "कोऽतिशयः" सर्व-

मूलं भवेदिति चेत्, तत्राह नचोपदेशस्येति। सर्वेषां प्रमाणभूतानामुपदेशानां निरपेक्षप्रमाणान्तरमूलत्वेन क्वचित्पर्यवसानं व्याप्तिरित्यर्थः(४)। नित्यत्वादेवायुर्वेदस्य मूलान्तरानपेक्षस्यैव प्रामाण्यं भवतीति चेत्तत्राह न च नित्यागमेति।

ननु महच्छब्दः पूज्यवाची बहुवाची वा। प्रथमे पूज्यत्वालक्षणप्रामाणिकजनपरिगृहीतत्वस्य वेदानां सर्वज्ञप्रणीतत्वसाधनात्माग्महासिद्धिः (५)सान्दिग्धविशेषणो हेतुरित्याशङ्कते नन्विति। द्वितीये तु सुगताद्यागमैरनैकान्तः(६) तेषामपि सर्वज्ञपूर्वकत्वप्रसङ्गो वेति शङ्कते अथेति। सर्वदर्शनेति। अयमर्थः—न केवलं बौद्धाद्यागमवदेकदर्शनवर्तिभिरेव बहुभिर्जैनैर्वेदानां सर्वज्ञप्रणीतत्वे परिग्रहः, किन्तु सर्वदर्शनवर्तिभिरपि,

(१) योग्याये=अभ्यासाय।

(२) यदर्थमायुर्वेददृष्टान्तोपादानं तदाह तथाचेति।

(३) समाधत्ते नेति। अतिशयितानां बहूनां महच्छब्देनाभिधानादित्यर्थः। (४) प्राथमिकस्योपदेष्टुरुपदेश्यसाक्षात्कार एव मूलमित्यर्थ इति मिश्राः। (५) मन्वादीनां प्रामाणिकत्वसन्देहादित्यादिः।

(६) बहुपरिगृहीतस्यापि सुगताद्यागमस्य त्वयापि सर्वज्ञ पूर्वकत्वानभ्युपगमादनैकान्त इत्यर्थः। तेषामिति। सुगताद्यागमानामपि त्वदुक्तहेतुबलात्सर्वज्ञपूर्वकत्वं वा स्यादित्यर्थः।

दर्शनान्तःपातित्वम् । "कस्तैः परिग्रहः" (१)अर्थानुष्ठानम् , स्वीकृतप्रामाण्यव्याकरणादिपालनीयत्वम् , स्वीकृतप्रामाण्यायुर्वेदस्वीकृतार्थत्वञ्च । तथाहि नास्त्येव तद्दर्शनं यत्र सांप्रतमित्युक्त्वापि गर्भाधानाद्यन्त्येष्टिपर्यन्तां वैदिकीं क्रियां जनो नानुतिष्ठति, स्पृश्यास्पृश्यादिविभागं वा जनो नानुमनुते, व्यतिक्रमे वाऽऽचमनस्नानादिप्रायश्चित्तं नानुतिष्ठति । "न सर्वथा सर्वो जन एवमिति चेत्" । मा भूत्, नहि सर्वत्र सर्वैर्योगिभिरायुर्वेदार्थो नानुष्ठीयत इति न तस्य महाजनपरिग्रहः,

---

अतो दर्शनबहुत्वेनापि तेषां बहुत्वादस्ति बहुत्वातिशय(२) इति । बौद्धादिदर्शनवर्तिभिरपि वेदानां कः परिग्रह इति पृच्छति कस्तैरिति । ग्रहणधारणात्मकः परिग्रहो यद्यपि नास्ति तेषां तथापि वेदार्थानुष्ठानमेकः परिग्रहः, तथा तैः स्वीकृतव्यवहारव्याकरणादिभिर्वेदस्य परिपालनीयत्वमप्यपरः परिग्रहः, तथा तैः स्वीकृतप्रामाण्यायुर्वेदेन वेदस्य स्वीकृतार्थत्वमपि तैर्वेदस्य परिग्रह इत्याह अर्थानुष्ठानमिति । कथमेवंविधेऽपि परिग्रह इति चेत्, तत्राह तथाहीति । यत्र ज(न्म)न इत्यन्वयः । तद्दर्शनान्तःपातिनः कतिपय एवमनुतिष्ठन्ति न तु सर्वे इति शङ्कते न

---

(१) तदर्थानुष्ठानमिति मिश्रसम्मतोऽत्र पाठः । अस्मदभिमतस्य वेदस्यार्थो निषेकादिस्तैरनुष्ठीयते न तु त्वदागमस्यार्थो मण्डलीकरणादिरित्येकपरिग्रहार्थः । द्वितीयमहाजनपरिग्रहमाह स्वीकृतेति । स्वीकृतप्रामाण्यं यद्व्याकरणं पाणिन्यादिप्रतीतं तस्साधितासाधारणपदवत्त्वं महाजनपरिगृहीतत्वमित्यर्थः । 'छन्दसि बहुलमि'त्यादिसूत्रप्रतिपादितासाधारणपदवत्त्वं यथास्मदागमे न तथा त्वदागमेऽपीति भावः । अत्र स्वीकृतव्यवहारेति पाठान्तरं नारायणसम्मतं मूले द्रष्टव्यम् । तृतीयमाह स्वीकृतेति । 'शतकृत्वो गायत्रीमभ्यस्य नीरुग्भवती'त्यादौ गायत्र्या अस्मदागम एव सत्त्वादित्यर्थः ।

(२) सर्वाणि दर्शनानि न्यायमीमांसाप्रभृतीनि तदन्तःपातित्वं

अपि तु सर्वदर्शनान्तःपातिभिरित्येव। "तथापि (१)न सर्वो वेदार्थं एवमिति चेत्"। मा भूत्, नहि सर्वो(२) वैदिकार्थ एवमपि तु कश्चिदपि केनापि।

"(३)एवन्तर्हि सौगताद्यागमार्थोऽपि कश्चिदहिंसादिः सर्वदर्शनान्तःपातिभिरनुष्ठीयत एव कैश्चिदिति सोऽपि महाजनपरिगृहीतः स्यात्"।

न,(४) सन्देहात्- किमहिंसादिर्वैदिक एवार्थो बिडालव्रतन्यायेन श्रद्धापादनाय शौद्धोदनिप्रभृतिभिरुपनिबद्धः, आहोस्वित् स्वयं प्रदृष्ट एवेति। न तावत्स्वयं दृष्ट एवेति, श्रमणकाद्यागमसाधारणत्वात्। यस्त्वसाधारणो

---

सर्वथेति। मा भूदिति। सर्वदर्शने वर्तमानैः सर्वयोगिभिरित्यर्थः। सर्वदर्शनान्तःपातिभिर्जैनैः परिग्रहोऽस्तीत्येवं महाजनपरिग्रहस्तस्यापीत्याह अपि तु सर्वदर्शनान्तःपातिभिरित्येवेति। एवंविधोऽपि परिग्रहो न सर्वस्य वेदार्थस्येति शङ्कते तथापीति। निराकरोति मा भूदिति।

सोऽपीति। सुगताद्यागमोऽपीत्यर्थः।

श्रमणकाद्यागमेति। न च श्रमणकाद्यागमप्रोक्तॄणां धर्मद्रष्टृत्वं बौद्धैरिष्यत इति भावः। अतो यद्यसाधारणस्यैव मण्डलीकरणादेः सर्वदर्शनान्तःपातिभिः परिग्रहः स्यात् ततस्तेऽपि महाजनपरिगृहीता भवेयुः न त्वेवमित्याह यस्त्विति।

---

तत्प्रतिपाद्यत्वम्, मुख्यार्थस्वर्गापवर्गादिस्वकर्तृत्वमतिशयः, सौगतानि दर्शनानि तु दर्शनप्रतिरूपकाणि न तु दर्शनानीत्यर्थ इति मिश्राः।

(१) न सर्वः=न राजसूयादिरपीत्यर्थः।

(२) न सर्व इति। अनेकधनायाससाध्यमहाजनप्रसारणादिरित्यर्थ इति मिश्राः।

(३) शङ्कते एवमिति। यदि काचित्की कतिपयमहाजनप्रवृत्तिः परिग्रहार्थस्तदेत्यर्थः।

(४) समाधत्ते नेति। सन्देहाकारमेव दर्शयति किमित्यादिना।

मण्डलीकरणादिः केशोल्लुञ्चनादिर्वा नासौ सर्वैरनुष्ठीयते, वैदिकस्त्वसाधारण एव निषेकादिस्तथेति(१)।

अपि च (२)वाचकापभ्रंशविभागोऽस्ति वस्तुतो न वा ? तद्व्यवहारस्तावत् सर्वैरेव तीर्थिकैरापोशानेन स्वीकृतः, तथा शिक्षाज्योतिश्छन्दोनिगमनिरुक्ताद्यर्थश्च, तेषां वेदरक्षैव परमं प्रयोजनमिति।

(३)"स्यादेतत्, व्याकरणादीनि तावत् सर्वैरेवाभ्युपेतार्थानि, वेदा अपि तैः पालनीया भवन्तु, त एवेति तु कुतः ? संसारमोचकागमोऽपि तत्पालनाय किं न स्यादिति चेत्"। न, तत्कर्तृभिस्तथानभ्युपगमात्, अव्यु-

---

द्वितीयं (४)परिग्रहं विवृणोति अपि चेति।

तत्कर्तृभिरिति। व्याकरणादिकर्तृभिरिति(५)। अनभ्युपगमः कथमिति चेत्तत्राह अव्युत्पादनादिति। तदपि कथमिति चेदत्र

---

(१) तथा-सर्वानुष्ठानगोचर इत्यर्थः।

(२) ननु वाचकापभ्रंशफलं व्याकरणं, तद्विभागश्च वस्तुगत्या नास्तीत्यत आह वाचकेति। तद्व्यवहारश्चेदस्ति सोऽपि व्याकरणाधीन एवेत्यर्थः। व्याकरणं प्रकृतिप्रत्ययादिपरिकल्पकं वाक्यम्, न च गोशब्दवत् गावीशब्दे तत्परिकल्पनास्ति, तथाच तत्परिकल्पकत्वेन सर्वैरनुमतेन व्याकरणेन 'बहुलं छन्दसी'त्यादिना 'भद्रं कर्णेभि'रित्यादीनां साधनात्तत्परिपालनीयत्वं सिद्धम्।

(३) शङ्कते स्यादेतदिति। संसारेति। तत्रापि पञ्चस्कन्धनमस्कारापोहादिपदमसाधारणं यदस्ति तदभिव्यङ्ग्यार्थकं व्युत्पाद्यमेवेत्यर्थः।

(४) स्वीकृतप्रामाण्यव्याकरणादिभिर्वेदस्य परिपालनीयत्वरूपं द्वितीयं महाजनपरिग्रहमित्यर्थः।

(५) इन्द्रपाणिनिप्रभृतिभिर्व्याकरणकर्तृभिस्तदनभ्युपगमात् संसारमोचकागमप्रतिपाद्यार्थशब्दयोरनभ्युपगमादित्यर्थः।

त्पादनात्(१), असाधारणलिङ्गाभावाद्विरुद्धलिङ्गसद्भा-
वाच्च। नहि वेदशब्दार्थाविव सुगताद्यागमासाधारण-
शब्दार्थावनुरोध्य (२)तेषां प्रवृत्तिः यत एवमुन्नीयते,
प्रत्युत विरोध एव तैस्तदप्रामाण्यव्युत्पादनात्। त-
स्मात्सर्वाभ्युपेतव्यवहारव्याकरणादिपालनीयत्वमपि वे-
दानामेव नान्येषाम्(३)। सर्वाभ्युपेतप्रामाण्यैरायुर्वेदा-
दिभिः स्वीकृतश्चैषामर्थः, प्रतिपदं तदीय(४)शान्तिक-
पौष्टिकप्रायश्चित्ततपोजप्यदानहोमाभ्युपदेशात्।

न चैष भागस्तत्रा(५)प्रमाणमेव, तुल्ययोगक्षेमत्वात्।
"(६)एतदेवासिद्धं प्रक्षेपस्यापि सम्भवादिति चेत्"। न,
अध्येत्रध्यापयितृसम्प्रदायाविच्छेदात्, 'अन्यथाकर-

आह असाधारणेति। असाधारणलिङ्गाभावमाह नहीति।(७)विरु-
द्धलिङ्गसद्भावमाह प्रत्युतेति। तृतीयं परिग्रहमाह सर्वाभ्युपेतेति।

न चैष भाग इति। शान्तिकपौष्टिकादिविषय आयुर्वेदभाग
इति। तुल्येति। भाषान्तरेणेति शेषः। सम्प्रदायेति। सम्प्रदाया-

---

(१) यथा व्याकरणसूत्रैर्वैदिकानि पदानि व्युत्पाद्यन्ते तथा न त्वदागमस्थान्यपि, पञ्चस्कन्धादिपदानि तु भाषायामेव सिद्धानीति भावः। (२) इन्द्रपाणिनिप्रभृतीनाम्।

(३) संसारमोचकागमानाम्।

(४) तदीयेति। वेदस्य शान्तिकपौष्टिकादेरायुर्वेदेनोपदेशादित्यर्थः।

(५) आयुर्वेदे। तथाच नैतन्महाजनपरिगृहीतमित्याशङ्कार्थः। समाधत्ते तुल्येति। तथा च दशमूलीकषायाद्युपदेशभागेऽप्यप्रामाण्यापत्तिर्न चेदमिष्टं संवादेन प्रामाण्यग्रहणात् इत्यर्थः।

(६) शङ्कते एतदेवेति। तुल्यत्वमेवासिद्धमनुभूयमानशान्तिकादिविधेस्तत्र प्रक्षिप्तत्वादित्याशङ्काशयः।

(७) अत्र मिश्रमतेन 'मूले विरुद्धसंसर्गसम्भवाच्चे'ति पाठो द्रष्टव्यः।

णे(१) चास्य बहुभ्यः स्यान्निवारणम्' इति न्यायात् ।
तस्मादेवंरूपोऽपि महाजनपरिग्रहो वेदानामेवेति, सोऽय-
मीदृशो महाजनपरिग्रहो वेदस्यासर्वज्ञपूर्वकत्वेऽसम्भवन्
सर्वज्ञ(२)पूर्वकत्वेन व्याप्यते । यथा हि पूर्वविरुद्धापूर्वव्या-
करणवैद्यकादिषु विगानादपरिग्रहस्तथा तथाविधे धर्म-
शास्त्रेऽपि (३)व्यामोहाद्भवन्नपि कस्यचिदेव न तु सर्वे-

---

विच्छेदे हि न प्रक्षेपसम्भावनेति भावः(४) । अविच्छेदेऽपि कुतो न
सम्भावनाऽत आह अन्यथाकरण इति । सम्प्रदायाविच्छेदे हि तस्य
प्रक्षेपेणान्यथाकरणं तद्व्यवहर्तृभिरेव निवार्यत इत्यर्थः । नन्वस्तु वेदाना-
मेव महाजनपरिग्रहस्तथापि तस्य विपक्षेऽपि वृत्तिसम्भावनया सर्वज्ञपूर्व-
कत्वे न व्याप्तिरिति चेदत आह सोऽयमिति । असम्भवं दर्शयति
यथा हीति । इदमत्र तावद्विकल्पनीयम्—महाजनपरिगृहीतस्याप्यस्य
वेदाख्यस्य धर्मशास्त्रस्य पूर्वकोटिरस्ति न वा ? अस्तित्वेऽपि तेनेदं धर्म-
शास्त्रं विरुद्धमविरुद्धं वा, अविरुद्धत्वे तत्पूर्वं धर्मशास्त्रं केनाप्यपरिगृहीतं
केनचिद्वा परिगृहीतं महाजनपरिगृहीतं वा । तत्र न तावत्पूर्वेणैव तस्य
विरोधः सम्भवति, अपूर्वव्याकरणादिवद्विगानात् महाजनपरिग्रहानुपपत्ते-
रिति । अविरुद्धत्वे पूर्वस्यापरिग्रहः एकेन वा परिग्रह इत्येतावपि पक्षौ न

---

(१) प्रक्षेपशङ्काकरण इति मिश्राः । बहुभ्य इति । बहूनामित्यर्थः ।
भवदागमेऽपि सर्वत्र प्रक्षेपशङ्का स्यादिति भावः ।

(२) इदं महाजनपरिगृहीतत्वहेतोः साध्यम्, तथाच वेदाः सर्वज्ञ-
पूर्वकाः एतादृशमहाजनपरिग्रहविषयत्वाद्यन्नैवं तन्नैवमित्यत्र व्यतिरे-
क्यनुमानप्रयोगः, तत्र तर्कमाह यदि हीति मिश्रसम्मतोऽत्र पाठो
द्रष्टव्यः । विवादाध्यासितं धर्मशास्त्रं यदि सर्वज्ञपूर्वकं न भवेदुक्तमहा-
जनपरिग्रहविषयो न स्यादाधुनिकव्याकरणवैद्यकादिवदित्यर्थः ।

(३) व्यामोहपूर्वकत्वं परिग्रहस्य निवर्तयितुमाह व्यामोहादिति ।
सकलतादृशपुरुषपरिग्रहो न व्यामोहपूर्वको भवितुमर्हतीत्यर्थः ।

(४) चरकसुश्रुतादिपरम्परागतत्वान्न शान्तिकादिभागस्तत्र प्र-
क्षिप्त इत्यर्थ इति मिश्राः ।

षाम्। अथ पूर्वाविरुद्धन्तत्तथापि पूर्वस्य पूर्ववदपरिग्रहे केनचित्परिग्रहे वा कथं तन्मूलस्यान्यस्य सर्वैः परिग्रहः। न च नासीदेव पूर्वं धर्मशास्त्रम्, मानान्तरस्यात्र वस्तुनि(१) कुण्ठतयाऽनुष्ठानाभावस्य प्रसङ्गात्। तथाच धर्माभावे तु तत्कार्यस्य सुखस्याप्यभावे रागानुत्पत्तौ लोकसमीहोच्छेदे लोकोच्छेदप्रसङ्गात्।

तस्मान्महाजनपरिगृहीतपूर्वपूर्वागमपूर्वकत्वाद्वा प्रवाहनित्यत्वाद्वा प्रलयविच्छेदे सर्गादौ सर्वानुविधेयपुरुषधौरेयपूर्वकत्वाद्वा महाजनपरिग्रहः, न तु पूर्वागमानपेक्षार्वाचीनपुरुषपशुपूर्वकत्वात्, पूर्वागमप्रामाण्याप्रा-

---

सम्भवत इत्याह (२)अथ पूर्वेति । पूर्वं धर्मशास्त्रं नास्तीत्यस्यासम्भवमाह न च नासीदिति ।

अतः पूर्वकोटिसद्भावे महाजनपरिगृहीतपूर्वपूर्वागमपूर्वकत्वाद्वा, पूर्वकोटिमनङ्गीकृत्य तस्यैव प्रवाहाविच्छेदाद्वा, पूर्वकोटिसद्भावेऽपि सर्गादौ सर्वानुविधेयपुरुषधौरेयपूर्वकत्वाद्वा महाजनपरिग्रहस्य सम्भव इत्याह (३)तस्मादिति। न पूर्वपूर्वागमपूर्वकत्वं नापि प्रवाहनित्यता नापि च पुरुषधौरेयपूर्वकता, पूर्वागमानपेक्षार्वाचीनपुरुषपूर्वकता

---

(१) *यागादीनामिष्टसाधनत्वे। तथा चेति। यागादौ प्रवृत्तिं विना* धर्माभावेन सुखं न स्यात्सुखाभावे तदभावाधीनः सुखान्तरे रागो न भवेत्तदभावे तदधीनप्रवृत्तिर्न स्यादिति निरीहं जगज्जायेत, तथाच पुत्राद्युत्पत्तिरपि न स्यादिति लोकोच्छेद इत्यर्थः।

(२) इदानीन्तनधर्मशास्त्रं पूर्वधर्मशास्त्राविरुद्धमेव यदि तदा तदपि धर्मशास्त्रं स्वमूलभूतपूर्वाविरुद्धमेवेति तत्पूर्वमपीति स्वीकर्तव्यमेवेति, यदि तादृशं न स्यात्तदा महाजनपरिग्रहविषयो न स्यादिति तर्कस्य तत्र तत्र प्रवृत्तेरित्याहाथेति मिश्राः।

(३) तत्तत्तीर्थिकमतानुसारेण विकल्पानुपसंहरति तस्मादिति मिश्राः।

माण्ययोरुभयथापि (१)तस्य विप्रलम्भत्वात्, प्रामाण्ये हि तद्विरुद्धाभिधानं विप्रलम्भ एव, अप्रामाण्येऽप्युपायमविदुषोऽननुष्ठाने तदाभासानुष्ठाने वा असर्वज्ञोपदेशो विप्रलम्भ एवेति ।

तत्र न प्रथमो, वेदपरम्परानुपलम्भात्, अर्वाचीनानां पाठपारतन्त्र्यमात्रेण प्रवाहोपपत्तौ तत्कल्प(२)नायां प्रमाणाभावात् । नापि च द्वितीयः,(३) वेदह्रास-

किन्न स्यादत आह (४)नत्विति । अप्रामाण्येऽपीति । पूर्वागमाप्रामाण्येऽपि हिताहितप्राप्तिपरिहारोपायं स्वयमसर्वज्ञत्वात्प्रमाणान्तराभावाच्चाविदुष उपायान्तरानुष्ठाने तदाभासानुष्ठाने वा विषयभूत उपदेशो विप्रलम्भ एवेत्यर्थः ।

सम्भावितेष्वपि च पक्षेषु प्रथमपक्षं दूषयति (५)तत्र न प्रथम इति । ननु वेदान्तरानुपलम्भेऽपि दृश्यमान एव वेदः स्वमूलतया वेदान्तराण्यपि कल्पयतीति चेत् तत्राह (६)अर्वाचीनानामिति । अयमर्थः—अर्वाचीनानामेकस्यैव वेदस्य पूर्वापरपारतन्त्र्येणापि प्रवाहोपपत्तौ

(१) अर्वाचीनपुरुषस्य तत्प्रणीतागमस्य वेत्यर्थः । प्रामाण्ये हीति । पूर्वागमं वेदं प्रमाण मनुषे तदा तद्विरुद्धार्थनरशिरःपात्रित्वाद्यभिधानं विप्रलम्भ एवेत्यर्थः ।

(२) मूलभूतवेदकल्पनायाम् ।

(३) प्रवाहनित्यतापक्षः । ह्रासेति । अध्ययनविच्छेदेन तन्त्रागविलोपदर्शनात् समस्तवेदस्यापि विलोपस्य साधनीयत्वादित्यर्थः ।

(४) संसारमोचकाद्यागमानभिप्रेत्याह नत्विति मिश्राः ।

(५) इदानीं स्वमतमात्रस्य प्रामाणिकत्वं सिसाधयिषुर्विकल्पितानि तीर्थिकमतानि दूषयीति तत्रेति मिश्राः । पूर्वपूर्वागमपरिगृहीतत्वमिदानीन्तनागमस्येति न सम्भवतीत्यर्थः, तत्र हेतुमाह वेदेति ।

(६) ननु गुरुशिष्यपरम्परया देहपरम्पराप्यनुभूयत एव कथमनुपलम्भ इत्यत आहार्वाचीनानामिति मिश्राः ।

दर्शनात्।(१)यत इदानीमश्रूयमाणस्यापि वेदस्यार्थोऽनुष्ठीयते निबद्ध्यते च मन्वादिभिः। पुरुषाणामपचीयमानशक्तित्वाच्च-यथा ह्यश्वमेधराजसूयाद्यनुष्ठानशक्तेरपचयस्तथाध्ययनशक्तेरपि। न च पूर्वमपि नानुष्ठिता एव राजसूयादयः, (२)तदर्थस्य वेदवाक्यस्य वैयर्थ्यप्रसङ्गात्। न च नित्यानुमेयवेदसम्भवः, वर्णानां नित्यत्वेऽप्यानुपूर्व्याः पाठायत्तत्वात्। न चानुपूर्वीशून्या वर्णाः पदं नाम, न चाकाङ्क्षाद्युपेतपदकदम्बकादन्यद्वाक्यं नामेति गुरुरपि लघुरेव(३)। तस्मात् पुरुषाणामनुष्ठानशक्तिवदध्ययनशक्तिरपि युगक्रमेणापचीयते, ततो वेदानां शाखोच्छेदः(४) तदर्थानामनुष्ठानोच्छेदः वर्णाश्रमाचारव्यवस्थाविप्लवश्चेति।

---

वेदान्यत्वमेव निषिध्यति कुतस्तन्मूलत्वेन वेदान्तरकल्पनेति। यत इदानीमिति। उत्सन्नशाखामूलमेवेष्टकाद्यनुष्ठानमिति भावः। शाखोत्सादे कारकहेतुमाह पुरुषाणामिति। ननु न पूर्वमनुष्ठिताश्वमेधादेः शक्त्यपचयादिदानीमननुष्ठानं किन्तु इदानीमिव सर्वदैवाननुष्ठानमिति चेत्तत्राह न च पूर्वमपीति। नोत्सन्नशाखामूलमिदमननुष्ठानं नित्यानुमेयमेव यथा गुरुस्तथामित्याशङ्क्याह (५)न च नित्येति। उक्तेऽर्थेऽभ्यागमानु-

---

(१) ननु यावान्वेदभाग इदानीमध्ययनविषयः पूर्वमपि तावानेवासीदिति कुतो ह्रास इत्यत आह यत इति।

(२) तदर्थस्येति।इदानीमधीयमानवेदराशेरश्वमेधराजसूयार्थकत्वोपलम्भेन तद्वैयर्थ्यप्रसङ्गादित्यर्थः।

(३) एवं यदाहाऽन्यो गुरुरपि लघुरेवेत्यर्थः।

(४) शाखोत्साद इति पाठान्तरम्।

(५) ननु होमेष्टकादिकार्यताबोधको वेदः कदापि न वेदपाठगोचरः किन्त्वनुमितादेव तस्मात्स्मृत्याचारादिति गुरुमतमाशङ्क्याह नचेति मिश्राः। अभ्युपेत्याह वर्णानामिति।

अत एव भगवतो व्यासस्य पुरुषशक्त्यपचयमात्रेण वचनानि 'स्वल्पायुषः स्वल्पसत्त्वा' इत्यादीनि, वेदोत्सादमवेक्ष्य

'प्रतिमन्वन्तरश्चैषा श्रुतिरन्या विधीयते'

इत्यादीनि, अनुष्ठानोत्सादमवेक्ष्य 'दानमेकं कलौ युगे' इत्यादीनि, आचारविप्लवमवेक्ष्य

'प्रजास्तत्र भविष्यन्ति शिश्नोदरपरायणाः'

इत्यादीनि। (१)तथा च श्रूयमाणा अपि वेदावयवा उत्सादमुपयास्यन्ति वेदत्वाद्वाक्यत्वाद्वा उत्सन्नशाखावदिति न्यायः। यथा चैतत् तथा पर्वता अपि चूर्णीभविष्यन्ति पार्थिवत्वात्(२) घटवत्, समुद्रा अपि शोषमुपयास्यन्ति जलाशयत्वात्(३) स्थलीपल्वलवत्, सूर्योऽपि निर्वास्यति (४)तेजस्त्वात् दीपकवत्, ब्रह्मापि (५)प्रेष्यति शरीरित्वात् अस्मदादिवत् इत्याद्यागमाविरोधेनानुमीयताम्।

"स्यादेतत्, भविष्यत्युच्छेदोऽनुमितः स तु भूतो-

मर्ति दर्शयति अत एवेति। उत्सन्नशाखावदिति। अत्र यो वेदो यदा वर्तते स तदुत्तरकाल उच्छिद्यमानो दृष्टः यथोच्छिन्नो वेद इत्युदाहर्तव्यमिति। आगमाविरोधेनेति। अनेनानुमानाभासत्वं निराकरोति, सृष्टिप्रलयप्रतिपादकागमानुसारित्वादेतेषां नानुमानाभासत्वमित्यर्थः।

स तु भूतोऽपीति। भूतस्याप्युच्छेदस्य(?) सर्गादौ सर्वानुवि-

(१) शाखाह्रासासङ्गौ किं सिद्ध्यतीत्यत आह तथाचेति।

(२) पृथिवीसमवेतद्रव्यत्वात्। (३) जलसमवेतद्रव्यत्वात्।

(४) तेजःसमवेतद्रव्यत्वात्। तेन न जातौ व्यभिचार इति सर्वत्र बोध्यम्।

(५) ज्ञानजनकमनःसंयोगनाशकज्ञानजनकमनःसंयोगनाश्यात्मनो विभागो भविष्यतीत्यर्थं इति मिश्राः।

ऽपीति कुत इति चेत्" । अत एव यत उत्सादानन्तरं पुनः सर्गेण भाव्यम् , अन्यथा(१) संसारिणां कृतहानप्रसङ्गः । नहि विश्वनिर्माणमन्तरेण भोगज्ञानयोः सम्भवः, न च तेन विना कर्मप्रवाहसंरोधः । ततो यथा भविष्यन् विश्वसर्ग उच्छेदपूर्वकस्तथाऽयमपीति । समयनियमस्तु प्राणिनां कर्मवैषम्येऽपि वर्षादिनियमवदुदयास्तमयनियमवद्वा द्रष्टव्यः कर्मणामेवैवंस्वभावत्वात् , एतदर्थमेव हि पुराणेषु सृष्टिप्रलययोर्दिवसरात्रिव्यवहारः ।

(२)"तथापि सर्वप्राणिनामयौगपद्ये किं प्रमाण-

धेयपुरुषपौरुषेयपूर्वकत्वं वेदानां सिद्ध्यतीत्यभिप्रायः । नन्वस्तु, भविष्यदुच्छेदस्य किं जातन्तत्राह ततो यथेति । नन्वेतेषामनियतविपाकसमयानामुपमर्द्योपमर्दकस्वभावानां कर्मणां कथं युगपद्वृत्तिनिरोधः, तदयौगपद्ये वा कथं तत्फलभोगार्थस्य जगतो विनाशयौगपद्यमत आह (३)समयनियमस्त्विति । यथा वर्षाणामृतूनामुदयास्तमयानाञ्च कर्मफलोपभोगार्थानां प्राणिनां कर्मवैषम्येऽपि सर्वप्राणिनः प्रति यौगपद्यं दृश्यते तथा सर्गप्रलययोरपीत्यर्थः । एतदर्थमेवेति । दिवसरात्रितुल्यन्यायतासिद्धमेवेत्यर्थः ।

तथापीति । चतुर्दशभुवनात्मकस्य जगतो जगतो विनाशेऽपी-

(१) अन्यथेति । वर्तमाने सर्गे यत्कर्म संसारिभिः कृतं तस्याग्रिमभङ्गं विना निःफलत्वं स्यात्तथा चायमपि सर्गः प्रलयपूर्वकः सर्गत्वाद्भाविसर्गवदिति अनादिरेवायं सर्गप्रलयप्रवाह इत्यर्थः ।

(२) ननु कतिपयप्राणिकर्मणामेव युगवद्वृत्तिविरोधबाधौ स्यातान्न सर्वेषामिति शङ्कते तथापीति । समाधत्ते द्विरिति । चतुर्दशभुवनरूपस्य प्रासादस्य कालक्रमाद्यत्र भङ्गस्तत्रास्मदादीनामवस्थानमसम्भावितमित्यर्थः ।

(३) नन्वेवं प्रमाणयतवर्षादिनियमः कथमत आह समयेति मिश्राः ।

मिति चेत्" । छिःसप्तभौमभुवनप्रासादभङ्गेऽपि निर्भया एव ग्रामकुटीहट्टविहारिणः शरीरिण इति महती प्रत्याशा। (१)तस्मात् सर्गादिमहाजनमन्वादिपरिग्रहपूर्वकोऽयमध्ययावदनुवर्तत इति नानवसरदोषावकाशोऽपीति युक्तमुत्पश्यामः। (२)"तदेवं, कथं मन्वादिभिः परिगृह्यन्तां वेदा इति चेत्" । आयुर्वेदवदाप्तोक्तत्वनिश्चयात्। "स(३) एव कुत इति चेत्" । (४)अध्यक्षतः तेषामप्यतीन्द्रियार्थदर्शित्वात्। "तादृशान्तेषा तत्परिग्रहेण किं प्रयोजनमिति चेत्"। अस्मद्व्यवहारेणास्मदपत्यानि व्युत्पाद्यन्ताम्, तथाच धर्मसम्प्रदायः प्रवर्ततामिति भूतदया, (५)स्वाधिकारसम्पादनञ्च । अथवा

---

त्यर्थः । तादृशां तेषामिति । स्वयमेवातीन्द्रियार्थदर्शिनां तेषां वेदपरिग्रहेण किं प्रयोजनमित्यर्थः। अस्मद्व्यवहारेणेति । अस्मत्परिग्रहात्मकेण व्यवहारेणास्मदपत्यानि स्वयमेवातीन्द्रियार्थं द्रष्टुमसमर्थानि व्युत्पाद्यन्तामस्माभिरपि अयं परिग्राह्य(६) इति बुद्ध्या.... ततश्च धर्मसम्प्रदायप्रवर्तनमिदं प्रयोजनमित्यर्थः। परमेश्वरनियोगादेव भूतदयामधिकृतानां मन्वादीनां तदधिकारसम्पादनमपि प्रयोजनमित्याह भूतदयेति ।

---

(१) ननु सर्गादौ महाजना एव न सन्ति, तथा च तदवसरे महाजनपरिग्रहः प्रवहत इत्याशङ्क्य निरस्यन्नेवोपसंहरति तस्मादिति । ईश्वरेण वेदवचनावसरे मन्वादयो मानसा महाजनाः सृष्टास्तैः परिग्रह्य सर्गादावस्येवेति नानवसरदोष इत्यर्थः।

(२) शङ्कते तदेवमिति । सन्तु तदानीं महाजनास्तैस्तत्परिग्रहः कथमित्याशङ्कार्थः। (३) स एव=आप्तोक्तत्वनिश्चय एव ।

(४) अध्यक्षत इति । वेदप्रयोक्तुः यथार्थवाक्यार्थज्ञानवत्त्वमाप्तत्वं मन्वादिभिः प्रत्यक्षेणैव गृह्यत इत्यर्थः। अत्र हेतुमाह तेषामिति ।

(५) स्वाधिकारेति । ईश्वरेणैवेदं प्रणीय तत्परिग्रहे मन्वादयोऽधिकारिणः कृता इत्यर्थः।

(६) अस्मदपरिग्रहेऽपत्यानि नानुतिष्ठेयुरतोऽस्माभिरपि परिग्राह्य इत्यर्थः। अत्र बुद्ध्येत्यनन्तरं कश्चित्पाठो भ्रष्टोऽस्मदीयादर्शपुस्तके ।

सर्गान्तरगृहीतव्याप्तिप्रादुर्भावे सुप्तप्रतिबुद्धवत् पितृत्वेनाविप्रलम्भकत्वमुच्चावचभूतनिर्माणदर्शनेन सार्वज्ञ्यमनुमायाप्तत्वनिश्चयस्तेषां तस्य। यद्वा भगवानेव सम्प्रदायप्रवर्तनव्यसनव्यग्रः कायसहस्राणि व्युत्पाद्यव्युत्पादकभावव्यवस्थितानि निर्माय तदातनं महाजनं परिग्राहितवान् नटनोपाध्यायवत् स्वयं नटित्वेति सर्वं सुस्थम्। पक्षत्रयेऽपि चात्र पुराणादिसङ्कथाप्यस्तीति।

---

(१)अथवेति। सुप्तप्रबुद्धानामिव मन्वादीनां पितृत्वस्याविप्रलम्भकत्वेन सर्गान्तरे गृहीतव्याप्तिस्मरणेन परमेश्वरस्य पितृत्वेनाविप्रलम्भकत्वमनुमायो(२)च्चावचभूतनिर्माणप्रदर्शनेन च सार्वज्ञ्यन्ततश्चाभ्रान्तिञ्चानुमायाप्तत्वनिश्चय इत्यर्थः। (३)यद्वा भगवानेवेति। परमेश्वर एव सम्प्रदायप्रवर्तनपरतया उपाध्यायशिष्यभावेन व्यवस्थितानि कायसहस्राणि निर्माय स्वयमेव वेदं परिग्राह्यानेन व्यापारेण तद्दर्शिनं महाजनं परिग्राहितवानित्यर्थः। वेदपरिग्रहोपायतयोक्तस्य पक्षत्रयस्यापि पुराणाद्यनुसा(४)रोऽस्तीत्याह पक्षत्रयेऽपीति।

वेदसम्प्रदायस्यानादित्वादद्यतनो वेदसम्प्रदायः पूर्वसर्गसम्प्रदायाद्यपेक्ष एवेति सेश्वरमीमांसकपक्षः(५) कपिलपक्षो वा स्यादिति शङ्कते

---

(१) तत्परिग्रहहेतुरिति शेषः।

(२) अत्र ईश्वरो न विप्रलम्भकः पितृत्वात्, यो यस्य पिता स तं न विप्रलभत इति प्राग्भवीयसंस्काराधीनव्याप्तिबलात्तदाप्तत्वानुमानं बोध्यम्।

(३) ननु वर्षशतान्ते संस्कारोद्बोध इत्यप्यसम्भावितमित्यनुशयेन कल्पान्तरमाह यद्वेति। (४) पुराणादिसंवादः।

(५) ईश्वरस्य वेदकर्तृत्वाभ्युपगमात्सेश्वरत्वं, पूर्वपूर्ववेदापेक्षणाच्च मीमांसकत्वमिति सेश्वरमीमांसापक्षः कपिलस्यैव धर्मविज्ञानैश्वर्यादिसम्पन्नस्य सुप्तप्रबुद्धवत् सर्गान्तरगृहीतवेदस्मृतिमतस्तत्प्रत्यभिज्ञानवतो वा वेदप्रद्योतकत्वमिति कपिलपक्षः प्रतिपाद्यानामिति भिदाः।

"स्यादेतत्, परमेश्वरप्रवर्तितोऽप्ययमेवं वेदसम्प्रदायः सर्गान्तरवेदापेक्ष एवेति सेश्वरमीमांसापक्षः कपिलपक्षो वा स्यादिति चेत्"। किमर्थं पुनरियमपेक्षा पूर्ववेदे जगन्नाथस्य। न तावद्वेदार्थोपलम्भाय, नित्यसर्वज्ञत्वात्। नापि वचनार्थम्, स्वभावतः सर्वकर्तृतया आदर्शानपेक्षणात्। नापि विरोधपरिहारार्थम्, प्रतिपाद्यानान्तदनुसन्धानविधुरत्वात्। (१)अवैधुर्ये वा कर्तुः सार्वज्ञ्यविज्ञानादेव समस्तविरोधविधूननात्।

(२)"तथापि पूर्वसर्गान्तरादेव व्यवहारोऽपि परमेश्वरस्य गोचर इति चेत्"। कः सन्देहः। यदि वैतदेव (३)वेदस्य प्रवाहानित्यत्वं, न केवलं तस्य किन्तु घटा-

---

स्यादेतदिति। सर्गान्तरेऽपि वेदसम्प्रदायस्वीकारेऽपि नाद्यतनस्तदपेक्ष इति परिहरति किमर्थमिति। पूर्ववेदविरोधेऽद्यतनस्य प्रतिपाद्यानां परिग्रहशैथिल्यं मा भूदिति विरोधपरिहारार्थं तदपेक्षेति चेत्तत्राह नापि विरोधेति। तदनुसन्धानेति। तद्विरोधानुसन्धानेन परिग्रहशैथिल्यं स्यादिति भावः। कर्तुः सार्वज्ञ्येति। विरोधानुसन्धानेऽपि कर्तुरुच्चावचभूतनिर्माणादीनां सार्वज्ञ्यं विदित्वा स्वकीयविरोधप्रतिभासं भ्रान्ततया निश्चिनियुरित्यर्थः।

---

(१) ननु मन्वादयोऽपि सर्वज्ञा एव कथं पूर्वसर्गवेदेन प्रतिसन्धास्यन्तीत्यत आहावैधुर्ये वेति। यदि सर्वज्ञास्तदा वेदप्रणेतुरेव सर्वज्ञत्वात्तत्प्रणीतत्वेनैवाविरोधज्ञानादित्यर्थः।

(२) नन्वीश्वरस्य पूर्वसर्गवेदज्ञानस्याभ्युपगमपक्ष एव सेश्वरमीमांसापक्ष इत्यत आह तथापीति।

(३) ईश्वरज्ञानविषयत्वमेव, ईश्वरस्य पूर्वसर्गघटादिरपि ज्ञानविषय इति घटप्रवाहोऽपि नित्यः स्यात्तथाचेदं न्यायदर्शनमेव, स एव वेदप्रवाह इदानीमपि अस्तीति मीमांसापक्ष एव, स च दूषितः इति सेश्वरमीमांसापक्षो नातिरिक्त इत्यर्थः।

देरपीति न्याय एव दर्शनम् , अन्यथा मीमांसैवेति क्व सेश्वरमीमांसेति। तस्मादुक्तरूपः परिग्रहो नान्यथा सम्भवतीति प्रतिबन्धसिद्धिः(१)। तथा चाप्तोक्तत्वात् प्रामाण्यमिति। कथम्पुनः(२) सुगताद्यागमेषु अनादरश्छान्दसानाम् ? "वेदविद्वेषिदर्शनान्तःपातिपुरुषप्रणीतत्वा"दिति मा शङ्किष्ठाः, जिनेन्द्रजगदिन्दुप्रणीतेष्वप्यादरात्। "तत्कस्य हेतोः ?" महाजनपरिगृहीतपूर्वा-

---

अन्यथेति। सृष्टिप्रलयानङ्गीकारेणापि अविच्छिन्नप्रवाहनित्यत्व इत्यर्थः। एवं महाजनपरिग्रहस्यासर्वज्ञपूर्वकत्वेऽसम्भवमुपसंहरति तस्मादिति। एवं सर्वज्ञपूर्वकत्वे सति वेदानामाप्तोक्तत्वेन प्रामाण्यमित्याह तथा चेति। एवं तावद्वेदान्तानामेव महाजनपरिग्रहः सृष्ट्यादौ तेषां परिग्रहप्रकारश्च दर्शितः, इदानीं सुगताद्यागमानां कैश्चित् परिग्रहे कारणं वक्तुं कैश्चिदपरिग्रहे तावत् कारणं पृच्छति कथम्पुनरिति। उत्तरवादी तु कारणं वक्तुकामः स्वाभिमतं कारणं माशङ्किष्ठा इति प्रश्नवादिनं प्रत्याह (३)वेदविद्वेषीति। कुत इत्याह (४)जिनेन्द्रेति। शास्त्रान्तरेषु जिनेन्द्रबुद्धिप्रभृतिप्रणीतेषु अपि छान्दसानामप्यादरदर्शनादिति। तत्रापि कुतो वेदविद्वेषिप्रणीतग्रन्थादरश्छान्दसानामिति पृच्छति तत्कस्येति। हेतुमाह (५)महाजनेति। महाजनपरिगृहीतपूर्वागमानुसारित्वं हेतुरित्यर्थः। एवमनभिमते कारणे निरस्ते पुनः प्रष्टा

---

(१) वेदाः आप्तोक्ता महाजनपरिगृहीतत्वादिति प्रतिबन्धसिद्धिरित्यर्थः। (२) सर्वज्ञप्रणीतत्वाविशेषादिति शेषः।

(३) स एवैकग्रन्थेनाह वेदेति मिश्राः।

(४) शङ्काभावबीजमाह जिनेन्द्रेति मिश्राः। जिनेन्द्रादीनां कथं तदादर इत्यर्थः।

(५) जिनेन्द्रादीनां तदादरे पूर्वपक्षी हेतुमाह महाजनेति मिश्राः।

गमाविरुद्धतया तदनुसारित्वात् । "कुतस्तर्हि" ? सिद्ध-प्रामाण्यवेदविरोधात् । "कथन्तर्हि कतिपयैरपि तत्प-रिग्रहः ?" (१)अलसभीरुभिर्दुःखमयजात्यकर्मविद्वेषात्, (२)उत्तरगर्तीयतन्तुवायवत्, नत्वेवं वेदे कर्मण्येव निर्भरत्वात् । त्रैवर्णिकबाह्यैःकृतैरनधिकारिभिरनन्यग-तिकत्वात्(३) कीर्तिप्रज्ञाकरवत्, नत्वेवं श्रुतौ, परैः पृच्छ्यमानानामप्यत्राप्रवेशात् । इतः पतितानामपि परै-रुपादानात्, भक्ष्यपेयाद्वैतरुचिभिश्च रागात् शरभादि-

कारणं पृच्छति । (४)कुतस्तर्हीति । (५)कारणमाह सिद्धेति । अतः परिग्रहापरिग्रहयोः सिद्धप्रामाण्यतज्जातीयपूर्वागमानुसारानुसारावेव हेतु इत्यनुसन्धातव्यमिति । इदानीं कैश्चित्परिग्रहे कारणं पृच्छति कथ-न्तर्हीति । यदि हि सिद्धप्रामाण्यवेदविरोधात्कैश्चिदपरिग्रहस्तर्हि तत एव हेतोः सर्वैरप्यपरिग्रहः प्राप्नोतीत्यर्थः । न धर्मार्थितया तैः परिग्रहः किन्तु दृष्टैरेवैभिर्हेतुभिरित्युत्तरयति अलसेति । आलस्येन स्वजात्या महतः कर्मणो भीतैस्तद्द्वेषादकर्मबहुलबुद्धाद्यागमानां परिग्रहः । अत्र सर्वेषु हेतुषु उत्तरगर्तीयेत्यादिस्वमतिसिद्धान्येव कानिचिदुदाहरणानि निर्दिश्यन्त इति बोद्धव्यमिति । वेदपरिग्रहे दृष्टहेत्वभावमाह नत्वेव-मिति । निर्भरत्वादादरादित्यर्थः । अद्वैतेति । अविभागरुचिभि-

(१) आयासेति क० मु० पु० पाठः ।

(२) अत्र 'उदुम्बरगर्तीयेति' मिश्रसम्मतः पाठो द्रष्टव्यः । उदुम्बर-गर्तो देशः । तन्तुवायः कुविन्दः, तेनालस्येन वैदिकं कर्म त्यक्त्वा संसार-मोचकागमोपदिष्टं कर्म परिगृहीतमित्यर्थः । कर्मण्येवेति । कष्टमयबहु-विधकर्मप्रतिपादकत्वादित्यर्थः ।

(३) वैदिककर्मानुष्ठानरूपगत्यभावात् ।

(४) इयं शङ्का मास्तु तथापि छान्दसानां कुतस्तत्र न समादर इत्यत आह कुत इति ।

(५) सिद्धान्तीति आदिः । नरशिरःपाण्यादिविधानाद्विरोध इत्यर्थः ।

वत्, न त्वेवमाम्नाये, तद्विभागव्यवस्थापनात्। कुतर्काभ्यासिभिश्च मोहात् काणाचार्यादिवत्, नत्वेवं ब्रह्मणि आबालभावं प्रवृत्तेः। अविवेकिभिश्च पाखण्डिसंसर्गात् शौण्डिकादिवत्, नत्वेवं प्रकृते (१)पित्रादिक्रमेण प्रवर्तनात्। योगाभ्यासाभिमानिभिरव्यग्रताभिसन्धेः सुभूत्या(२)दिवत्, न त्वेवं प्रस्तुते (३)प्रथमतः कर्मकाण्ड एव नियोगात्। अयोग्यैराजीवनात् सामान्यश्रमणकवत्, न त्वेवं प्रकृते (४)आगन्तुकानामनधिकारात्। कुहकवञ्चितैः समीचीनप्रत्ययात् (५)दीपङ्करसुषिरदर्शिबालिशवत् न त्वेवं प्रकृते तद्-

रित्यर्थः। ब्रह्मणि=वेदे, आबालभावं कुतर्काभ्यासात्प्रागेव बाल्यात्प्रभृति प्रवृत्तेरित्यर्थः। पाखण्डिसंसर्गात् नास्तिकसंसर्गादित्यर्थः। प्रथमतः कर्मकाण्ड इति। यद्यप्यत्रापि ज्ञानकाण्डे विनियोगस्तथापि प्रथमतः कर्मकाण्डे नियुक्तस्य पश्चादेव ज्ञानकाण्डे नियोगः अतः प्रथमं कर्मणि व्यग्रतया नान्यगताभिसन्धिना प्रवृत्तिसम्भव इति। अयोग्यैरिति। अयोग्यत्वेन प्रतिग्रहादिष्व(६)समर्थैर्जीविकोपायतया परिग्रहः, सप्तघटिकादिभोजनादिसिद्धेरित्यर्थः। कुहकेति। मायाजीविनो वञ्चकाः(७) कुहकाः। आदित्यस्तम्भनपाषाणस्फोटनादीनां बाह्यागमेषु प्रतिपादनात्तद्वञ्चितैः परिग्रह इति। प्रकृत इति। प्रकृते=वेदे, तद्भा-

(१) अप्रच्युताधिकारपरम्पराकत्वादित्यर्थः।

(२) सुभूतिर्बौद्धविशेषः। स्वभूत्यादिवदिति क० मु० पु० पाठः।

(३) प्रथमत इति। गार्हस्थ्याद्यनन्तयोगपरिव्युपासनस्योपदिष्टत्वात्तत्र च कष्टबहुकर्मोपदेशादित्यर्थः।

(४) आगन्तुकानां पाखण्डानामित्यर्थः।

(५) बहुसुषिरः पुरुषप्रमाणस्थूलकाष्ठखण्डस्तत्र ह्येक एव दीपः सुषिरनिःसरत्प्रभो दीपभ्रमं जनयति। बालिशो=मूर्खः।

(६) जीविकायामक्षमैः। सामान्यश्रमणकः बीजभूतः श्रमणकः, स हि बहुधनं दत्वा बौद्धैः स्वदर्शने प्रवर्तित इति मिश्राः।

(७) ऐन्द्रजालिकः कुहक इति मिश्राः।

भावात् , किन्तु(१) महाजनपरिग्रहाद्वक्तृप्रामाण्यमनुमाय आयुर्वेदे नैरुज्यकामवदिति ।

"(२)किम्पुनरमीषां मूलं, न ह्येतावन्तो ग्रन्थराशयः परविप्रलम्भार्थं प्रणीयन्ते, न च विश्वमेव विप्रलभ्यमिति चेत्" । भवतु किञ्चिन्मूलं किमनेन चिन्तितेन, अतिनिर्बन्धे तु क्षणिकनैरात्म्यादिप्रतिपादकानां कुतर्काभ्यासः(३), प्रतिपादितश्च तथा । शून्यसाकारादिप्रतिपादकानां तु दुरभ्यासः, योगशास्त्रेष्वभ्यस्यतः स्वरूपशून्यत्वमेव भाव्यमिति प्रतिपादनात् । चैत्यचीवरादिवात्=तादृशानामुपदेशानाममावादित्यर्थः(४) ।

न ह्येतावन्त इति । विप्रलम्भका बहुक्लेशसाध्येन व्यापारेण यं कञ्चिद्विप्रलभन्ते न त्वतिक्लेशसाध्यैरेतावद्भिर्ग्रन्थराशिभिः, नापि विश्वमिति । प्रतिपादितमिति । यथा तन्मूलानां तर्काभासत्वन्तथा प्रतिपादितमिति । शून्येति । बाह्यार्थशून्यत्वसाकारत्वप्रतिपादकानाम् यथा शास्त्रयोगाभासोन्मूलनमिति । कथमित्याह (५)योगेति । अयथाशास्त्रं योगमित्यस्य स्वरूपशून्यमिव वस्तु विभाव्यत इति योगशास्त्रेषु प्रतिपादनादित्यर्थः । चैत्येति । चैत्यवन्दनचीवरधारणादिप्रतिपादकानां प्रमाणमन्तरेणैव स्वसिद्धान्तस्थितिमभिसन्धाय दर्शनान्तरास्थितिविद्वेष एव

---

( १ ) किन्त्विति । यथाऽऽयुर्वेदे नैरुज्यकामः प्रवर्तते तथा योगादौ स्वर्गादिकामो न तु विप्रलम्भादित्यर्थः ।

( २ ) आक्षिपति किमिति । अमीषां=सुगताद्यागमानाम् । समाधत्ते भवत्विति । स्वागमप्रामाण्यसाधनेनैव कृतकृत्यत्वमिति भावः ।

( ३ ) तर्काभ्यास इति मिश्रसम्मतोऽत्र पाठः । कुतर्काभ्यास इत्यर्थः । ...रणात् । यदि स्थैर्यं स्यादर्थक्रियायां क्रमयौगपद्ये न स्याताम्, ...त्मा यदि स्यादात्मदर्शी तत्रानुरक्तो न मुच्येतेत्यादिकुतर्काभ्यास ...यर्थः ।　　( ४ ) मूलभूतस्य वञ्चकत्वाभावादिति मिश्राः ।

( ५ ) दुरभ्यासमेवाह योगेति । बहिर्व्यावृत्तमनःप्रणिधानबलात् ...न्यमेव जगदिति भावयता केनापि शून्यतैव सिद्धान्तितेत्यर्थः ।

प्रतिपादकानान्तु स्वस्थितिमभिसन्धाय दर्शनान्तरस्थितिद्वेषः, स्वस्थितौ प्रमाणमनपेक्ष्य परस्थितौ विगानात् । ब्रह्मचर्यादिप्रतिपादकानान्तु वेदा एव, न्यायाविरुद्धं परतन्त्रोक्तमप्या(१)नुकूल्यप्रसिद्धेर्गृह्यत एवेति विमर्शात् । (२)मन्त्रकोषप्रतिपादकानान्तु प्रणवबीजजातयः सर्वसाधारण्यः । (३)अद्धेयदेवतानामाङ्गस्त्वधिकः ।

---

मूलमित्यर्थः । कथमित्याह **स्वस्थिताविति** । स्वसिद्धान्तस्थितौ किञ्चित्प्रमाणमनभिधाय परसिद्धान्तेऽपि किञ्चिद्दूषणमनुक्त्वा केवलं तत्र विगानमेव कुर्वन्ति, अतो विगानमात्रकरणाद्विद्वेष एव केवलं मूलं चैत्यचीवरादिरूपस्वसिद्धान्तस्थितार्थप्रतिपादकानामित्यर्थः(४) । **ब्रह्मचर्येति** । ब्रह्मचर्याहिंसासत्यवचनादीनां कर्तव्यप्रतिपादकानां वेद एव मूलम् । **आनुकूल्येति** । **अयमर्थः**–परतन्त्रोक्तमित्येतावता द्वेषान्न त्यक्तव्यम् किन्तु न्यायाविरुद्धं चेत्तदपि परानुकूलप्रसिद्धेर्हेतोर्ग्राह्यमिति स्वतन्त्रेषु विमर्शनात् विमृश्य निश्चयादित्यर्थः । **मन्त्रेति** । मन्त्रलक्षणप्रतिपादकानामित्यर्थः । **अद्धेयेति** । लक्षणयुक्तेष्वपि तेषु मन्त्रेषु अद्धेयदेवतानामप्रक्षेप एवाभ्यधिक इति । **श्रद्धापरिगृहीतेति** ।

---

(१) परमतमप्रतिषिद्धमनुमतमिति ब्रह्मचर्यप्रतिपादकानां वेदा एव मूलमिति भावः ।

(२) मन्त्रेति । मन्त्रसमुदायः कोषः, यः प्रणवोऽस्माकं तज्जातीय एव यान्येव तत्र देवतानां बीजाक्षराणि तान्येव च तत्र प्रतिपादितानि तद्बलादेवाविरयस्तम्भनप्रतिमादिजल्पनशक्तिरपि बौद्धानामित्यर्थ इति मिश्राः । सर्वसाधारण्य इत्यत्र मूलमित्यनुषङ्गनीयम् ।

(३) तर्हि सूर्यादिदेवताऽस्वीकारस्तेषां कथमित्यत आह अद्धेयेति । तत्तद्देवतानामेव चैत्यादिनामान्तरधारणं परं विशेष इत्यर्थः । ननु य एवाकारो श्रद्धया ध्यायते सैव देवता न तु त्वदभ्युपगत इन्द्रादिरित्यत आह श्रद्धेति ।

(४) चैत्यो बौद्धदेवता, चीवरं परित्याज्यमित्यर्थः, चैत्यवन्दनाच्चीवरपरित्यागाच्च न किञ्चिदभ्युपेयमिति दिगम्बराणां स्वस्थि-

श्रद्धापरिगृहीतश्चाकारो देवतेति हस्तसमालोचः । सत्यतपःशालिनां वचनं मन्त्रः । विषयवत्यां चिन्तायां चित्तस्थैर्यं प्रयोजनम्, कथमन्यथा महर्षीणां शापानुग्रहक्षमता, कथं वा चतुर्भुजाष्टभुजादिव्यवस्थितिः दुरूहत्वादिति । एकविप्रलम्भार्थं वा केनचित्कियदेव प्रणीतम्, तेनानुष्ठितमपरैस्तदनुयायिभिर्गृहीतमनुष्ठितं व्याख्यातं ...

देवता श्रद्धापरिगृहीत आकारविशेष एव नान्या काचिदिति यस्त्वत्र कथ्यते तत्र हस्तसमारोप एव मूलं सोत्प्रेक्षैवेत्यर्थः । उक्तेष्वर्थेषु तदनुमतिं दर्शयति सत्येति । (१)सत्यवादिनां महर्षीणां वाच एव मन्त्राः, (अ)तल्लक्षणयुक्ताः सर्वेऽपि मन्त्रा इत्यभिप्रायः । विषयवत्यां भूमौ चित्तस्य स्थैर्यमेव देवतया प्रयोजनमतः श्रद्धापरिगृहीत एवाकारो विषयभावेनावस्थितः स्वस्मिंश्चित्तं स्थिरीकर्तुं समर्थः नान्यः, अतः स एव चित्तभूतो देवतेति । प्रथमे युक्तिमाह कथमन्यथेति । द्वितीयेऽप्याह कथं वेति । चतुर्भुजाष्टभुजाद्याकारेषु श्रद्धैव व्यवस्थापिकेति । एवन्तावद्बौद्धाद्यागमानामपि किञ्चित्किञ्चित् मूलमुपन्यस्तमिदानीन्तु परविप्रलम्भनार्थमेव तेषां प्रणयनमिति वक्तुं शक्यत इत्याह एकविप्रलम्भार्थं वेति । अनेन हि विश्वमेव विप्रलभ्यमिति एतत्परिहृतम् । कियदेवेत्यनेन तर्ह्येतावन्तो ग्रन्थराशय इत्येतत्परिहृतम् । एकविप्रलिप्सया प्रणयने कथं विश्वपरिग्रह इत्याह तेनेति । तेन विप्रलब्धेनानुष्ठितं अपरैस्तदनुयायिभिर्विप्रलब्धानुयायिभिर्गृहीतमवगतमनुष्ठितं व्याख्यातं तत एव विवर्धितमिति । अथवा तच्छायापन्नार्थान्तरविषयग्रन्थानिर्माणेन विवर्धितं

---

तिः स्वाभ्युपगमः, तत्रैव च प्रमाणपरिकल्पनयाऽन्यत्र विगानादित्यर्थ इति मिश्राः ।

(१) सत्येति । तद्वचनमेवेन्द्रो न तु वेदभागस्त्वदभ्युपगतः, अष्टभुजचतुर्भुजादिरपि त्वदभ्युपगता न देवता किन्त्वेतादृशविषयस्य चेच्चिन्तनं क्रियते तदा मनः स्थिरं भवतीत्येतावन्मात्रार्थं तदभिधानम् । अत्रैवोपपाद्ये उपपादकद्वयमाह कथमन्यथेति मिश्राः ।

ष्यातश्च विवर्द्धितश्चेति किमनुपपन्नम् । (१)तस्माद्विरुद्धागमव्युदासेन वेदा एवार्वाचीनपुरुषपूर्वकत्वशङ्काव्युदासेन परमेश्वरप्रणीतत्वादेव भूतार्थभागस्याप्रामाण्यशङ्काव्युदासेन प्रमाणमेवेति नियमः । "(२)कथञ्चरम इति चेत्"। महाजनपरिग्रहस्य तत्साध्यस्य वा सर्वज्ञपूर्वकत्वस्य पुरुषदोषाभावस्य वा प्रामाण्यहेतोर्भूतभाव्यार्थभागयोः साधारणत्वात् । "किं तस्य फलमिति चेत्" । स्वार्थप्रतिपादनम् । (३)"किं तेन प्रयोजनम्" । (४)यथायथमुपादानं हानं मोक्षश्च। तत्रानर्थकहेतूनां तत्त्वज्ञानाद्धानम्, अर्थहेतूनामुपादानम्, मोक्षश्चेति ।

चेति । तस्मादिति । विरुद्धागमानां विप्रलम्भार्थतया प्रणीतत्वेन तेषामप्रमाणत्वादित्यर्थः । पुरुषदोषेति । अत्रापि तत्साध्यस्येत्यनुषङ्गः । भूतार्थस्यभागस्य भव्यार्थवत्पुरुषप्रवर्तकत्वाभावेन तत्प्रवृत्तिफलतासम्भवात्पृच्छति (५)किं तस्येति ।

( १ ) वेदा एव सर्वज्ञप्रणीता एव प्रमाणमिति पूर्वप्रघट्टकसाधितं नियमत्रयहेतुत्रयोपरकमुपसंहरति तस्मादिति ।

( २ ) ननु प्रमाणमेवेत्ययोगव्यवच्छेदपरेणैवकारेण सकलवेदप्रामाण्यमभिधीयते, न चैतद्युक्तमनुवादानामप्रमाणत्वादित्याशङ्कते कथमिति ।

( ३ ) शङ्कते किन्तेनेति । निष्प्रयोजनकप्रतिपत्तिजनकस्य रथ्यावचनादेयत्वादिति भावः ।

( ४ ) समाधानपूर्वकं प्रयोजनमाह यथायथमिति । 'वायुर्वै क्षेपिष्ठा देवता' इत्यादीनामुपादानं फलम्, 'अन्धं तमः प्रविशन्ति ये के चात्महनो जनाः' इत्यादीनां हानं फलम्, उपनिषद्भागस्य च मोक्षः फलमित्यर्थः ।

( ५ ) भाव्यार्थस्य प्रवृत्तिनिवृत्ती न तु भूतार्थस्य तत्फलमित्याह किमिति मिश्राः ।

"(१)कः पुनरयं मोक्षः" । आत्यन्तिकी दुःखनिवृत्तिरात्मनः । "किमात्यन्तिकत्वम्" । तज्जातीयात्यन्ताभावविशिष्टत्वम्(२) । "कथम्" ? कारणमात्रोच्छेदात् । "अपुरुषार्थोऽयमिति चेत्" न, असत्यस्याकाम्यस्य दुरन्तस्य च तथाभावात्, न त्वयं तथा, सत्यो ह्ययं प्रमाणसिद्धत्वात्, सर्वैरभ्युपगमाच्च, काम्यश्च दुःखस्य स्वभावहेयत्वात् । (३)"सुखार्थन्तद्धानमिति चेत् । अतद्धेतुत्वात् । "व्याप्तेरिति चेत्" न, असिद्धेः, नहि दुःखाभावः सुखेन व्याप्यत इति । (४)"सुखं तावत्तेन व्या-

---

सुखस्यैव पुरुषार्थत्वं मन्वानः पृच्छति अपुरुषार्थ इति । प्रमाणसिद्धत्वादिति । 'अशरीरं वा व सन्तं' इत्यादिभिर्मोक्षदशायां दुःखाभावस्य प्रमाणसिद्धत्वादिति । सर्वैरिति । आनन्दात्मकत्ववादिभिरपि दुःखाभावरूपत्वाभ्युपगमाच्चेति । अनेन च प्रमाणासिद्धेर्हेढीभाव उक्त इति वेदितव्यम् । स्वभावहेयत्वादिति । ततश्च तदभावः कार्य एवेत्यभिप्रायः । अतद्धेतुत्वादिति । दुःखहानस्य सुखहेतुत्वाभावान्न सुखार्थं तद्धानमित्यर्थः । हेतुत्वाभावेऽपि दुःखहानस्य

---

(१) मोक्षस्यानुपादेयत्वान्न तस्य फलत्वमित्याशयेनाशङ्कते क इति । समाधत्ते आत्यन्तिकीति । लोष्टादीनां मुक्तित्वापत्तिवारणायात्मन इति ।

(२) दुःखत्वावच्छिन्नप्रतियोगिकदुःखात्यन्ताभाववत्त्वमेवात्यन्तिकत्वमित्यर्थः । कथं पुनर्न ल एव दोष इत्याह कथमिति । उत्तरमाह कारणेति । सर्वदुःखकारणोच्छेदो लोष्टादिनिष्ठेनापि दुःखात्यन्ताभावेन सहात्मन सम्बन्ध इत्यर्थः ।

(३) अन्येच्छाधीनेच्छाविषयत्वान्नासौ मुख्यः पुरुषार्थ इत्याशङ्कते सुखार्थमिति ।

(४) ननु यदा सुखं तदा दुःखाभावोऽस्त्येवेति व्याप्तिस्तावदस्तीति शङ्कते सुखं तावदिति ।

प्यत इति चेत्" । (१)एवं तर्हि सुखे सत्यवश्यं दुःखा-भावो भवेत् इति सुखप्रार्थनेऽपि विपरीतापत्तिः । (२)"नावेद्यत्वादसौ काम्यत इति चेत्"। न, दुःखार्तानां तदभाववेदनमभिसन्धायैव तज्जिहासादर्शनात्, कथ-मन्यथा देहमपि जह्युः । "अविवेकिनस्ते इति चेत्"। किमत्र विवेकेन, इष्यमाणतामात्रानुबन्धित्वात्पुरुषा-र्थस्य, गम्यागम्ययोः काम्यत्ववत् । बहुतरानर्थप्रसक्ति-शङ्कया तु शास्त्रमनुकूलयन्तस्ते(३)इतरेभ्यो भिद्यन्ते । अपि चैवं कण्टकादिजन्यदुःखनिवृत्तिरपि पुरुषार्थो न

---

सुखाविनाभावेन सुखार्थं तद्धानमित्याशङ्कते व्याप्तेरिति । कथमि-त्याह नहीति । सुषुप्त्यादौ दुःखाभावेऽपि सुखाभावान्न तेन तस्य व्याप्तिरित्यर्थः । सुखन्तावदिति । ततश्च दुःखाभावे एव सुखला-भात्तदर्थं तद्धानमिति भावः । परस्तु दुःखाभावे सुखावश्यम्भावात्सुखे सति दुःखाभावावश्यम्भावाद्दुःखाभावार्थैव सुखप्रार्थनेति विपरीतापत्ति-(४)रित्याह एवन्तर्हीति । कथं प्रतिसन्धानमत आह कथमन्य-थेति । न हि देहाभावे दुःखाभावस्य वेदनं सम्भवति देहस्यापि ज्ञान-हेतुत्वेन तदभावे तदभावादिति । अविवेकिन इति । किं दुःखाभा-ववेदनमप्रतिसन्धायैव शरीरत्यागं कुर्वन्ति विवेकिन अतस्ते न निदर्शन-मित्यभिप्रायः । ननूभयोरपि पुरुषार्थत्वे विवेकिभ्यः कोऽविवेकिनां विशे-षः, अत आह (५)बहुतरेति । उभयेषामपि पुरुषार्थप्रवृत्तित्वे समाने शा-

---

(१) एवमिति मिश्रमते नास्ति ।

(२) शङ्कते नावेद्यत्वादिति । दुःखाभावोऽपि नावेद्यः पुरुषार्थत-येष्यत इति भावः । समाधत्ते नेति । वेद्यत्वाभावेन न दुःखाभावस्य पुरुषार्थत्वं किन्तु स्वतन्त्रस्यैवेति समाधानार्थः ।

(३) ते=प्रेक्षावन्तः, इतरेभ्यः=अप्रेक्षाकारिभ्यः ।

(४) तथा च दुःखाभाव एव मुख्यः पुरुषार्थ इति समाधानार्थः ।

(५) तर्हि सर्वे तत्र प्रवर्तेरन्नित्यत आह बहुतरेति मिश्राः ।

स्यात्, अवेद्यत्वात् । "प्रथमं वेद्यते तावदसाविति चेत्" । तुल्यं मोक्षेऽपि । "नाध्यक्षेणेति चेत्" । तर्हि दुरितक्षय-कामस्य कर्मानुष्ठानानर्थक्यप्रसङ्गः, तदभावतत्फलाभा-वयो(१)रनध्यक्षत्वात् । "उपलब्धियोग्यतापन्नानिष्टनि-वृत्तिरूपत्वादयमदोष इति चेत्" । तुल्यम् । (२)"दुःख-वत्सुखस्याप्युच्छेदादकाम्योऽयमिति चेत्" । न, तृष्णया दोषतिरस्कारेण प्रवृत्तिवदलम्प्रत्ययेन गुणतिर-

---

स्कारानुसारानुसाराभ्यामेव विशेष इत्यर्थः । अवेद्यत्वादिति । न हि कण्टकादिजन्या दुःखनिवृत्तिः सर्वदा पुरुषेणानुसन्धीयत इति । प्रथम-मिति(३) । कण्टकाद्युद्धरणानन्तरं तज्जन्यदुःखाभावोऽनुसन्धीयत इत्यर्थः । तुल्यमिति । मोक्षार्थिभिरपि प्रथमं दुःखाभावो भविष्यत्तयापि वेद्यत एवेति भावः(४) । नाध्यक्षेणेति । शास्त्रत एव मोक्षे दुःखाभावोऽवगम्यते नाध्यक्षेणेति, दुरिततत्फलयोरतीन्द्रियत्वेन तदभा-वयोरप्यतीन्द्रियत्वादिति । उपलब्धीति । उपलब्धियोग्यतापन्नानिष्ट-निवृत्तिसजातीयदुरिततत्फलनि(वृत्त्यो)वृत्त्योर्विशेषतोऽनध्यक्षत्वं न दोष इति(५) । तुल्यमिति । मोक्षेऽप्युपलब्धियोग्यतापन्नदुःखनिवृत्तिसजा-तीयत्वात्तुल्यं समाधानमिति । तदेवं दुःखाभावस्य स्वतो नाकाम्यत्वं ना-प्यवेद्यत्वादित्युक्तम्, इदानीं प्रकारान्तरेणाशङ्कते दुःखवदिति । मधु-

---

(१) दुरिताभावतत्फलदुःखाभावयोः ।

(२) समव्ययफलत्वमाशङ्क्य निराकरोति दुःखवदिति । तृष्णयेति । तथाच यथा तृष्णया दोषं तिरस्कृत्यागम्यागमनादौ प्रवृत्तिस्तथा वि-षयजन्यगुणतिरस्कृत्यापि निवृत्तिरित्यर्थ इति मिश्राः ।

(३) उत्पन्नमात्र इत्यर्थ इति मिश्राः ।

(४) मोक्षोऽपि शब्दानुमानादिवेद्य इति वेद्यता तुल्येति मिश्राः ।

(५) या दुःखनिवृत्तिरुपलब्धियोग्या तत्रैव वेद्यत्वान्तर्भावेन पुरुषार्थत्वं नान्यत्रेत्यर्थ इति मिश्राः ।

स्काराान्निवृत्तेरपि दर्शनात्, मधुविषसम्पृक्तमन्नमत्रो· दाहरणम् ।

सन्ति च के(१)चिदलम्प्रत्ययवन्तः, । नच समत्वम्, दुःखस्यैव प्राचुर्यात्, दुःखे सुखहेत्वननुषङ्गेऽपि सुखे दुःखहेत्वनुषङ्गनियमात् । (२)तथाहि न्यायोपार्जित· ष्वेव विषयेषु कियती सुखखद्योतिका, कियन्ति चार्ज· नरक्षणादिभिर्दुःखदुर्दिनानि, अन्यायोपार्जितेषु यद्भ·

विषेति । यथा मधुविषसम्पृक्तमन्नमलम्प्रत्ययेन गुणतिरस्कारेण निवृ· त्तिविषयं तथा सुखदुःखसम्पृक्तः संसारोऽपीत्यर्थः ।

सन्ति केचिदिति । शास्त्रप्रामाण्यादिति शेषः । एवन्तावत्सु· खदुःखयोः सान्निध्ये सत्यलम्प्रत्ययेनोभयस्मान्निवृत्तिः सम्भवत्येवेत्युक्तम्, इदानीन्तु न तयोस्साम्यमतो बहुतरानर्थपरिहारायाल्पतरसुखत्यागेनालम्प्र· त्ययोऽपि सम्भवतीत्याह (३)न च समत्वमिति । कथम्प्राचुर्य· मित्याह दुःख इति । कियन्ती सुखेति । अल्पीयांसीत्यर्थः । कियन्ति चेति । भूयांसीत्यभिप्रायः । (४)अन्यायेति । अन्या· योपार्जितेषु रक्षणादिनिमित्तं यद्वर्तमानं दुःखं तत्तावत्तिष्ठतु, यत्त्वन्यायो· पार्जननिमित्तं कालान्तरे भविष्यति दुःखं तन्मनसापि चिन्तयितुं न श· क्यमिति । एवन्तावत्सुखे दुःखानुषङ्गो दर्शित इदानीं दुःखे सुखानुषङ्गा·

---

( १ ) केचन दुःखदुर्दिनभीरव इति व्याख्यानादत्र मिश्रमतेन 'केच· नालमिति' पाठो द्रष्टव्यः ।

( २ ) नहि दुःखे सुखहेत्वनुषङ्ग आवश्यकः नरकदुःखादौ सुखले· शाभावात्, सुखे दुःखहेत्वनुषङ्गध्रौव्यात्, एतदेवोपपादयति तथा· हीति । न्यायार्जितं धनमत्यन्तं सुखहेतुस्तत्रापि सुखमल्पांशस्तद्धन· परिपालनदुःखं तु महीय इत्यर्थः ।

( ३ ) प्रकारान्तरेण समव्ययफलत्वं निरस्यति नचेति ।

( ४ ) अन्यायार्जिते तु ऐहिकं पारलौकिकं चात्यन्तिकं दुःखमि· त्याहान्यायेति मिश्राः ।

वति तन्मनसोऽपि चिन्तयितुमशक्यम् । विद्वांकुर्वन्तु च सन्तो यदि कण्टकादिजन्येषु दुःखेषु लेशतोऽपि सुखानुषङ्गः । अस्ति च स्वर्गादिसुखेष्वपि बहुलो दुःखशल्यसम्भेदः । अत एव विविच्य भुज्यतां तुषतण्डुलवदित्यशक्यमिति ।(१)शक्यश्चायं निर्वर्त्यत्वात्, स्वन्तश्चापरावृत्तेः, अनर्थवासनाननुकूलाभिसन्धित्वाच्चेति ।

निस्यन्तु सुखं न सत्यम्,(२) योग्यानुपलम्भबाधितभावमाह(३) विद्वांकुर्वन्त्विति । पारलौकिकेऽपि सुखे दुःखानुषङ्गमाह अस्ति चेति । तत्रापि (४)क्षयातिशयादिनिबन्धनदुःखस्य विद्यमानत्वादिति भावः । अत एवेति । दुःखानुषङ्गस्यावर्जनीयत्वादेव विविच्यापि भोगो न शक्य इत्यर्थः(५) । निर्वर्त्यत्वादिति । एकविंशतिप्रभेदभिन्न(स्य)दुःखप्रध्वंसस्य तद्धेतुभूतमिथ्याज्ञानादिप्रध्वंसस्य च निर्वर्त्यत्वादिति । अनर्थेति । मिथ्याज्ञाननाशेनार्थवासनानुकूलाभिसन्धित्वाच्च, अतो नानर्थानुषङ्गेण दुरन्तमिति ।

पराभिमतस्यैव मोक्षस्यापुरुषार्थत्वमित्याह नित्यन्त्विति । आ-

---

(१) अशक्यत्वं निराकरोति शक्यश्चायमिति । दुःखात्यन्ताभावो विशिष्टदुःखसाधनध्वंससम्बन्धोत्पादनद्वारा साध्यस्तादृशध्वंसश्च स्वत एव साध्यः । यदि च दुःखप्रागभावो मोक्षस्तदा सोऽपि कारणविघटनद्वारा साध्य इत्यर्थः ।

(२) न परमार्थसत्, सुखत्वं न नित्यवृत्ति ईश्वरगुणावृत्त्यात्मगुणवृत्तिजातीयत्वाद्दुःखत्ववदित्यनुमानादित्यर्थः । योग्येति । सुखस्य च योग्यतैकनियतत्वात्, न ह्यसंविदिते सुखे दुःखे वा प्रमाणमस्तीत्यर्थः । (३) सामान्याभावमेव पुनराह विद्वांकुर्वन्त्विति मिश्राः ।

(४) स्वर्गादिसुखस्य कार्यत्वात् क्षयित्वनिबन्धनः, फलतारतम्यात्परसम्पदुत्कर्षो हीनसम्पदं जनं दुःखयतीति अतिशयनिबन्धनो दुःखानुषङ्ग इत्यर्थः ।

(५) परस्परानुषङ्गाद्दुःखं हीयतां सुखमुपादीयतामित्यपि न सम्भवतीति भावः ।

त्त्वात् । "श्रुतिस्तत्र प्रमाणमिति चेत्" । न, (१)योग्यानुपलब्धिबाधिते तदनवकाशात्, अवकाशे वा प्राबविप्लवमश्रुतेरपि तथाभावप्रसङ्गात् । नापि काम्यं सदातनत्वात्, नहि यद्यस्यास्ति स तत्कामयते । "भ्रान्तेरेव कण्ठचामीकरवदिति चेत्" । न, स्वसंवेद्ये तदभावात् ।

(२)नापि शक्यम्, नहि तन्निर्वर्त्यं नित्यत्वात् । (३)ना-

---

त्मनो नित्यानन्दस्वरूपत्वस्योपलब्धियोग्यत्वे सत्यनुपलम्भान्न नित्यस्य सुखस्य सत्यत्वमिति । 'विज्ञानमानन्दं ब्रह्मे'तिश्रुतिस्तत्र प्रमाणमिति शङ्कते (४)श्रुतेरिति । तथाभावेति । प्रामाण्यप्रसङ्गादिति । भ्रान्तेरेवेति । कण्ठगतचामीकरस्य विद्यमानत्वेऽपि केनचिन्निमित्तेन तदभावभ्रान्त्या काश्चिद्यथा तत्प्रार्थयते तथा नित्यानन्दरूपत्वेऽप्यात्मनस्तदभावभ्रान्त्या तस्यापि काम्यत्वमित्यर्थः । स्वसंवेद्य इति । स्वसंवेद्य एवानन्दरूप आत्मेत्येवं वदतां परेषां नित्यत्वसंवेदनेन तद्विपरीतासत्त्वारोपानुपपत्तेः, न हि तत्त्वे परिस्फुरति तद्विपरीतासत्त्वसमारोपसम्भव इति ।

नापि शक्यमिति । अत्र शक्यशब्देन निर्वर्त्यादिपक्षविशेष-

---

(१) संसारावस्थायां सत्यामनुपलम्भेन बोधकश्रुतेरनवकाशादित्याह योग्येति । ननु 'नित्यं विज्ञानमानन्दं ब्रह्मे'त्यादिश्रुत्यर्थः कथमुपपादनीय इत्यत आह सम्भवे चेति मिश्राः । एवं च तन्मतेनात्र मूले अवकाशे वेत्यत्र 'सम्भवे चे'ति पाठो द्रष्टव्यः ।

(२) ननु भवतु कथञ्चित् काम्यं तथापि प्रयत्नविषयत्वात्तत्पुरुषार्थं इत्याह नापीति । निर्वर्त्यं हि काम्यते वैषयिकसुखवत्, इदन्तु नित्यत्वान्न निर्वर्त्यमित्याह नहीति ।

(३) ननु नित्ये सुखयोगविधिना कथञ्चिद्विकार आधीयते येन मोक्षो विधास्यत इत्यत आह नापीति । विकारे हि तत्कृतः परिणामः स च तत्र नास्तीत्यर्थः ।

(४) श्रुतिसंवेद्यत्वस्यान्नासंविदितत्वमित्याह श्रुतिरिति मिश्राः ।

पि विकार्यम् , अपरिणामित्वात् । न संस्कार्यम् , अनाधेयातिशयत्वात् । न प्राप्यम् नित्यसम्बन्धत्वात् । (१)न ज्ञेयम्, ज्ञानस्यापि नित्यत्वात्, नित्यत्वे वा शरीरादिकारणापाये तदनुत्पत्तेः । उत्पत्तौ वा तेषामकारणत्वप्रसङ्गात् । तथाच सर्वः सर्वदर्शी स्यात्, आत्ममनःसंयोगादेः सर्वत्राविशेषात् । "ज्ञानज्ञेययोर्नित्यत्वेऽपि

साधारणं शक्तिकर्मत्वमुच्यत इति । अपरिणामित्वादिति । परिणाम एव विकार इत्यभिप्रायः । अनाधेयेति । निर्धर्मकत्वेनानाधेयातिशयत्वादिति । आनन्देनात्मनो ( नित्यं तदात्मनो ) नित्यं तादात्म्यसम्बन्धादिति(२) । ज्ञानस्यापि नित्यत्वादिति । आत्मनो ज्ञानात्मकत्वेन तन्नित्यतया ज्ञानस्यापि नित्यत्वादिति सदा सम्बन्धादिति । येषां ज्ञानमानन्दश्चात्मधर्मावेव मोक्षकालेऽप्यनुवर्तेते इति पक्षस्तन्मतेऽपि ज्ञानस्य नित्यत्वम् । तदुक्तम्—

निजं यत्त्वात्मचैतन्यमानन्दो वोच्यते च यः ।
यच्च नित्यविभुत्वादि तेनात्मा नैव मोक्ष्यते ॥ इति ।

तेषां चाकारणत्वे नियामकाभावात्सर्वः सर्वदर्शी स्यादित्याह (३)तथाचेति । मोक्षेऽप्यात्ममनःसंयोगस्य विद्यमानत्वेन तद्व्यभिचाराभावेन तत्कारणत्वात्तन्नियमेन ज्ञाननियम इति चेत्तत्राह आत्ममन इति । सर्वत्राविशेषात्=विषयविशेषनियमाभावादित्यर्थः । प्रति-

(१) ननु नित्यस्यापि वेदस्याध्ययनकर्मणो यथा प्राप्तिस्तद्वदेव तत्प्राप्यं कर्म स्यादित्यत आह न ज्ञेयमिति ।

(२) न प्राप्यमिति शेषः ।

(३) ननु तद्विजातीयज्ञानं न शरीरादितन्त्रं किन्तु विषयमात्रजन्यमत आह तथा चेति । इदानीमपि सन्ति रूपादयो विषया अस्ति चात्ममनोयोग इति सर्वदर्शितापत्तिरित्यर्थ इति मिश्राः । न च तदानीं सर्वदर्शिता नानिष्टेति वाच्यम् । शरीरादिविरहदशायां मया त्वया च तदनभ्युपगमादिति भावः ।

तत्सम्बन्धो जन्यते, (१)स च षट्पदार्थव्यतिरेकादुत्पन्नोऽपि निवर्तते प्रध्वंसवदिति चेत्"। भावाभावयोः प्रकारान्तराभावात्। तत्र स नाभावः, (२)प्रतियोग्यनुपपत्तेः, भावत्वे त्ववश्यमुत्पन्नो निवर्तेत, उपाध्यन्तराभावात्। "(३)अविद्याविध्वंसनमेव तत्प्राप्तिरिति चेत्"। अत्र न नो विवादः। (४)नास्ति तर्ह्येकविंशतिविधदुःखव्यतिरिक्ता अविद्या नाम, तद्विध्वंसनश्च पुरुषार्थ

---

योग्यनुपपत्तेरिति। अभावत्वे हि सप्रतियोगिकत्वं स्यात्, न च ज्ञानज्ञेयरूपसम्बन्धाभावस्य प्रतियोगिरूपो भावः कश्चिद्दृश्यत इति। उपाध्यन्तरेति। उत्पन्नस्य निवृत्तिरूपसम्बन्धे भावत्वमेवोपाधिः प्रयोजकः नान्यः प्रयोजकः कश्चित्। अथवा भावत्वे सत्युत्पद्यमानत्वस्य निवृत्तिसम्बन्धे नोपाध्यन्तरं विद्यते, निरुपाधिक एवायं सम्बन्ध इति। अविद्याविध्वंसनमिति। आत्मज्ञानस्य नित्यत्वेऽप्यात्मविषयाविद्याध्वंसनमेवात्मना तस्य प्राप्तिः ततश्चाभावरूपत्वात्प्राप्तेर्निवृत्तिरिति भावः। नास्ति तर्हीति। षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुःखं चेत्येकविंशतिप्रभेदभिन्नदुःखमेवाविद्या, दुःखोच्छेद एवाविद्याध्वंसनं, ततश्चाविद्याध्वंसनरूपज्ञानज्ञेयप्राप्तेरेव पुरुषार्थत्वं वदता दुःखोच्छेदस्यैव

---

(१) तत्सम्बन्धनिवृत्तिदशायां संसारितापत्तिमाशंक्याह स चेति।

(२) स आपाद्यो ज्ञानसुखसम्बन्धो भावोऽभावो वा? अन्त्ये आह प्रतियोगीति। निष्प्रतियोगिकोऽभावो नास्त्येवेत्यर्थः। आद्ये आह भावत्व इति। जन्यस्य विनाशित्वे भावत्वस्यैवोपाधित्वादिति भावः।

(३) ननु ध्वंस एव ज्ञाननित्यसुखयोः सम्बन्ध उक्तस्स च न विनाशीष्यत आह अविद्येति।

(४) एकविंशतिभेदभिन्नदुःखात्मिका चेदविद्या तद्विध्वंसस्य पुरुषार्थत्वमस्मदभिमतमेवेत्याह नहीति। नित्यज्ञाने सुखे च प्रमाणमेव नास्ति योग्यानुपलब्धिनिरस्तत्वादिति भाव इति मिश्राः। एवं चैतन्मतेनात्र मूले 'न ह्येकेति' पाठो बोध्यः।

इति प्रतिपादनादिति । दुरन्तश्च तत्, (१)तदभिसन्धेः सुखसंस्कारसहकारितया तदुद्भवे विशिष्टसुखाभिलाषिणो वैषयिकेऽपि प्रवृत्तिसम्भवात् । 'अलाभे मत्तकाशिन्या दृष्टा तिर्यक्षु कामिता' इत्युदाहरणात् ।

"स्यादेतत्, (२)आत्मा तु किं स्वप्रकाशसुखस्वभावोऽन्यथा वेति पृच्छामः"। आद्योऽसि चेत् उपनिषदं पृच्छ, मध्यस्थोऽसि चेत् अनुभवं पृच्छ, नैयायिकोऽसि चेत्

---

पुरुषार्थत्वप्रतिपादने नास्ति विवाद इति । तदभिसन्धेरिति । सुखमभिसन्दधान एव हि सुखे प्रवर्तते, सुखाभिसन्धिश्च प्राचीनसुखसंस्कारसहकारितया तत्संस्कारमुद्भावयति तदुद्भवे च विशिष्टसुखार्थिनस्तदभावावस्थायां संस्कारस्योत्कटतया बलादेव वैषयिके सुखे प्रवृत्तिप्रसङ्गान्न संसारोच्छेदस्सम्भवतीति । कथमेतदित्याह अलाभ इति । प्रकृतार्थस्य दृष्टान्ततया मोक्षयाथात्म्यविद्भिरुदाहरणादित्यर्थः ।

परसिद्धान्तवदात्मनः स्वप्रकाशसुखस्वभावत्वे मोक्षस्य यथोक्तप्रकारानुपपत्तेस्तत्स्वरूपप्रश्नमाशङ्कते स्यादेतदिति । प्रतिवक्ता तु प्रष्टुः स्वरूपं त्रेधा विकल्प्य प्रथमद्वितीयाभ्यां न वयं प्रष्टव्याः उपनिषदनुभवावेव प्रष्टव्यावित्याह आद्य इति । तत्त्वावगमे प्रमाणपारतन्त्र्यं विहाय श्रद्धामात्रपरतन्त्रोऽसि चेत् आपातत आत्मनः स्वप्रकाशसुखप्रतिपादिकामुपनिषदं पृच्छेति । अनुभवमिति । स्वानुभवमात्मविषयं पृच्छेति । न चानुभवेनात्मनः सुखज्ञानस्वभावत्वमनुभूयत इति भावः(३)।

---

(१) नित्यसुखकाम्यत्वम् । अत्र हेतुमाह तदभिसन्धेरिति । नित्यसुखाभिलाषिणो वैषयिकसुखेऽप्यभिलाषः स्यात्स च मुक्तिविरोधीत्यर्थः ।

(२) सुहृद्भावेन पृच्छति आत्मेति । प्रतिभाबलेन नित्यसुखस्वाभाव्ये त्वया निरस्तेऽपि न मम संशयोच्छेद इति भाव इति मिश्राः ।

(३) अहं सुखी अहं जाने इत्यनुभवेन तदुभयवत्ताप्रतीतेर्मध्यस्थस्य स्वपक्षपातोऽनुचित इत्यभिप्रायः ।

न वैषयिकसुखस्वभाव(१) इति निश्चिनुयाः । (२)तदतिरिक्ते तु सुखज्ञानव्यवहारबीजाभावात्तद्व्यवहाराभावः, अनुग्रहाभिष्वङ्गेन्द्रियप्रसादादिलक्षणकार्यं हि तद्व्यवहारबीजम्, अर्थप्रवणत्वस्मृतिसंस्कारादिकार्यञ्च हितव्यवहारबीजं लोके, तयोश्चाभाव आत्मनि । तस्मात्

तृतीये तु चार्थं प्रष्टव्य इत्यभिप्रेत्य तमेव प्रतिवक्ति न वैषयिकेति । अयमभिप्रायः—अहं सुखी अहं जानामीति वैषयिकसुखज्ञानयोरात्मधर्मतयाऽनुभवात्, अनुभवस्तावदात्मनस्तदात्मकत्वविरोधी, तथा वैषयिकसुखज्ञानयोरनित्यत्वान्नित्यस्यात्मनस्तदात्मकत्वे न्यायोऽपि विरोधी, अतो न वैषयिकसुखज्ञानस्वभाव आत्मेति निश्चिनुया इति । तदतिरिक्तसुखज्ञानस्वभावत्वमेव वेदान्तिभिरपीष्यत इति चेत्तत्राह तदतिरिक्त इति । कथमित्याह अनुग्रहेति । तयोश्चाभाव इति । ततश्चात्मा न सुखज्ञानस्वभाव इति दृश्यम् ।

एवं तावद्देहेन्द्रियादिव्यतिरिक्तं नित्यमात्मानं प्रसाध्येदृशस्य च मोक्षाख्यपरमपुरुषार्थसाधनत्वादुपादेयत्वम्, अस्य चोपादाने देहेन्द्रियाद्यनात्मविवेकज्ञानान्मोक्षसिद्धिरित्यत्रापि न्यायागमौ प्रमाणमित्युक्त्वा न्यायस्वरूपं चोपपाद्यागमस्वरूपं चोक्त्वा आगमप्रामाण्यं चाप्तोक्तत्वेन तदुक्तत्वं च विश्वकर्तुरनुमानसिद्धत्वादिति सर्वज्ञं तावत्प्रसाध्य तत्प्रणीतत्वं च वेदस्य महाजनपरिग्रहेण प्रसाध्य वेदेप्यात्मविषयमुख्यार्थवादभागस्यात्मज्ञानं फलं तस्य च मोक्ष इत्युक्त्वा प्रसङ्गान्मोक्षस्वरूपं तदुपयोगित्वेन चात्मस्वरूपं चोपवर्णितम्, इदानीं न्यायागमाभ्या-

( १ ) वैषयिकसुखज्ञानातिरिक्त इति पाठान्तरम् ।

( २ ) नन्वागमविरुद्धोऽयं न्यायः, आगमेन नित्यस्य ज्ञानस्य सुखस्य च प्रतिपादनादित्यत आह तदतिरिक्त इति । येनानुग्रहादिकार्यं जन्यते तदेव सुखम्, नहि त्वदभिमतेन सुखेन तज्जन्यते, यत्तज्ज्ञानमनुभवं स्मृतिसंस्कारजनकं तदेव ज्ञानव्यवहारविषय इत्यर्थः । तदभावश्चात्मनीति । मुक्तावस्थायामिति शेषः ।

श्रुतेः श्रुत्वात्मानं तदनु समनुक्रान्तवपुषो
विनिश्चित्य न्यायादथ विहितहेयव्यतिकरम् ।
उपासीत श्रद्धाशमदमविरामैकविभवो
भवोच्छित्त्यै चित्तप्रणिधिविहितैर्योगविधिभिः ॥

आत्मज्ञानस्य मोक्षोपायत्वसिद्धेर्मोक्षार्थी 'श्रोतव्यो मन्तव्यो निदि-ध्यासितव्य' इति विधित्रयविहितश्रवणादिभिरुपायैः क्रमेणात्मानमु-पासीतेत्युपसंहरन्नाह तस्मात् (१)श्रुतेरिति । समनुक्रान्तेति । अस्मिन्नात्मतत्त्वविवेकाख्ये प्रकरणे निरूपितशरीरा(२)न्न्यायात् श्रुत्यव-गतात्मानमसम्भावनाविपरीतसम्भावनाव्युदासेनैवमेवेति विनिश्चित्य, अनेन श्रुतेर्न्यायस्य च निश्चलनिश्चयजनकतया फलाधिक्यं दर्शितम् । एवं श्रवणमननाभ्यां हेयशरीरादिव्यतिरिक्तात्मलाभाद्विहितहेयव्यतिकरम्, श्रद्धा-शमदमविरामैकविभवः(३), शमो बाह्येन्द्रियनिग्रहः, दमो मनइन्द्रियनि-ग्रहः, विरामो विषयविरतिः, भवोच्छित्त्यै संसारमोक्षाय, चित्तप्रणिधिवि-हितैः(४) कृतैः, योगविधिभिः योगप्रकारैः(५) आत्मानमुपासीत, आत्म-विषयसाक्षात्कारसिद्ध्यर्थमात्मानं ध्यायेदित्यर्थः ।

(१) इदानीं दर्शनात्मकवाक्यतां दर्शयितुं प्रतिपत्तिचतुष्टयो-त्पादनक्रममुपपादयति श्रुतेरिति मिश्राः ।

(२) श्रुतेरुपनिषत्प्रपञ्चादात्मानं श्रुत्वा तदनुसारेण समनुक्रान्तं असम्भावनादिविप्लवराहित्येनोपक्रान्तं वपुर्यस्यैतादृशान्न्यायादित्या-दि व्याख्यानं स्वयं द्रष्टव्यम् ।

(३) एको विभवः सामग्री यस्य स इत्यनेनाधिकार्यात्मोपासकः सूचितः ।

(४) चित्तस्य मनसः प्रणिधिः प्रणिधानं निरिन्द्रियप्रदेशावधानं तदर्थं कृतैरित्यर्थः । एतेन श्रद्धाशमदमादीनां दौर्लभ्यं निरस्यत इति बोध्यम् ।

(५) स च योगशास्त्रे उपदिष्टो ग्राह्यः । अत एवोक्तं गौतमेनापि 'तं गुरुशिष्यसब्रह्मचारिभिः श्रेयोर्थिभिरनुसूयिभिरभ्युपेयादिति' (अ० ४ आ० २ सू० ४८)

**उपास्यमाने तस्मिन्प्रथमं बहिरर्था एव भासन्ते यानाश्रित्य कर्ममीमांसोपहारः चार्वाकसमुत्थानञ्च,(१) तत्प्रतिपादनार्थं 'पराञ्चि खानि' इत्यादि, (२)तद्धानार्थं**

अत्र च मोक्षनगरं प्रवेष्टुकामस्यात्मोपासितुर्बहून्यपद्वाराणि मोक्षानङ्गशास्त्रतदाभासालम्बनानि सम्भवन्ति, ततोपहितचेता अपद्वाराणि विहाय द्वारैरेव प्रविशेदिति वक्ष्यन् अपद्वाराणि तन्मूलानि च शास्त्रतदाभासान्याह (३)**उपास्यमान इति** । **बहिरर्था इति** । इन्द्रियाणां स्वरसतो बहिर्वृत्तित्वादिति भावः । **कर्ममीमांसोपसंहार इति** । उपसंहारशब्देन कर्मकर्तव्यतायां मीमांसायास्तात्पर्यप्रदर्शनद्वारेण प्रामाण्यं सूच्यते । **चार्वाकमतसमुत्थानमिति** । उत्थानशब्देन तस्योत्थानमेव न तूपसंहारः अतो न तत्र तात्पर्यं तन्मतप्रतिपत्तॄणां बृहस्पतिप्रभृतीनामतो न तस्य शास्त्रत्वं किन्तु तदाभासत्वमेवेति सूचितम् । एवमुत्तरग्रन्थेष्वपि उपसंहारोत्थानशब्दयोरर्थो वेदितव्यः । **तत्प्रतिपादनार्थमिति** । प्रथमं बहिरर्था एव प्रतिभासन्त इत्येतत्प्रतिपादनार्थमित्यर्थः । **पराञ्चि खानीति** । (४)"पराञ्चि खानि व्यतृणत्स्वयम्भूः तस्मात्पराङ् पश्यति नान्तरात्मनः । न कश्चिद्धीरः प्रत्यात्मानमैक्षदावृत्य चक्षुरमृतत्वमिच्छन्निति" ॥

(१) अतएव बहिरर्थमाश्रित्य बृहस्पतिनापि चार्वाकमतं समुत्थापितं 'नाप्रत्यक्षं प्रमाणमि'त्यादिनेति भावः ।

(२) नन्वेतावता चार्वाकमतमेवायातमत आह तद्धानार्थमिति ।

(३) ननु दर्शनानां वैमत्यात्कथमुपासना स्यादित्यत आह उपास्यमान इति । आत्मश्रवणार्थं जैमिनिमहर्षिणा श्रुतावनुस्रियमाण यां कर्मकाण्डप्रतिपादका एव श्रुतयः प्रथमं प्राप्ताः, 'ग्रामकामो यजेत, पशुकामश्चित्रया यजेत, इत्यादिदर्शनाद्ग्रामपश्वादयो बहिरर्थाः कथं स्युरित्याकाङ्क्षायां कर्ममीमांसा प्रणीता न तु ब्रह्मकाण्डेऽस्यौदास्यमित्याह बहिरर्था इति मिश्राः ।

(४) यस्मात्स्वयम्भूः खानि इन्द्रियाणि पराञ्चि परमाणुदर्शनफलान्यसृजत नात्मदर्शनफलानीति तस्मान्नात्मा द्रष्टव्य इत्यभिमान इत्यर्थः ।

'परं कर्मभ्य' इत्यादि ।

(१)अथार्थाकारः यमाश्रित्य त्रैदण्डिकमतोपसंहारः योगाचारसमुत्थानश्च, तत्प्रतिपादनार्थं (२)'आत्मैवेदं सर्वम्' इत्यादि, तद्धानार्थं (३)'अगन्धरसम्' इत्यादि । अथार्थाभावः, (४)यमाश्रित्य वेदान्तद्वारमात्रोपसंहारः, शून्यत्वनैरात्म्यसमुत्थानश्च, तत्प्रतिपादनार्थं 'असदे·

---

तद्धानार्थमिति । तादृगवस्थाहानार्थमित्यर्थः । (५)परं कर्मभ्योऽमृतत्वमानशुरिति । अर्थाकार इति । अर्थस्याकारमात्रमात्माध्यस्तं प्रकाशते न त्वाकार्यर्थोऽपीत्यर्थः । तत्प्रतिपादनार्थमिति । इदं सर्वमात्माध्यस्तं प्रतीयत इति प्रतिपादनार्थमित्यर्थः । अगन्धमरसमिति । अर्थाकारशून्यं परमार्थत इत्यर्थः । ततोऽर्थाभाव इति । स्वरूपत आकारतश्चार्थाभावः प्रतिभासत इत्यर्थः । वेदान्तद्वारेति । द्वारशब्देन नानार्थाभावे तात्पर्यम्, शास्त्रस्य द्वारमात्रं तत्, केवलात्मज्ञाने निष्प्रपञ्च आत्मा ध्येयो मुमुक्षुभिरित्यत्र तात्पर्यमिति सूचितम् । तत्प्रतिपादनार्थमसदेवेति । आत्मनोऽर्थान्तरस्य चाभा·

---

(१) पूर्वमात्मा न भासत इत्युक्तमिदानीमर्थाकारात्मा भासत इत्युच्यते अथेति । आत्माभास इत्यर्थः ।

(२) ननु व्यासबृहस्पत्योरत्र कीदृशो वेदभागो मूलमित्यत आहात्मैवेति । इदं नामरूपस्कन्धपञ्चात्मकं विश्वमात्मैव, तत्रात्मपदं ज्ञानपरतया गृहीतं योगाचारेण व्यामोहतः, आत्मैव तत्त्वतो ज्ञेय इत्युपचारमाश्रित्य त्रिदण्डिमतमुपसंहृतं व्यासेनेति मिश्राः ।

(३) अथ तर्हि विरुद्धं योगाचारमत आहागन्धमिति । पारमार्थिकगन्धाद्यन्योन्याभाववत्तयाऽऽत्मनश्च प्रतिपादनादिति मिश्राः ।

(४) भासते इति पूर्वेणानुषङ्गः । द्वारमात्रेति । अर्थाभावसिद्धेतद्द्वारिकाद्वैतसिद्धिरित्यर्थः । प्रपञ्चमिथ्यात्वदर्शनादेवात्मनोऽपि प्रपञ्चान्तर्गतत्वमभिमानिभिर्दिगम्बरादिभिः सिद्धान्तीकृतत्वादिति मिश्राः।

(५) 'कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः । अथापरे मनीषिणः' इति पूर्वं पादत्रयं पूरणीयम् । अत्र परं कर्मभ्य इत्यनेन कर्मपरता निरस्येति दर्शितम् ।

**वेदमग्र आसीत्' इत्यादि, तद्धानाय 'अन्धन्तमः प्रविशन्ति ये के चनात्महनो जना' इत्यादि। ततो विवेकः,(१) यमाश्रित्य सांख्यमतोपसंहारः, शक्तिसत्त्वसमुत्थानञ्च, तत्प्रतिपादनार्थञ्च 'प्रकृतेः परस्तात्' इत्यादि, तद्धानाय 'नान्यत् सत्' इत्यादि। ततः केवल आत्मा प्रकाशते यमाश्रित्याद्वैतमतोपसंहारः, तत्प्रतिपादनार्थं 'न पश्यतीत्याहुरेकीभवती'त्यादि, तद्धानार्थं 'नाद्वैतं नापि च द्वैतम्' इत्यादि। ततः समस्तसंस्काराभिभवात् केवलोऽपि न विकल्पते, यमाश्रित्य चरमवेदान्तोपसंहारः, तत्प्रतिपादनार्थं 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'इत्यादि।**

वप्रतिपादनार्थमसदेव सोम्यदमग्र आसीदित्यादिवाक्यमिति।

**ततो विवेक इति।** सर्वथात्मार्थान्तराभावावस्थाहानात् तदस्तित्वस्याविरोधेनात्मानात्मविवेकः प्रातिभासत इत्यर्थः। **नान्यत्सदिति।** आत्मव्यतिरिक्तं प्रकृत्याख्यं तत्त्वं न सत्त्व सत्तया आत्मवज्ज्ञातव्यम्, अतस्ततो विवेकोऽपि हातव्य इति। **ततः केवल आत्मेति।** ततो विवेकविशेषणमपि परिहाय केवल आत्मैव स्वरूपतः प्रकाशत इति। **न पश्यतीति।** आत्मव्यतिरिक्तं न पश्यति, द्रष्टव्यं हि सर्वमात्मनैकीभवति, आत्मैव दृश्यते इत्यर्थः। **नापि च द्वैतमिति।** अद्वितीयात्मप्रतिभासावस्थापि हेयेत्यभिप्रायः। **ततः समस्तेति।** द्वैताद्वैतविपरीतावस्थया द्वैताद्वैतसंस्काराभिभवाच्छब्दादिस्मरणाभावात्केवलोऽप्यात्मा न गृह्यते किन्तु निर्विकल्पकेनैव प्रतिभासते। **यमाश्रित्य चरमेति।** यां चरमावस्थामाश्रित्य चरमावस्थाप्रतिपादकत्वाच्चरमवेदान्तो-

---

(१) अर्थादात्मनः इत्यर्थः। सांख्येति। तद्विवेकार्थमेव कपिलस्य प्रकृतिपुरुषविभागार्थं सूत्राणीत्यर्थः।

सा चावस्था न हेया, मोक्षनगरगोपुरायमाणत्वात्, निर्वाणन्तु तस्य स्वयमेव । यामाश्रित्य न्यायमतोपसंहारः, तत्प्रतिपादनार्थं 'अथ यो निष्काम आत्मकाम आप्तकामः स ब्रह्मैव सन् ब्रह्माप्येति न तस्य प्राणा उत्क्रामन्ति तत्रैव समवलीयन्त' इत्यादीनि ।

तस्मादभ्यासकामोऽप्यपद्वाराणि विहाय पुरद्वारं प्रविशेत्, यतो मार्गविमार्गसम्मार्गसम्मोहमाशङ्कमानैरुच्यते 'लक्ष्येण धनुषा योग' इति ।

बहुतरपरतन्त्रप्रान्तरध्वान्तभीति-
स्तिमितपथिकरक्षासार्थवाहेन यत्नात् ।

---

पसंहारः-सर्वविकल्पशून्यमवाङ्मनसगोचरमात्मस्वरूपं ब्रह्मेति, आत्मविषयनिर्विकल्पकावस्था पूर्वावस्थावन्न हेया मोक्षप्रत्यासत्तेः ।

ननु न्यायदर्शने सकलवैशेषिकगुणोच्छेदो मोक्षः कथं तत्र निर्विकल्पकज्ञाननिवृत्तिस्तत्राह निर्वाणन्त्विति । यथा वह्नेर्दाह्यं विनाश्य स्वयमेव निर्वाणम्, एवं ज्ञानस्य स्वयमेव निर्वाणं नाश इति । यामिति । निःशेषविशेषगुणोच्छेदलक्षणामात्मनो यामवस्थामाश्रित्येति । अत एवमुपास्यमानैरीप्सितात्मप्राप्तिविरोधिन्योऽपि काश्चिदवस्थाः सम्भवन्ति, तस्मान्मोक्षनगरं प्रवेष्टुं योगाभ्यासकामो वा एता एवावस्था अपद्वाराणि विहाय द्वारैरेवाहेयतयोक्तावस्थाविशेषेण प्रविशेदित्याह तस्मादिति । कुत एतदित्याह यत इति । योगशास्त्रेऽपि योगाभ्यासिनो बहुभिर्विमार्गैः ससंसर्गान्मार्गसंमोहमाशङ्क्य तत्परिहाराय 'लक्ष्येण धनुषा योगो वारणस्यासम्मत' इत्यादिना प्रत्यूहनिरसनद्वारेणोपलक्षणभूतेन सर्वप्रकारा रक्षोक्तेत्यर्थः ।

इदानीं प्राधान्येन प्रकरणप्रतिपाद्यमर्थं गृह्णानः प्रकरणप्रणेतृत्वेन स्वनाम्ना स्वग्रन्थे स्वसमाननामधेयेन भास्करेण साधर्म्यप्रदर्शनेन निबध्नाति-बहुतरेति । प्रान्तरं=दूरशून्योऽध्वा, व्याहतिः=विरोधः ॥ १ ॥

इदमुदयनेन न्यायलोकागमानाम्
व्यतिहतिमवधूय व्यञ्जितं वर्त्म मुक्तेः ॥ १ ॥
नास्य श्लाघामकलितगुणः पोषयन्प्रीतये नः
कोऽन्यैश्चित्रस्तुतिशतविधौ शिल्पिनः स्यात् प्रकर्षः ।
निन्दामेव प्रथयतु जनः किन्तु दोषान्निरूप्य
प्रेक्ष्यांस्तस्य स्खलितवचनं प्रीणयेदेव भूयः ॥ २ ॥

इति श्रीमदुदयनाचार्यकृत आत्मतत्त्वविवेकः समाप्तः ॥

---

इदानीमस्य प्रकरणस्य गुणदोषपरीक्षार्थं गुणदोषमनाकलय्य श्लाघां कुर्वन्नो, दोषानुसन्धानेन निन्दामेव प्रथयन्नस्मत्प्रीणनाय भवतीत्याह—नास्येति । भूय इति । गुणज्ञानपूर्वकं श्लाघयतोऽप्यतिशयेनेत्यर्थः ॥२॥

इत्यत्रिगोत्रशेखर-श्रीनारायणाचार्यविरचितायामात्मतत्त्व-
व्याख्यायां चतुर्थः परिच्छेदः समाप्तः ॥

---

प्राप्तिस्थानम्—
चौखम्बा संस्कृत पुस्तकालय,
बनारस सिटी ।

श्रीगणेशाय नमः ।

## तार्किकशिरोमणिरघुनाथकृता

# आत्मतत्त्वविवेक ( बौद्धाधिकार ) दीधितिः ।

ॐ नमः सर्वभूतानि विष्टभ्य परितिष्ठते ।
अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥
निर्णीय सारं शास्त्राणां तार्किकाणां शिरोमणिः ।
आत्मतत्त्वविवेकस्य भावमुन्नाययत्ययम् ॥

शिष्टाचारपरम्परापरिप्राप्ताभिमतकर्मारम्भसमयकर्तव्यताकं कृतमिष्टदेवतानमस्कारं शिष्यान् शिक्षयितुमादौ निबध्नाति स्वाम्यमित्यादिना ( पृ० १ ) । ईशाय सार्वज्ञ्यादिशालिने, नमः । श्रूयते हि—

## अथ गदाधरभट्टाचार्यकृता

# बौद्धाधिकारविवृतिः ।

श्रीकृष्णचरणद्वन्द्वमाराध्य श्रीगदाधरः ।
बौद्धाधिकारविवृतिं व्याकरोति शिरोमणेः ॥

आत्मतत्त्वविवेकग्रन्थारम्भसमये ग्रन्थकृतामाचार्याणां परमेश्वरनमस्कारकरणस्य न्थादौ स्वाम्यमित्यादिना पदेन तदुपनिबन्धनस्य च सफलत्वं दर्शयति—ाष्टेति । शिष्टाचारपरम्परा अभ्रान्तानां पूर्वपूर्वपण्डितानां प्रयोज्यप्रयोजकभावानमङ्गलाचरणसमुदायः, तत्परिप्राप्ता तद्दर्शनानुमिता अभिमतकर्मारम्भसमयकर्तृता चिकीर्षितकर्मारम्भकालीनसकलकृतिविषयता यस्य तथाभूतमिति कर्तव्यकमित्यन्तार्थः । अनुमानञ्च—परमेश्वरनमस्कारादिकमभिमतकर्मारम्भसमयकर्त्ताकं तादृशसमये शिष्टैरनुष्ठीयमानत्वादित्येवंरूपमिष्टदेवतानमस्कारं स्वाराध्यदेवतायाः परमेश्वरस्य नमस्कारं शिष्यान् शिक्षयितुं सफलत्वेन ज्ञापयितुम्, दाचारदर्शनाच्छिष्याणां तत्सफलत्वज्ञानं तस्य तेषामपि तदाचरणं फलमाद्यावेग्रन्थादौ निबध्नाति पदेन दर्शयति । ईशत्वमत्र न जगज्जनकत्वं जगत्सु नेतत्वकथनेन पौनरुक्त्यापत्तेः, अतोऽन्यादृशमीशपदार्थमाह—सार्वज्ञ्येति ।

यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ।
तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते ॥

सर्वज्ञ इति सामान्यतः, सर्वविदिति च विशेषतः । ब्रह्म हिरण्यगर्भाख्यम् । स्मर्यते च—

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥इति।

---

आदिना तृप्त्यादिपरिग्रहः । सार्वज्ञ्यं विश्वविषयकनित्यज्ञानम्, ईश्वरस्य तद्वत्त्वे मानं श्रुतिं दर्शयति—**श्रूयत इति** । सर्वज्ञसर्वविच्छब्दयोर्वैयर्थ्यात् प्रसक्तं पौनरुक्त्यं परिहर्तुं ज्ञाविदर्थयोः सामान्यविशेषधर्मप्रकारकत्वमन्तर्भावयति **सर्वज्ञ इत्यादिना** । **इति** इत्यत्र, **सामान्यत** इत्यनन्तरं 'इति प्रवेश्यमिति पूरणीयम् । **विशेषत** इत्यत्रापि तदनुषङ्गः । उभयत्र प्रकारान्तात्तसिः । सामान्यधर्मः प्रमेयत्वादिः, विशेषधर्मो घटत्वपटत्वादिः । **यस्य ज्ञानमयं तप** इति श्रुतिप्रतीकस्य यद्विषयकं श्रवणाद्यात्मकं श्रवणाद्यात्मकज्ञानरूपं सकलपापक्षयरूपपुरुषार्थसाधनमित्यर्थः । ब्रह्मपदस्येश्वरपरत्वे ईश्वरस्य जन्मासम्भवादसङ्गतिरिति **ब्रह्मेति** व्याचष्टे **हिरण्यगर्भाख्यमिति** । 'ब्रह्मा विप्रः प्रजापतिरि'ति कोशाद्धिरण्यगर्भवाचकब्रह्मन्शब्दस्य नपुंसकलिङ्गनिर्देशासङ्गतिरिति हिरण्यगर्भ इत्यनुक्त्वा हिरण्यगर्भाख्यमित्युक्तम्, तथा च हिरण्यगर्भाख्यत्वेन हिरण्यगर्भे ब्रह्मपदस्य लक्षणोपगमान्न मुख्यतेति नपुंसकतोपपत्तिः । यद्यपि लक्षणायामपि शब्दानां न स्वलिङ्गपरित्यागस्तथापि यादृशमुख्यार्थसम्बन्धेन यत्पदस्य लक्षणा तादृशार्थपरतत्पदं यल्लिङ्गं लाक्षणिकमपि तत्तल्लिङ्गमेवेति नियमः । अत्र च मुख्यहिरण्यगर्भरूपार्थस्य तादात्म्यसम्बन्धेन न लक्षणा, अपि तु ईश्वररूपब्रह्मशब्दार्थस्य सम्बन्धान्तरेणैवेति ईश्वरे च ब्रह्मशब्दस्य नपुंसकतया हिरण्यनामकत्वेन हिरण्यगर्भे तच्छब्दस्य लाक्षणिकस्य नपुंसकत्वेवेति भावः । '**अन्नं व्रीहियवादिकमि**'ति भाष्यकृता व्याख्यातम् । **सार्वज्ञ्यादी**त्यादिपदग्राह्यतृप्त्यादिधर्मसाधकस्मृतिमपि दर्शयति **स्मर्यते** (१)**हीति** । **तृप्तिः** पूर्णता स्वीयसुखगोचरेच्छावान् यस्तदन्यत्वमिति यावत् । ईश्वरस्यास्मदादिसुखगोचरेच्छावत्त्वात् स्वकीयत्वमन्यत्वप्रतियोगिकोटिप्रविष्टसुखविशेषणम् । **अनादिबोधः** अजन्यज्ञानम् । सर्वविषयकज्ञानानादिज्ञानयोरैक्येऽपि तदुपाधिभेदेनाङ्गानां षट्त्वम् । **स्वतन्त्रता** अपराधीनता परप्रयुक्त दुःखवदन्यत्वम् । **अलुप्तशक्तिः** अविनाशिनी कार्यानुकूला कृतिरूपा कर्तृशक्तिः । **अनन्तशक्तिः** अनन्तकार्यकारणतावच्छेदकरूपम् । **अङ्गानि** कार्यजननोपयोगीनि, ईश्वरव्यवहारविषयत्वोपयोगीनीति वा । एवंसति सार्वज्ञ्यादेः ईश्वरपदार्थतावच्छेदकत्वसाधकतयैव तत्स्मृतिवाक्योपन्यासः ।

---

(१) एतन्मतेन शिरोमणावत्र 'स्मर्यते ही'ति पाठो द्रष्टव्यः ।

जगतां निखिलशरीरिणां, पित्रे जनकाय । तथा च स्मर्यते 'पिताह- मस्य जगत' इति । पूर्वगुरुभ्यः कपिलकमलासनादिभ्य उत्तमाय, तेषामपि स एव जनक इति भावः । तस्मै कस्मै इत्यपेक्षायामाह स्वाम्यं यस्ये- त्यादि । आदौ सर्गादौ, जनितेषु उत्पादितेषु, जगत्सु यस्य निजं क्रयाद्यन-

व्याख्याते सार्वज्ञ्यादिरूपे ईशत्वे जगतामिति षष्ठ्यन्तार्थजगन्निरूपितत्वान्वय- स्यायोग्यतया ससम्बन्धिकपितृत्वे तदन्वयं दर्शयति जगतामिति । निखिलान्तर्ग- तानामप्राणिनां पितृत्वानिरूपकतया निखिलार्थकजगत्पदार्थं सङ्कोचयन् व्याचष्टे (१)निखिलसंसारिणामिति । संसारित्वं शरीरित्वं, शरीरत्वञ्च भोगावच्छेदकत्वं न तु चेष्टावत्त्वम् , अत ईश्वरपरिगृहीतरामकृष्णादिशरीरव्युदासः । मिथ्याज्ञानजन्य- वासनाया अदृष्टस्य वा न संसारपदेन विवक्षासम्भवः, अग्रे वाच्यस्य 'विशेषणस्य शरीरस्य तथात्वादि'त्यादेर्विरोधात् । ईश्वरस्य बीजसेकादिद्वारा अजनकत्वेऽपि ब्रह्मादीनां मरीच्यादिपितृत्वसम्भवात् । ईशाय पित्रे नम इत्यत्र उपमानोपमेय- भावासम्भवात् 'तद्रूपकमभेदो य उपमानोपमेययोरि'त्येतल्लक्षणकरूपकालङ्कारास- म्भवेन तदविवक्षामाविष्कर्त्तुं पर्यायशब्देन पितृपदं व्याचष्टे—जनकायेति । ईश्व- रस्य पितृत्वे आगमोऽपि मानमित्याह—स्मर्यते हीति(२) । एवञ्चानिषेक्तुरपी- श्वरस्य निषेक्तुरिव शरीरे प्रभुत्वेन पालनादिरूपोपकारकर्तृत्वेन च सर्वजनपरमारा- ध्यतेति तन्नमस्कारः परमप्रयोजनसाधनमिति प्रदर्शयितुं पद्ये जगत्स्वाम्याद्य- भिधानं न तु रूपकोपयुक्तपितृसाधर्म्यलाभायेत्यवधेयम् । ईश्वरस्य कपिलकम- लासनादिभ्य उत्तमत्वं तदाराध्यत्वस्वरूपं जनकत्वेनैवेत्याह—तेषामपीति । इत्यपेक्षायामित्याकाङ्क्षायाम् । यस्य स्वाम्यमित्यस्य यस्यैव स्वाम्यमि- त्यवधारणपरतया इदानीमन्येषामपि स्वाम्यसत्त्वादवधारणं सङ्गमयितुमाह— आदाविति । स्वाम्यनिरूपकपदस्थजनितत्वरूपविशेषणं न स्वाम्यहेतुतालाभाय, निजं पटं पश्यति चैत्र इत्यादौ निजशब्दस्य चैत्रादिसम्बन्धित्वार्थकत्ववदत्र तत्पद- येश्वरसम्बन्धिपरता न सम्भवति, यस्येत्यनेनैव तल्लाभात् अतस्तत्र क्रयादिरूपोपाय- निरपेक्षत्वरूपस्वाभाविकत्वार्थमाह—क्रयादीति । जननेनैव पितुः स्वाम्यसम्भवेन स्वाम्ये क्रयाद्यनपेक्षत्वनिर्वाहात् एतत्कथनञ्च—क्रयाद्युपायं विना कथं स्वाम्यमि- त्याकाङ्क्षानिवृत्तये, तन्निर्वाहाकाङ्क्षायां निर्वाहकजनितत्वरूपविशेषणाभिधानं सर्गादौ जातानामाद्यशरीरव्यक्तीनामवयवोत्पत्त्यादिना परमेश्वरस्य प्रयोज्यप्रयोजकशरीरपरि- ग्रहणमुत्पादनादिसमयेऽसत्त्वेऽवच्छेदकतासम्बन्धेनापि व्युत्पत्त्यसम्भवात् जगत्प- दस्य निखिलशरीरपरता न सम्भवति इति शरीरिपरत्वेन व्याख्यातम् । शरीरिणा-

(१) अत्रैतन्मतेन दीधितौ 'निखिलसंसारिणामि'ति पाठः ।

(२) अत्रैतन्मतेन दीधितौ 'तथाच स्मर्यते हीति' पाठः ।

पेतं स्वाम्यम्, आत्मनामुत्पत्त्यभावेऽपि विशेषणस्य शरीरस्य तथा-त्वाद्विशिष्टस्य तथा व्यपदेशः, अपूर्वशरीरादिसम्बन्धरूपं तु जन्म न मुख्यो जन्यर्थः, न वा तावतापि स्वाम्यनिर्वाहः। पालनं रक्षणादि। व्युत्पत्तिः शब्दसङ्केतग्रहः। हितस्य विधिः कर्तव्यता, अहितस्य निषेधोऽकर्तव्यत्वम्, तयोः सम्भावनं ज्ञापनम्। उक्तिः श्रुत्यादिरूपा, भूता यथार्था, सहजा

---

मात्मनामुत्पादितविशेषणान्वये योग्यत्वमाशङ्क्याह—आत्मन(१) इति। तथात्वादुत्पत्तिमत्त्वात्। विशिष्टस्य विशिष्टात्मस्वरूपजगत्पदार्थस्य। तथा व्यपदेश इति। जनितत्वव्यवहार इत्यर्थः। विशेषणोत्पत्तिक्षणस्य विशेष्याधिकरणसमयध्वंसाधिकरणत्वेऽपि विशिष्टाधिकरणस्य ध्वंसानधिकरणत्वरूपत्वाद्यक्षतेः तत्सम्बन्धरूपजनेरपि विशिष्टनिर्वाह इति भावः। जगत्स्वाम्यमित्यत्रापि विशेषणशरीरनिरूपितत्वस्यैव सप्तम्या विवक्षणादात्मनि स्वाम्यसत्त्वेऽपि नानिर्वाह इत्यप्यूह्यम्।

केचित्तु—जनितेष्वित्यत्र जन्यर्थो नोत्पत्तिः, अपि तु अपूर्वशरीरपरिग्रहः। अपूर्वत्वमाद्यत्वं युवशरीरपरिग्रहदशायामिदानीं जात इत्याद्यव्यवहारादपूर्वत्वं शरीरविशेषणम्। तदर्थश्च—स्वपूर्वकालीनशरीरावृत्तिजातिमत्त्वं, तत्परिग्रहः तच्छरीरसम्बन्धाधिकरणसमयानुत्तरक्षणवृत्तित्वविशिष्टस्य तच्छरीरसम्बन्ध—इति समादधति, तन्मतं दूषयति अपूर्वेति। न जन्यर्थ इति, किन्तु घटादावपि जातव्यवहारालाघवाच्च आद्यक्षणसम्बन्ध एव तथेति शेषः। तथाच दर्शितरीत्यैव जनेर्मुख्यार्थपरत्वसम्भवे किन्तत्परित्यागेनेति भावः। ननूक्तार्थेऽपि जनेर्भूरिप्रयोगात् न तत्र स्वारसिकी लक्षणा, अपि तु निरूढलक्षणैव, तादृशी च लक्षणा शक्तितुल्यैति तदवलम्बने कर्तुर्नाशक्तिप्रकाश इत्यतो दोषान्तरमाह नवेति। आत्मनि तादृशजननं न स्वाम्यनिर्वाहकं यतः पुत्रशरीर एव पितुः स्वाम्यं न तदात्मन्युत्पादनारूपं जननमेव, तथाचोक्तमुख्यजननस्य विवक्षणे जनितत्वविशेषणस्य स्वाम्यहेतुत्वेन उपादानं विरुध्येत, शरीरस्य स्वाम्यादेव मदुक्तदिशा शरीरिणः स्वाम्यप्रदेशः समर्थनीय इत्युत्पादनारूपजननविवक्षैव साधीयसीति भावः। रक्षणमिति। अनिष्टनिवर्तनमित्यर्थः। आकाङ्क्षाविशेषरूपव्युत्पत्तिः प्रकृते न सङ्गच्छत इति व्युत्पत्तिपदं व्याचष्टे शब्दशक्तिग्रह(२)इति। ईश्वरस्य सर्गादौ प्रयोज्यप्रयोजकशरीरपरिग्रहेण गामानयेत्यादिवाक्याधीनगवानयनादिव्यवहारज्ञापनद्वारा शक्तिग्राहकता बोध्या। ज्ञापनमिति। श्रुतिरूपविधिनिषेधवाक्यं प्रयुज्य इत्यादिः। यथार्थेति। अबाधितार्था इत्यर्थः। भूतपदस्य सत्यार्थकताया कोषे दर्शनात्तदनुसारेण व्याख्येयम्। याथार्थ्यप्रयोजकतयाऽभिहितसहजत्वविशेषणस्य सहोत्पन्नत्वरूपत्वाऽसम्भवात् सहजेति व्याचष्टे

---

(१) अत्र दीधित्यनुसारेणात्मनामिति प्रतीकं युक्तम्।

(२) एतन्मतेन दीधितौ 'शब्दशक्तिग्रह' इति पाठो द्रष्टव्यः।

स्वाभाविकी, रागद्वेषभ्रमादिविरहेण सर्वस्या एव तदुक्तेर्यथार्थत्वात्, ताद्रूप्येणैव तस्य सिद्धेः। कृपा परहितेच्छा। उपधिः स्वहितानुसन्धानं तच्छून्या, नित्यत्वात्। निरवधिरिति पाठे अवधिः सीमा तच्छून्या, नित्यत्वेन सर्वपुरुषीयसकलहितविषयकत्वात्। तदर्थात्मकः तत् जन्माद्युक्तिपर्यन्तम् अर्थः प्रयोजनं यस्य स एव आत्मा स्वरूपं यस्य स तथा ॥ १ ॥

प्रेक्षावतां प्रवृत्तये प्रयोजनाभिधेयसम्बन्धावाह—इहेत्यादिना ( पृ० ३ पं० १ ) विविच्यत इत्यन्तेन। तत्र प्रयोजनमपवर्गः अभिधेयमात्मतत्त्वम्, सम्बन्धो ग्रन्थात्मतत्त्वज्ञानापवर्गाणां हेतुहेतुमद्भावो ग्रन्थात्मतत्त्वयोर्ज्ञा-

---

स्वाभाविकीति । रागद्वेषादिमूलकप्रतारणादिदोषाजन्येत्यर्थः । रागद्वेषेति । ईश्वरस्येत्यादिः । तदुक्तेः ईश्वरोक्तश्रुत्यादेः । यथार्थत्वादिति । स्वभाविकत्वस्य याथार्थ्यप्रयोजकत्वमिति शेषः । ईश्वरस्य रागद्वेषादिरहितत्वे किं मानमित्याकाङ्क्षायामाह ताद्रूप्येणेति । निर्दोषत्वेनेत्यर्थः । तस्येश्वरस्य । सिद्धेरिति । वेदस्याप्तोक्तत्वग्राहकानुमानेनेत्यादिः । निरुपाधिदुःखप्रहाणेच्छारूपप्रसिद्धकृपापदार्थस्य निरुपाधित्वघटिततया निरुपधिरित्यस्य पौनरुक्त्याशङ्कया कृपापदार्थे निरुपधित्वानन्तर्भावं प्रकाशयितुं तत्पदं व्याचष्टे परहितेति । हितपदेन दुःखनिवृत्तिः सुखं चाभिहितं, कृपाशीलस्य परदुःख इव परसुखाभावेऽपि दुःखप्रयोजकत्वेन द्वेषोत्पत्त्या परदुःखप्रहाणं परसुखं चेष्टम्, इत्यर्थकहितपदस्य तदुभयवाचकता । उपधिपदस्य व्याजार्थकता प्रकृते घटते इति स्वहितानुसन्धानरूपप्रयोजकार्थतामाह स्वहितेति । तच्छून्या स्वहितकारणरहिता, स्वतोऽपुरुषार्थे परदुःखनिवृत्त्यादौ यद्यपि स्वहितानुसन्धानं विना इच्छासम्भव इति जन्यकृपायां तदन्यत्वं बाधितम् तथापि परदुःखाधीनदुःखनिवृत्तिरूपतभिन्नहितस्य स्वहितेत्यनेन विवक्षणान्न दोषः । ईश्वरकृपाया निरुक्तोपाध्यजन्यत्वे हेतुमाह नित्यत्वादिति । सीमेति । परहितरूपस्वसम्बन्धविच्छेदस्थलमित्यर्थः। तच्छून्यत्वं च—परहितत्वव्यापकविषयतारूपसम्बन्धकत्वपर्य्यवसितम्, तदेवोपपादयति नित्यत्वेनेति । नित्यत्वं विषयतानियामककारणराहित्यप्रयुक्तसर्वविषयत्वसम्पादकमिति हेत्वर्थकतृतीयासङ्गतिः ॥ १ ॥

मूले—इहेति(पृ.३पं.१)। कर्त्तव्यग्रन्थ इत्यर्थः। आत्मतत्त्वं विविच्यत इत्यनेनान्वयः। सप्तम्यर्थो घटकत्वम्। तस्यात्मतत्त्वप्रतिपादकवाक्यरूपेषु आत्मतत्त्वविवेचकवाक्येषु न बाधः। एवंमात्मतत्त्वविवेको यत्रेति आत्मतत्त्वविवेक इति ग्रन्थनामव्युत्पत्तिरपि स्फुटीभवति। इहेत्यादिना विविच्यत इत्यन्तेन ग्रन्थस्यादौ तत्प्रयोजनादिप्रदर्शनस्य तच्छ्रवणादौ शिष्यप्रवृत्तिरूपफलोपयोगितां विवृतिकृद्दर्शयति प्रेक्षावतामिति। प्रयोजनेति। स्वकीयग्रन्थस्येत्यादिः। तत्र प्रयोजनादिषु, निर्धारणसप्तमीयम्। प्रयोजनमात्मतत्त्वज्ञानद्वारा कार्यम्। अभिधेयं प्रतिपाद्यम्। आत्मतत्त्वमात्मनो देहादिभिन्नत्वम्। ग्रन्थात्मतत्त्वेति। ग्रन्थात्मतत्त्वज्ञाने हेतू हेतुमानपवर्गः, ग्रन्थ-

प्यज्ञापकभावश्च । सुखमिवात्मगुणो(१)दुःखमपि न हेयं, हेयं वा सुख-विरोधितामात्रेण कामिनीं सम्बुभुत्सोरिव कामुकस्य गुरुजनसन्निधा-नम्, असदेव वा व्योमकमलिनीप्रसूनपूतिगन्धवदिति शङ्कात्रयनिरा-

ग्रन्थात्मतत्त्वज्ञानं चेत्ययं को द्वन्द्वस्तादृशद्वन्द्वगर्भोऽपरद्वन्द्व इति यथासङ्ख्यं प्रथमसमास-लभ्यद्वये हेतुभावान्वयः, द्वितीयापवर्गपदलभ्ये च हेतुमद्भावान्वयः । ग्रन्थात्मतत्त्व-ज्ञानयोर्हेतुहेतुमद्भावश्च नात्र विवक्षितः, उक्तसमासतः कथञ्चिदलाभात् । द्वितीय-तृतीयपदयोः प्रथमतो द्वन्द्वाभ्युपगमे यथासङ्ख्यं हेतुमद्भावान्वयात्तत्त्वज्ञानेऽपवर्ग-हेतुत्वालाभात् । ग्रन्थस्यापवर्गहेतुत्वमपवर्गप्रयोजकज्ञानविषयत्वं न साक्षाज्जनकज्ञान-विषयत्वम्, ग्रन्थज्ञानसत्त्वेऽपि तत्प्रतिपाद्यात्मतत्त्वज्ञानं विनाऽपवर्गाभावादित्यात्मतत्त्व-ज्ञानद्वारा तज्जनकस्यापवर्ग (स्य) हेतुत्वं प्राह्यम् । अपवर्गं जननीये आत्मतत्त्वज्ञानस्य द्वारत्वं त्वात्मतत्त्वज्ञानस्यापवर्गजनकत्वं गृहीत्वैव प्राह्यमिति तत्त्वज्ञानेऽपवर्गजनकत्वग्रहः प्रवृत्तावपेक्षितः । तत्त्वज्ञानस्य दुःखहानोपायत्वं 'तत्त्वज्ञानमेव तदुपायमि'(पृ ३ पं.३)त्यादिना दर्शितं मूलकृता । न च तत्त्वज्ञानेऽपवर्गहेतुत्वाऽग्रहेऽपि तत्त्वज्ञानार्थि-तया एव ग्रन्थज्ञाने प्रवृत्तिसम्भव इति किं तत्र हेतुताप्रदर्शनेनेति वाच्यम् । तत्त्वज्ञानस्य स्वतोऽपुरुषार्थत्वेन तत्रापवर्गहेतुताग्रहमन्तरेण तदर्थितयापि ग्रन्थज्ञाने प्रवृत्त्यनिर्वा-हात् । ग्रन्थज्ञानेन तत्त्वज्ञानहेतुत्वाग्रहे तत्त्वज्ञानेऽपवर्गोपायताग्रहेऽपि तत्त्वज्ञानद्वारा ग्रन्थेऽपवर्गहेतुत्वालाभ इति शङ्कां निराकर्त्तुं ग्रन्थात्मतत्त्वज्ञानयोः प्रतिपाद्यप्रतिपादक-भावसम्बन्धलाभादर इति स्पष्टयितुं ग्रन्थात्मतत्त्वयोस्तादृशसम्बन्धो मूले दर्शित इत्याह-ग्रन्थात्मतत्त्वयोरिति । तत्प्रदर्शकपरं च 'इहात्मतत्त्वं विविच्यत'(पृ. ४ पं ४) इति वाक्यमेव । एतावतैव चापवर्गजनकतत्त्वज्ञानजनकत्वरूपस्य परम्परया हेतुत्वस्य ग्रन्थज्ञाने लाभः । एवञ्च साक्षात्परम्परासाधारणेषु हेतुताग्रहस्य प्रवर्त्तकत्वे मोक्षोद्देश्य-कग्रन्थज्ञानगोचरस्य प्रवृत्तिरुत्पद्यते । साक्षादिष्टहेतुत्वस्य ग्रहस्यैव प्रवर्त्तकत्वे तत्त्वज्ञाने-च्छया तदुद्देश्यकैव प्रवृत्तिरित्यवधेयम् ।

निसर्गप्रतिकूलस्वभावमिति (पृ. ३ पं. १) मूलं निसर्गतः स्वभावत एव प्रतिकूलः स्वभावो यस्य तादृशमित्यर्थकम् । सर्वजनसंवेदनसिद्धमिति । प्रामाणिकमित्यर्थः । एतद्विशेषणद्वयं दुःखे इच्छाविषयाभावप्रतियोगित्वरूपजिहासितत्व-हेतुतया दर्शितम् । तदुपदर्शनस्य विपरीतशङ्कानिरासरूपप्रयोजनमाह-विवृतौ सुख-मिवेति । आत्मगुणत्वेनाहेयसुखसाधर्म्यमहेयशङ्काप्रयोजकतया दर्शितम् । न हेयं न जिहासितम् । तथाच कथं तज्जिहासया तद्धानोपायानुसरणमिति भावः । सुखविरोधि-तामात्रेण सुखाभावप्रयोजकत्वज्ञानविषयतयैव, मात्रपदेन तद्धाने नेच्छा इत्युक्तम् । स्वतोऽजिहासितमपि सुखविरोधिताप्रतिसन्धानेन तथा भवतीत्यत्र दृष्टान्तमाह कामि-

(१) सुखवदात्मगुण इति पाठान्तरम् ।

साय निसर्गादि सिद्धमित्यन्तम् । अनुसरन्तः कोऽस्योपाय इति जिज्ञासवः । अध्यात्मविदात्मतत्त्वज्ञाः । एकवाक्यता पैकमत्यम्, कारणे कार्योपचारात् । एकमेकार्थप्रतिपादकं वाक्यं येषामिति वा । आकर्णयन्ति शब्दादवधारयन्ति । तत्त्वज्ञानमेवेति । असाधारणमिति शेषः । तत्त्वज्ञानं तत्त्व-

---

नीमिति । तथा च कथं सर्वेषां संसारिणां तज्जिहासया तद्धानोपायानुसरणं सुखविरोधितामप्रतिसन्दधानानां तदयोगादिति भावः । अथवा जिहासव इत्यत्र स्वतो जिहासितत्वमेव विवक्षितम् । तत्रैवेयं कथं नामाभूत् सुखसाधर्म्यात् दुःखस्य हेयताऽप्रामाणिकत्वेन नित्यानुवृत्ततयैव तन्निवृत्तिरपुरुषार्थ इति शंकान्तरं दर्शयति असदेवेति । अत्यन्तासदेवेत्यर्थः । कमलिनीप्रसूनपूतिगन्धमात्रस्यैवालीकत्वेऽपि दुःखाश्रयस्यात्मनोप्यसत्त्वं सूचयितुं व्योमकमलिनीप्रसूनेत्युक्तम् । शंकात्रयेति । सामान्यतोऽहेयत्वस्य स्वतोऽहेयत्वस्य शंकायाः स्वतोद्वेष्यत्वकथनेन निरासः । असत्यत्वशङ्कायाः सर्वजनानुभवसिद्धत्वकथनेन निरासः । अनुसरन्त इत्यस्यानुगच्छन्त इति यथाश्रुतार्थकत्वासंभवात् अनुसरतेर्जिज्ञासितार्थकतामाहानुसरन्त इति । अस्य दुःखहेतुरूपमोक्षस्य । एकं वाक्यं येषां ते एकवाक्यास्तत्त्वमेवैकवाक्यतेति व्याख्या पुरुषभेदेन वाक्यभेदान्न संगच्छते, अतस्तदर्थं व्याचष्टे पैकमत्यमिति । वाक्यपदस्य कथं मतिपरतेत्याकांक्षायां मतिकार्यवाचकवाक्यपदस्य कारणीभूतायां मतौ लक्षणेत्याह कारणे कार्योपचारादिति । आयुर्घृतमित्यादाविव कार्यवाचकपदस्य स्वशक्यजनकत्वसम्बन्धेन लक्षणोपगमात् इत्यर्थः । एकपदस्याप्येकविषयके लक्षणोपेया, मतेर्ज्ञानस्यापि पुरुषभेदेन भेदादैक्यानुपपत्तेः । एकपदस्य लक्षणाया आवश्यकत्वे एकार्थकलक्षणयैव वाक्यपदस्य मुख्यार्थपरता सम्भवतीत्याशयेनाह एकमिति । पूर्वकल्पे एकस्मिन् मतिर्येषामिति समासोपगमे एकपदे लक्षणां विनैव निर्वाहः, 'सप्तमी विशेषणे बहुव्रीहाविति' सप्तम्यन्तपदस्य बहुव्रीहौ पूर्वनिपातानुशासनरूपज्ञापकबलात् सप्तम्यन्तेन व्यधिकरणबहुव्रीहेरपि साधुत्वादिति यदि, तदा व्यापारानुबन्धिविषयतार्थकसप्तम्यन्तेनैकपदेन सह बहुव्रीहिणैकवाक्यार्थकाभात् वाक्यपदस्य मतिलक्षणानौचित्यादिति भावः । तत्त्वज्ञानस्य मोक्षहेतुताबोधकश्रुत्यादेर्यथाश्रुतार्थेऽप्रमात्वशङ्कया ततस्तदवधारणरूपं तदाकर्णनं न सम्भवत्येकवाक्यतायास्तत्प्रामाण्यनिश्चायकतया तदाकर्णनप्रयोजकत्वेन एकवाक्यतोपपत्तेर्हेतुत्वार्थकतृतीयासंगतिर्द्रष्टव्या । प्रकृते आकर्णनस्य श्रावणप्रत्यक्षरूपता न संभवति मोक्षे आत्मतत्त्वज्ञानभिन्नशरीरादेरप्युपायतयाऽन्ययोगव्यवच्छेदरूपैवाकारार्थासंगतिरित्युपायविशेषणं पूरयति असाधारणमितीति । असाधारणत्वञ्चेह मुक्तित्वावच्छिन्नकार्यताकत्वं, शरीरादेर्जन्यज्ञानत्वावच्छिन्नहेतोरतथात्वात्तत्त्वज्ञानभिन्नतादृशकारणत्वव्यवच्छेदोऽबाधित एवेति भावः ।

तत्त्वज्ञानपदं तत्त्वज्ञानघटितसामग्रीपरं, तदुपायत्वं मोक्षोपधानप्रयोजकत्वं,

ज्ञानविशिष्टकारणकलापमिति केचित्। काशीमरणादेः स्वातन्त्र्येण मोक्षहेतुत्वं निराकर्तुमेवकारार्थं स्पष्टयति न ततोऽन्यमिति। तत्त्वज्ञानस्य मोक्षहेतुत्वे आत्मन इति कुत इत्यत आह प्रतियोगीत्यादि। प्रतियोगितयाऽनुयोगितया चेत्यर्थः। मतभेदेन चेदम्, तदुक्तम्—

> नैरात्म्यदृष्टिं मोक्षस्य हेतुं केचन मन्वते।
> आत्मतत्त्वधियं त्वन्ये न्यायतत्त्वानुसारिणः॥ इति।

---

तद्व्यवच्छेदश्च तादृशसामग्रीत्वानवच्छिन्नेऽबाधित एवेति केचिदाहुः, तन्मतमुपन्यस्यति तत्त्वज्ञानमिति। प्रत्येककारणेऽप्युपायव्यवहारात्तत्पदस्य फलोपधानप्रयोजकसमुदायपरत्वे मुख्यार्थत्याग आवश्यक इति ज्ञानपदस्य मुख्यार्थपरत्वे उपायपदस्यासाधारणोपायत्वरूपविशेषरूपेण लक्षणैवोचिता इत्युक्तव्याख्यायामरुचिबीजम्। एवकारादेवान्यस्य मोक्षहेतुत्वव्यवच्छेदलाभान्न ततोऽन्यमित्यस्य पुनरुक्तेत्यतस्तस्यैवकारार्थस्पष्टीकरणरूपतामाह काशीति। स्वातन्त्र्येण साक्षात्, मोक्षहेतुत्वं मोक्षहेतुत्वशङ्कां, निराकर्त्तुं झटित्यपनेतुम्। तत्त्वज्ञानस्यात्मविशेषिततत्त्वज्ञानस्य, मोक्षहेतुत्व इति। तत्त्वज्ञानमेवेत्यादिना उक्ते सतीति शेषः। आत्मन इति। आत्मतत्त्वं विविच्यत इति प्रतिज्ञायां तत्त्वे आत्मसम्बन्ध इत्यर्थः। कुत इति। कथमित्यर्थः। उपाददे इति शेषः। इत्यतः इतिशङ्कातः। आहेति। आत्मन एव मोक्षोपायतत्त्वज्ञानविषयत्वमभिधाय पूर्वोक्ततत्त्वज्ञानपदस्य आत्मतत्त्वज्ञानरूपविशेषपरतां स्फुटयामासेत्यर्थः। प्रतियोग्यनुयोगितयेत्यत्र षष्ठीसमासभ्रमनिरासायाह प्रतियोगितयेति। इत्यर्थ इति। द्वन्द्वसमासोत्तरभावप्रत्ययस्य उभयान्वितार्थकत्वादिति भावः। आत्मनस्तत्त्वं वास्तवं शरीरादिभिन्नं तत्प्रकारकज्ञाने आत्मभानं भेदानुयोगितयैव न तु प्रतियोगितया, शरीरादेरेव तादृशभेदप्रतियोगित्वादिति प्रतियोगितयेत्यस्यासङ्गतिमाशंक्याह मतभेदेनेति। निरात्मज्ञानहेतुतावादिबौद्धमतविशेषानुसारेणेत्यर्थः। इदम् अभावप्रतियोगितया आत्मतत्त्वज्ञानस्योपयोगित्वम्। तदुक्तं नैरात्मज्ञानस्य मोक्षहेतुत्वमपि केषाञ्चिन्मतमिति ग्रन्थकारैरुक्तम्। आत्मनः स्वसमानाधिकरणाव्याप्यवृत्त्यभावप्रतियोगित्वरूपमिथ्यात्वमेव तन्मते तत्त्वमिति बोध्यम्। यद्यपि स्थिर आत्मा नास्तीति नैरात्म्यज्ञानस्य मोक्षहेतुत्वे प्रकृते शरीरादिभिन्नतया नित्यतया चात्मविवेचनं नोपयोगीति स्वकीयात्मतत्त्वविवेचनोपष्टम्भकतया आत्मनो ज्ञेयत्वाभिधानं सङ्गच्छते, तथापि यथा बौद्धमते नैरात्म्यस्य सर्वकालवृत्त्यभावप्रतियोगितया अबाधितधर्मात्मकतत्त्वरूपया आत्मनो मोक्षार्थितया ज्ञेयत्वं, तथास्माकमपि देहादिभेदानुयोगितया निरुक्ततत्त्वरूपया तस्य मोक्षार्थिज्ञेयत्वमिति दृष्टान्तविधया प्रतियोगितयेत्युक्तिसङ्गतिः। तत्त्वत इति तृतीयान्तात्तसिरतः प्रतियोग्यनुयोगितयोस्तृतीयान्तपदोपस्थाप्ययोस्तत्त्वात्मकतालाभः। यद्यप्यनुयोगितायास्तद्रूप-

सर्व एव हि भोगभाजं (१)स्थिरतरमात्मानं मन्वानाः सुखादिकं कामयन्ते, यदाहुः—

सुखी भवेयं दुःखी वा मा भूवमिति तृष्यतः ।
यैवाहमिति धीः सैव सहजं तत्त्वदर्शनम् ॥ इति ।

सत्त्वम्(२) आत्मा, कामयमानाश्च सुखादिकं विहितं निषिद्धं वा सा-
धन(३)मस्यानुतिष्ठन्तः कर्माशयानाचिन्वानाः(४) जन्मादिकमनुभवन्ति ।
यदि पुनरमी किमपि नाहं, नाहमास्पदमस्ति किञ्चिदपि वस्तु स्थिरम् ,

ाकथनं मोक्षहेतुज्ञानस्य प्रमात्वलाभसम्पादकतयोपयुज्यते न तु प्रतियोगितायाः, ात्मन्यबाधितत्वेऽपि आत्मज्ञानस्यासद्विषयकतया प्रमात्वानिर्वाहात् तेषामसद्विषय- वस्य भ्रमत्वरूपत्वात् , तथापि तत्रापि तादृशतत्त्वरूपताऽस्तीति तत्कीर्तनम् । यथा- नुयोगितया आत्मज्ञानस्य प्रमात्वेऽपि न तन्मोक्षोपायतयोपयुज्यते, अपि तु वासना- मकप्रवृत्तिबीजापायद्वारा प्रवृत्त्यपायसम्पादकतयैव, तथा बौद्धमतेऽपि नैरात्म्यज्ञानस्या- द्विषयकस्याप्रमात्वेऽपि प्रवृत्त्यपायसंपादकतयैव तत्रोपयुज्यत इत्यवधेयम् । दृष्टान्ते ास्वत इत्यस्याप्रवेश एवेति न सम्यक् , द्वन्द्वोपस्थितयोरेकत्र यदन्वयः अन्यत्रापि ादन्वयस्य नियतत्वात् 'गन्धवतो क्षितिपाथसी पश्यती'ति प्रयोगापत्तेः ।

नैरात्म्यज्ञानस्य मोक्षहेतुतामुपपादयति सर्व एव हीति । स्थिरतरमिति । वेहितनिषिद्धकर्मानुष्ठानावधिभोगपर्यन्तं स्थायिनमात्मानं मन्वानास्तादृशत्वेनात्मविष- ाकाभिमानवन्तः, सुखादिकं कामयन्ते सुखाद्युपायचिकीर्षोपधायकतत्कामनावन्तो ावन्ति । तादृशसुखादिकामनायामात्मज्ञानस्योपयोगित्वे प्राचां संवादमाह यदाहुरिति । 'ति तृष्यतः इति कामनावतः, अहमिति धीः तादृशकामनोपयोग्यात्मज्ञानं, नहजं शास्त्राद्यनपेक्षम् । सत्त्वादर्शनमित्यत्र सत्त्वपदं व्याचष्टे सत्त्वमात्मेति । कामयमानाश्च सुखादिकमिति । सुखादिकामनया तदुपायं चिकीर्षमाणा इत्यर्थः । भादिपदात् दुःखाभावपरिग्रहः । (५)तस्य सुखादेः, कर्माशयान् धर्माधर्मान् , प्राचिन्वानाः आत्मनि जनयन्तः, जन्मादिकं शरीरपरिग्रहाधीनदुःखम् । ममी संसार्यात्मानः, किमपि नाहमिति आत्मा मिथ्यैवेत्यर्थः । इत्यवधारयेर- न्त्यक्रमेणान्वयः । क्षणिकज्ञानधारैवात्मेति वादिनां मतानुसारेणावधारणाकार- ाह नाहमास्पदमस्ति किञ्चिदपि स्थिरमिति । इति वा अवधारयेरन्निति ोजना । नाहमास्पदमिति व्यवहारगोचरः । सौगतमतानुसारेणाह विश्वमेव

(१) भोगभाजः इति पाठान्तरम् । (२) सत्त्व इति पाठान्तरम् ।
(३) विहितनिषिद्धं साधनमिति पाठान्तरम् ।
(४) धर्माधर्मानाचिन्वाना इति पाठान्तरम् ।
(५) एतन्मतेनात्र दीधितौ 'साधनन्तस्येति' पाठो द्रष्टव्यः ।

विश्वमेव क्षणभङ्गुरमलीकं वेत्यवधारयेरन्, न किञ्चिदपि कामयेरन्, न चाकामयमानाः केचिदपि(१) प्रवर्तन्ते, न चाप्रवर्तमाना अपि कर्माशयेन बध्यन्ते(२), न चान्तरेणापि कर्माशयं सम्भवो भोगस्येति भवति नैरात्म्यदर्शनं साधनमपवर्गस्येति केचित् ।

अपरे-पुनरनादिनिधनमात्मानं न्यायादिना निर्णयन्तस्तदीयं तत्त्वज्ञानमेव न्यायागमाभ्यां मोक्षोपायमाचक्षत-इति । अभावज्ञाने प्रतियोगिज्ञानस्य हेतुत्वात् प्रतियोगितयेत्यभिहितम ।

---

क्षणभङ्गुरमिति पूर्ववद्योजना । शून्यतावादिमतानुसारेणाह अलीकमिति । वाकार इत्यनन्तरं योज्यः । किञ्चिदपि न कामयेरन् । सुखादिसाधनं कर्म न चिकीर्षेरन् । एतेन यथाश्रुते सुखादिकामनायां सुखादेरेव ज्ञानं हेतुः न तु स्थिरवस्तुत्वेनात्मनो ज्ञानम्, 'अज्ञातस्यापि सम्बन्धस्येच्छासामान्यसामग्रीबलात् सुखादीच्छायां मानमिति' विधिवादे पक्षधरमिश्रैरुक्तत्वादिति कथमुक्तावधारणस्य सुखकामनाविरोधिता इत्यसङ्गतिः । न चात्मनोऽस्थैर्यादिज्ञाने भाविसुखेष्वप्रवृत्तिबलात्सेन सुखेच्छायां तदभानासम्भवात्, तदनुपरागेन च सुखादाविच्छायाममानात् सुखादिकामना न भवेदिति सङ्गतिरिति वाच्यम् । इच्छायां विरोधिज्ञानाप्रतिबन्धकताया अपि तात्पर्यग्रन्थे तैरुक्तत्वादिति परास्तम् । आत्मनोऽस्थैर्यादिज्ञाने विहितकर्मादौ कालान्तरभाविसुखादिरूपफलानुपधाननिश्चयेन तत्र चिकीर्षाया असम्भवात् ।

अनुयोगितया आत्मनो ज्ञेयत्वमतं दर्शयति अपरे पुनरिति । अनादीति । उत्पत्तिविनाशरहितमित्यर्थः । वस्तुभूतमिति शेषः । न्यायादिना युक्तिवेदाभ्यां, निर्णयन्तः व्यवस्थापयन्तः, न्यायागमाभ्यां न्यायागमरूपप्रमाणवशेन, मिथ्याज्ञानजन्यवासना धर्माधर्महेतुः, मिथ्याज्ञानं चात्मदेहाद्यभेदज्ञानं तद्विपरीतज्ञानमेव तन्निवर्तनद्वारा धर्माद्युत्पत्तिविरोधि, धर्माद्यनुत्पत्तौ च जन्मापायात् दुःखापाय इत्यात्मनि देहादिभेदज्ञानस्य मुक्तिहेतुत्वे युक्तिर्न्यायः । 'आत्मा द्रष्टव्य' इत्यादिवेदः आगमः ।

ननु नैरात्म्यज्ञानस्य मोक्षोपयोगितामते आत्मनो ज्ञेयत्वं नायाति अपि तु तदभावस्यैव । न च प्रतियोग्युपरागेणैवाभावभानात्तदभावस्य ज्ञेयत्वे तस्यापि तथात्वमायातीति वाच्यम् । शून्यतावादिमतेऽभावस्यैव सत्यतया सदप्रतीरेकज्ञानाविषयत्वेनाभावज्ञाने आत्मनो भानासम्भवादित्यतो नैरात्म्यज्ञाने आत्मनो भानासम्भवेऽपि तज्जनकप्रतियोगिज्ञाने भाने आत्मनो ज्ञेयत्वोपपत्तिरित्याह अभावज्ञान इति । एवञ्च प्रतियोगितयेत्यत्र मोक्षप्रयोजकज्ञानस्याभावप्रतियोगिताविषयकत्वं न विवक्षितं किन्तु आत्मनो ज्ञेयत्वे मोक्षहेतुज्ञानविषयाभावप्रतियोगिताप्रयुक्तत्वमेव, आत्मा तादृशाभाव-

---

(१) किंचिदपीति पाठान्तरम्　　(२) सीव्यन्ते इति पाठान्तरम् ।

परे तु आत्मनः शरीरादिभिन्नत्वस्येव । शरीरादेरात्माभिन्नत्वस्यापि ज्ञानं मोक्षहेतुरिति तथोक्तमित्याहुः ।

नन्वासंसारमनुवर्तमानोऽस्त्येव सर्वेषामहं-प्रत्ययसन्तानो न पुनरपवर्गवार्तेत्यत आह—तथाहीत्यादि । ( पृ० ४ पं० १ ) वस्तुभूतो देहादिभिन्नोऽनादिनिधनो ज्ञानादिमान् । नैसर्गिकं गौरोऽहमित्याद्याकारकमना-

---

प्रतियोगीत्यत एतज्ज्ञानस्य नैरात्म्यज्ञानहेतुतया आत्मनो ज्ञेयत्वमिति तादृशाभावप्रतियोगिताया आत्मनो ज्ञेयताप्रयोजकत्वम् ।

अन्ये तु प्रतियोगितयेत्यस्य देहाद्यनुयोगिकभेदप्रतियोगितयेत्यर्थमाचक्षते तन्मतमाह परे त्विति । तथोक्तमिति । शरीरादिनिष्ठभेदप्रतियोगितयेत्यर्थकं प्रतियोगितयेत्युक्तमित्यर्थः । अग्रेऽपि यदि नैरात्म्यमित्यादिना नैरात्म्यमतस्य दृष्टान्ततयोपन्यस्यनीयतया अत्रापि तन्मताभिप्रायेणैव प्रतियोगितयेत्युक्तमित्युन्नीयते इत्येतन्मतेऽस्वरसः । अत एव प्रत्यक्षात्मकमात्मतत्त्वज्ञानं सर्वेषां भवतीति, किन्त्वत्र तत्त्वविवेचनेनेत्याशङ्कातो नैसर्गिकात्मज्ञाने विशेषप्रदर्शनपरस्य ग्रन्थस्यावतारणं न सत्, देहादिभेदानुयोगितयात्मज्ञानस्यैव मोक्षहेतुत्वमित्युक्त्वान्नैसर्गिकात्मज्ञानस्यातथात्वात्तादृशशङ्कानवतारादतो देहादिभिन्नत्वमिवात्मत्वसुखत्वादिकमप्यात्मनस्तत्त्वम्, तथाच तत्प्रकारकनैसर्गिकात्मज्ञानं यदि नापवर्गहेतुस्तदा देहादिभिन्नत्वेनात्मज्ञानमपि न हेतुः स्यादित्याशङ्कानिराकरणपरतया यदि नैरात्म्यमित्यादिविशेषप्रदर्शककक्किकां व्याख्यातुं तथा शङ्कते नन्वित्यादिना । अपवर्गवार्तेति । तथा चान्वयव्यभिचारान्न तस्य मोक्षहेतुतेति कुतो विशेषाद्देहादिभिन्नतया आत्मज्ञानं मोक्षहेतुरिति शेषः । देहादेरात्मत्ववादिनां मतेऽपि आत्मा वस्तुभूत इति तन्मतव्यावर्तनाय पूरयति—देहादिभिन्न इति । अनादिनिधन इति । देहादिभेदसाधकं विशेषणम् । ज्ञानस्वरूप एवात्मा न तद्वानिति मतव्यावर्तनाय ज्ञानादिमानिति(१) । नैसर्गिकात्मज्ञानस्य देहाभेदावगाहिमिथ्याज्ञानरूपतया न देहाभेदा-

---

( १ ) ( ज्ञानादिमानित्यात्मपदार्थविवरणमेव, न तु पूरणम्, तत्त्वज्ञानपदस्य प्रमात्मकतया आत्मनः सत्यत्वमते अहं सुखीत्यादिदेहाभेदानवगाहिनैसर्गिकात्मज्ञानस्यातत्त्वज्ञानत्वापत्तेरिति अतत्त्वज्ञानमित्यस्य देहाभेदावगाहिज्ञाने यथाश्रुत एव तदनवगाहिज्ञाने मोक्षरूपतत्त्वज्ञानकार्य्यकारित्वमर्थोऽन्वेतीत्याह—नैसर्गिकमिति । एतदात्मज्ञानमित्यन्वयि । अनादिपदमनादिपरम्पराप्रविष्टार्थकं, देहाभेदवासना देहाभेदावगमसंस्कारः, अनुभवरूपमिथ्याज्ञाने दोषविधया स हेतुः । भ्रमस्यासत्ख्यातिरूपतावादिनां बौद्धानां मते तादृशज्ञानस्य भ्रमत्वं घटयति असत इति । भानात्तेनावगाहनात् ।

अथ तादृशज्ञानस्यातत्त्वज्ञानत्वोक्तिर्मोक्षानुपयोगित्वसूचनायैव, तथाच नैरा-

त्म्यज्ञानस्यापि तेषामसद्विषयकतया तस्यापि मोक्षानुपयोगितापातात् सिद्धान्तो भज्येत । न च सदसतोरेकज्ञानमनभ्युपगच्छतामात्मनोऽसत्त्वेऽपि च तदभावस्य प्रामाणिकत्वमुपगच्छताम् मोक्षोपयोगिनैरात्म्यज्ञानं स्वतन्त्रप्रतियोगिज्ञानपूर्वकमभावगोचरं ज्ञानान्तरमेवेति सामञ्जस्यम् , अतोऽपि प्रतियोगिज्ञानविषयैव नैरात्म्यज्ञाने आत्मज्ञानस्योपयोगिता पूर्वमुक्तेति वाच्यम् । सौगतादिमते अभावस्यालीकतयाऽसद्विषयकत्वस्य मोक्षानुपयोगिनैरात्म्यज्ञानसाधारणतयाऽसद्विषयकत्वेनातत्त्वज्ञानकथनासङ्गतेर्दुर्वारत्वादिति चेत् ।

न, प्रवृत्त्यप्रतिकूलज्ञानेऽसद्विषयकत्वरूपमतत्त्वज्ञानत्वं मोक्षानुपयोगित्वप्रयोजक(त्व)मित्याशयात् । आत्मा नाऽस्तीति ज्ञानस्यासद्विषयकत्वेऽपि प्रवृत्त्यनुकूलत्वान्मोक्षोपयोगित्वनिर्वाहः । अन्यथाख्यातिवादिमते उक्तज्ञानस्य भ्रमत्वमुपपादयति **देहाभेदेति** । बाधितेत्यादिः । **देहसम्भेदो** देहाभेदः, आत्मज्ञाने उपस्थितदेहादेरभेदः प्रायशो भातुमीष्टे अतः **कादाचित्कमित्युक्तम्** । देहाभेदविषयकत्वमित्यादेर्मिथ्याज्ञानतिरस्कृतत्वसम्पादनाय **बलवतेति** । विपरीतज्ञानाप्रतिबध्यताप्रयोजकदोषविशेषजन्यत्ववतेत्यर्थः । **तिरस्कृतत्वात्** अप्रतिबन्धकीकृतत्वात् । **न कार्यक्षममिति** । मिथ्याज्ञाननिवर्तनक्षमस्यैवापवर्गरूपकार्यक्षमत्वादिति भावः ।

साधकमनुक्त्वैव बाधकनिराकरणं किमर्थमत आह—**सति चेति** । तदेव बाधकप्रमाणमेव । बाधकस्य विपरीतसाधकप्रमाणरूपतया प्रमाणानात्मकानां क्षणभङ्गादीनां न तथात्वसम्भवः । न च ज्ञायमानलिङ्गस्य करणत्वमते क्षणभङ्गादिरपि लिङ्गविधया विपरीतसाधक एवेति वाच्यम् । एवमपि स्थैर्य्याद्यभावस्यैव क्षणभङ्गादिरूपतया साध्याविशेषेण क्षणभङ्गादेः स्थैर्याद्यभावसाधकत्वानुपपत्तेरित्यत आह **क्षणेत्यादाविति** । विश्वस्य निर्वक्ष्यमाणक्षणिकत्वरूपक्षणभङ्गसाधकमानमात्मनि स्थैर्यबाधकम् । एवं **गुणगुणिभेदभङ्गो** गुणिन्यात्मनि ज्ञानरूपास्थिरतरगुणभेदाभावः, स तत्साधकं वा प्रमाणं आत्मनो नित्यत्वे बाधकम् । **बाह्यार्थभङ्गः** बाह्यस्य ज्ञानातिरिक्तस्य भङ्गो मिथ्यात्वं तत् , तत्साधकं वा प्रमाणं सत्यस्यात्मनः स्थिरत्वे बाधकम् । देहादिभिन्नात्मनोऽनुपलम्भोऽपि आत्मनो नित्यत्वे बाधकमित्यवधेयम् ।

सौगतैः समं विचारे विप्रतिपत्तिं दर्शयति—**शब्दादिरिति** । विश्वेषां सत्त्वेन पक्षत्वे पक्षतावच्छेदकेन सत्त्वस्याविशेषात् हेतुसाध्यसामानाधिकरण्यावगाहिनोऽन्वयव्याप्तिग्रहस्यासिद्धिविषयाऽनुमितिविरोधिता स्यादिति विशिष्य पक्षतादरः ।

ननु क्षणिकत्वं क्षणमात्रस्थायित्वम् , स्वाधिकरणसमयोत्तरक्षणावृत्तित्वरूपं स्वसमयध्वंसावृत्तित्वरूपं वा, तच्च न्यायमते क्वचिदपि न प्रसिद्ध्यति, तथाच साध्यस्योभयमतप्रसिद्धिविरहेण सन्दिग्धसाध्याप्रसिद्धिवारकतया बौद्धानां क्षणिकत्वसाधनासम्भवः, स्वमते प्रतियोग्यप्रसिद्ध्याऽभावाप्रसिद्धेर्नैयायिकानां तदभावसाधनासम्भवश्च ।

न च स्वाधिकरणसमयोत्तरक्षणावृत्तित्वं स्वपूर्वोत्पन्ने प्रसिद्धं तत्तदभावौ स्वस्मिन् द्वाभ्यां साधनीयाविति वाच्यम् । अनुयोगिना सत्त्वेनोपादाने घटादिपूर्वोत्पन्ने तत्समयोत्तरक्षणावृत्तित्वप्रसिद्ध्या घटादौ तत्साधनसम्भवेऽप्यात्मादिकं स्वपदेनोपादाय तादृशक्षणिकतायाः क्वचिदपि प्रसिद्धिसम्पादनासम्भवेन तत्र तत्साधनाऽसम्भवात् । स्वसमयोत्तरक्षणवृत्ति यद्यत्त्वं तदन्यत्वस्य साधने च बौद्धानां प्रतियोग्यप्रसिद्ध्या क्षणिकत्वरूपसाध्याप्रसिद्धिरिति विमृश्यान्यादृशं प्रागभावे चरमध्वंसे च प्रसिद्धं क्षणिकत्वं निवक्ति क्षणिकत्वं चेति । स्वाधिकरणेत्यादिना केवलकादाचित्कत्वस्योत्पत्तिमत्त्वस्य वा साधनेऽनित्यवस्तुन्यंशतः सिद्धसाधनम् । अवच्छेदकावच्छेदेन तत्सिद्धेरुद्देश्यतया तस्यादोषत्वेऽपि स्थैर्यविरोधिनोऽसिद्धेर्न तदभिमतसिद्धिरतः सत्यन्तम् । उत्पत्तिविवादाविषये घटादौ स्वाधिकरणसमयपूर्वक्षणानुत्पन्नत्वसिद्ध्यैव क्षणिकत्वे पर्यवसानम् , स्वाधिकरणसमयप्रागभाववत्स्थूलकालोत्पन्नचरमध्वंसे नास्माकं विशेषणदलप्रसिद्धिः क्षणोपादानमन्तरेण सम्भवति, अतस्तत्रापि तत्प्रसिद्धये द्वितीयकल्पाभिप्रायेण वा क्षणोपादाने क्षणानुपादानेऽपि स्थिरवस्तुमात्रमनभ्युपगच्छतां परेषां नास्थिरकालमादाय स्वमते साध्याप्रसिद्धिरिति ध्येयम् । तादृशक्षणावृत्तित्वनिवेशे प्रागभावे तदप्रसिद्ध्या महाप्रलयासत्त्वे साध्याप्रसिद्धिरेवेत्युत्पत्तिपर्यन्तनिवेशः । कादाचित्कत्वानुपादाने आत्मादावंशतः सिद्धसाधनम् , आत्मनो अनादिनिधनत्वविरोधिधर्मासिद्ध्या तदभिमतानिर्वाहश्चेति तदुपादानम् । कादाचित्कत्वमुत्पत्तिविनाशान्यतरप्रतियोगित्वं किञ्चित्कालवृत्तित्वं वा ।

आत्मन्युक्तसाध्यसिद्धौ अनादिनिधनत्वनिराकरणसम्भवेऽपि न स्थैर्यनिराकरणसम्भवः, स्थैर्येऽपि प्रागभाववत् विनाशितामात्रेण तादृशसाध्योपपत्तेरित्याशयेन महाप्रलयमङ्गीकृत्य कादाचित्कत्वमुपेक्ष्यान्यद्विशेष्यमुपादत्ते उत्पत्तिमत्त्वं वेति । एतत्कल्पे चरमध्वंस एव प्रसिद्धिः, प्रागभावे विशेष्य विरहात् । एतत्कल्पे पूर्वमुत्पत्तिनिवेशनं विशेष्यदलसार्थक्याय, उत्पत्तिपदमन्तर्भाव्य लघुलक्षणमग्रे स्वयमेव वक्ष्यते ।

अत्रोत्पत्तिर्यदि स्वाधिकरणसमयध्वंसानधिकरणसमयसम्बन्धः, तदा चरमध्वंसाधिकरणसमयध्वंसाधिकरणसमयध्वंसाऽप्रसिद्ध्या तत्र न साध्यप्रसिद्धिसम्भवः । प्रागभावासत्त्वमभ्युपेत्यानुमानदीधितौ निरुक्ता उत्पत्तिः व्याप्तिघटिततया गुरुशरीराप्याश्रिता, अतः प्रागभावघटिताक्षणिकत्वे प्रागभावघटितामन्यादृशीमुत्पत्तिं निर्वक्ति उत्पत्तिश्चेति । चरमध्वंससमयप्रागभावस्यापि तदधिकरणस्थूलकालवृत्तित्वात्तत्र नैतत्प्रसिद्धिरिति प्रथमक्षणपदम् । आद्यक्षणे तदुत्तरं च स्थायिनि स्थूलकाले घटादेः सम्बन्धस्योत्पत्तिपदार्थत्वाभावात् द्वितीयक्षणपदोपादानम् । उत्पत्तिसामान्यलक्षणाभिप्रायेण. प्रकृते च समयमात्रं तत्र निवेश्यम् ।

इदमत्र चिन्त्यते—तादृशोत्पत्तेर्विशेष्यदलप्रवेशो युक्तः, प्रागभावाप्रतियोगित्वस्य विशेष्यतयैवार्थान्तरवारणम् । न च सत्यन्तदलप्रविष्टोत्पत्तिनिर्वचनमिदमिति वाच्यम् ।

दिदेहाभेदवासनासम्भूतमात्मज्ञानमतत्त्वज्ञानमेव असत एवात्मनो भानात्, देहाभेदावगाहनाच्च। देहसम्भेदावगाहि च कादाचित्कमहं सुखीत्या-

---

दिवासनानिवर्त्तकत्वमित्याविष्कर्तुं नैसर्गिकमित्यस्य शेषं पूरयति—गौरोऽहमित्या-द्याकारकमिति। तादृशज्ञानस्य भ्रमत्वेन तत्र को दोषो हेतुः इत्याकाङ्क्षायामाह—अनादीति। देहाभेदवासना आत्मविशेष्यकदेहाद्यभेदावगाहिमिथ्याज्ञानजन्य-तादृशसंस्कारवासनाप्रवाह एव, अस्य सादित्वे तत्पूर्वकालीनात्मज्ञानस्य दोषविरहेण न देहाद्यभेदावगाहितानिर्वाह इति वासनाप्रवाहस्यानादित्वं विशेषणम्। आत्मज्ञानम-तत्त्वज्ञानमेवेति मूलानुवादः। तन्मूलस्य नैसर्गिकात्मज्ञानं न तत्त्वज्ञानका-र्य्यमोक्षोपयोगि धर्माधर्मजनकप्रवृत्त्यपायोपयिकताप्रयोजकविषयविशेषावगाहित्वादि-त्यर्थः। तत्रैव नैरात्म्यमते हेतुं पूरयति—असत एवेति। एवकारेण प्रवृत्त्यपायोप-योगिताप्रयोजकसद्विषयकत्वव्यवच्छेदो दर्शितः। स्वमते हेतुं पूरयति-देहाभेदेति। ननु देहाभेदावगाहिनैसर्गिकात्मज्ञानस्य उक्तयुक्त्या मोक्षाजनकत्वेऽपि तदनवगाहि अहं सुखीत्यात्मज्ञानस्य कथं न तथात्वमित्याकाङ्क्षायामाह—देहसम्भेदेति। बलवतेति। बलवत्त्वं दोषविशेषजन्यतयाऽऽत्मसाक्षात्कारिभेदज्ञानाप्रतिबध्यत्वम्।

---

स्वसमयपूर्वकालीनपदार्थान्तरोत्पत्तेरेव तद्दलप्रविष्टतया स्वाधिकरणसमयध्वंसानधिक-रणसमयसम्बन्धरूपोत्पत्तेस्तत्र प्रवेशोऽपि चरमध्वंसे स्वसमयपूर्वक्षणे यस्य तादृशी उत्पत्तिस्तदन्यत्वस्याक्षततया तादृशोत्पत्तिपरित्यागस्य निर्बीजतापातादिति।

स्वाधिकरणक्षणेत्यत्र क्षणत्वं यदि स्ववृत्तिप्रागभावप्रतियोग्यनाधारत्वं स्ववृत्तिप्रति-योगिकध्वंसानाधारत्वं वा तदा चरमध्वंसस्येदृशक्षणलक्षणानाक्रान्ततया चरमध्वंसकाले च क्रियादेरभावाच्च चरमध्वंसाधिकरणक्षणाप्रसिद्ध्या तदुत्पत्त्यप्रसिद्धिरतो महाप्रलय-साधारणमन्यादृशं क्षणत्वं निर्वक्ति स्वाधेयेति। प्रागभावे प्रध्वंसे चेति। यत्र घटादौ क्षणिकत्वं साध्यते तत्तत्समयप्रागभावाधिकरणक्षणानुत्पत्तिकत्वघटितक्षणि-कत्वस्य तन्नाशोत्पन्नक्षणोत्पन्नभावेऽपि प्रसिद्धावपि नित्याकाशादिरूपस्वपदार्थघटितक्ष-णिकत्वस्य तत्र प्रसिद्ध्या तत्प्रसिद्धिः प्रागभावचरमध्वंसयोरेव स्वीकार्य्येत्यर्थः।

वस्तुतस्तु तत्तद्व्यक्तौ तत्तद्व्यक्तिसमयप्रागभावाधिकरणक्षणानुत्पत्तिकत्वघटितक्ष-णिकत्वं सत्त्वहेतुना साधयितुं न शक्यते, सत्त्वस्य तादृशक्षणोत्पन्नेऽपि सत्त्वेन व्यभि-चारात्, अतः स्वसमयप्रागभावाधिकरणक्षणानुत्पन्नत्वघटितक्षणिकत्ववद्यत्त्वं तत्तद्भे-दकूटाभावरूपतावदन्यतमत्वं साध्यं, तादृशं स्वं प्रागभावचरमध्वंसरूपमेवेति ध्येयम्। अत एवेदृशानुगतसाध्यस्याभावः परेषां सन्मात्रे न प्रसिद्ध्यतीत्याशयेनासत्ख्याति-सिद्धे अलीकतत्प्रसिद्धिमाह—निषेधस्य चेति। चरमध्वंसे प्रसिद्धिरुत्पत्तिद्वयानन्त-र्भावेऽपि सम्भवतीत्याशयेनाह स्वाधिकरणेति।) इति ११ पृष्ठात् १८ पृष्ठान्तस्य दीधितेरधिकं व्याख्यान्तरमादर्शपुस्तकस्थं टिप्पण्यां सन्निवेशितम्।

दिकं तत्त्वज्ञानं बलवता मिथ्याज्ञानसन्तानेन तिरस्कृतत्वान्न कार्यक्षम-मिति भावः ॥

सति च बलवत्तरबाधकप्रमाणे साधकसहस्रस्याप्यकिञ्चित्करत्वात् तदेवादौ निरस्यति तत्रेत्यादिना। (पृ० ५ पं० १) क्षणभङ्गेत्यादौ भङ्ग-त्रयं (१)भङ्गसाधकमानपरमिति वदन्ति ॥

तिरस्कृतत्वात्। तथाच वासनाविषयशरीराभेदानवगाहित्वेऽपि तदवगाहिज्ञाना-विरोधितया नोक्तज्ञानस्य वासनानाशकत्वं तज्जनकज्ञानविरोधिन एव संस्कारनाश-कत्वात्। अत एव साक्षात्कारिणः शब्दादिजन्यस्यात्मनि देहभेदज्ञानस्यापि न मोक्षजनकत्वं वासनाजनकज्ञानविषयविरोधिविषयकत्वेऽपि दुर्बलत्वादिति मूलस्याशय इति भावः। एवञ्च शास्त्रोपदर्शितयुक्त्यधीनदेहादिभेदानुमितेः साक्षात्कारविपरी-तभ्रमाविरोधित्वेऽपि साक्षात्कारिदेहाभेदग्रहप्रयोजकनिदिध्यासनाबीजविश्वासमूलतया स्वोक्तशास्त्रस्य मोक्षोपयोगितेत्यवधेयम्।

स्थिरे आत्मनि साधकमनुक्त्वैव क्षणभङ्गादिरूपबाधकनिरासं सङ्गमयति सति चेति। अकिञ्चित्करत्वात् वस्तुसिद्ध्यसम्पादकत्वात्, तदेव बाधकमेव।

क्षणभङ्ग इत्यादि मूलम्। बाधकं भवदिति उद्देश्यपरम्, अतो विधेय-वाचकानां भङ्गादिपदानां पुल्लिङ्गत्वेऽपि तत्र नपुंसकलिङ्गता। आत्मनः स्थैर्यं कालत्व-व्यापकत्वं, तत्र बाधकम् तदभावसाधकत्वम्। क्षणभङ्गः निर्वक्ष्यमाणं स्वाधिकरण-समयोत्तरं तत्पूर्वं वाऽसत्त्वरूपं क्षणिकत्वम्। आत्मा कालनिष्ठाभावप्रतियोगी स्वाधिक-रणसमयस्य पूर्वसमये उत्तरसमये वा अवर्त्तमानत्वादिति साधनाकारः। बाह्यार्थभङ्गो ज्ञानभिन्नस्य कालसामान्यासत्त्वं, तदपि ज्ञानभिन्नस्यात्मनो निरुक्तस्थैर्यबाधकम्। गुण-गुणिभेदभङ्गः गुणगुणिनोरभेदः, तथाचात्मनि तदीयजन्यज्ञानादिरूपगुणाभेदेना-सदातनत्वसाधन(त्व)सम्भवः। अनुपलम्भः—स्थिरत्वेन उपलम्भाविषयत्वम्।

केचित्तु आत्मनः स्थैर्यं सदातनत्वं, तच्च सर्वकालवृत्तित्वं, यत्किञ्चित्कालावृत्तित्वं तदभाव इति। स्वाधिकरणपूर्वकालाऽऽरमावृत्तित्वरूपक्षणिकत्वं तदभाव एव, तदभावस्य च साध्याविशेषणतदभावसाधकत्वरूपतद्बाधकत्वं न सम्भवति। एवं कालसामान्या-वृत्तित्वरूपं बाह्यार्थस्यासत्त्वमपि दर्शितस्थैर्याभाव एव। एवमात्मनि गुणिनि स्वीया-सदातनगुणाभेदोऽप्यसदातनत्वमेवेति साध्याविशेषात् नाभावसाधको भवतीत्यालोच्य भङ्गपदानि भङ्गसाधकमानपरतया व्याचक्षते, तन्मतमाह क्षणभङ्गेत्यादाविति। वदन्तीत्यस्वरससूचनाय। स च सदातनत्वस्य कालत्वव्यापकतारूपत्वे क्षणिकत्वा-दीनां तदभावरूपत्वासम्भवेन यथोक्तस्यैव सङ्गतेः।

---

(१) भङ्गपरमिति पाठान्तरम्।

**क्षणभङ्गे विप्रतिपत्तिः-शब्दादिः क्षणिको न वा । क्षणिकत्वं च स्वाधिकरणसमयप्रागभावाधिकरणक्षणानुत्पत्तिकत्वे सति कादाचित्कत्वम्,**

क्षणभङ्गवादिसौगतैः सह विचाराङ्गभूतं संशयं दर्शयति क्षणभङ्ग इत्यादि । विप्रतिपत्तिरिति । क्षणिकः शब्दादिः क्षणिकः सन् क्षणिक इति वादिवाक्यार्थजनितो मध्यस्थसंशय इत्यर्थः । क्षणभङ्ग इति सप्तम्यर्थो विषयत्वम्, संशये तदन्वयः । शब्दादिः क्षणिको नवेति च न विप्रतिपत्तिवाक्याकारः, स्वस्वाभिमतकोटावसन्दिहानयोर्वादिनोः केनापि तथाविधवाक्याप्रयोगात्, मध्यस्थसंशयज्ञापकतथाविधप्रश्नवाक्यसम्भवेऽपि तस्य संशयाधीनत्वान्न तु तस्य संशयजनकत्वात् । अत्र विवादाध्यासितः शब्दादिरित्युपनयस्य मूलकृता दर्शनीयतया शब्दादित्वस्य पक्षतावच्छेदकत्वं तदभिप्रेतमतोऽत्रापि शब्दादिरिति पक्षादिनिर्देशः ।

ननु न्यायमते स्वोत्पत्त्यव्यवहितोत्तरकालीनध्वंसप्रतियोगित्वादिरूपं परसाध्यं क्वापि न प्रसिद्ध्यति, अन्त्यशब्दक्षणिकतायाः सिद्धान्तिभिरनभ्युगमादित्याशंक्य उभयवादिसिद्धं क्षणिकत्वं निर्वक्ति क्षणिकत्वं चेति । न च मूलकृतैव साध्याप्रसिद्ध्या प्रतिबन्धासिद्धिकथनात्तदनन्तरं चाङ्कुरकारिबीजतदकरणदशापन्नबीजयोरङ्कुरसामर्थ्यासामर्थ्यरूपविरुद्धधर्मसंसर्गेण भेदसिद्ध्याङ्कुरकारिबीजे क्षणिकत्वप्रसिद्धेराशङ्कनीयतया इदानीं कथं तदप्रसिद्धिशङ्कया प्रागभावचरमध्वंससाधारणान्यादृशक्षणिकत्वनिर्वचनविवृतिः (कृतः) सङ्गच्छतामिति वाच्यम् । प्रथमतः क्षणिकत्वतदभावरूपककोट्यप्रसिद्ध्या संशयाभावेन विचारस्यैवाप्रवृत्तेः । न्यायप्रयोगान्तरं साध्याप्रसिद्ध्या व्याप्तिग्रहासम्भवेन मूलकृतः परमतखण्डनासङ्गतेः । प्रथमतः प्रागभावादौ साध्याप्रसिद्ध्या विचारप्रवृत्तौ च प्रागभावादौ च क्षणिकत्वप्रसिद्धावपि सत्त्वरूपसाधनवति दृष्टान्ते तादृशसाध्याप्रसिद्ध्या उपदर्शितान्वयिनि सहचारग्रहासम्भवेन प्रतिबन्धादिसिद्धेरभिधानं सङ्गच्छत इत्याशयेन विवृतिकृत इदानीं साध्यप्रसिद्धिसम्पादनसङ्गतेः । न च वादिवाक्यस्थक्षणिकपदादेव साध्यप्रसिद्ध्या संशयसम्भव इति वाच्यम् । पदार्थाप्रसिद्धौ तत्र वृत्तिग्रहासम्भवेन संस्काराभावेन च पदात्तदुपस्थित्यसम्भवात् । न च स्वोत्पत्त्यव्यवहितोत्तरक्षणवृत्तिरित्यादिवाक्यादप्रसिद्धस्यापि विशिष्टार्थस्य प्रत्येकपदार्थसिद्धावन्वयसम्भव इति वाच्यम् । आदिपदार्थस्यार्थादेरुत्पत्त्यादिपदार्थेऽनन्वयेन विशिष्टवाक्यार्थानुभवसम्भवेऽपि वादिवाक्यजत्वेनोत्पत्त्यादिपदार्थे आत्माद्यन्वयांशेऽप्रामाण्यशङ्कया तत्र तत्संशयेन कोटितावच्छेदकांशे निश्चयरूपकोटिप्रसिद्धिविरहेण संशयायोगात् । स्वाधिकरणेति । समयपदं कालिकसम्बन्धेन स्वाधिकरणत्वलाभाय, तेनासमानकालीनज्ञानतद्विषययोरपि विषयविषयितासम्बन्धेनाधाराधेयभावोपगमे विषयतया ज्ञानाधिकरणं यस्तज्ज्ञानविषयोऽनागतसमयस्तत्प्रागभावाधिकरणक्षणोत्पन्नतज्ज्ञानांशे नांशतो बाधः । स्वोत्पत्तिक्षणस्यापि तदत्यन्ताभावाधिकरणतया सर्वेष्वेव क्षणिकेषु सत्सु बाधः स्यादतोऽभावसामान्यमनिवेश्य प्राग-

उत्पत्तिमत्त्वं वा। उत्पत्तिश्च स्वाधिकरणक्षणावृत्तिप्रागभावप्रतियोगि-भावनिवेशनम्। सौगतमतेऽभावस्य तुच्छत्वेऽपि कालसम्बन्धोऽस्त्येव, किं तदर्थ-क्रियाकारित्वरूपसत्त्वे(मेव)नेति तन्मते प्रागभावाधिकरणक्षणप्रसिद्धिः। क्षणपर्यन्तनिवे-शात् तादृशप्रागभावाधिकरणध्वंसात्मकस्थूलकालोत्पत्तिकत्वस्य क्षणिकेऽपि सत्त्वाद्बा-धस्य भावकाशः। चरमध्वंसातिरिक्तध्वंसानां कालत्वानभ्युपगमे तु क्षणत्वं न निवेश-नीयम्। एवं प्रागभावविशिष्टसमयावृत्तित्वानिवेशने ध्वंसमात्रस्य कालत्वेऽपि क्षणत्व-निवेशानर्थक्यम्। क्षणावृत्तित्वनिवेशे प्रागभावे न प्रसिद्धिसम्भव इत्यतस्तदनुत्पत्ति-कत्वस्य निवेशः। तदनुत्पत्तिकत्वं च तदुत्पत्तिशून्यत्वं न तु तत्र यदुत्पत्तिविरहस्तत्-त्वम्, तथासति प्रागभावोत्पत्तेरप्रसिद्धया तत्रैव क्षणिकत्वप्रसिद्ध्या निर्वाहात्। स्वपदं चान्यत्वानुयोगिपरं स्वाधिकरणसमयप्रागभावाधिकरणक्षणोत्पत्तिकं यत्त्वं तस्य स्थिर-तया परमते भेदप्रसिद्धेः। कादाचित्कत्वानिवेशे उत्पत्तिरहिते नित्यवस्तुन्यात्मादा-वंशतः सिद्धसाधनं स्यात्, अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया तस्यादोषत्वे-ऽपि आत्मन्यनित्यत्वं सिषाधयिषूणां परेषां उद्देश्यसिद्धिः, क्षणिकत्वेप्युत्पत्तिविरहेणैवा-त्मनि साध्यनिर्वाहात्, अतः कादाचित्कत्वरूपविशेष्यदलम्।

ननु तथाप्यात्मनः पराभिमतं क्षणमात्रस्थायित्वरूपमत्यन्तास्थैर्यं न सिद्ध्यति, महाप्रलयमात्रासत्त्वेऽपि तस्य कादाचित्कत्वनिर्वाहादतः कादाचित्कत्वं परित्यज्य विशेष्यान्तरं निवेशयति उत्पत्तीति। उत्पत्तिमतो द्विक्षणस्थायित्वेऽपि न विशेष-णदलनिर्वाह इत्युक्तविशेषणविशिष्टोत्पत्तिसिद्ध्यात्मनोऽस्थैर्यसिद्धेरिति भावः।

स्वाधिकरणसमयप्रागभावाधिकरणसामान्ये यस्योत्पत्तिविरहस्तत्त्वस्य सत्यन्तेन विवक्षणे उत्पत्तिमत्त्वस्य विशेष्यतया पृथक् निवेशेऽपि निर्वाहो बोध्यः। एतन्मते प्राग-भावे साध्यस्य प्रसिद्धिविरहेऽपि चरमध्वंस एव तत्प्रसिद्धिः। स्वाधिकरणसमयध्वंसानधि-करणसमयसम्बन्धरूपाया उत्पत्तेश्चरमध्वंससाधारण्यासम्भवात् तद्घटितक्षणिकत्वं तत्र न सिद्ध्यतीति तत्साधारणीमुत्पत्तिं निर्वक्ति उत्पत्तिश्चेति। न्यायमते आत्मादिनिष्ठक्षणसम्बन्धस्योत्पत्तित्ववारणाय प्रतियोग्यन्तं क्षणविशेषणम्। सर्वेषामेव प्रागभावानामात्माद्यधिकरणवृत्तितया न कस्यापि क्षणस्यात्माद्यधिकरणक्षणावृत्तिप्राग-भावप्रतियोगित्वमिति न तेषां स्वमते उत्पत्तिमत्त्वमिति न सिद्धसाधनम्। चरमध्वंस-प्रागभावस्यापि तदधिकरणमहाकालवृत्तितया न तदधिकरणकालावृत्तित्वमिति न चरमध्वंसे उत्पत्तिमत्त्वनिर्वाह इति प्रथमक्षणपदम्। द्वितीयक्षणपदं च स्थिरवादिना-मुत्पत्तिलक्षणे प्रथमक्षणावधिद्वितीयक्षणपर्यन्तस्थायिस्थूलकालसम्बन्धेऽतिव्याप्तिवार-वारणायावश्योपादेयतयोपात्तं प्रकृते चानुपयुक्तम्। प्रकृते च प्रागभावप्रतियोगित्वमु-त्पत्तिस्थले निवेश्य त्मनोऽत्यन्तास्थैर्यसाधनसम्भवो बोध्यः।

स्वजन्यविभागप्रागभावविशिष्टक्रियायाः क्षणपदार्थत्वं चरमध्वंसाधिकरणक्षणा-प्रसिद्ध्या तत्रोत्पत्तिमत्त्वानिर्वाहेण तत्रापि क्षणिकत्वप्रसिद्धिरतः क्षणपदार्थमन्यादृशमाह

क्षणसम्बन्धः । क्षणश्च स्वाधेयपदार्थप्रागभावानाधारसमयः । प्रसिद्धिस्तु विधेः नैयायिकानां प्रागभावे चरमध्वंसे च, निषेधस्य च बौद्धानामलीके । स्वाधिकरणसमयप्रागभावाधिकरणक्षणावृत्तित्वं क्षणिकत्वमिति तु ज्यायः । प्रसिद्धिरेतस्य महाप्रलये । प्रागभावश्चात्र भावाभावक्षणश्चेति ।

स्वाधेयेति । स्वाधेयप्रागभावेत्यादौ कदाचित्कर्मधारयभ्रमः स्यादतः षष्ठीतत्पुरुषस्फुटत्वार्थं पदार्थेति । चरमध्वंसाधिकरणतादृशक्षणश्चरमध्वंस एव । स्वाधेयत्वस्य पदार्थाविशेषणत्वे पक्षीकृतशब्दाद्यधिकरणप्रागभावानधिकरणसमयरूपक्षणाप्रसिद्ध्या पक्षे उत्पत्तिमत्त्वनिर्वाहेण बाधः स्यादिति तदुपादानम् । तदुपादाने च परमते वस्तुमात्रस्यैव तादृशक्षणतया नाप्रसिद्ध्यवकाशः । न्यायमते चरमध्वंसोत्तरक्षणिकक्षणानभ्युपगमेन शब्दाद्यधिकरणतादृशक्षणाप्रसिद्धावपि न क्षतिः, चरमध्वंसात्मकक्षणमादाय साध्यप्रसिद्ध्यैव शब्दाद्यधिकरणे तादृशक्षणत्वसिद्धिरूपक्षणिकत्वसिद्धेस्तन्मते सम्भवात् ।

प्रागभाव इति । प्रथमस्य प्रसिद्धिरुभयत्रैव चरमस्य चरमध्वंस एवेत्यर्थः । निषेधस्य चेति । नैयायिकसाध्यस्य क्षणिकत्वाभावस्य चेत्यर्थः । प्रसिद्धिरित्यनुषज्यते । अलीक इति । सन्मात्रस्यैव तैः क्षणिकत्वोपगमात् तन्मते तत्र तदभावसत्त्वादिति भावः । विप्रतिपत्तिकोटयोः क्षणिकत्वतदभावयोः प्रत्येकमेव वादिद्वयमतप्रसिद्धत्वमित्याशयः ।

निरुक्तक्षणिकत्वेऽनुपयोगिनः स्वत्वेनोपादानात्प्रतिव्यक्ति साध्यभेदः स्वपदार्थाननुगमादित्यनुगतहेतौ व्यभिचारः, पक्षतावच्छेदकस्याननुगतत्वेंऽशतो बाधः । एवमुत्पत्तिस्थलेऽवृत्तित्वनिवेशेनाप्युपपत्तिः प्रागभावे क्षणिकत्वस्यैव चरमध्वंसे तत्प्रसिद्ध्यैव निर्वाहात् । एवञ्च विशेष्यदलनिवेशोऽपि व्यर्थः । न्यायमते च आत्मनः प्रागभावाधिकरणक्षणानुत्पत्तिकत्वेऽपि तादृशक्षणवृतित्वविरहेण सिद्धसाधनानवकाशादित्यालोच्य उत्पत्तिद्वयं परित्यजति स्वाधिकरणेति । अत्र स्वाधिकरणसमयप्रागभावाधिकरणक्षणवृत्ति यद्यत् स्वं तत्तद्भेदकूट एवानुगतः साध्यः, अत एव न व्यभिचारः, न वांऽशतो बाधः । कस्यचिद्वस्तुनो स्थैर्ये तादृशं यद्यत्स्वं तदन्तर्भावात् तत्र निरुक्तभेदकूटवत्त्वं न निर्वहति इति वस्तुमात्रे तादृशभेदकूटसिद्ध्या सकलवस्तूनां स्थैर्यनिरासः ।

वस्तुतः स्वाधिकरणक्षणवृत्तित्व–स्वप्रतियोगिसमयवृतित्वोभयसम्बन्धेन प्रागभाववत्समयभेद एवात्र विवक्षितः । एतेन तत्तद्व्यक्तित्वावच्छिन्नभेदकूटस्य साध्यत्वे प्रागभावमात्रस्य तत्तद्व्यक्तित्वोपादाने सिद्धसाधनं,शब्दादेरप्युपादाने तत्र तद्भेदे बाधेन बाध इति दूषणं प्रत्युक्तम् । महाप्रलये चरमध्वंसे । ननु चरमध्वंसस्याधिकरण समयो महाकालो ध्वंसश्च, तयोः प्रागभावाप्रसिद्धेः महाकालस्य नित्यत्वात् , चरम-

**साधारणो बोध्यः। अन्त्ये कादाचित्काभावो वा तेनान्त्यभावव्युदासः(१)। स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोग्यवृत्तित्वं वा क्षणिकत्वम्। क्षणत्वं च**

---

ध्वंसो भविष्यतीति प्रत्ययस्य तत्प्रतियोगिविषयत्वात्तस्य च भावत्वेनाभावघटितप्राग-भावत्वासम्भवात्।

अथ प्रतियोगिन इव तत्प्रागभावस्यापि नाशे भविष्यत्ताप्रत्ययविषयत्वात् प्रति-योगिप्रागभावरूपचरमध्वंसः प्रसिद्ध्यतीति चेत्।

प्रसिद्ध्यतु तथापि चरमाभावे संयोगरूपे उक्तलक्षणानामतिव्याप्तिः, तदुत्तरं भावानुत्पत्त्या तदधिकरणसमयस्य तदुत्पत्तिक्षणवृत्तिभावरूपस्य यः प्रागभावः तदुत्तरो-त्पन्नध्वंसरूपसमयस्य वा यः स्वप्रतियोगिभावप्रागभावरूपः प्रागभावस्तस्य चरम-भावपूर्वकाल एव प्रवृत्तेः। न च प्रागभावत्वं विनाश्यभावत्वं, तत्र चाभावत्वनिवेशे प्रयोजनाभावात् स्वाधिकरणसमयप्रतियोगिकविनाशित्वेनैव प्रागभावस्य निवेशनीयतया। चरमाभावे स्वोत्पत्तिद्वितीयक्षणोत्पन्नध्वंसरूपस्वाधिकरणसमयप्रतियोग्यधिकरणक्षणवृ-त्तित्वान्नातिव्याप्त्यवकाश इति वाच्यम्। स्वाधिकरणसमयप्रतियोगित्वस्य तत्सम्बन्ध-साधारणतया स्वसमानकालोत्पन्नस्वाधिकरणसमयविषयकज्ञानस्वरूपतादृशसमयविष-यताधिकरणक्षणवृत्तितया घटादौ बाधापत्तेरभावत्वनिवेशस्यावश्यकत्वात् इत्यत आह प्रागभावश्चात्रेति। अत्र तल्लक्षणत्रये, भावाभावसाधारण इति। अनुयोगि-ताविशेषरूपाभावत्वस्य भावाभावसाधारण्यं विनाऽभावस्य नास्तीतिबुद्धिविषयत्वानु-पपत्त्या तेन रूपेण भावस्यापि सङ्ग्रहादिति भावः। एवं च चरमसंयोगद्वितीयक्षणोत्प-न्नध्वंसरूपतदधिकरणसमयस्य प्रतियोगिरूपप्रागभावाधिकरणे चरमसंयोगेऽवृत्ते-र्नातिव्याप्तिः। प्रागभावत्वं विनाश्यभावत्वं, तत्र च विनाशित्वस्थले उत्पत्तिविनाशा-न्यतरप्रतियोगित्वरूपकादाचित्कत्वनिवेशे भावव्यावृत्ताभावत्वविरोध्युत्पत्त्यघटितान्य-लक्षणे नातिव्याप्तिसम्भव इत्याह अन्त्य इति। कादाचित्केति। तथाच चरम-संयोगोत्पत्तिक्षणरूपतदधिकरणसमयस्य कादाचित्कोऽभावस्तद्ध्वंसस्तदधिकरणीभूत-द्वितीयक्षणवृत्तितया न तत्रातिव्याप्तिः। आदिलक्षणद्वये च चरमसंयोगाधिकरणसमय-स्य तदुत्पत्तिक्षणरूपस्य ध्वंसस्वक्षणे तदनुत्पत्तिद्वितीयक्षणोत्पन्नध्वंसरूपस्य च भाव-भिन्नो यस्तत्प्रतियोगिभावप्रागभावरूपस्तत्क्षणे च चरमसंयोगस्यानुत्पत्तेः कादाचित्का-भावनिवेशेऽप्यतिव्याप्तिरित्याशयेनेत्युक्तम्। कादाचित्कत्वं ध्वंसप्रागभावान्यतरप्रतियोगित्वं ध्वंसप्रागभावसंग्राहकं, तेन रूपेण स्वाधिकरणसमयाभावं निवेश्य तदधिकरणक्षणवृत्ति-त्वोपादानापेक्षया स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोग्यवृत्तित्वं लाघवादुपादातुमुचितमित्या-शयेनाह स्वाधिकरणेति।

---

(१) दीधितिटिप्पणीकृन्मते 'तेनान्त्यभावव्युदास' इत्यस्य पूर्वं 'अन्त्ये कादा-चित्काभाव' इति पठनीयम्।

स्वावृत्तियावत्स्ववृत्तिध्वंसप्रतियोगिकत्वम्, स्वावृत्तिध्वंसप्रतियोग्यनाधारत्वं वा। क्षणोऽपि वा नोपादेयः। भिन्नकालयोरनाधाराधेयभावो वा, वृत्तिर्वा कालिकी वक्तव्या, तेनातीतगोचरक्षणिकज्ञाने नांशतो बाधादिः। शब्दादिः स्वोत्पत्त्यव्यवहितोत्तरकालीनध्वंसप्रतियोगी न

---

अथ ध्वंसविशेषणवृत्त्यन्तानिवेशे भावमात्र एव बाध इति तदुपादानं, स्वाधिकरणक्षणस्यापि स्वाधिकरणक्षणवृत्त्यत्यन्ताऽन्योन्याभावाधिकरणतया उत्पत्तिघटितध्वंसत्वप्रवेशः। भावसाधारणप्रागभावत्वासत्त्वे पूर्वनिरुक्तस्ववृत्तिपदार्थप्रागभावानाधारत्वरूपक्षणत्वं चरमसंयोगकालोत्पन्नध्वंसेऽतिप्रसक्तं तत्काले भावप्रागभावासत्त्वादित्यत आह क्षणत्वं चेति। स्वावृत्तीति। यावन्तः स्ववृत्तिध्वंसप्रतियोगिनः स्वावृत्तयो यस्य तत्त्वमित्यर्थः। स्थूलकाले स्वद्वितीयक्षणाद्युत्पन्नानामपि ध्वंसानां स्ववृत्तितया तत्प्रतियोगिनां च निरुक्तयावदन्तर्गतानामाद्यक्षणावच्छेदेन स्ववृत्तित्वान्नातिप्रसङ्गः। पदव्यावृत्तिः स्फुटैव। ध्वंसप्रतियोगिनि स्वावृत्तित्वमुपेक्ष्य स्वस्मिन् प्रतियोग्यनधिकरणत्वनिवेशेन प्रतियोगिनि यावत्त्वानिवेशेन लाघवमभिप्रेत्य लक्षणान्तरमाह स्वावृत्तीति। स्वाधिकरणेत्यादिलक्षणे क्षणत्वनिवेशनमेव निष्फलं किन्त्वतिप्रसक्त्या, न्यायमते चरमध्वंसाधिकरणसमयमात्रस्यैव ध्वंसाप्रतियोगितया विशेष्याभावादेव निरुक्तक्षणिकत्वाप्रसिद्धिः, तन्मते च स्थूलकालानभ्युपगमेन बाधासम्भवादित्याशयेनाह— क्षणोऽपीति।

नन्वतीतगोचरज्ञाने तन्मतेऽप्यतीतविषये स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोगिनि विषयतया वर्तमानत्वसत्त्वात्तत्र निरुक्तक्षणिकत्वसाधने बाधः, अभावसाधने च सिद्धसाधनमत आह भिन्नेति।

ननु विषयतासम्बन्धस्य वृत्तिनियामकत्वे विषयतैव तेन सम्बन्धेनाधारता सा च स्वसमानकालीनविषय इव स्वासमानकालीनविषयेऽप्यविशिष्टेत्यत आह वृत्तिर्वेति।

इदमत्र बोध्यम्—निरुक्तलक्षणेऽनुयोगिनि स्वत्वनिवेशः, आत्मघटादिकं स्वपदेनोपादाय साध्यप्रसिद्धिसम्भवे तावतैव कृतार्थता, तदसम्भवे साध्याप्रसिद्धिर्दुर्वारैव, न हि प्रागभावचरमध्वंसरूपं स्वमेव साध्यघटकं तद्घटितसाध्यस्य पक्षे बाधात्, स्वपदेन पक्षमुपादाय प्रागभावादौ प्रसिद्धसाध्यस्य तत्र साधनं व्यभिचारेण निराकृतमेव। प्रतियोगिनं स्वपदेनोपादाय भेदकूटसाधने च तन्मते प्रतियोग्यप्रसिद्धिः। सत्त्वनिषिद्धप्रतियोगिनमादायाभावप्रसिद्ध्युपगमे च स्वाधिकरणसमयध्वंसावृत्तित्वमेव ज्यायः। स्वत्वघटितोत्पत्तिमत्त्वरूपविशेष्यदलघटितलक्षणित्वेऽननुगमनिबन्धनदोषो दुर्वारश्चेति।

मतान्तरमाह शब्दादिरिति। स्वोत्पत्तीति। स्थिरत्वेऽपि स्थितिक्षणानन्तरोत्पन्नध्वंसप्रतियोगित्वसम्भवादुत्पत्तीति। तदव्यवहितोत्तरत्वं तदधिकरणक्षणध्वंसोत्पत्त्यधिकरणक्षणध्वंसोत्पत्त्यधिकरणत्वम्। कालपदं क्षणपरम्, अन्यथा न्यायमतेऽपि घटादौ स्वोत्पत्तिक्षणध्वंसाधिकरणमहाकालादिवृत्तिध्वंसप्रतियोगित्वसत्त्वेन तत्र क्षणिकत्वासिद्धेः।

वा, स्वोत्पत्तिव्याप्यो न वा, व्याप्तिश्च कालिकी, विधिप्रसिद्धिरेकदेशिनामन्त्यशब्द इति केचित् । सत्त्वमुत्पत्तिव्याप्यं न वा इत्यादिकं तु न युक्तम् , तथा सति सत्त्वादेरेवोत्पत्तिव्याप्यत्वादिकस्य साधयितुमुचितत्वात् ।

अनुमितिकारणव्याप्तिपक्षधर्मताज्ञानजनकोदाहरणोपनयात्मकद्व्यवयववादी(१) बौद्धः क्षणिकत्वे मानमाह यत् सदिति । ( पृ० ५ पं० ३ ) स्थूलद्रव्याभ्युपगमेन घटो दृष्टान्तः प्रसाध्याङ्गकः, तथोत्पादविशिष्टो वा

स्वाधिकरणकालध्वंसाधिकरणत्वावच्छिन्नान्यकालवृत्तित्वं वा कालीनान्तार्थः ।

स्वोत्पत्तिव्याप्य इति । घटादेः स्थिरत्वे स्वोत्पत्त्यधिकरणद्वितीयादिक्षणे वर्तमानत्वान्न स्वोत्पत्तिव्याप्यतेति विधौ साधिते तन्निराकरणम् । स्थिरत्वेऽपि स्वोत्पत्त्यधिकरणदेशमात्रवृत्तौ स्वोत्पत्तेर्दैशिकी व्याप्तिरस्तीति न तत्र स्थैर्यनिराकरणसम्भव इत्याह व्याप्तिश्चेति । अत्रान्त्यस्य क्षणिकत्वस्य च चरमध्वंसे प्रसिद्धावपि नाद्यस्य तत्र प्रसिद्धिसम्भवस्तदधिकरणकालध्वंसाप्रसिद्धेरित्यत आह विधीति । अन्त्यशब्दस्य क्षणिकत्वमङ्गीकुर्वाणमेकदेशिनं प्रति निरुक्तक्षणिकत्वसाधने तस्यैवोभयसिद्धदृष्टान्तत्वसम्भवे तमुपेक्ष्य प्रसाध्याङ्गकघटरूपदृष्टान्तानुसरणविरोधः । हेत्वधिकरणे क्वचित्साध्यसत्त्वे तत्रैव व्याप्तिसिद्धिसम्भावनाग्रे प्रतिबन्धाऽसिद्ध्या अनुमानदूषणस्य तदुत्तरमङ्कुरमकुर्वाणादङ्कुरकारिणोऽसिद्धिशङ्कायाश्च विरोधः, स्वाधिकरणक्षणावृत्तिप्रागभावप्रतियोगिस्वाधिकरणक्षणान्यावृत्तित्वरूपस्वोत्पत्तिव्याप्यत्वापेक्षया स्वाधिकरणसमयप्रागभावाधिकरणक्षणावृत्तित्वादिकमेव लघु इत्यस्वरससूचनाय केचिदिति ।

सत्त्वमिति न्यायमते । सत्त्वेति । नित्ये उत्पत्तेरभावान्न सत्त्वस्योत्पत्तिव्याप्यतेति न सिद्धसाधनावसरः । विधिसाधनेन स्थैर्यनिराकरणासम्भवेऽपि आत्मनो देहाभिन्नत्वसाधकनित्यत्वनिराकरणेन तत्साधनं प्रकृते उपयुज्यते । सत्त्वादेरेवेत्येवकारः अर्थान्तरेण सतः क्षणिकत्वसाधनानौचित्यलाभाय ।

ननु प्रतिज्ञाहेत्वनुपन्यस्य प्रथमत एव यत्सदित्युदाहरणोपन्यासो विरुद्ध इत्याशङ्कां निराकर्तुमाहानुमितीति । इतरावयवानामनुमितिजनकज्ञानाजनकतया न्यायाङ्गत्वमनुचितमिति सूचनायोदाहरणोपनयनयोरनुमितिजनकज्ञानजनकत्वाभिधानम् ।

नन्ववयविद्रव्यस्य घटस्य तन्मतेऽलीकतया दृष्टान्तत्वविरोध इत्यत आह-स्थूलेति । तथापि तस्य न्यायमते स्थिरत्वात् साध्यवैकल्यमित्यत आह प्रसाध्येति । स्थूलद्रव्याभ्युपगममन्तरेणापि सङ्गमयतो मतमाह तथेति । तथोत्पादविशिष्टः निरन्तरीभूय य उत्पादस्तद्वान् क्षणिकः, वाकारश्च स्थूलद्रव्याभ्युपगमपक्षस्यापि तद-

---

( १ ) द्व्यवयवन्यायवादीति पाठान्तरम् ।

**परमाणुसमूहो घटः। असन्नेव वा व्यतिरेकदृष्टान्त(१) इति केचित्। विवादाध्यासित इत्येकदेशिमतेनान्त्यशब्दे अंशतः सिद्धसाधनवारणाय, स्वरूपकथनं वा(२), पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्याया अनुत्पन्नत्वेन तस्यादोषत्वात्। शब्दादिरिति। ( पृ० ६ पं० १) विभिन्नरूपेण पक्षत्वेऽपि न क्षतिः, समूहालम्बनरूपाया अनुमितेः सम्भवात्। केषाञ्चिद्विशिष्यानुपादानेऽपि न तत्र सन्दिग्धानैकान्तिकत्वं, गृहीतव्या-**

---

नुमितित्वलाभाय, एतावतापि प्रसाध्याङ्गकत्वं न परिहृतम्, तादृशपरमाणुसमूहस्यापि पक्षैकदेशत्वादत आह असन्नेवेति। घट इत्यनुषज्यते। अवयविविशेष इति तदर्थः। यद्यपि घटस्यासत्त्वपक्ष एव व्यतिरेकदृष्टान्ततासम्भवः, असत्त्वं च तस्य न्यायानुमतमतः प्रसाध्याङ्गकत्वं दुष्परिहरम्, तथापि प्रकृतानुमानेन घटस्य क्षणिकत्वं साधनीयम्, तत्साधने च घटदृष्टान्तेन प्रकृतानुमाननिर्वाह इत्यन्योन्याश्रयात्तस्यान्वयदृष्टान्तत्वानभ्युपगमः। असत्त्वस्य युक्त्यन्तरेण साधनीयतया व्यतिरेकदृष्टान्ततापक्षेऽन्योन्याश्रयाभावात्। अत्र च मते तथोत्पादविशिष्टपरमाणोरपि दृष्टान्तत्वसम्भवेन तद्विशिष्टतत्समूहपर्यन्तानुधावनं निर्बीजम्, यत् सत् तत्क्षणिकमित्यन्वयसहचारोपदर्शने सत्त्वक्षणिकत्वशून्यस्य दृष्टान्तविधयोपदर्शनेऽन्वय इत्यस्वरससूचनाय कश्चिदिति। न च स्वव्याख्याने उक्तानुमानं विनापि पूर्वोत्तरक्षणवृत्तिघटयोः कर्तृविशेषकारित्वतदकारित्वेन भेदसिद्ध्या क्षणिकत्वसिद्धिसम्भवेन तद्दोषानवकाशात्, सत्त्वावच्छेदेन क्षणिकत्वसिद्ध्यर्थमेतदनुमानोपगमात्। व्यक्तीभविष्यतीदमग्रे। अंशतः सिद्धसाधनेति। प्राचां मते अवच्छेदकावच्छेदेन साध्यसिद्धावपि तस्य दोषत्वमित्यभिप्रायेणेदम्। नव्यमतानुसारेणाह स्वरूपेति। अंशतः सिद्धसाधनदोषस्य कथमेवं परिहार इत्याकांक्षायामाह—पक्षतावच्छेदकेति। पक्षतावच्छेदकं च सर्वसाधारणमेकं शब्दत्वादिरूपं नानैवोभयथैव तदवच्छेदेन साध्यवत्त्वमुभयासिद्धम्।

ननु विवादास्पदत्वपरित्यागे सर्वसाधारणपक्षतावच्छेदकालाभः शब्दादित्वस्य शब्दत्वादिधर्मसमूहरूपस्यानभ्युपगमात, तथाच नैकानुमितिनिर्वाहः तावदनुमितीनां चैकदाऽसम्भवेन विवादाशान्तिरित्याशंक्याह विभिन्नरूपेणेति। असमूहालम्बनरूपाया एकस्या अनुमितेर्विषयत्वानुगमस्य ज्ञानाभेदकत्वादिति भावः।

नन्वेवमपि विशिष्य सर्वेषां पक्षाणामेकदा प्रतिपादनासम्भवेन यत्र पक्षवाचकोक्तपदार्थस्यानुपस्थितिस्तत्र व्यभिचारसंशयसम्भवेनानुमानासम्भव इत्यत आह—केषाञ्चिदिति। तत्र पक्षवाचकपदानुपस्थितौ, सन्दिग्धानैकान्तिकत्वम्, दोषायेति शेषः। गृहीतव्याप्तिकस्येति। साध्याभावादिमत्त्वेन तादृशधर्म्यनुपस्थितिदशा-

---

( १ ) व्यतिरेके दृष्टान्त इति कश्चित् इति पाठान्तरम्।

( २ ) कथनमात्रं वेति पाठान्तरम्।

तिकस्य हेतोस्तत्र परामर्शेऽनुमितेरेवोदयात् । पक्षत्वेनोपन्यासस्या-किञ्चित्करत्वात् । प्रामाणिकत्वार्थक्रियाकारित्वरूपयोः सत्त्वयोरेकत रस्य पक्षतावच्छेदकत्वं हेतुत्वं चान्यतरस्य । पक्षतावच्छेदकस्य हेतुत्वेऽपि न दोषः । व्याप्तिग्रहेण हेतौ साध्यसामानाधिकरण्यावगाहनेऽपि हेतुमान् साध्यवान् इति हेतुमत्त्वावच्छेदेन हेतुमद्विशेष्यकसाध्यवत्त्वबुद्धेरुद्देश्याया(१) अप्रसिद्धेः । प्रतिबन्धो व्याप्तिः ॥

---

यामन्यत्र सहचारनिश्चितव्याप्तिकस्येत्यर्थः । हेतोः सत्त्वस्य, तत्र धर्मिणि । अनुमितेरेवोदयादिति । पक्षवाचकपदेन तदबोधनेऽपि तस्य पक्षतया अक्षतत्वात् तत्र व्यभिचारसन्देहस्याकिञ्चित्करत्वात्तत्र हेतुमत्ताज्ञाने च व्यभिचारज्ञानस्यैवाभावादिति भावः । पक्षत्वेनोपन्यासस्य पक्षवाचकपदबोधितत्वस्य, अकिञ्चित्करत्वात् पक्षत्वाव्याघातकत्वात् । इदमुपलक्षणम्—तादृशधर्मिणोऽनुमितावभानेऽपि व्याप्तेर्गृहीतत्वादनुमितौ व्यभिचारग्रहस्य साक्षादविरोधित्वाद्व्यभिचारसंशयोऽकिञ्चित्कर इति बोद्धव्यम् ।

न चाऽनुगतपक्षतावच्छेदकदुर्भिक्षमित्याह प्रामाणिकत्वेति । आचार्यैः पक्षतावच्छेदकस्य हेतुत्वानभ्युपगमात् तन्मतमनुरुद्ध्य सत्त्वपदार्थस्य द्विरूपतां प्रदर्श्य साधने पक्षतावच्छेदकाभाव उपपादितः । प्रवादमननुरुद्ध्य वस्तुविचारे पक्षतावच्छेदकस्यापि हेतुत्वं सम्भवतीत्याह पक्षतावच्छेदकस्येति ।

नन्वन्वयव्याप्तौ हेतुसाध्यसामानाधिकरण्यप्रवेशात् व्याप्तिग्रह एव, तत्सिद्धौ हेतुविशिष्टे साध्यानुमितिः सिद्धसाधनेन न सम्भवति, अनुमेयस्य साध्यपक्षतावच्छेदकसामानाधिकरण्यस्य सिद्धत्वादिति हेतोः पक्षतावच्छेदकानभ्युपगमबीजं दूषयति—व्याप्तीति । इति इत्याकारयोः । एतेन समानाकारा सिद्धिरेव विरोधितया हेतुः, स्वव्यापकसाध्यसमानाधिकरण इति व्याप्तिग्रहस्यासमानप्रकारकतया नानुमितिप्रतिबन्धकत्वमिति सूचितम् ।

ननु परार्थस्थले यो हेतुमान् स साध्यवानित्युदाहरणाद्धेतुमद्विशेष्यकसाध्यवत्त्वबुद्धेरुत्पन्नत्वादुदाहरणवाक्याद्धेतुः साध्यसमानाधिकरण इति शाब्दज्ञानासम्भवेनैतादृशमानसज्ञानस्यावश्यं स्वीकरणीयतया तद्दशायां हेतुमान् साध्यवानित्याकारकबुद्धेरपि सम्भवात् दुर्वारमेव सिद्धसाधनमित्यनुशयेनाह हेतुमत्त्वावच्छेदेनेति । तथाच व्याप्तिबुद्धौ हेतुमति साध्यवत्त्वभानेऽपि हेतुमत्त्वावच्छेदेन साध्यवत्त्वाभानान्नोद्देश्यसिद्धिरिति भावः । यद्यप्यवच्छेद्यावच्छेदकभावो व्याप्यव्यापकभाव एव प्रकृते, स च प्रागेव भातः । न च प्रकारतया जनकज्ञाने तद्भानेऽपि संसर्गतया तद्भानमनुमानादेवेति वाच्यम् । संसर्गतया तद्भानस्याधिकप्रयोजनाभावात् । हेतुमत्त्वसामानाधिकरण्येन सा-

---

(१) असिद्धेरिति पाठान्तरम् ।

भेदसिद्धाविति । ( पृ० ७ पं० १ ) अङ्कुरमकुर्वाणादङ्कुरकारिण इव तदकुर्वाणात् तत्कारिणः, एवं तत्तदकुर्वाणात् तत्तत्कारिणो भेदसिद्धया क्षणिकत्वसिद्धौ तेषु (१)क्षणिकत्वसत्त्वयोर्व्याप्तिसिद्धिरित्यर्थः। सिद्धव्याप्तिकाच्च तस्मात् सन्मात्रे क्षणिकत्वानुमानमिति । किञ्चित्सामर्थ्यादि-

---

र्थ्याभावर्वकायास्तु साध्ये व्यापकताप्रकारकनिश्चयादपि निवृत्तेः, मानसज्ञाने प्रकारतया तज्ज्ञाने संसर्गतया तज्ज्ञानेऽपि बाधकाभावात् । तथापि सामान्यप्रत्यासत्त्यनभ्युपगमेऽनुमानं विना सकलहेत्वधिकरणे साध्यवत्त्वसिद्ध्यसम्भवादनुमानसार्थक्यं, तादृशसिद्धिमन्तरेण सर्वत्र हेतुमति न साध्यस्य प्रामाणिकत्वनिर्वाह इति तस्या उद्देश्यत्वम् । तादृशानुमितिश्च भिन्नधर्मिकसिद्धेरविरोधत्वोपगमेन निर्वाहयिष्यत इति भावः ।

नन्वङ्कुरसामर्थ्यतदसामर्थ्याभ्यां कुशूलस्थबीजाङ्कुरकारिबीजयोर्भेदसिद्धावपि नाङ्कुरमकुर्वाणस्य कुशूलस्थबीजस्य क्षणिकत्वसिद्धिः, तादृशस्याङ्कुरजन्यपूर्वतृतीयक्षणपर्यन्तावस्थाने बाधकाभावादिति कथं बीजपरम्परायां क्षणिकत्वसत्त्वयोर्व्याप्तिरिति शंकां परिजिहीर्षुर्व्याचष्टे अङ्कुरेति । अङ्कुरमकुर्वाणादिति । अङ्कुरपूर्वतृतीयक्षणस्थबीजादिति शेषः । तदकुर्वाणात्--अङ्कुरकारिबीजमकुर्वाणादङ्कुरपूर्वचतुर्थक्षणस्थबीजात् । तत्कारिणः—अङ्कुरकारिबीजकारिणोऽङ्कुरोत्पत्तिपूर्वतृतीयक्षणस्थबीजस्य भेदसिद्धेरित्यग्रिमेणान्वयः । तत्तदकुर्वाणादङ्कुरकारिबीजकारिबीजतत्कारिबीजादिकमकुर्वाणादङ्कुरपूर्वपञ्चमषष्ठादिक्षणस्थबीजात् , तत्तत्कारिणः-अङ्कुरपूर्वचतुर्थपञ्चमादिक्षणस्थबीजसन्तानस्य, तेष्वङ्कुरप्रयोजकबीजसन्तानेषु । यद्यप्यङ्कुराव्यवहितपूर्वक्षणवृत्तितत्कारिबीजस्य तत्पूर्वक्षणवृत्त्यङ्कुराकारिबीजाद्भेदसिद्ध्याङ्कुरकारिबीजस्य क्षणिकत्वसिद्धावेव तत्र व्याप्तिसिद्धिसम्भवः, तथापि भूयःसु स्थानेषु सहचारदर्शनस्य व्याप्तिग्राहकत्वाभिप्रायेण भूयःसु क्षणिकत्वसिद्ध्यनुसरणम् सिद्धिसौकर्येण वा । ननु तत एव क्षणिकत्वसिद्धावनुमानवैयर्थ्यमित्यत आह सिद्धेति । तस्मात्—सत्त्वात् । सन्मात्र इति । मात्रपदं कृत्स्नपरम् , तथाच सन्मात्रेऽनुमानं विना न क्षणिकत्वसिद्धिः, सर्वत्रोक्तयुक्त्यनवतारादित्यनुमानसार्थक्यमिति भावः ।

ननु विरुद्धधर्म्मसंसर्गासिद्धेरित्यस्य कोऽर्थः ? बीजसामर्थ्यासामर्थ्येऽसिद्धे इति, किं वा सामर्थ्यासामर्थ्ययोर्विरोध एव नास्तीति वा ? नाद्यः करणाकरणादिरूपयोः सामर्थ्यासामर्थ्ययोर्न्यायमतेऽपि सत्त्वात् । न द्वितीयः । स्वरूपयोग्यत्वतदभावरूपयोस्तयोर्विरोधस्य न्यायमतेऽपि सत्त्वादित्यत आह किञ्चिदिति । अभिन्नत्वेनाभ्युपगतबीजे उभयसिद्धकारित्वतदभावादिरूपमित्यर्थः । किञ्चिच्चेति । स्वरूपयो-

---

( १ ) दीधितिटिप्पणीकृन्मते तेष्विति नास्ति ।

**कमविरुद्धं किञ्चित्त्वासिद्धमित्याशयेनाह** विरुद्धेति । प्रसङ्गेति । **यद्यदा यत्कार्यमङ्कुरं वा प्रति समर्थं तत् तदा तत् करोति, यथा सहकारिमध्यमध्यासीनबीजम्(१), अङ्कुरसमर्थं च तदानीं कुशूलस्थबीजमुपेयते परैरिति प्रसङ्गः। यद्यदा यत्कार्यमङ्कुरं वा न करोति तत् तदा न तत्समर्थं, यथा यावत्सत्त्वमङ्कुराकारि शिलाशकलमङ्कुरासमर्थम्,**

---

यत्त्वतदभावरूपं चेत्यर्थः । **असिद्धमिति** । अभिन्नत्वेनाभ्युपगतबीजे न्यायमतासिद्धमित्यर्थः । तथाच तादृशबीजे **विरुद्धयोरसिद्धे**रित्यर्थकमूलस्य नासङ्गतिरिति भावः ।

प्रसङ्गबीजभूतां व्याप्तिं दर्शयति **यदित्यादिना । यद्यदेति ।** यत्कालावच्छिन्नं यदित्यर्थः । कार्यसामान्यमादाय सामान्यमुखव्याप्त्यापि विशेषतोऽङ्कुरसामर्थ्येन विशेषव्याप्तिग्राहकदृष्टान्तसौलभ्येन गृहीतविशेषव्याप्तिकेनापि तेन विशेषतोऽङ्कुरकारित्वप्रसक्तिसम्भवात् सामान्यव्याप्तिं विशेषव्याप्तिं च दर्शयति–**यत्कार्यमङ्कुरं चेति** । एवं यदित्यत्र कुशूलावस्थानकालं विशिष्योपादायापि व्याप्तिर्बोध्या, तदानीमपि कस्यचिदङ्कुरोपधायकत्वेन दृष्टान्तसौलभ्यात् । सहकारिमध्यमध्यासीनमिति यत्र । सहकारिसमवहितं कार्यान्तरजनकं तथाविधक्षेत्रस्थबीजं चेत्यर्थः । आपादकस्य पराभ्युपगमेन प्रसक्तिं दर्शयति **अङ्कुरसमर्थं चेति । इती**त्यतः, **प्रसङ्गः** कुशूलस्थदशापन्नं बीजं यद्यङ्कुरसमर्थं स्यात्तदा तादृशमेवाङ्कुरं कुर्यादिति प्रसङ्गप्रवृत्तिः । अयं च विषयपरिशोधकस्तर्कः कुशूलस्थबीजे असामर्थ्यसाधकविपर्ययानुमाने आहार्यविपरीतशङ्कासामग्रीविघटकतयोपयुज्यते । व्यतिरेकसहचारेणाप्यन्वयव्याप्तिर्गृह्यते इति मन्यमानैराचार्यैर्व्यतिरेकव्याप्तेरन्वये गमकतानभ्युपगमात् विपर्ययानुमानोपयोगिनीमन्वयव्याप्तिमेव सम्भवाभिप्रायेणान्वयदृष्टान्तेन दर्शयति **यद्यदेति** । यदा तदेति प्रतियोगिन्येवान्वेति न तदभावे, प्रतियोगिनि कालान्वये तत्कप्रसङ्गे यद्यद्रूपावच्छिन्नयोरापाद्यापादकभावस्तत्तद्रूपावच्छिन्नाभावयोर्न हेतुसाध्यभाव इति विरोधात् । न च तावता क्षतिविरहः, विशिष्टापादकनकस्य विशिष्टापादककोटिकशङ्कादिसामग्रीसंपादकत्वेऽपि विशेष्यकोटिकशंकासामग्रीसम्भवेन विशेष्याभावनिश्चयानिर्वाहाद्विशेष्याभावानुमानाप्रवृत्तेः । न च कालस्य प्रतियोगिविशेषणत्वे सामर्थ्यसामान्यविरोधिनोऽसिद्धिः, कुशूलावस्थानकालावच्छिन्नं यत्सामर्थ्यं तदभावस्य तादृशेनैव समं विरोधादिति कालान्तरे तस्यैव सामर्थ्यं नानुपपन्नमिति वाच्यम् । स्वरूपयोग्यतारूपसामर्थ्यस्य यावद्द्रव्यानुस्थायितया तद्वृत्तिकिञ्चित्कालावच्छिन्नतदभाववत्त्वासम्भवात्तादृशाभावस्य सामर्थ्यमात्रविरोधित्वात् । विपर्यये पक्ष-

---

(१) सीनं बीजमिति पाठान्तरम् ।

त्तिभेदानुपपत्तेः। व्यावर्त्यभेद एकेन व्यावर्त्यस्य विशेष्यस्य भेदोऽपर-व्यावर्त्यात्, एकोपगृहीतस्यापरेण परित्याग इति यावत्। स च त्रिविधः एकोपगृहीतस्य अन्येन नियमतः परित्यागः, कस्यचिदुपग्रहे सति कस्यचित्परित्यागश्च। असावप्येकतरमात्रेण परस्परेण च। तत्राद्यो विरुद्धयोरेव, मध्यमो व्याप्यव्यापकयोरेव, चरमो व्यभिचारिणोरेव। तादृशेन भेदेन विरोध ऐक्यानुपपत्तिः। तन्मूलं व्यावृत्तिभेद-

---

योरापादकापाद्याभावविरहादिति भावः। असमर्थाकारिव्यावृत्त्योरभावरूपयोः सामर्थ्यकारित्वरूपभावाभ्यामतिरिक्तत्वाभिमानेनेदम्। व्यावर्त्यभेदेन विरोधो हि तन्मूल( पृ० ८ पं० २ )मित्यत्र तत्पदपरामर्शनीयो व्यावृत्तिभेदो अव्यवहितवाक्येऽपि प्रक्रान्त इति सूचयितुं तदनुपपत्तेरित्यत्र तत्पदस्य तत्परामर्शकतां स्पष्टयति तदनुपपत्तेरिति। धर्मान्तरव्यावर्त्यभेदस्य धर्मान्तरविरोधाप्रयोजकत्वात्तयोर्मिथो विरोधाद्भेदस्तदेकतरव्यावृत्तिप्रतियोगिकभेदपरतया व्यावर्त्यभेदं व्याचष्टे व्यावर्त्येति। व्यावर्त्येतिपदस्य तत्साध्यव्यावृत्तिप्रतियोगियद्धर्माश्रयशङ्कां निराकर्तुं व्याचष्टे—विशेष्यस्येति। स्वयमेकविधो व्यावर्त्यप्रतिक्षेपादिरूपतया स च न मिथोव्यावर्त्यप्रतिक्षेपादित्यादिना वितर्कयिष्यते इति स्पष्टयितुं विशेष्यत्वमप्याश्रयत्वं पर्यवसितम्, न त्वितरविभिन्नतया ज्ञाप्यत्वं यथाश्रुतमेव गौरवादिति स्पष्टयितुं चाश्रयणार्थकोपग्रहपदं प्रतिक्षेपार्थकापरित्यागपरतया व्याचष्टे एकेति। एकधर्माश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वमपरस्येत्यर्थः। अस्योभयथा वितर्कसङ्गमनायोभयरूपतामाह—स चेति। एकोपगृहीतस्येति। एकाश्रयसामान्यनिष्ठभेदप्रतियोगितावच्छेदकत्वमित्यर्थः। कस्यचिदिति। एकधर्मस्य यत्किञ्चिदाश्रयवृत्तित्वे किञ्चिदाश्रयभेदप्रतियोगितावच्छेदकत्वमपरस्यार्थः। द्वितीयपक्षस्यापरापरभूतयोरिव परस्परव्यभिचारिणोरपि सम्भवात् परापरभावदूषणेन तन्निराकरणमाचार्याणां न सम्भवति, अतस्तत्संसर्गतया द्वितीयपक्षस्यापि द्वैरूप्यमाह असावपीति। एवं चोभयरूपद्वितीयपक्षस्यैव एकतररूपदूषणपरतया तत्सङ्गतिः। एकतरमात्रेणेति। कस्यचिदुपग्रहे सति कस्यचित्परित्याग इत्यनुषज्यते। एवमुत्तरत्रापि एकतरस्य स्वाश्रयपरित्यागादपरस्य यत्किञ्चिदाश्रयपरित्यागः। स्वाश्रयनिष्ठभेदप्रतियोगितानवच्छेदकापरधर्माश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वरूपोऽपरस्य स्वाश्रयपरित्यागव्यवच्छेदकमात्रपदलभ्योऽर्थः। परस्परेण चेति। एकतरस्य यत्किञ्चित्स्वाश्रयपरित्यागे स्वाश्रयोपग्राहकापरस्य यत्किञ्चिदाश्रयपरित्याग इत्यर्थः। स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति स्वाश्रयवृत्तियोऽपरस्तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वमिति यावत्। विरुद्धवारणाय स्वाश्रयोपग्राहकत्वनिवेशः। एतावता त्रिरूपस्य व्यावर्त्यभेदस्य परस्पर सङ्करं दर्शयति तत्रेति। परस्परासामानाधिकरण्यरूपविरोधे। द्वितीयतृतीयपक्षस्याप्रयोजकत्वाद्विरोधं व्याचष्टे ऐक्यानुपपत्तिरिति। अभेदाप्रसक्तिरित्यर्थः। स च

**मूलं तच्चेह नास्तीति ॥**

**तदेव व्युत्पादयति** स चेति । **स विरोधः ।** मिथ इत्यादि । **व्याव-र्त्यस्य नियमेन प्रतिक्षेपात्, प्रतिक्षेपमात्रस्य व्यभिचारिसाधारण्यात् । एतावतैव सामञ्जस्ये** मिथ इति **व्यावृत्त्योरसामानाधिकरण्यस्य स्फुटतर-प्रतिपत्तये ।** बाधासिद्धी **धर्मिणि साध्यसाधनयोरभावौ । तथा चासम-**

नतावदित्यादिना विरोधाप्रयोजकानां वितर्क्यनिराकरणादर्थतो लभ्यमपि व्यावृत्तिभेद-मूलविरोधस्य प्रकृतेऽसत्त्वं स्फुटत्वात्पूरयति **तच्चेह नास्तीति ।**

**तदेव** व्यावृत्तिभेदमूलविरोधासत्त्वमेव, **व्युत्पादयति**-प्रयोजकविरहेण व्यव-स्थापयति । **स** चेत्यस्य व्यावर्त्यभेदश्चेत्यर्थकत्वं न सम्भवति, व्यावर्त्यभेदस्यैव व्यावर्त्यप्रतिक्षेपरूपतया हेतुहेतुमद्भावेन कथनविरोधात् । न च व्यावर्त्ययोर्भेदे व्यावृ-त्त्योः परस्पराधिकरणावृत्तित्वरूपव्यावर्त्यप्रतिक्षेपस्य तदर्थकवाक्यस्य हेतुतयोपन्यासे न विरुद्ध्येदिति वाच्यम् । तावता प्रयासेन विरोधमूलव्यावर्त्यभेदप्रयोजकव्यावर्त्यप्रति-क्षेपनिराकरणं, तावता व्यावर्त्यभेदस्यैव निराकरणसम्भवे व्यावर्त्यभेदाद्भेदेन सम्भव-त्तद्धेतुताकधर्मान्तरनिराकरणानौचित्यात् । **तन्मूल**मित्यत्र तत्पदस्य व्यावृत्तिपराम र्शनीयो व्यावृत्तिभेदो न स चेत्यस्याऽपि सम्भवति, व्यावृत्तिमूलभूतविरोधस्य प्रकृते प्रयोजकाभावेनाऽसत्त्वव्युत्पादनयैव मूलत्वेन व्यावर्त्यभेदप्रयुक्तविरोधोपन्यासात्, तद-व्युत्पादने तदविरोधादतो विरोधपरं तत्पदं व्याचष्टे **व्यावर्त्यस्य नियमेनेति,** पूरणं, तत्प्रयोजनं दर्शयति **प्रतिक्षेपमात्रस्येति ।** नियमगर्भकिञ्चिदाश्रयप्रतिक्षे-पस्येत्यर्थः । **व्यभिचारिसाधारण्यात्**-तन्निष्ठव्यभिचारप्रतियोगिसाधारणत्वात् । तन्मूलवृत्तिसाधारणत्वादिति यावत् । तथाच मिथोव्यावर्त्यप्रतिक्षेपस्य परस्परसमाना-धिकरणविरोधितया **तथासतिविरोधा**दित्यग्रिमग्रन्थविरोधापत्तिरिति भावः ।

ननु नियमांशपूरणे मिथ इत्यनर्थकं स्वाश्रयसामग्र्या प्रतिक्षेपकं यत् तदाश्रयसा-मान्यप्रतिक्षेपकतायाः स्वस्मिन्नावश्यकतया व्यावर्त्याभावादित्यत आह **एतावतैवे-ति।** व्यावृत्त्योर्व्यावृत्तिद्वयेऽसामानाधिकरण्येऽपि, परस्परासामानाधिकरण्यस्य **स्फुट-तरेति । स्वस्मिन्** तदसामानाधिकरण्यप्रतिपत्तावर्थतस्तत्र स्वसामानाधिकरण्यप्रतिप-त्तिसम्भवेऽपि झटिति तत्प्रतिपत्त्यर्थमित्यर्थः । उभयत्र प्रत्येकमुद्रया सामानाधिकर-ण्याप्रतिपत्तावेव समानधर्मिकव्यावर्तकधर्मदर्शनेनोभयधर्मिकोपाधिभेदशङ्कानिरासात् तत्प्रतिपत्त्ययोगः ।

ननु **बाधासिद्ध्योरि**त्यसङ्गतम्, आपत्तौ बाधस्यानुगुणतयाऽदोषत्वात्, हेतोः पक्षे सत्त्वेऽपि तत्प्रसक्त्यार्थपत्तिसम्भवेन तदतिरिक्तसिद्धेरप्यकिञ्चित्करत्वात् प्रतियोगिनो-र्विरोधेऽपि विपर्ययस्याऽतथात्वात्, एकाभावेनापराभावरूपसाधने बाधासिद्ध्योरन्यतर-प्रसङ्गाच्चेत्यतो व्याचष्टे **बाधासिद्धीति ।** एकतराभाव इत्यस्य व्यावृत्तिवाचकापरश-ब्देन एकतरशब्दस्य कर्मधारयाभिप्रायेण विवरणमसमर्थाकारिव्यावृत्त्योरेकतरसत्त्वा-

र्थाकारिव्यावृत्त्योरेकतरसत्त्वे ऽन्यतराभावनियमेन सामानाधिकरण्यविरहे प्रसक्ते विरोधो विपर्यये च व्यभिचार इति भावः ॥

नापीत्यादि। तयोरेकेन व्यावर्त्ययोः, अपरेणाक्षेपप्रतिक्षेपाभ्यां परिग्रहपरित्यागाभ्यां द्विविधाभ्यामुपदर्शिताभ्यां वृक्षत्वशिंशपात्ववत् यवत्वाङ्कुरत्वकुर्वद्रूपवच्च(१)। परापरभावेति (पृ० ९ पं० १)। मिथो व्यभिचारस्याप्युपलक्षकम्। परापरभावस्य मिथो व्यभिचारस्य चाभ्युपगमे दोषमाह—अभ्युपगमे वेत्यादिना। सामर्थ्यस्य परत्वे समर्थस्याप्यकरणं कारित्वस्य परत्वे तु असमर्थस्यापि करणं मिथो व्यभिचारे तूभयं प्रसज्येत। तथा च समर्थस्याकरणे व्यभिचारः, असमर्थस्य करणे तु(२) विरोधः, विरोधाय च दत्तो जलाञ्जलिः क्व विरुद्धधर्माध्यास इति भावः ॥

---

इति। अन्यतराभावनियमेनेति। धर्मिणीत्यादिः, धर्मिण्यसमर्थाकार्यकारिव्यावृत्त्योर्व्याप्यव्यापकाभिमतयोर्यौयावभावौ तदन्यतरनियमेनेत्यर्थः। एतच्च बाधासिद्ध्योरन्यतरप्रसङ्गादित्यस्य विवरणम्। तावता दोषं आशयरथं स्पष्टयति—सामानाधिकरण्येति। विरोधः विरोधेन व्याप्त्यसिद्धिः। एवं चाग्रस्तनं विरोधादिति मूलं न सामानाधिकरण्यार्थकं किन्तु परस्परव्यापकभेदप्रतियोगितावच्छेदकत्वादित्यर्थकम्, सामानाधिकरण्यविरहरूपविरोधो यो हेतुस्तद्धेतुतया तादृशविरोधोपन्यासासङ्गतेः। विपर्यये अकारिव्यावृत्ति-असामर्थ्यव्यावृत्तिव्यतिरेकसाधने, व्यभिचारः व्यावृत्त्योर्विरोधेऽसमर्थव्यावृत्तिरूपे साध्याभावे अकारिव्यावृत्तिव्यतिरेकिरूपहेतोः सामानाधिकरण्यावश्यम्भावादिति भावः।

व्यावर्त्ययोरित्यनेनोपस्थितव्यावृत्तिद्वये प्रत्येकेनाक्षेपान्वयः। उपदर्शिताभ्यामिति। असमर्थाकार्येकतरमात्रेण परस्परेण, परस्परेत्यनेनास्य सायत्यादिः(१)। एतच्च न्यूनताभङ्गार्थमुपपक्षनिराकरणलाभाय। द्वितीयपक्षे दृष्टान्तं पूरयति यवत्वेति। ययोः परस्परं कुशलस्थावयवे क्षेत्रस्थशाल्योर्व्यभिचारः। द्वितीयपक्षनिराकरणहेतुताकाभाय व्याचष्टे—मिथो व्यभिचारस्याप्युपलक्षकमिति। एकतरमात्रस्य पक्षत्वे उभयप्रसङ्गासङ्गतेः। असमर्थाकारिव्यावृत्त्योरेकैकपरत्वाभ्युपगमे प्रत्येकं प्रसङ्गद्वयं सङ्गमयति। न्यूनताभङ्गाय मिथो व्यभिचारपक्षे प्रसङ्गद्वयस्यैव व्यापकतापरत्वं दर्शयति मिथ इति। प्रसङ्गयोरित्यापत्तिशङ्कां निरस्यति तथाचेति। व्यभिचारः तर्कानुमानयोर्मूलीभूतव्याप्त्योः, अकरणे अकरणोपगमे, असमर्थस्य करणे करणोपगमे असामर्थ्याकारित्वयोरुभयथा सिद्धो विरोधो बाधकः।

ननु मया तयोर्विरोधो नाङ्गीकार्य इत्यत आह विरोधाय चेति। क्व विरु-

---

(१) यवत्वाङ्कुरकुर्वद्रूपत्ववच्चेति पाठान्तरम्।

(२) असमर्थस्य तत्करणे इति पाठान्तरम्।

ननु माभूदिह स्वव्यावर्त्यभेदेन विरोधः, स्वावच्छेदकोपाधिव्याव-र्त्यभेदेन तु स्यात् प्रागभावत्वध्वंसत्वलक्षणावच्छेदकोपाधिव्यावर्त्यभेदा-दिव कार्यत्वानित्यत्वयोरित्याशङ्क्य निराकरोति नापीति। कार्यत्वेति। परेषामभावस्यालीकत्वेन वास्तवस्य व्यावर्त्यस्य विरहेऽपि व्यावहारिकं तद्बोध्यम्(१)। प्रागभावावच्छिन्नं सत्त्वं कार्यत्वं ध्वंसावच्छिन्नं चानि-त्यत्वम्। स्वमतेनोक्तमित्यपि केचित्। शब्दमात्रं बोधक(२)शब्दवृत्ति-

रुद्धधर्माध्यास इति। असमर्थस्यापि कारित्वोपगमे कुशलस्थक्षेत्रस्थयोरुभयोरेवा-सामर्थ्यस्वीकारसाधकाभावादिति भावः।

एकस्मिन्नपि नानाधर्मोपधानात् उपाधिभेदेनानुपपत्तिरिति यथाश्रुतासङ्गतेः, नाप्युपाधिभेदादित्यदोषार्थमाह नन्वित्यादि। स्वावच्छेदकस्य विशेषणस्यो-पाधिर्विशेषणं तद्भेदादित्यर्थः। एतादृशहेतुं कार्यत्वानित्यत्वरूपदृष्टान्तेन घटयति प्रागभावत्वेति। व्यावर्त्यभेदादिति। प्रागभावध्वंसरूपस्येत्यादिः।

ननु परेषामभावरूपयोर्ध्वंसप्रागभावयोरसत्त्वेन कथं तद्भेदस्य भेदकतेत्यत आह—परेषामिति।

ननु कार्यत्वानित्यत्वे प्रागभावध्वंसप्रतियोगित्वे, तत्र स्वव्यावर्त्यध्वंसप्रागभाव-भेदादेव भेदो न तदनुरोधेनोक्तस्य भेदकत्वमतो ध्वंसप्रागभावव्यावृत्तं तदुभयसत्त्व-मन्तर्भाव्य निर्वक्ति प्रागभावेति। प्रागभावत्वध्वंसत्वयोः स्वावच्छेदकोपाधित्व-निर्वाहाय प्रतियोगित्वमुपेक्ष्य ध्वंसप्रागभावयोरवच्छेदकत्वदर्शनम्। न च उभयत्र विशेष्यसत्त्वस्य भेदविरहेऽपि विशेषणभेदेन विशिष्टवैलक्षण्यवत् प्रकृतेऽपि यदि वैल-क्षण्यं स्यात् तदापि स्पष्टवैलक्षण्यं दृष्टान्तेऽपि तथाभावादिति वाच्यम्। व्यावर्त्यभे-देनेत्यादिमूलानुरोधेन तदवच्छेदकताया अपि व्यावर्त्यभेदपरताया आवश्यकतया तथा व्याख्यानात्। मतान्तरमाह—स्वेति। तन्मते ध्वंसप्रागभावयोरलीकपरतया न प्रागभावध्वंसप्रतियोगित्वमिति न तयोस्तद्व्यावर्त्यतेति सत्त्वान्तर्भावेऽपि न क्षति-रिति भावः। अलीकयोरपि ध्वंसप्रागभावयोर्यदि ध्वंसप्रागभावत्वरूपावच्छेदकोपाधि-व्यावर्त्यता, तदा ध्वंसप्रतियोग्यभावत्वरूपप्रागभावत्वघटकध्वंसप्रतियोगित्वव्यावर्त्य-प्रागभावस्य तुल्ययुक्त्या प्रागभावप्रतियोगित्वस्य च ध्वंसस्य दुर्वारमेवेत्यस्वरसः।

शब्दमात्रपदे व्यावर्त्यभेदेनार्थभेदस्तादृशोपाधिता शब्दस्य न सम्भवति यदि अर्थस्यैव तद्व्यावर्त्यत्वादतः शब्दधर्मपरतया व्याचष्टे—शब्देति। आनुपूर्वीभे-दादिरिति। आनुपूर्वीविशेषभेदादिरित्यर्थः। अत्र यदि आनुपूर्वीविशेषावच्छिन्न-शक्तिपरिग्रहः आनुपूर्वीभेदरूपोपाधिताया उभयसिद्धतया निराकरणायोगात् शे-

(१) मन्तव्यम् इति पाठान्तरम्

(२) शब्दमात्रबोधकेति पाठान्तरम्।

रानुपूर्वीभेदादिः। उपाधिर्विरोधसम्पादक इति शेषः। पर्यायेति। बोधकशब्दभेदेन बोध्यव्यावृत्तिभेदे पर्यायोच्छेदः। भिन्नयोरभिन्नप्रवृत्तिनिमित्तकत्वं पर्यायत्वम् ॥

विकल्पभेद इति। ( पृ० १० पं १ ) उपाधिरित्यादिकमनुषज्यते। भेदप्रसङ्गादिति। तथा च व्याप्तिपक्षधर्मज्ञानाभ्यां विषयीकृतयोर्भेदे क्व प्रसङ्गादिवार्तेति भावः ॥

प्रातिस्विकी प्रतिकारणजातीयनियता। सिद्धसाधनादिति। सिद्धसाधनहेत्वसिद्धी विपर्ययप्रसङ्गयोः। परः स्थिरवादी। विपर्यये सिद्धसाधनं

पूरयति विरोधसम्पादक इति। तथाच बोधकशब्दगतानुपूर्व्यादिरूपोपाधिव्यावर्त्यभेदादैक्यानुपपत्तिरित्यपि नेति मूलार्थः। बोधकशब्दानुपूर्व्यादेर्व्यावर्त्यभेदस्य बोध्यैक्यविरोधित्वे आनुपूर्व्यादिभेदेनार्थभेद इत्यायाति, आनुपूर्व्यादिभेदेन व्यावर्त्यशब्दभेदस्यावश्यकत्वादस्य च पर्यायत्वोच्छेदकत्वं स्फुटतरं पर्यायत्वघटकानुपूर्व्यादिभेदस्य तद्घटकार्थैक्यव्याघातकत्वादिति तदेव तदवच्छेदकप्रसञ्जकतया पूरयति—बोधकशब्दभेदेनेति। भेदो वैलक्षण्यं आनुपूर्व्यादिः। व्याघातं स्पष्टयितुं पर्यायत्वं निर्वक्ति भिन्नयोरिति। भिन्नयोर्भिन्नानुपूर्वीकयौगिकशक्तिकयोर्वा, यद्यपि शब्दस्यार्थावच्छेदकत्वोपगमेन प्रकारभेदेनापाद्यापादकादिभावो अर्थादेरपि सम्भवति, तथापि समर्थपदबोध्यतायोग्यतासाधारण्यात्तत्पक्षोक्तदोषप्रसङ्गात्तदुपेक्षितम्।

मूले—विकल्पभेदो विकल्पवैलक्षण्यम्, उत उपाधिरित्येतावन्मात्राज्ञाने पूर्ववाक्यस्यानन्वयः, प्राक्पूरितशेषभागसहितं तदनुषञ्जयति विवृतौ उपाधिरित्यादिकमिति। ( पृ० १० पं० २ ) मूले—स्वरूपकृतस्य तस्येति। स्वविषयकज्ञाननिष्ठतद्व्यक्तित्वरूपवैलक्षण्यस्येत्यर्थः। असमर्थव्यावृत्तेरपि नानाज्ञानव्यक्तिविषयासमर्थव्यावृत्तानामपि मिथो भेदप्रसङ्गात्, अत्रेष्टापत्तिं निराकुरुते—विवृतौ तथाचेति। क्व प्रसङ्गादीति। भिन्नविषयकव्याप्तिपक्षधर्मताज्ञानयोरात्वत्यादिहेतुताभ्युपगमेऽतिप्रसङ्गादिति भावः। न च विषयभेदादिष्वपि प्रकारैक्यापेक्षायां नातिप्रसङ्ग इति वाच्यम्। प्रकारस्यापि विषयतया तदैक्यायोगात्। बीजत्वादिरूपाया योग्यतायास्तत्कारणव्यक्तिनियमसम्भवात् कारणजातीयेत्युक्तम्। मूलस्थसिद्धसाधनपदस्यापत्ताविष्टापत्तिपरत्वं न सम्भवति, कुशूलस्थबीजे कारित्वबाधात्, एवं हेत्वसिद्धिपदस्य विपर्ययानुमानहेत्वसिद्धिपरत्वासम्भवः, कारित्वाभावरूपहेतोरुक्तपक्षे उभयसिद्धत्वादत आह—सिद्धसाधनहेत्वसिद्धी विपर्ययप्रसङ्गयोरिति यथासंख्यमन्वयः। ( पृ० ११ पं० २ ) यदित्यादिना यमुद्दिश्य साध्यत इत्येतत् पुनः सिद्धसाधनमेवाभिहितम्, तत्र पौनरुक्त्याशङ्कां निरसितुमाह विपर्यय इति। को नामाभ्युपगच्छतीत्यन्तेनाभ्युपगमे सिद्धसाधनाभावेन

विवृणोति यदित्यादिना । यदि कश्चिदकुर्वाणमपि कारणजातीयं सहकारिसमवहितमभ्युपेयात् तदा तं प्रति तस्याकारित्वेन सहकारिसमवधानाभावः साधयितुमुचितः न त्वेतदस्ति, सहकारिसमवहिते करणनियमाभ्युपगमेनार्थतोऽकारिणः सहकारिसमवधानाभावनियमस्याप्यभ्युपगतत्वात् । तथा चाकुर्वाणे सहकारिसमवधानाभावसाधने सिद्धसाधनमिति भावः । यत्तु सहकारिसमवहिते (१)सहकारिसमवधानेन करणप्रसञ्जने सिद्धसाधनमिष्टापत्तिरिति । तन्न, तादृशप्रसङ्गस्याप्रस्तुतत्वेन तत्र दूषणोपन्यासायोगात् ॥

अन्वयव्यतिरेकेति । (पृ० १२ पं० १) अन्वयव्यतिरेकस्य हेत्यर्थः । बीजत्वमिति बीजमधिकृत्य । एतच्च बीजस्यैवा(२)ङ्कुरजनकत्वमिति मतेन । बीजे विनष्टे तदवयवेभ्य एवाङ्कुरोत्पाद इति मतेन (३)कपालादिव्यावृत्त कलमयवाद्यवयवानुगतजातिविशेषपरं बीजत्वपदमिति वदन्ति । तदवा-

---

धनसम्भवो दर्शितः । तत्र सहकारिसमवहितं करोत्येवेत्यभ्युपगमे कारित्व एव सिद्धसाधनं लभ्यते, न त्वकारिणि सामर्थ्याभावसाधने इति शङ्कां निरसितुमकुर्वाणे सहकारिसमवधानरूपयोग्यताभ्युपगमरूपतदभावसाधनमूलविवादबीजनिराकरणपरतया तन्मूलं व्याचष्टे—यदि कश्चिदिति । न त्वेतदस्तीति । यथा कश्चिदभ्युपगच्छतीति नेत्यर्थः । अर्थत इति । व्यापकाभावस्य व्याप्याभावनियतत्वनियमादित्यर्थः । अभ्युपगतत्वादिति । अकारिणि सहकारिसमवधानरूपयोग्यताभ्युपगमासम्भवादिति शेषः । नात्रयेन्तनैव न त्वेदस्तीत्यस्य निर्वाहः । करोत्येवेति ( पृ० १९ पं० ३ ) यथाश्रुतमूलानुसारेण कारित्वापादने इष्टापत्तिपरतया केषाचित् सिद्धसाधनोपवर्णनमुपन्यस्यति यत्त्विति । सहकारिसमवहिते पक्षे ।

अन्वयव्यतिरेकस्य सविषयत्वाभावात् अन्वयव्यतिरेकपदं तद्धीपरतया व्याचष्टे—अन्वयेति । धरण्यामप्यङ्कुरयोग्यतासत्त्वात् कथं नास्य बीजत्वरूपतेति शङ्कां निराकरोति बीजत्वमिति । ननु बीजस्य नाङ्कुरजनकत्वं बीजस्यावयवित्वेन नाशादङ्कुरोपादानत्वासम्भवात् , तदवयवेनापि स्वस्मिन् बीजसत्वे द्रव्यान्तरजननासम्भवात् , बीजविनाश एव परमाणावङ्कुरादिसजातीयजनने बीजस्य निमित्ततया अप्ययोगादित्यत आह—एतच्चेति । एतद्बीजस्याङ्कुरजनकत्वमुपादानतया, इति मतेनेति परमताभ्युपगमेन । कलमाद्यवयवेति । एतच्च पिठरपाकमतेन, पिठरपाकमते बीजारम्भकावयवविनाश एव परमाणावङ्कुररूपादि-

---

( १ ) पक्षे इत्यधिकः पाठः क्वचित् ।

( २ ) एवकारो नास्ति ।

( ३ ) मते इति पाठान्तरम् ।

न्तरेति । बीजत्वव्याप्यं कुर्वद्रूपत्वं वेत्यर्थः । कार्याभावः कार्यकारित्वाभावः । चरमकारणस्याप्युत्तरकाले कार्यकारित्वाभावः सहकारिविरहप्रयुक्त इति भावः । यथाश्रुतं त्वस्माकं निमित्तासमवायिनोः परेषामुपादानस्याप्यसिद्धमिति द्रष्टव्यम् ॥

अकुर्वतोऽपीत्यादि । तथाच बीजत्वस्य करणव्यभिचारोऽकरणस्य बीजत्वाभावव्यभिचारश्चोभयसिद्ध इति न प्रसङ्गविपर्ययप्रवृत्तिरिति भावः

तस्य कुर्वद्रूपत्वस्य, दृष्टान्तस्य (पृ० १३ पं० १) अङ्कुरकारिणो बीजस्य, साधनं प्रसङ्गसाधनं कुर्वद्रूपत्वम्, तद्विकलत्वं तदप्रसिद्ध्या तद्वत्वग्रहाभावः, तथा च प्रसङ्गहेतोरप्रसिद्धिः, अत एव तदभावरूपस्य विपर्यये साध्यस्याप्रसिद्धिः, अतो व्याप्यत्वासिद्ध्या नैकस्यापि प्रवृत्तिरिति भावः । नानभ्युपगममात्रेण प्रामाणिकार्थो निवर्तत इत्याह (१) को-

---

सजातीयरूपाद्युत्पत्त्या तादृशपरमाणुभ्यो द्व्यणुकादिक्रमेणाङ्कुरोत्पादात् बीजारम्भकस्थूलावयवानामङ्कुराजनकत्वात्, परमाणुषु च द्रव्यत्वव्याप्यव्याप्यजात्यनभ्युपगमादसङ्गतेः रूपविशेषादिमदवयवेभ्य एवाङ्कुरोत्पादसम्भवात् तादृशजातेरप्रामाणिकत्वेत्याशयेन वदन्तीति ।

जातिभेदस्याशक्तित्वादिपरताभ्रमं निराचिकीर्षुराह—कुर्वद्रूपत्वमिति । तृतीयपक्षे स्वोत्पत्तिक्षण एव सहकारिसमवहितत्वस्य चरमकारणस्य स्वरूपयोग्यतामुपपादयति चरमेति । उत्तरकाले कार्योत्पादक्षणे, कार्य्यकारित्वाभावः तत्तत्कार्याव्यवहितप्रत्यक्षसम्बन्धाभावः । सहकारीति—तत्तत्कार्यप्रागभावरूपेत्यादिः । यथाश्रुतं कार्याभावादिगतम् । निमित्तासमवायिनोरिति । सहकारिसमवधानेऽपि समवायिकारण एव कार्योत्पत्त्या निमित्तासमवायिनोः कार्याभावस्य समवायिकारणविरहप्रयुक्तस्य सहकारिविरहप्रयुक्तत्वादिति भावः ।

उपादानस्येति । सहकारिसमवधानोत्तरमेव कार्योत्पत्त्या पूर्वक्षणावच्छिन्नसहकारिसमवधानाभाववत्त्वमेव कार्याभाववत्त्वे प्रयोजकं (स्वं द्रव्य)स्थैर्यपक्षे एव सम्भवति न क्षणभङ्गे, तथाच तन्मते सहकारिविरहप्रयुक्तकार्य्याभाववत्त्वं प्रतिहतमेवेत्यर्थः ।

साधनविकलत्वं यदि साधनाभाववत्त्वं तदाऽसङ्गतिः, साधनाऽप्रसिद्ध्या तदभावोद्भावनासम्भवादतो व्याचष्टे—तदप्रसिद्ध्येति । ग्रहाभावः ग्रहासम्भवः । तावता प्रसङ्गादौ को दोष इत्याकाङ्क्षायामाह—तथाचेति । अत एव तद्रूपप्रतियोग्यप्रसिद्धेरेव । अतः साध्यसाधनान्यतराप्रसिद्धेः । एकस्यापीति । प्रसङ्गस्य विपर्य्ययस्य वेत्यर्थः । प्रत्यक्षाभावेन हेतुना प्रत्यक्षनिराकरणायोगात् सविकल्पकाभावेन निर्विकल्पकनिराकरणपरतया स हि न प्रत्यक्षेणे-

---

(१) इत्यत आहेति पाठान्तरम् ।

होति । प्रत्यक्षं निर्विकल्पकम्, अनुभवनं विषयीकरणम् । प्रत्यक्षमिन्द्रियमनुभवो निर्विकल्पकमिति वा । अवसायः सविकल्पकम्, तदभावे निर्विकल्पकाभावस्य तवाऽप्यभिमतत्वादिति भावः । बीजमङ्कुरं करोतीति बुद्धेश्च फलोपहितं स्वरूपं फलाव्यवहितप्राक्कालवृत्ति स्वरूपं वा विषयो न तु कुर्वद्रूपत्वमिति । लिङ्गाभावादिति । साध्याप्रसिद्ध्या व्याप्यग्रहेण लिङ्गत्वायोगादिति । तज्जातीयत्वाविशेषेऽपि करणाकरणे न विना प्रयोजकविशेषमुपपद्येत(१) अतः करणोपपादकतया विशेषः सिद्ध्यन् परिशेषाज्जातिरूप एव सिद्ध्यति तदभावादेव चाकरणमित्याशङ्कते

---

त्यादिकं व्याचष्टे—प्रत्यक्षमिति । अनुभूयत इत्यस्य प्रतीयत इत्यर्थकत्वे प्रत्यक्षेणेति प्रत्यक्षस्य कर्तृतायाः करणताया वा अभिधानासङ्गतिरित्यनुभूतिपदं व्याचष्टे—अनुभवनमिति । तथा च कर्त्तर्येव तृतीयेति भावः । विषयीकरणं तत्प्रसिद्धानुभवपदार्थ इत्यनुशयेन कल्पान्तरमाह—प्रत्यक्षमिन्द्रियमिति । तथाच करणे तृतीयेति भावः ।

ननु सविकल्पकाभावेन निर्विकल्पकबाध(क) इत्यत आह तदभाव इति । सविकल्पकाभाव इत्यर्थः । तवाऽप्यभिमतत्वादिति । सविकल्पकाभावेऽपि निर्विकल्पकस्य प्रामाणिकत्वादिति भावः । बीजमङ्कुरं करोतीति प्रत्यक्षं कुर्वद्रूपत्वसाधकमित्याशङ्कां निराकरोति—बीजमिति । फलोपहितं फलोपधानविशिष्टम्, अङ्कुरेषु प्रतिपत्तिप्रयोजकताविशिष्टमिति यावत्, उत्पत्तिप्रयोजकताया करत्यर्थत्वात्, वैशिष्ट्यस्य चाख्यातार्थत्वादिति भावः ।

ननूत्पत्तिप्रयोजकत्वं यद्युत्पत्तिकाल एव तदा पूर्वक्षणे तत्क्षणव्यवहारानुपपत्तिः, यदि च कारणस्वरूपतया अन्यदापि तदाऽतिप्रसङ्ग इत्यनुशयेनाह—फलाव्यवहितेति । प्राक्कालवृत्तित्वविशिष्टसाध्याप्रसिद्धौ तद्व्याप्तिपक्षधर्मताविशिष्टलिङ्गस्याप्यप्रसिद्धया तदभावोद्भावनासङ्गतेः लिङ्गाभावादिति व्याचष्टे—साध्याप्रसिद्ध्येति ।

ननु बीजादेरङ्कुरकरणाकरणे कुर्वद्रूपत्वतदभावाप्रयोज्येऽतस्तत्प्रसिद्धिरित्यर्थकन कश्चिदिति शङ्का न सङ्गच्छेत, वैजात्यतदभावयोरेव तत्प्रयोजकत्वसम्भवात्, साध्याप्रसिद्धिदोषानुद्धारादुक्तयुक्त्यैव वा कथं कुर्वद्रूपत्वसिद्धिरिति शङ्कां निराचिकीर्षुः शङ्काभिप्रायं स्पष्टयति—तज्जातीयत्वेति । बीजत्वाविशेषेति । करणं अकरणं चेति करणाकरणे, करणं कस्यचिद्बीजस्य करणमकरणमिति वाऽवान्तरधर्मतदभावयोः प्रयोजकतामन्तरेण नोपपद्येत इत्यर्थः । करणोपपादकतयेति । बीजविशेषस्याङ्कुरकरणमकारिबीजव्यावृत्तधर्मप्रयोज्यम्, एवंक्रमेणेत्यर्थः । सामान्यतस्तत्प्रसिद्धावपि तादृशधर्मस्य कुतो जातिरूपतेत्यत आह—परिशेषादिति । तत्प्रयोजकोपा-

---

(१) उपपद्येते इति पाठान्तरम् ।

यदीति। **जातिभेदः कुर्वद्रूपत्वम्** तद्रूपस्तत्स्वरूपः, तन्निरूप्यस्तदभावश्च। **जातिभेदस्याभिधानात् तदभावोऽप्यर्थतो लब्ध इत्यन्ये।** न पश्याम इति। **सन्देहेऽपि न परिशेषावकाश इत्यभिप्रायेण।** तथापीति। **स्वोत्पत्त्यव्यवहितोत्तरसमय(१)वृत्तिकार्यमात्रकारित्वं स्वकार्याव्यवहितप्राक्काला-**

धिबाधेनेत्यर्थः। परिशेषासिद्धौ वाऽग्रे तन्निरसनीयमिति भावः। कुर्वद्रूपत्वस्य कारणानुत्पादकतया तत्प्रयोजकपरिशेषाकथनेन प्रथमपक्षे न्यूनतां परिजिहीर्षु-र्जातिभेदरूपपदश्लेषेण जातिभेदतदभावोभयपरतया व्याचष्टे-**तद्रूप इति।** अन्येषां मतमाह—**जातिभेदस्येति। अभिधानात्** कारणप्रयोजकतया कथनात्। **अर्थ-तो लब्ध इति।** अकारणोत्पादकतयेत्यादिः, प्रतियोगिप्रयोजकविरहस्याभावप्रयोज-कत्वनियमादिति भावः।

अत्र **सहकारिलाभालाभरूप** इत्यनेनोपस्थितसहकार्यलाभरूपानन्यथानुरोध-मानुषज्यमानविशेषपदस्य कारणनियामकव्यापारतायाः आवश्यकत्वाज्जातिभेदाभाव-रूपताया अकारणनियामकशब्दान्वयात्तद्भानमिति निर्वाहाय तस्याः शब्दोपस्थित-त्वमावश्यकं सहकार्यलाभस्यार्थतो लाभसम्भवेन तदुपादानविरोधश्चेत्यस्वरसबीजम्।

ननु जातिभेदस्याक्लृप्तत्वात् सहकारिलाभस्य क्लृप्तत्वाल्लाघवेन सहकारिला-भस्य कारणप्रयोजकता निश्चेतुमेव शक्यते, तत्कथं नियामकं न पश्याम इति सं-च्छत इत्यत आह—**सन्देहेऽपीति। न परिशेषावकाश इति।** नाकारणप्रयो-जक(स्य) जातित्वासाधकजातिभिन्नप्रयोजकाभाव इत्यर्थः। **इत्यभिप्रायेणेति।** तथाच सन्देहेऽपि कुर्वद्रूपत्वजातेरसिद्ध्यभ्युपगमवादोऽयमिति भावः।

अक्षेपकारणं यदि सहकारिसमवधाने करणमित्येवंरूपं, तदा सहकारिसमवधा-नवत् तत्पूर्वसत्त्वे नोक्तबाधकावकाश इत्यतो अक्षेपकारित्वमन्यथा निर्वक्ति **स्वोत्प-त्तीति।** विलम्बकारित्वेऽपि स्वाधिकरणक्षणाव्यवहितकालावृत्तिकार्यमात्रजनकत्वस-म्भवात् उत्पत्त्यन्तर्भावः। स्वोत्पत्त्यव्यवहितोत्तरत्वं च स्वाधिकरणसमयध्वंसानधि-करणत्वं, तादृशकालवृत्तिकार्यजनकत्वं च विलम्बेनाङ्कुरजननेऽपि कार्यान्तरमादाय सम्भवतीति मात्रपदम्। न च कार्यपदस्याङ्कुरपरत्वे नायं दोष इति वाच्यम्। भावसामान्यस्याङ्कुराजनकतया मूले च भावमात्रस्यैव तत्स्वभावतोक्तेस्तद्विरोधे-नाङ्कुररूपकार्यस्य विशिष्योपादानासम्भवात्, मात्रपदमुपादाय तस्य तथोपादा-नेऽङ्कुरचरमकारण एवाक्षेपकारित्वाप्रसिद्ध्या वक्ष्यमाणप्रसङ्गविपर्ययोः सम्भावनया परस्पराश्रयेणाङ्कुरकारणविरोधाच्च। तादृशकार्यमात्रकारित्वाधिकरणकालध्वंसाधिकर-णकालावृत्तिकार्यकारित्वस्य तथात्वे सत्यङ्कुरादिकारित्वमेवाङ्कुराद्याक्षेपकारित्वं बोध्यम्।

(१) कालेति पाठान्तरम्।

वृत्तित्वं स्वकार्यप्रागभावसमानकालीनध्वंसप्रतियोगिसमयावृत्तित्वं स्वोत्पत्तिसमय (१)एव कारित्वं वाऽक्षेपकारित्वम् । तथा च पूर्वं कार्यानुत्पादात् तदानीन्तनानामक्षेपकरणस्वभावस्य विरहेण बीजत्वस्य तन्नियामकत्वानुपपत्त्या तन्नियामकं कुर्वद्रूपत्वं नाम जात्यन्तरमास्थेयमिति भावः । तादृशस्य त्वस्वसिद्धौ सत्यामेवमेतत् (२)तदेव त्वसिद्धमित्याह युक्तमित्यादिना । प्रसङ्गेति । यन्न यत्कार्याक्षेपकारि तन्न तत्कारि यथालीकं, शिलाशकलं वा, नाङ्कुराक्षेपकारि च सामग्रीसमवहितं बीजमुपेयते परैरिति प्रसङ्गः, यद्यदङ्कुरं करोति तत् तदक्षेपकारि यथा

लघुलक्षणान्तरमाह—स्वकार्य्येति । स्वकार्यप्रागभावाधिकरणकालप्रागभावाधिकरणक्षणवृत्तित्वमित्यर्थः । अत्र विनाश्यभावत्वरूपध्वंसत्वघटितप्रागभावत्वस्य द्विधा निवेशेन गौरवात् प्रागभावप्राक्कालमनिवेश्य लक्षणान्तरमाह—स्वकार्येति । समानकालीनत्वं एकदा कारणक्षणवृत्तित्वं वाऽक्षेपकारित्वपदार्थं इत्यतो लक्षणान्तरमाह—स्वोत्पत्तीति । स्वाधिकरणकालध्वंसकाले यत्कारि तदन्यत्वे सति कारित्वमित्यर्थः । तादृशकार्यकारित्वं स्वोत्तरोत्पन्नप्रमेये प्रसिद्धम् ।

ननु 'स यदि प्रागप्यासीदि'ति (पृ० १४ पं० २) प्रसञ्जनं यदि कुशूलस्थक्षेत्रस्थयं र्भेदसाधकपरतयोपन्यस्तम्, तदा सामर्थ्यहेतुकप्रसङ्गपरित्यागेन सामर्थ्यवितर्कानवसरे तदुपन्यास उचित इत्यतः कुर्वद्रूपत्वव्यवस्थापरत्वं तन्मूलव्याप्त्या पादयति तथा चेति । तत् कुर्वद्रूपत्व जातेरेवावश्यकत्वम् । क्षेत्रस्थबीजे कुशूलस्थबीजव्यावृत्ताङ्कुरकुर्वद्रूपत्वसिद्धौ विशेषतस्तत्र कुशूलस्थबीजव्यावृत्ताङ्कुरेऽक्षेपकारित्वसंदिग्धोपयोगितावाताः करिण प्यङ्कुराक्षेपकारित्वाभावहेतुकाङ्कुरकारित्वाभावप्रसङ्गमूलभूतां सामान्यव्याप्तिं दर्शयति यन्नेति । सत्कार्यमादायैवालीकाकारस्य दृष्टान्तता सम्भवतीति दर्शयितुं यथाऽलीकमिति ।

प्रकृतापत्तौ कार्यान्तरकारिणोऽपि दृष्टान्तता सम्भवतीत्यभिप्रायेण यथा,शिलेति ।

यन्नाङ्कुराक्षेपकारि तन्नाङ्कुरकारि यथा शिलाशकलमिति विशेषव्याप्तिर्द्रष्टव्या । अतो यत्त्वतत्त्वाननुगमेन सामान्यव्याप्तिविचारासत्त्वेऽपि न क्षतिः । अत एव—विपर्यये विशेषव्याप्तिमेवाह—यद्यदङ्कुरमिति ।

ननु मूले परस्पराश्रयाभिधानमसङ्गतम्, धरण्यादिभेदरूपदृष्टान्ते अक्षेपकारित्वसिद्धौ व्याप्तिग्रहेणानुमाने प्रवृत्तिस्ततो बीजे अक्षेपकारित्वसिद्धिस्तथा सति कोऽत्र दृष्टान्ते व्याप्तिग्रहेणानुमानप्रवृत्त्या धरण्यादिभेदेन तत्सिद्धिरिति क्रमेण चक्रकस्यैव

(१) क्षण इति पाठान्तरम् ।

(२) सत्यामेतत् इति पाठान्तरम् ।

धरण्यादिभेदः, करोति चाङ्कुरमिदं बीजमिति विपर्ययः । परस्परेति । चक्रके ऽपि परस्पराश्रयत्वमक्षतम् ॥

अस्मिन्नर्थे (पृ० १५ पं० २)ऽक्षेपकारित्वे अक्षेपविलम्बयोरन्यस्य प्रकारस्यासम्भवा(१)द्विलम्बबाधे परिशेषादक्षेपसिद्धिरिति भावः. विलम्बो ह्यनाकरणं, तच्च सर्वदैव कदाचिद्वा । आद्ये विलम्बकारित्वाप्रसिद्धिः, द्वितीये तु कार्योत्पत्तेरविरोधान्न परिशेषावतारः, तथा चाक्षेपकरणस्वभावस्यासिद्धौ न तन्नियामकत्वेन कुर्वद्रूपत्वसिद्धिरित्याह न विलम्बेत्यादिना । एतेनाविवक्षितविशेषं सामान्यतो जनकतावच्छेदकरूपत्वमेव सामर्थ्यमभिहितमिति परास्तम् , स्वरूपयोग्यस्यापि करणप्रयोजकसह-

---

प्रश्नक्रेरियत आह—चक्रकेऽपीति । परस्पराश्रयत्वमव्याहतमिति(२) । स्वापेक्षसापेक्षत्वमेवान्योन्याश्रयः, अपेक्षा च साक्षात् परम्परासाधारणीति परम्परया अपेक्षणीयापेक्षत्वरूपचक्रकेऽन्योन्याश्रयत्वमक्षतमित्यर्थः ।

ननु कार्यजन्म कथमाक्षेपकारित्वे प्रमाणीभवेत् , अन्यादृशकारित्वेनापि तदुपपत्तेः, अनुमानविषयैव तस्य तथात्वे साध्यप्रसिद्धेरपेक्षणीयतया परस्पराश्रयग्रस्तत्वादित्याशङ्क्य परिहरति—अक्षेपेति । अक्षेपकारित्वविलम्बकारित्वरूपविशेषद्वयातिरिक्तकारित्वस्याभावात् कार्यानुत्पादप्रसङ्गेन सहकारिविरहताबाधे प्रसिद्धकारित्वसामान्यसाधककार्यजन्मात्मकप्रमाणादेव सिद्धाक्षेपकारित्वसिद्धिरित्यर्थः । विलम्बकारिस्वभावानुवृत्त्या कार्यानुत्पत्तिप्रसञ्जने सर्वदा कार्याजननमेव कार्यानुत्पत्तिः, तया समं कारित्वघटितापादकस्य विरोधप्रदर्शनपरता विलम्बकारिस्वभावस्येत्यादिमूलस्य न सम्भवति, विलम्बकारित्वस्य सर्वदैव कारिणः कारिभावरूपत्वेन तादृशापादकस्यैवाप्रसिद्धेः । कदाचिदकारिणः कारितारूपत्वे तेन समं कार्याजननस्य विरोधसम्भवेऽपि व्याघातभयेन 'ततश्चे'त्यादिग्रन्थेन तादृशार्थ एव निर्भरस्य कर्तव्यतया व्याघातप्रदर्शकग्रन्थस्य तादृशार्थपरताविरोधादतो विलम्बकारिस्वभावस्येत्यादिप्रथमपक्षे आपादकाप्रसिद्धिपरता, ततश्चेत्यादिमूलस्य द्वितीयपक्षे कार्यजननविरोधेन कार्यजन्मनो विलम्बकारित्वाच्च विक्षेपकत्वेन इतरबाधानिर्वाहपरतां दर्शयति—विलम्बो हीति । एवञ्चेत्यादिमूलस्य अजागरूकमेवेत्यन्तस्य भावार्थसंवलितमर्थमाह—तथाचेति । बीजत्वकुर्वद्रूपत्वे च विशिष्यानुपादायाङ्कुरकारणतावच्छेदकरूपत्वेन सामान्येन सामर्थ्यस्य तत्कारित्वापादकत्वं मूले दूषितम् । न्यूनताभ्रमाय दूषयति—एतेनेत्यादिना । एतेन असहकारिसाहित्यस्याकरणप्रयोजकत्वेन, इति परास्तम् । तदेव विवृणोति स्वरूपेति । सहकारि-

---

( १ ) स्याभावादिति पाठान्तरम् ।

( २ ) एतन्मतेन दीधितौ 'अव्याहतम्' इति पाठो द्रष्टव्यः ।

कारिसाहित्यविरहेणाकरणोपपत्तेर्मूलशैथिल्यात् । ते बीजादयः(१) ॥

नापीत्यादि। (पृ०१६पं०२) यद्यदा सहकारिविरहप्रयुक्तयत्कार्याभाववत् तत् तदा तत्कार्यं करोत्येवं वा प्रसङ्गः, किं वा(२) यदा तदेति परित्यज्य । नाद्यः, विरोधात्। द्वितीयेऽपि किमापाद्यापादकयोर्यौगपद्येन सामानाधिकरण्यस्य ग्रहः, कालभेदेन वा । नाद्यः, विरोधेन तथाग्रहासम्भवात् । द्वितीये तु एकस्यैव धर्मिणः पूर्वापरकालावस्थायित्वलक्षणं स्थैर्यमवगाहमाना सामानाधिकरण्यबुद्धिरेव क्षणिकत्वं विरुणद्धीत्यर्थः। यदित्यादावेवकारो भिन्नक्रमेण(३) यदेव तदेवेति । यदभावे यस्य सहकारिसाकल्यस्याभावे, इत्यन्ये । तौ च नियतान्वयव्यतिरेकाभ्यां कार्यकरणाकरणयोः सहकारिसमवधानासमवधानप्रयुक्तत्वस्य प्रदर्शनाय ॥

---

विरहप्रयुक्तकार्याभाववतः सहकारिविरहदशायां कार्यवत्त्वासम्भवेनैककालान्तर्भावेण सामर्थ्यकारित्वयोर्व्याप्तौ विरोधेऽपि एककालमनन्तर्भाव्यापाद्यापादकयोर्व्याप्तौ न विरोध इति तत्पक्षे कालभेदमन्तर्भाव्य स्वयं दूषणदानाय तदनन्तर्भावे च तस्मादिति । (पृ० १६ पं० १) मूलं योजयितुं तमन्तर्भाव्य वितर्कयति—यद्यदेति । एवं वा प्रसङ्गः एतादृशव्याप्तिमूलकमापादनयौगपद्येन कालभेदानन्तर्भावेनैककालान्तर्भावेणेति तु समुदायार्थः, प्रथमकल्प एव विश्रामात् । विरोधेनापाद्यापादकयोर्भावाभावरूपत्वेन, तथाग्रहासम्भवात् अवच्छेदककालभेदमन्तर्भाव्य सामानाधिकरण्यग्रहासम्भवात् । पूर्वापरकालावस्थायित्वलक्षणं स्थैर्य्यं तादृशकालावस्थायित्वरूपस्थैर्य्यनियतं विभिन्नकालावच्छिन्ने कर्मणि कार्यकारित्वसत्त्वम् ।

ननु यद्यदभाव एव यन्न करोतीति मूलमसङ्गतम्, बीजादेर्धरण्यादिसद्भावेऽपि सलिलादिसहकार्यभावेऽकरणात् करोत्येवेत्यनियमेन यत्पदेन प्रत्येकं कस्यापि सहकारिण उपादानासम्भवादत आह—एवकाराविति । मतान्तरमाह—यदभाव इति । सहकारिसाकल्यस्य सहकारिसमूहस्य, तथाच सहकारिसमूहसद्भावे करणनियमाद्यथास्थानस्थयोरेवकारयोः एवकारद्वयं विनापि एकस्मिन् धर्मिणि सहकारिसमवधानतदभावयोः कालभेदेन सत्त्वलाभात् स्थैर्य्यपर्यवसानसम्भवात् एवकारयोरुपादानमनर्थकमित्याशङ्क्याह—तौ चेति । तौ एवकारौ,

करणाकरणयोः सहकारिलाभालाभप्रयुक्तत्वप्रदर्शनं च कुशूलस्थक्षेत्रस्थयोरभेदे कुशूलस्थदशायामेव न करणम्, क्षेत्रस्थतादशायामेव वा कथं नाकरणमित्याशङ्कानि-

---

(१) ते बीजादय इति नास्ति क्वचित्

(२) तीत्येव वा इति पाठान्तरम् ।

(३) क्रमे इति पाठान्तरम् ।

समर्थेति । तथा च न प्रागुक्तसाध्याविशिष्टयमिति भावः । हेतुः प्रसङ्ग-हेतुः। तादृगित्यादि । तथा च व्यभिचार इति भावः । मुख्यत्वेन व्यवहारस्य विशेषणान्न व्यभिचार इत्याशयेनाशङ्कते-नासाविति । कथं न मुख्यता अत आह तस्येति । अन्यथा जनकजातीयत्वस्य सहकारिविरहप्रयुक्त कार्याभाववत्त्वस्य वा निमित्तत्वे, अनियमप्रसङ्गात् द्रव्यत्वादिना बीजसजा-तीय(१)शिलादौ समर्थव्यवहारस्य सहकारिसमवहिते कुर्वत्यपि तदभाव-स्य वा प्रसङ्गात् । नियतं करणं तथा स्यादत आह-नियमस्य चेति(पृ०१७पं१)। नियमस्य करणनियमस्य, नियतकरणस्येति यावत् । सत्येव करणमि-त्यन्तस्य एवकारबललभ्ये सहकारिवैकल्ये करणाभावे तात्पर्यम् , तथा च यद्धर्मावच्छिन्नस्याकरणं सहकारिविरहप्रयुक्तं तद्धर्मवत्त्वमित्यर्थः । अस्ति चेदं कुर्वद्दशायामपि बीजे, नास्ति च शिलाशकलादौ सत्यपि सहकारिसाकल्ये, तत्र कार्यानुत्पादेन स्वभावस्यैव तत्प्रयोजकत्वात् । अथ बीजमपि भृष्टं शिलासमानमिति चेत् , न अभृष्टबीजत्वमेवास्तां

---

राशयासमर्थव्यवहारेति मूले व्यवहारपर्यन्तानुधावनप्रयोजनं दर्शयति । तथाच न प्रागुक्तेति । सामर्थ्यस्य करणस्वरूपतापक्षे प्रागुक्तसाध्याविशेषह्पदूषणं नेत्य-र्थः। विपर्ययानुमाने कारित्वाभावस्यैव हेतुतया मूलस्थं हेतुरिति कारिताप्रसङ्गहेतु-परतया व्याचष्टे—हेतुरिति । एवञ्चापाद्यकारित्वाभावेन कुशूलस्थे समर्थव्यवहार गोचरत्वाभावसिद्धया तद्विरुद्धसमर्थव्यवहारगोचरत्ववति क्षेत्रस्थबीजे कुशूलस्थभे दसिद्धौ परेषामभिमतिरिति बोध्यम् ।

व्यभिचार इति । समर्थव्यवहारगोचररूपापादके कारित्वरूपापाद्यस्य कारित्वा-भावरूपविपर्ययप्रमाणहेतौ च समर्थव्यवहारगोचरत्वाभावरूपसाध्यस्य चेति । अकारि-बीजे समर्थव्यवहारस्य मुख्यत्वादिविशेषितव्यवहारस्य हेतुत्वे व्यभिचारो दुरुद्धर एवेति नासावित्यादिशङ्कासङ्गमनायाशयं व्याचष्टे—मुख्यत्वे इति । प्रसङ्गगमनानुकूल्येना न्यथापदार्थं व्याचष्टे—अन्यथेति । पक्षद्वये यथासम्भवमनियमप्रसङ्गं व्याचष्टे—अनियमेत्यादिना । तदभावस्यः समर्थव्यवहाराभावस्य, प्रसङ्गात् कुर्वद्रूपान-वच्छिन्ने कार्याभाववत्त्वव्यवहारादिति भावः । तथास्यात् समर्थव्यवहारनिमित्तं स्यात् । सत्येव करणमिति नियमघटकभावदलवैयर्थ्यादाह सत्येवेति । सह कारिविरहे कारणाभावस्य समर्थव्यवहारनिमित्तत्वे पूर्वोक्तस्य कुर्वाणदशायां तद्व्य-वहाराभावप्रसङ्गस्य तादवस्थ्यान्निष्कर्षमाह—तथाचेति । शिलासमान-मिति । सहकारिसमवधानेऽपि कार्याजनकमित्यर्थः । तथा च बीजत्वावच्छि-

---

(१) बीजजातीयेति पाठान्तरम् ।

तादृशो धर्मः, आसादयतु वा भर्जनाद्यभावोऽपि सहकारिभावम्। करणमेवेत्यस्य च सत्यन्तानुषङ्गात् यद्धर्मावच्छिन्नस्य सहकारिसाकल्ये ऽवश्यं करणं तद्वत्त्वमर्थः । एवं चैतन्निमित्तकसमर्थव्यवहार(विषय)स्यापि सहकारिरहितस्य(१)बीजादेः करणविरहाद्यभिचारेण न व्याप्तिसिद्धिरित्याह ततश्चेति । न च यावत्सत्त्वं करणं करणनियतजातिमत्त्वं वा तथा, (२)प्रसिद्धत्वात्, अकरणदशायामपि तादृशत्वाविरोधाच्च । अनियमप्रसङ्गं निरस्यति नियमस्य चेति तु सम्प्रदायः । अथ भवतां पटादौ

मस्यापि कार्यानुपधायकत्वं न सहकारिविरहप्रयुक्तमिति बीजत्वमादाय फलानुपधायकबीजसमर्थव्यवहारात् सामर्थ्यव्याप्तिसिद्धिप्रदर्शनविरोध इति भावः । अदृष्टेति । तथाच बीजत्वस्येवादृष्टबीजत्वस्याप्यङ्कुरानुपधायकबीजे सत्त्वेन व्यभिचाराद्व्याप्तिसिद्धिप्रदर्शनाविरोध इति भावः । बीजत्वमात्रस्यापि व्यवहारनिमित्ततामुपपादयति आसादयतु वेति । भर्ज्जनाद्यभावोऽपि सहकारिभावमिति । तथा च दृष्टबीजे सहकारिकूटसमवधानविरहादेवाङ्कुराजनकत्वमिति भावः । करणमेवेत्यस्य तु सर्वदा करणलाभे अक्षेपकरण एव पर्यवसानमतः सत्यन्तमनुषज्य फलानुपधायकसाधारण्याय धर्ममप्यन्तर्भाव्य व्याचष्टे—करणमेवेत्यस्येति । निरुक्तरूपद्वयैकान्तनिमित्तस्य व्यवहारप्रयोजकत्वे का क्षतिरित्याकाङ्क्षायां तच्चेति मूलं योजयति—एवञ्चेति । एतन्निमित्तकेति । निरुक्तरूपद्वयैकान्यतरनिमित्तकेत्यर्थः । इत्थं च जनननिबन्धन इति मूलस्यायमेवार्थो बोध्यः । अन्यादृशं नियतकरणं व्यवहारनिमित्तमाशङ्क्य स्वयं निराकरोति—न चेति । यावत्सत्त्वं करणमित्यक्षेपकरणमुत्पत्तिक्षणकारित्वमिति ततोऽस्य भेदः । करणनिमित्तकारित्वनिरूपितदैशिकव्याप्तिमदित्यर्थः । प्रथमेऽसिद्धत्वादिति । द्वितीयेऽकरणदशायामपीति । तादृशत्वाविरोधात् करणनियतजातिमत्त्वेऽविरोधात् । तथाच तदा स्वकारिणोऽपि तदा तादृशव्यवहारविषयत्वसम्भवेन कालान्तर्भावेन व्याप्त्यप्रयोजकत्वमिति भावः । सम्प्रदायेत्यस्वरसलाभाय । स्वयमभ्युपगतानियमप्रसङ्गप्रस्तव्यवहारनिमित्तमाश्रित्य ततश्चेत्यादिव्यवहारप्रदर्शकग्रन्थविवरणापेक्षया अक्षेपकरणदूषणोत्तरं व्यवहारनिमित्ततयाऽऽशङ्कितनियमकरणं निरुच्य तदुपरि व्यभिचारप्रदर्शनपरतया तद्ग्रन्थव्याख्यानं न्याय्यमिति । यावत्सत्त्वविशेषितजननस्य व्यवहारनिमित्तत्वे नोक्तसिद्धिर्नवा सर्वदा फलानुपधायकव्यक्तौ व्यभिचार इत्याशङ्कते अथेति । परमते नीलस्य सर्वदैव नीलत्वाभावात् सत्त्वमन्तर्भाव्यापि व्यवहारनिमित्ततोपगमः सम्भवतीति भवतामित्युक्तम् ।

---

(१) विरहितस्येति पाठान्तरम् ।
(२) मत्त्वं स च तथेति पाठान्तरम् ।

नीलं रूपमिव समर्थव्यवहारस्य शुद्धं जननं निमित्तं लाघवात्, अत एव जनकतावच्छेदकरूपवत्त्वमपि परास्तमिति चेत्, अस्तु तावदेवं, तथापि निमित्तसत्त्वासत्त्वाभ्यामेव व्यवहारतदभावोपपत्तेरविरोधात। निमित्ततदभावयोः करणाकरणरूपयोरेव विरोध इति चेत्, न, तस्याग्रे निरसनीयत्वात्। एतेन कारिपदबोध्यत्वेन करणप्रसञ्जनं करणविरहेण च कारिपदबोध्यत्वाभावसाधनमपि व्याख्यातम्॥

अक्षेपकारित्वान्यथानुपपत्त्या क्षणिकत्वं सिषाधयिषुर्भावस्वभावं पृच्छति स्यादेतदिति। कथायाः जल्पस्य। पूर्वं रूपं प्रतीकं परपक्षखण्डनम्, उत्तरः पक्षः प्रतीकम् स्वपक्षस्य प्रकृते स्थैर्यस्य स्थापनम्।

उत्पत्तेरनन्तरं करणमुत्पत्त्यनन्तरकालीनकार्यकारित्वम्, उत्पत्तिकाले कारित्वमिति यावत्। एवमग्रेऽपि नेयम्। प्रथमेति। कस्यचिदुत्पत्तेरनन्तरमेव किञ्चित्कार्यकारित्वेऽपि न सर्वत्र तथात्वनियमः तस्य तदानीं सहकारिसाकल्यनिबन्धनत्वादिति भावः। क्षणिकत्ववादिभिरेकस्यां व्यक्तौ करणाकरणयोरनङ्गीकारादाह—बीजजातीयस्येति। तथेति।

---

नीलं रूपमिवेति शुद्धस्यैव निमित्ततायां दृष्टान्तः। अत एव शुद्धजननापेक्षया गौरवादेव, जनकतावच्छेदकरूपवत्त्वं फलानुपधायकसहकार्यसमवहितव्यक्तिसाधारणतया व्यभिचारप्रयोजकम्। निमित्तसत्त्वेति। एकत्र धर्मिणि कालभेदेन सद्भ्यां जननाजननाभ्यां समर्थव्यवहारतदभावसम्भवेनाविरुद्धतया भेदसाधकत्वादित्यर्थः। शङ्कते—निमित्तेति। तथाच तन्निमित्तव्यवहारगोचरत्वतदभावयोरपि विरोध एवेत्यर्थः। एतेन कारिव्यवहारतदभावयोरपि तन्निमित्तभूतकारितदभावयोर्विरोधस्य निराकार्यतया अविरोधेन, पदवाच्यत्वव्यवहारः पदशक्यत्वमपि कदाचित् निमित्तसत्त्वेनोपपद्यमाने स्वाधिकरणकालान्तरे न प्रवृत्तिनिमित्तप्रसञ्जकमित्यवधेयम्।

ननु स्या(पृ. १७ पं. ४)देतदित्यादिना भावस्याक्षेपकारित्वस्वभावं समर्थयितुं प्रश्नो न तन्नियामककुर्वद्रूपत्वसाधनाय, तन्नियामकतया कुर्वद्रूपत्वसिद्धेः प्रागेव निराकृतत्वात्। (यत्) पुनः संशयेन तन्निराकरणे पौनरुक्त्यादिति क्षणिकत्वसाधनाशयेन प्रश्नं योजयति—अक्षेपेति।

उत्पत्तेरनन्तरक्षणे तृतीयक्षणे व्यज्यमानं प्रत्येव फलोपधानरूपं करणं, तच्च नाक्षेपकरणं किन्तु विलम्बकरणमतो व्याचष्टे—उत्पत्तेरिति। अग्रेऽपि सहकारिसमवधानानन्तरमित्यत्रापि। कस्यचित् शब्दादेः, किञ्चित्कार्यकारित्वेऽपि शब्दादिरूपकार्यकारित्वेऽपि, सर्वत्र भावमात्रे, न तथात्वनियमः नोत्पत्त्यनन्तरमेव कार्यकारित्वनियमः। तस्य तादृशकारित्वस्य, तदानीमुत्पत्तिकाले, सहकारिसाकल्यनिबन्धनत्वात्, तथाच नासौ तावता भावस्वभाव इति भावः। अनङ्गीका-

अविलम्बकारित्वे एवकारेणान्तर्भावितोऽप्यर्थः प्राधान्येन विलम्बरूपतया पृथगुपदर्शितः ।

तज्जातीयं तद्धर्मावच्छिन्नम्, अकरणमस्वरूपयोग्यं, तथात्वं च प्रामाणिकमिति भावः । एवमिति । सहकारिणो यदि तत्कार्यकारणापेक्षणीया न स्युः तत्कार्यकारणानि न स्युरित्यर्थः । तेन न वैयधिकरण्यम् । तथा चेति । तुल्यन्यायतया सर्वेषामेवाकारणत्वादिति भावः ।

एवं चेत्यादि ।

ननु यद्युपदर्शितं करणमकरणं च स्वभावो भावस्य तदा यावत्सत्त्वं तदुभयापत्तिः सति धर्मिणि स्वभावविरहायोगादिति चेत्, न, स्वभावत्वं तत्तादात्म्यं वा स्याद्, यावत्सत्त्वं तत्र तत्सत्त्वं वा, तद्धर्मतामात्रं वा । तत्राद्ययोरनभ्युपगमोऽन्तिमस्तु धर्मधर्मिणोरत्यन्तभेदेन धर्मिसत्त्वेऽप्यसत्त्वं न विरुणद्धि ।

रादिति । एकव्यक्तेः सहकारिसमवधानानुत्तरमकरणम्, तत्समवधाने च करणं नोभयसिद्धमत इति शेषः । सहकारिसमवधानरहितस्याकरणं सहकारिसमवधानानन्तरमेव करणमिति एवकारार्थः । तथोत्पादे पौनरुक्त्याशङ्कां परिहरति अविलम्बेति । तथाच विलम्बकारित्ववत्तया पूर्वमकथनात् न पौनरुक्त्यमिति ।

द्रव्यत्वादिना बीजजातीयस्य शिलाशकलादेरकरणत्वमिष्टमेव, द्रव्यादिजातीयस्य सकलस्य सहकारिविरहे तत्समवधाने चाकरणस्य परैरप्यभ्युपगमादुक्तस्य बीजजातीयसामान्यस्य करणतापादकत्वायोगादित्यतो व्याचष्टे—तज्जातीयमिति । तद्धर्मावच्छिन्नं बीजत्वावच्छिन्नं, तथाच यद्धर्मावच्छिन्नं सहकारिविरहे तत्समवधाने च न करोति तद्धर्मावच्छिन्नमकरणमिति व्याप्तिः प्रसङ्गमूले बोध्या । बीजत्वावच्छिन्नस्य कस्यचित् फलानुपधायकत्वमिष्टमतो व्याचष्टे—अकरणमिति । अत्रोष्टापत्तिं निरस्यति तथात्वं चेति । तथात्वं बीजसामान्यस्य स्वरूपयोग्यत्वम् । प्रामाणिकमिति । अन्वयव्यतिरेकसहकृतप्रत्यक्षसिद्धमित्यर्थः ।

उक्तविलम्बकारित्वसाधकतर्कमाह—मूले ( पृ० १९ पं० ५ ) एवमिति । सलिलादिसहकारिणामकरणत्वेऽपि बीजस्य करणतया नाङ्कुररूपकार्यस्याकस्मिकताप्रसङ्ग इत्यत आह—तुल्यन्यायतयेति ।

उक्ताक्षेपकरणविलम्बकरणयोः स्वभावत्वमाक्षिपति नन्विति । अत्यन्तभेदेनेति । भेदाभेदपक्षेऽपि सति धर्मिणि धर्मविरहायोगादत्यन्तपदम् ।

इदमुच्यत ( पृ० २० पं० ५ ) इत्यादिसिद्धान्ते बीजत्वेनाकरणताव्यवस्थापनं सङ्गमयितुं तथापीत्यादिमन्थस्य बीजत्वेन सामर्थ्यासिद्धिप्रदर्शनपरतां प्रदर्शयन् तदनिश्चयेऽपि सन्देहे लाक्षणिकत्वासिद्धेर्बीजत्वेन तदसिद्धिप्रदर्शनस्य क्षणिकतासिद्ध्य-

स्यादेतत् बीजत्वेन सामर्थ्य सिद्धे समर्थानां बीजजातीयाना-मिवैकस्यापि बीजस्य सहकारिसाकल्यवैकल्याभ्यामेव करणाकरण-योरुपपत्तौ सिद्ध्यति स्थैर्यं, न त्वेतदस्ति समर्थस्य क्षेपायोगादिति, तथा च कुर्वद्रूपत्वेनैव सामर्थ्यं न बीजत्वेन, समर्थ एव हि सह-कारिणां लाभो लाभ एव, तथा च न सहकारिसाकल्यवैकल्यप्रयुक्ते करणाकरणे किन्तु सामर्थ्यासामर्थ्यप्रयुक्ते इत्याशयेनाशङ्कते—तथा-पीति । असमर्थेत्यादीति । समर्थस्यापि सहकारिविरहे तदानीं कार्य-स्यानुत्पत्तौ समर्थस्याप्यकरणमुत्पत्तौ च सहकारिणामकरणत्वम्, असमर्थे च सहकारिसाकल्ये समर्थबीजविरहेऽपि कार्यस्योत्पत्तौ बीज-स्याकरणत्वम् अनुत्पत्तौ च बीजविरहेण समर्थस्यापि सहकारिणोऽ-करणं प्रसज्येत, तेन तदुभयं व्युदस्तम् । अन्यथा वेति । समर्थस्यापि कदाचित्सहकारिणां वैकल्यं कदाचित् साकल्यं, तेनाकरणं करणं चेति । प्रवृत्त्यन्यथानुपपत्त्या बीजत्वेनैव सामर्थ्यमित्याशयेन पृच्छति—कुशूले-त्यादि । प्रवृत्तिमन्यथोपपादयति—परम्परेति । अस्त्येवेति । शिलाश-

---

नुपयोगितया न्यायमतेऽपि स्थैर्यासिद्धिरित्यत्र तदुपयोगितां दर्शयति स्यादेतदि-त्यादिना ।

ननु समर्थस्य कथं क्षेपायोगः ? न च समर्थानामपि सलिलादिसहकारि-णामसमर्थे शिलाशकलादौ समवधानतायां समर्थस्यापि बीजस्य तादृशसहकारि-विरहेणाकरणसम्भवादित्यत आह—समर्थ एवेति । इदञ्च मूलोक्तनियमद्वयस्यैव वैपरीत्येन प्रदर्शनफलं स्वयं दर्शयति—समर्थस्यापीत्यादि । एवञ्च मूले कर्तुरेवेत्यस्य समर्थस्यापि कस्यचित्सहकार्यलाभमात्रेण स्थैर्यसिद्धिरतोऽन्यथेति-पक्षमेकव्यक्तौ कालभेदेन तल्लाभार्थकतया व्याचष्टे—समर्थस्यापीति । सहका-रिविरहे सहकारिलाभविरहोपगमे, समर्थस्याप्यकरणमित्यादिप्रथमान्तानाम-ग्रिमेण प्रसज्येत इत्यनेन सम्बन्धः । अकरणमित्युभयत्र व्यभिचारश्चेत्यादिः, सहकारिसाकल्ये सहकारिलाभोपगमे । तदुभयमिति । समर्थे सहकार्यसमवधा-नमसमर्थे तत्समवधानमित्युभयमित्यर्थः । व्युदस्तमिति । एवकाराभ्यां व्यवच्छि-न्नमित्यर्थः । अन्यथावेतिपक्षं तदुभयरूपतया विपरीतमुपादत्ते अन्यथा वेतीति । कुशूलस्थबीजे शिलाशकलादङ्कुरजननप्रयोजकविशेषास्वीकारेऽङ्कुरार्थिनः कुशूलस्थबीजे प्रवृत्तिः शिलाशकलेऽप्रवृत्तिरिति नियमानुपपत्तिप्रदर्शनस्य बीजत्वेऽङ्कुरजननप्रयोज-कत्वव्यवस्थाफलत्वं दर्शयति—प्रवृत्त्यन्यथेति । प्रवृत्तिनियमानुपपत्त्येत्यर्थः । पर-म्परयेत्यादि मूलेन कुशूलस्थबीजस्याङ्कुरसमर्थसहकारिसमवहितबीजं प्रति जन-कत्वेन परम्परयाप्यङ्कुरजननानुकूलो विशेषः शङ्कितः, तच्छङ्काया उक्तप्रवृत्तिनियमा-न्यथानुपपत्तिनिराकरणपरतामाह—प्रवृत्तिमिति । अस्त्येवेत्यस्य विशेषलाभाय

कलाद्विशेषः । समर्थक्षणं प्रत्येवानायत्या बीजत्वेन सामर्थ्यं वाच्यम्, तथा च समर्थस्यापि सहकारिविरहादकरणमित्यायातमित्याशयेन पृच्छति—कदेत्यादि ।

केचित्तु तज्जातीयानां सहकारिलाभालाभयोः करणाकरणे न स्थैर्यसाधके क्षणिकत्वेऽप्युपपन्नत्वात्, एकस्यैव तु ते नाद्यापि सिद्धे प्रत्यभिज्ञानं च व्यभिचारिजातीयमसिद्धप्रमाभावं न साधकमतः कथं स्थैर्यमित्याशयेनाह—तथापीति । असमर्थेत्यादिनियमद्वयं समर्थस्यापि सहकारि(णो) वैकल्यादकृतवतः पश्चात् साकल्ये सति करणस्य प्रतिक्षेपकम् । प्रवृत्त्यन्यथानुपपत्त्या बीजत्वेन सामर्थ्यसिद्धौ न तादृशनियमसिद्धिरित्याशयेन पृच्छति—कुशूलेतीति प्राहुः ।

सामान्यत इति । न चाङ्कुरसमर्थबीजक्षणं प्रत्यपि परेषां बीजत्वेन

---

प्रश्नस्थशिलाशकलाद्विशेष इत्यनुषजयति शिलाशकलाद्विशेष इति । अङ्कुरजननानुकूल इत्यादिः । कदेति प्रश्नः कथं फलानुपधायकसाधारणबीजत्वेन सामर्थ्यव्यवस्थापनोपयोगीत्याकाङ्क्षायां प्रश्नप्रयोजकाभिप्रायं प्रकाशयति समर्थेति । अङ्कुरसमर्थबीजव्यक्तिमित्यर्थः । अनायत्येति । परम्परया तद्बीजजननान्यथानुपपत्त्या । इत्याशयेन पृच्छतीति । एतादृशप्रश्ने यदा बीजजातीयसहकारिसमवधानं तदैव करिष्यति, कदा तेषां सहकारिसमवधानमित्यत्र सन्देह इत्युत्तरिते सर्वत्रैव बीजे सहकारिलाभसम्भवे सर्वबीजानां सामर्थ्यसिद्धेरिति भावः ।

तथापीत्यादिग्रन्थमाशयान्तरेण सङ्गमयतां मतमुपन्यस्यति केचिदिति । तज्जातीयानां बीजजातीयानां, विभिन्नव्यक्तीनामिति शेषः । लाभालाभयोः सतोः, क्षणिकत्वेपि कार्यकारिव्यक्तीनां क्षणिकत्वोपगमेऽपि, उपपन्नत्वात्—तयोरित्यादिः । एकस्यैवैकव्यक्तेरेव, ते करणाकरणे । व्यभिचारिजातीयमिति । अप्रमासमानाकारमित्यर्थः । यत्किञ्चिदेकावयवापचयात्पूर्वबीजदिनाशस्थलेऽपि तदेवेदं बीजादिकमित्याकारकभ्रमात्मकप्रत्यभिज्ञानोदयादिति भावः । एतच्च विशेषणमप्रसिद्धप्रमाभावे हेतुः ।

नियमद्वयमिति । असमर्थस्यैव सहकारिविरह इति नियमेन समर्थस्यास्य सहकारिविरहनिराकरणात् स्वरूपलाभानन्तरं कर्त्तुरेव वा सहकारिसमवधानमिति नियमेन पूर्वमकारिणोऽपि समर्थस्य करणप्रयोजकसहकारिसमवधाननिराकरणात् पूर्वमकृतवतः पश्चात् करणप्रतिक्षेपकत्वं नियमद्वयस्य ।

सामान्यतर्के इत्यादिमूलम् । बीजत्वेन सामान्येन कारणत्वावधारणे सकलसहकारिषु समवहितेष्वपि बीजमङ्कुरसमर्थबीजक्षणं करिष्यति नवेति संशयस्यानवकाशादित्यर्थः । सहकारिसाकल्यवतः समर्थस्य करणात् नियमेन विशेषदर्शनादिति भावः । अत्र च बीजत्वेन कारणत्वमेव नावधार्यते अङ्कुरमिव तत्समर्थबीजं प्रत्यपि तत्कुर्वद्रूपजात्यन्तरपुरस्कारेण कारणत्वसम्भवादित्याशङ्कां निराकरोति नचेत्यादिना ।

न कारणत्वम् अपि तु तत्कुर्वद्रूपत्वेनैवेति वाच्यम् । तथात्वेऽपि बीज-जातीयस्य सत्यां सहकारिसम्पत्तौ अवश्यं करणमिति सामान्यतोऽवधारणात्, अनवधारणे वा नियतप्रवृत्त्यनुपपत्तेः। समानशीलाः समानयोग्यताकाः । तथा च सिद्धं बीजत्वेन कारणत्वमिति भावः ।

समर्थ एवेति । तथा च न समानशीलत्वमिति भावः ।

बीजजातीयस्य सहकारिसमवधाने सत्येव करणं सति करणमेवेति तावन्नियतान्वयव्यतिरेकाभ्यामवधारितम्, तत्र यद्येकस्मिन्नंशे आशङ्का स्यात् स्यादंशान्तरेऽपि विपरीतनिश्चयस्याकिञ्चित्करत्वादित्याह— तत्समवधान इत्यादिना । ताभ्यां सहकारिणः परामृशति ।

---

तथात्वेपीति । अवान्तरजात्यन्तरस्य कारणतावच्छेदकत्वसम्भवेऽपीत्यर्थः । इति सामान्यतोऽवधारणादिति । ( कृत्य ) इत्याकारकसहकारिसम्पत्तिविशिष्टबीजस्वरूपसामान्यधर्मे करणनियमावधारणेन उक्तसंशयनिवर्तकविशेषदर्शनसत्त्वादिति भावः । अनवधारणे अङ्कुरार्थिनो बीजत्वपुरस्कारेण प्रवृत्तिदशायां तथानवधारणे, प्रवृत्त्यनुपपत्तेः, तादृशावधारणस्य प्रवृत्त्यङ्गत्वात्, अन्यथा सहकारिसम्पन्नमपि न करिष्यतीति सम्भावनायामपि प्रवृत्त्यापत्तेरिति भावः ।

करणनियमादिति मूलम् । बीजत्वाक्रान्ते सहकारिसम्पत्तिमति क्वचिदप्यकरणस्यादर्शनादिति भावः । ( करणप्रयोजक ) बीजत्वेन कारणत्वमिति । अवान्तरजातेर्न्यूनवृत्तितया योग्यतावच्छेदकत्वासम्भवादिति भावः ।

समर्थ एवेत्यादिशङ्कामुक्तोपरिणां सङ्गमयति—तथाचेति । सहकारिसमवधानस्य सामर्थ्यव्याप्यत्वे चेत्यर्थः । न समानशीलत्वमिति । सहकारिसम्पत्तेः सामर्थ्यनियमत्वे सहकारिसम्पन्नबीजे साकल्यनियमेऽपि सहकारिसम्पन्नबीजेऽकरणप्रसङ्गस्य तत्र सामान्यनियमेनानवकाशादुक्तयुक्त्या सर्वेषां योग्यतासिद्धेरसम्भवादिति भावः । समर्थ एवेत्यस्य यथाश्रुतक्षित्यादिसकलसहकारिसमवधानसामान्यं व्यवच्छेदफलजननप्रयोजकतासमवधानं वेति विकल्पयति मूले—समर्थ इति । शिलाशकलादिवत् शिलाशकलादेरिव । बीजादिति । असमर्थतया भवदभ्युपगतादित्यादिः, अङ्कुरानुत्पत्तीति । शिलाशकलवदसमर्थेऽपि बीजे क्षित्यादिसमवधाने बाधकाभावादिति भावः ।अत्रेष्टापत्तिं शङ्कते—एवमपि स्यादिति । कश्चित्तादृशादपि बीजादङ्कुरो न जायत एवेत्यर्थः । शङ्कते आशङ्क्यत इति । इदमनुपलब्धमित्याशङ्क्यत इत्यर्थः ।

तद्विरहे करणमित्याशङ्क्येतेति प्रतिबन्दिमुखेन सूचितं शङ्काद्वये तुल्यप्रतिबन्धकसमवधानं स्पष्टयति विवृतौ बीजजातीयस्येत्यादिना । सत्येव करणमित्यन्तावधारणं द्वितीयशङ्काया विरोधि, सति करणमेवेत्यवधारणं प्रथमशङ्कायाः, एकस्मिन्नंशे सहकारिसमवहितस्याकरणे, अंशान्तरे तदसमवहितस्य करणेऽकिञ्चित्करत्वात् उभयतोऽविरोधित्वोपगमात् । तदुभयां तत्समवधान इत्यत्र तद्विरह

**ननु नियतान्वयव्यतिरेकाभ्यां बीजजातीयस्याङ्कुरं प्रति सामर्थ्यमेवावधृतम्, तच्च न बीजत्वेन, समर्थस्य क्षेपायोगात् कुशूलस्थादेरपि बीजादङ्कुरोत्पादप्रसङ्गात् परं तु बीजत्वावान्तरेण कुर्वद्रूपत्वेन, समर्थानां च स्वकारणसामर्थ्याधीनः समाजनियमः प्रमाणबलादेव कल्प्यते, एकविरहेऽपरस्मात् कार्योत्पादे तस्याकारणत्वप्रसङ्गात्, अनुत्पादे च सामर्थ्यायो-**

---

इत्यत्र चोपात्ताभ्यां तत्पदाभ्यामित्यर्थः । **सहकारिणः सहकारिसमूहं, परामृशति** ग्रन्थकार इति । मूले प्रत्यक्षानुपलब्धिपरिशुद्धिः कार्यकारणभावाव्यवस्थापकता, साध्वी समीचीनेत्याक्षेपोक्तिः ।

**स्या( पृ० २३ पं० ३ )देतदित्या**मूलेन बीजत्वादीनामङ्कुरादिसामर्थ्यमपि कुर्वद्रूपत्वजातिभिरेकक्षितिसलिलबीजादीनां मिलनस्थाने मिलनं फलोत्पादाप्रयोजकं किन्तु प्रत्येकस्यैवावान्तरजातिविशेषणत्वं मिलितेषु तादृशजातिमत्त्वनियमान्न मिलितानामकारणत्वमिति तेषु च तदभावनियमान्न तादृशानां कारणत्वमित्याशङ्कितम्, तन्न सङ्गच्छते , बीजत्वादिना कारणत्वे बाधकस्य विचारासहत्वात् सहकारिविरहेण समर्थस्याप्यकरणोपपत्तेः । अवान्तरजातिमत्त्वेन सामर्थ्योपगमेऽपि सहकारिसम्बलनतदभावयोः करणाकरणप्रयोजकताया आवश्यकत्वादन्यथातिप्रसङ्गस्य दुर्वारत्वात् । मिलितेष्वमिलितेष्वपि तादृशजातिमत्त्वेऽमिलितेष्विव मिलितेष्वपि तादृशजातिशून्यत्वे बाधकाभावात् समर्थानामेव मिलनमित्यत्र नियामकाभावाच्चेत्यतस्तादृशं मूलाशयं वर्णयति—**नन्विति । तच्च** तत्सामान्यञ्च, **समर्थस्य क्षेपायोगादिति ।** सहकारिसमवधानतदभावयोः करणाकरणप्रयोजकत्वापेक्षया सामर्थ्यतदभावयोस्तथात्वकल्पने लाघवादिति भावः । **कुर्वद्रूपत्वेनेति ।** तत्सामान्यमित्यनुषज्यते । सहकारिसंवलनतदभावयोः करणाकरणप्रयोजकत्वानुपगमे दर्शितमतिप्रसंगं वारयति **समर्थानां चेति ।** कुर्वद्रूपत्ववतां चेत्यर्थः । **समाजनियमः कल्प्यते** इत्यनेन समुद्भाव्यते । समर्थानां समाजनियमश्च तादृशानां यदेव सहकारिभिर्मिलितानामेव तादृशानामेव मिलनमित्येवंरूपः, अतः क्षित्यादिसमुदायामिलितानां बीजादीनामकारणत्वनियमस्तन्मिलितानां च तेषां कारणनियमो निर्वहति, एतादृशनियमोपपादकमाह—**स्वकारणसामर्थ्याधीन इति ।** तादृशबीजादिसमर्थकारणसत्त्वासत्त्वाधीन इत्यर्थः । तादृशनियमस्य दर्शितस्य तदुत्पादकस्य च कल्पनं प्रमाणाधीनमेवेत्याह—**प्रमाणबलादेवेति ।** प्रथमनियमग्राहकप्रमाणानुग्रहादेव । **एकविरह इति ।** क्षित्यादिविरह इत्यर्थः । **अपरस्मात्**—समर्थत्वोपगताद्बीजादितः, **कार्योत्पादे** क्षित्यादिना कार्योत्पादोपगमे, **तस्य**—क्षित्यादिरूपसहकारिणः, **अकारणत्वप्रसङ्गात्**—व्यभिचारेणेत्यादिः । **अनुत्पादे चेति ।** अपरस्मात्कार्यस्येत्यनुषज्यते सिद्ध इति शेषः । **सामर्थ्यायोगात्**—सामर्थ्योपगमायोगात् । तथा

गात, शिलादिमिलितास्तु बीजविरहिणः क्षित्यादयो न समर्थाः कार्याजनकत्वादित्याशयेनाशङ्कते स्यादेतदिति। परस्परेति। एवकारेणा- तिशये नैरपेक्ष्यलाभः। आशङ्क्यते देश्यते। क्षणिकत्वमिति शेषः। एक- रसत्वमेकस्वभावत्वमेककार्यसामर्थ्यमिति यावत्, जातिभेदः कुर्वद्रूप- त्वम्। एतदङ्गीकारश्चानुगताङ्कुरजातीयनियामकतया कार्यव्यक्तिभेदस्य तथोत्पन्नकारणव्यक्तिभेदादेवोपपत्तेः। जातिश्च नैयायिकानां विधिरूपा

च क्षित्याद्यसमवहितबीजादौ सामर्थ्याभावसिद्धा सामर्थ्यस्य सहकारिसमुदायसंवल- नव्याप्यत्वसिद्धिर्निष्प्रत्यूहेति भावः। बीजविरहिणि शिलाशकलादौ क्षितिपवनादियो- गदर्शनस्योक्तत्वात्तादृशक्षितिपवनादौ सामर्थ्यसत्त्वे उक्तनियमानिर्वाहात्तत्र सामर्थ्यं खण्डयति—शिलादीति। मिलितेषु सामर्थ्याभावे तत्कार्यानुत्पादप्रसङ्गो मिलनसा- मर्थ्याभावे तत्कार्यानुत्पादप्रसङ्गो मिलनसामर्थ्यनियमसाधकः स्फुटत्वान्नाभिहितः। अतिशये नैरपेक्ष्यलाभः कार्यकरणे कुर्वद्रूपत्वरूपजात्यपेक्षाव्यवच्छेदलाभः। आ- शङ्क्यत इत्यस्य निराकृतपूर्वाशङ्कापरत्वासङ्गतेः तद्व्याचष्टे—देश्यत इति। देश- नापदाभिमततत्कर्म किमित्याकाङ्क्षायां पूरयति—क्षणिकत्वमिति। येन समाधा- नानियमादिति मूलमतिशयस्यानपेक्षणे सामर्थ्यस्य सहकारिसमवधानानियतत्वा- दित्यर्थकम्। एकरसत्वमित्यस्य व्याख्या—एकस्वभावत्वमिति। फलितार्थमाह— एककार्यसामर्थ्यमिति। मूले स्यादिति (पृ० २३ पं० ५) इति सामा- न्यस्याकारिसाधारणतया क्षणिकता न सिद्ध्येदिति शेषः। यत्र तत्रेति। (पृ० २३ पं० ६) क्षित्याद्यमिलनस्थलेऽपीत्यर्थः। अङ्गीकृत्येति—शङ्क्यत इत्यनुषज्यते। विकलेभ्यः—सहकारिविकलबीजादिभ्यः, समवहितेषु (राकल्पस्य) सहकारिसम्व- लितेषु, अपिना दैवाधीनं सहकारिसम्वलनं न तु कार्यजन्मलिङ्गापेक्षितमिति सूचि- तम्। अवान्तरजातिभेदमाश्रित्येत्यस्य शालिद्वयवत्त्वादिरूपबीजत्वव्याप्यजाति- परत्वभ्रमनिराकरणाय जातिभेदं व्याचष्टे विवृतौ—कुर्वद्रूपत्वमिति।

ननु मिलितबीजादिव्यक्तीनां तत्तद्व्यक्तित्वेनैवाङ्कुरोत्पादप्रयोजकत्वमास्तां तत्तद- ङ्कुरव्यक्तौ तद्बीजव्यक्तीनां विशिष्य हेतुताया आवश्यकत्वादिति किमर्थमनुगतकुर्वद्रूप- त्वकल्पनमत आह—एतदङ्गीकारश्चेति। अनुगतकुर्वद्रूपत्वाङ्गीकारश्चेत्यर्थः। अनु- गताङ्कुरजातीयनियामकतयेति। अनुगताङ्कुरत्वावच्छिन्नोत्पादनियामकतयेत्य- र्थः। अनुगतकार्यस्यानुगतसामग्रीनियामकताया असति बाधके अवश्यत्वादिति भावः। तत्तद्व्यक्त्युत्पादनियामकजातीयतया कथं न तत्सिद्ध्येदित्याकाङ्क्षायामाह—कार्यव्य- क्तिभेदस्येति। तत्तद्व्यक्त्युत्पादनियमस्येत्यर्थः। तथोत्पन्नेति। सामान्यवि- शिष्टतयोत्पन्नेत्यर्थः। कारणव्यक्तिभेदादेवावश्यकात् कारणव्यक्तिभेदस्य नियामक- त्वादेवेत्यर्थः। तन्मते जातिपदार्थानुपगमात् कथमङ्कुरत्वकुर्वद्रूपत्वजातिभ्यां का-

**व्यावृत्तिरूपा परेषाम् धर्मिणि वर्तमाना जन्यत्वजनकत्वयोरवच्छेदिका अनुगतव्यवहारादिनियामिका चेति ॥**

सम्भाव्यत इतीति। **अङ्गीकृत्याशङ्क्यत** इत्यनुषज्यते। **अङ्कुराकारीणि बीजान्यङ्कुराकरणदशापन्नबीजावृत्तिजातिमन्ति न वा तादृशबीर्यैकारणभाव** इत्यत आह—**जातिश्चेति**। **विधिरूपा** भावरूपा, **व्यावृत्तिरूपे**तरभेदरूपा, **परेषां**—बौद्धानाम्। **धर्मिणीति**। जन्यत्वस्य जनकत्वस्य चेत्यादि। **जन्यत्वजनकत्वयोरिति**। यद्यप्यभावस्य तैः सत्त्वानुपगमात् कार्यकारणभावस्य च सद्धर्मत्वात् सदसतोः सम्बन्धविरहेणात यावृत्तेः कार्यकारणभावावच्छेदकत्वसम्भवः, तस्याः पारमार्थिकत्वोपगमेऽपि तस्या अपि क्षणिकताया आवश्यकत्वात्, अन्यथा क्षणिकत्वसाधकत्वानुपपत्तेर्विभिन्नकालीनबीजादिसाधारण्यसम्भवः, तथाप्यापाततस्तेषामेतदुक्तिरिति भावः। अत एव विकृतिकृतैव एतदनुपपत्त्या तन्मते कार्यकारणभावस्य तत्तद्रूपकावेव विश्रामो वक्ष्यते, मिळनं तस्य कार्यकारणनियामकतया यत्र तत्र समर्थोत्पत्तेश्चाङ्गीकारो नास्माकमित्युक्तेः। तर्हि किमङ्गीकृत्य शङ्क्यत इत्याकाङ्क्षोदयात् (पृ० २३ पं० ८) किन्नामेत्यादि सम्भाव्यत इत्याकाङ्क्षाया निवृत्तये सम्भाव्यत इत्यनन्तरमङ्गीकृत्याशङ्क्यत इत्यस्यानुषङ्गं दर्शयति—**सम्भाव्यत इति**। कुर्वद्रूपजातिसाधकविचाराङ्गं विप्रतिपत्तिमाह—**अङ्कुराकारीणीति**। अङ्कुराकारिबीजे विधिनिषेधसाधने बाधसिद्धसाधनवारणाय एतत् पक्षबीजविशेषणम्। अङ्कुरकारिधरण्यादौ दशाविशेषापन्नबीजावृत्तिजातिसाधने धरणित्वादिजातिमादाय सिद्धसाधनं निषेधसाधने बाध इत्यतो बीजानीति। बीजे अविशेषितबीजावृत्तिजातिसाधने बाध इत्युपपन्नम्। अङ्कुरकारिभेदस्याव्याप्यवृत्तेर्बीजव्यावर्तकताया उपादाने सर्वदैवाङ्कुरकारिणो बीजादेव व्यावृत्ता जातिः सिद्ध्यति, नैतावता नैयायिकैः कालान्तरेऽङ्कुरकारितया स्वीकृतात्कुशूलस्थबीजाद्व्यावृत्ताया जातेः क्षेत्रस्थबीजे सिद्धिरतो न्यायमते कालिकाव्याप्यवृत्तेरकरणात्यन्ताभावस्य निवेशलाभाय दशापन्नेति। तस्य चोपलक्षणतया न निवेशः, अपि तु विशेषणतया इति लाभाय दशापन्नेति, इति तु न सत्, तन्मते सर्वेषां क्षणिकत्वेन धर्मस्य तद्विशेषणध्रौव्याद्गुरुशरीरतद्विशिष्टवृत्तितापर्यन्तस्याव्यावर्तकत्वात्। अत एव न्यायमते अङ्कुरकारिणामपि धरण्यादीनां कदाचिदङ्कुराकरणवत्तयाऽङ्कुराभाववद्वृत्तिजातिरपि साध्याऽतो बीजेति। तादृशाभाववद्वृत्तिधर्मस्य समवायेन साध्यत्वेऽवृत्तिगगनादिकमादाय साध्यप्रसिद्धिसम्भवेऽपि तादृशसाध्यस्य धर्मिण्यग्रहेण सहचारग्रहानिर्वाहात् तत्सिद्ध्यौपयिकग्रहासम्भवात्। अङ्कुरकरणाभाववद्वृत्तिधर्मसिद्ध्या ह्यङ्कुरकारिणस्तत्करणाभाववद्भेदसिद्ध्या क्षणिकत्वसिद्धावपि गुणादिरूपधर्मैरर्थान्तरस्य दुर्वारतया न कुर्वद्रूपत्वजातिरित्यसत्, तत्सिद्धये जातित्वेन जातेः साध्यताया अवश्योपेयत्वात्। कुर्वद्रूपत्वजातेरङ्कुरजनकतावच्छेदकत्वसिद्धये तज्जातिसाध्यकविप्रतिपत्त्यन्तरमाह—**तादृशेति**। अङ्कुराकरणद-

जावृत्यङ्कुरजनकतावच्छेदकजातिमन्ति न वेत्यादिकां कुर्वद्रूपत्वे विप्रतिपत्तिं वदन्ति । बीजवृत्तिजातित्वं प्रत्यक्षत्वव्याप्यं न वेति तु न वाच्यम्, कुशूलस्थबीजसाधारणातीन्द्रियजातिसिद्धावपि कुर्वद्रूपत्वासिद्धेः। बीजत्वेनाङ्कुरसामर्थ्येऽपि सहकारिविरहादेव क्षेप उपपद्यत इत्याशयवान्निराकरोति नेत्यादिना । प्रमाणाभावादिति । परेषां प्रमाणाभावमात्रेणैव प्रमेयाभावावधारणम् । यद्दृश्यति यो यदर्थमित्यादि । पारमार्थिकं बाधकमाह कल्पनेति । तादृशजातितदभावान्यतरवत्त्वस्य तादृशजाति-

शापन्नेत्यर्थः । आदिपदेनाङ्कुरकरणाभाववन्ति बीजानि अङ्कुरजनकतावच्छेदकबीजजातिशून्यानि नवेत्यादिपरिग्रहः । तादृशजातिशून्यत्वस्याङ्कुरधर्मिणि बीजे सिद्धावभावप्रतियोगितया कुर्वद्रूपत्वजातेर्बीजे सिद्धिर्द्रष्टव्या । अन्येषां विप्रतिपत्त्यन्तरं दूषयति—बीजवृत्तीति । निषेधकोटिः परेषाम् । अतीन्द्रियमनस्त्वादौ जातित्वस्य प्रत्यक्षत्वव्यभिचारितया विधौ बाधवारणाय बीजवृत्तीति । प्रत्यक्षत्वं प्रत्यक्षविषयत्वम्, पक्षस्य प्रत्यक्षविषयबीजत्वादिसाधारणतया विधौ सिद्धसाधनवारणाय सामानाधिकरण्यमात्रमुपेक्ष्य व्याप्यत्वनिवेशः । कुशूलस्थेति । उक्तपक्षे यथोक्तसाध्यवत्ताया कुशूलस्थबीजसाधारणातीन्द्रियजात्यनङ्गीकारेणाप्युपपत्त्या तत्साधनेऽपीत्यर्थः । कुर्वद्रूपत्वासिद्धेरिति । अकुर्वद्वृत्तिपराभिमतजात्यसिद्धेरिति भावः । बीजत्वेनाङ्कुरसामर्थ्यं समर्थस्य क्षेपायोगान्निरस्तम् । अकुर्वद्व्यावृत्तजातेरवश्यं सिद्धिरिति तत्र भानावप्रतिरतो नेत्यादिमूलाशयं व्याचष्टे—बीजत्वेनेति । सहकारिविरहादेवेति । समर्थस्य क्षेपकारित्वनियमासिद्ध्या समर्थसत्त्वेऽपि कार्यविलम्बस्य कार्योत्पादप्रयोजकसहकारिसमवधाननियमादेवोपपत्तिरित्यर्थः । निराकरोतीति । कुर्वद्रूपत्वविरहं व्यवस्थापयतीत्यर्थः ।

ननु प्रमाणाभावस्य न गौरवसम्पादकत्वमतः प्रमाणाभावादिति गौरवातिरिक्तबाधकपरम्, तच्च न सङ्गच्छते, प्रमेयसत्त्वे प्रमाणस्यावश्यकतया कुर्वद्रूपत्वसन्देहदशायां प्रमाणाभावस्यापि सन्दिग्धतया तदभावानवधारणे तस्य हेतौ कुर्वद्रूपत्वाभावासाधकत्वादित्यत आह—परेषामिति । प्रमाणाभावमात्रेणैवेति । स्वरूपसता प्रमाणाभावेनेत्यर्थः । यद्दृश्यतीति । यो यदर्थं कल्प्यते तस्यान्यथासिद्धिरेव हि तदभाव ( पृ० २४ पं० १० ) इत्यग्रिममूले, यदन्यथानुपपत्तिर्यत्र प्रमाणत्वेनाभिमता तस्यान्यथोपपत्तिरूपात् प्रमाणाभावात् तदभावसिद्धिरिति वक्ष्यत इत्यर्थः । पारमार्थिकमिति । तेषामभावस्यापारमार्थिकतया भावरूपबाधकमेव पारमार्थिकमिति भावः । बाधकमिति । अभावसाधकप्रमाणसहकारिगौरवमित्यर्थः । तादृशजात्यभावसाधकहेतुतासौलभ्याय केवलान्वयितावच्छेदकरूपेण साध्यतामाह—तादृशजातितदभावान्यतरेति । अङ्कुराकरणदशापन्नबीजवृत्तिजातितदभावान्यतरत्वावच्छिन्नेत्यर्थः । जातितदभावयोर्वृत्तौ सम्बन्धभेदात्तयोरेकरूपेण सा-

**तदभावान्यतरप्रकारकप्रमाविषयत्वस्य वा साधकात् सत्त्वादेः क्लृप्तजातिबाधात् क्लृप्तकल्पनागौरवप्रतिसन्धानसहकृतात् तदभावसिद्धिरिति भावः । संमिश्र्यैव चाग्रे बाधकद्वयविवरणम् । प्रमाणवतो गौरवस्याबाधकत्वात् प्रमाणाभावसहकृतं तद्बाधकत्वेनोपात्तमित्यपरे । अतीन्द्रियेति । न च नेदमनिष्टं परेषामिति वाच्यम् । अपरिदृश्यमानगोलकादिव्यक्ति-**

ध्यताऽन्यतरत्वेन सम्बन्धताभ्युपगमे न सम्भवतीत्यालोच्य स्वरूपसम्बन्धेन वर्तमानो यो यस्तत्तदभावप्रमाविषयद्वयोरन्यतरत्वेन साध्यतामाह—**तादृशजातितदभावान्यतरप्रकारकेति** । एकस्य प्रकारशब्दस्य समवायेन जातिप्रकारताया स्वरूपसम्बन्धेन च तदभावप्रकारताया बोधकत्वासम्भवमालोच्य जातितदभावप्रकारकप्रमेत्यनुक्त्वा तत्तदभावप्रकारकप्रमायाः पृथक्शब्देनोपादानम् । **सत्त्वादेरिति** । हेतोरिति शेषः । **क्लृप्तजातिबाधादिति** । तादृशबीजवृत्तिघटत्वपटत्वादिजात्यभावनिश्चयादित्यर्थः । कुर्वद्रूपत्वसन्देहदशायां तादृशजातिसामान्यबाधासम्भवात् क्लृप्तजातीत्युक्तम् । अन्यतरान्तर्गतैकविशेषतादृशजातिसामान्याभावनिश्चयं विना तदन्तर्गतापरविशेषस्य तादृशजात्यभावस्य विशिष्य निश्चयासम्भवान्मूलोक्तक्लृप्ततादृशजातिकल्पनागौरवज्ञानोपादानम्, तथाच बीजनिष्ठजातौ·······बीजावृत्तित्वस्याक्लृप्तरूपस्य गौरवस्य प्रतिसन्धानसहकृता तादृशबीजावृत्तिक्लृप्तजातिर्वाच्या, क्लृप्ताक्लृप्तसाधारणतादृशजातिसामान्ये बाधनिश्चयः कार्य्यकारीति तदभावरूपापरसिद्धिर्निष्प्रत्यूहेति भावः ।

प्रमाणाभावस्य स्वतन्त्रबाधकत्वेऽप्रमातीन्द्रियेन्द्रियादिविलोपरूपबाधकवत् पृथक् तद्बाधकविवरणमकृत्वापि संमिश्र्य तथाहीत्यादिना गौरवप्रमाणाभावरूपबाधकद्वयविवरणं न विरुद्धमित्याह—**घट** (पृ० २४ पं० ५) इति मूलम्, बीजादेरप्युपलक्षणम् । **जात्यन्तरानाक्रान्त एवानुभूयमान इति** । जात्यन्तराक्रान्ततया अननुभूयमान इत्यर्थः । एतावता (प्रमाणाभावो) विवृतप्रमाणाभावस्य न बाधकतयोपादानमपि तु गौरवस्य बाधकसम्पादकतयेति मतान्तरमाह—**विवृतो प्रमाणवत इति । प्रमाणाभावसहकृतं तदिति** । तद्गौरवं, तथा च संमिश्र्य प्रमाणाभावगौरवयोर्विवरणं साधु सङ्गच्छत इति भावः । मूले—**अतीन्द्रियेति** (पृ० २४ पं० ३) विशेषणं कार्यलिङ्गकेन्द्रियादिसाधकानुमानोच्छेदार्थम् । विलोपहेतुः विवरणग्रन्थे । इदमतीन्द्रियादेः प्रसञ्जितप्रामाणिकत्वम्, **परेषां नानिष्टमिति** । तैः प्रत्यक्षसिद्धगोलकाक्षादीनामेव कुर्वद्रूपत्वेन प्रत्यक्षहेतुतया उपगमसम्भवादिति भावः । **(१) अनुपलभ्यमानेति** प्रत्यक्षप्रमाणागृहीतेत्यर्थकं प्रकृतजातोबाधार्थविवरणं, तथाच गोलकस्येन्द्रियग्रहणायोग्यत्वरूपातीन्द्रियत्वविरहेऽपि न क्षतिरिति भावः। चाक्षुषादिरूपकार्यैकप्रमाणगम्यानामिन्द्रियत्वेन परैरभ्युपगतानामिन्द्रियाधिष्ठानगोलका-

(१) एतन्मतेनात्र अनुपलभ्यमानेति पाठो दीधितौ द्रष्टव्यः ।

विलोपप्रसङ्गादित्यर्थात्। न च विना गोलकं कथं रूपोपलब्धिः यतो गोलकस्य गोलकत्वेन न हेतुत्वम् अपि तु कुर्वद्रूपत्वेन, तथा च कुर्वद्रूपत्वशालिनस्तात्कालिककायादेरेव तदुत्पत्तिसम्भवात् शालिवृत्तेः कुर्वद्रूपत्वस्याशालाविव गोलकवृत्तेस्तस्यागोलकेऽपि सम्भवात्। अथैवं कार्येण कारणानुमानं विलीयेतेति चेत्, किं न विलीयेत भवताम्, तदुक्तं प्रत्यक्षानुपलम्भगोचरो न कार्ये प्रयोजक इति वदतो बौद्धस्य शिरस्येष प्रहार इति। इन्द्रियादात्यतद्गुणसंविज्ञानो बहुव्रीहिरित्यन्ये। विकल्पानुपपत्तेः सङ्ग्राहकत्वप्रतिक्षेपकत्वविकल्पानुपपत्तेः। विशेषस्येति। बीजगतविशेषस्य बीजकार्याङ्कुरस्य विशेषं प्रति प्रयोजकत्वं न तु बीजसामान्येऽङ्कुरसामान्यप्रयोजकतायाः प्रतिक्षेपकत्वं यत इत्यर्थः॥

---

नामप्रसिद्धिप्रसङ्गादिति समुदायार्थः। गोलकमन्तरेणापि तात्कालिकात् कुर्वद्रूपत्ववदबीजादेरेव तत्कार्योपपत्तेरिति मूलाभिप्रेतहेतुशङ्कोत्तराभ्यां स्पष्टयति न चेत्यादिना। रूपोपलब्धिरित्यत्र नचेत्यस्य सम्बन्धः, क्लृप्तविरहहेतुत्व इत्यादि, कुर्वद्रूपत्वस्येति। रूपोपलब्धिकुर्वद्रूपत्वस्येत्यर्थः।

ननु कतिपयगोलकवृत्तिकुर्वद्रूपत्वस्य गोलकभिन्नशरीरादिवृत्तित्वे गोलकवृत्तित्वादिजात्या सङ्करप्रसङ्ग इत्यतः कुर्वद्रूपत्वस्य जात्यन्तरसङ्करो दुर्वार एवेत्याह—अशालाविवेति। अकारिणि बीज एव गोलकवृत्तिकुर्वद्रूपत्वस्यागोलकेऽपि स्वीकारे कार्येण धूमादिना कारणानुमानं वह्न्याद्यनुमानं विलीयेत निर्वह्न्यादिवृत्तिधूमादिकुर्वद्रूपत्वस्यावह्नावपि सम्भवेन वह्न्यादिकं विना धूमाद्युपात्तावपि वह्न्यादौ धूमादिहेतुत्वाभावप्रसङ्गासम्भवेन विपक्षबाधकविरहेण व्यभिचारशङ्काया अनिवृत्तेरिति भावः। किञ्च विलीयेत भवतामिति। कुर्वद्रूपत्वेन हेतुतावादिनां बौद्धानामन्वयव्यतिरेकाग्रहविषयतावच्छेदकवह्नित्वादेर्धूमादिना नानाकारणतावच्छेदकत्वानुपगमेन धूमादिना वह्नित्वावच्छिन्नानुमानं विलीयतैवेति भावः। उक्तं कुसुमाञ्जलौ प्रत्यक्षानुपलम्भगोचर इति। कारणताग्राहकान्वयव्यतिरेकोपलम्भाविषयतावच्छेदक इत्यर्थः। अतीन्द्रियपदार्थस्य यथाश्रुतार्थकत्वानुरोधिनामिन्द्रियादिपदस्य कार्यैकप्रमाणकपरमतसिद्धान्तोपात्तपरत्व(?)वादिनां मतमाह—इन्द्रियेति। विकल्पानुपपत्तेरिति (पृ० २४ पं० ३) मूलम्। ताभ्यामन्वयजातिविशेष(?)। शालित्वसंग्राहकेत्यादिमूलानुसारेण व्याचष्टे—सङ्ग्राहकत्वेति। अङ्कुरकुर्वद्रूपत्वस्य शालित्वेन समं व्याप्यव्यापकभावो वेति पक्षद्वयस्यैवानुपपत्तेरित्यर्थः। विशेषं प्रतीत्यस्य विशेषमेव प्रतीत्यवधारणपरतया बीजगतविशेषस्याङ्कुरसामान्यप्रयोजकत्वव्यवच्छेदत्वाद्बीजसामान्यस्याङ्कुरसामान्यप्रयोजकताव्याघातकत्वं न विशेषस्येति पर्यवसितमित्याशयेन तदर्थं स्पष्टयति—नत्विति।

जात्यन्तरेति । **जातेर्योग्यव्यक्तिवृत्तितयैव योग्यत्वात् तदभावस्य सुग्रहत्वात् । एतदतीन्द्रियत्वकल्पनायाश्चाप्रामाणिकत्वात् । एवकारबललभ्ये जात्यन्तरवत्त्वानुभवाभावे वा तात्पर्यम् । यद्वक्ष्यति अनुपलभ्यमान**जातीति । **केन** वेति । **उपयोगस्यापि प्रमाणत्वात् गोबलीवर्दन्यायेन पृथगुपादानम् ॥**

( पृ० २४ पं० ५ ) **जात्यन्तरानाक्रान्त एवानुभूयमान** इत्यस्य यथाश्रुतस्य जात्यन्तरशून्यतया अनुभूयमान इत्यर्थे तन्मते जातिरूपविशेषस्यापि तैरतीन्द्रियत्वोपगमात्तदभावस्य प्रत्यक्षानुपपत्तेरित्याशङ्कां परिहरति—**जातेरिति** । **योग्यव्यक्तिवृत्तितयैव योग्यत्वादिति** । जातेर्योग्यत्वे योग्यव्यक्तिवृत्तितामात्रस्य प्रयोजकत्वादित्यर्थः । बीजगतविशेषस्य योग्यत्वासम्भवादित्यर्थः । तदभावस्य शून्यादिबीजत्वाव्यापकयोग्यवृत्तिजात्यभावस्य । **सुग्रहत्वादिति** । प्रत्यक्षेण गृहीतुं शक्यत्वादित्यर्थः । न च योग्यवृत्तित्वेऽपि कुर्वद्रूपत्वजातेस्तादात्म्येन प्रत्यक्षविरोधित्वकल्पनया तत्साधारणनिरुक्तरूपावच्छिन्नाभावस्य दुर्ग्रहत्वमुपपादनीयमित्याशङ्क्याह—(१)**एतदिति** ।

( १ ) एतदन्तैव बौद्धाधिकारविवृतिरुपलब्धा विदुषा प्रमोदाय मुद्रयित्वा प्रकाशिता । सं० ।

प्राप्तिस्थानम्—
जयकृष्णदास गुप्त—
**चौखम्बा संस्कृत पुस्तकालय,**
**बनारस सिटी ।**

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| गता | जगता | १ | ७ |
| युत्पपत्ति | व्युत्पत्ति | २ | ७ |
| ानृणां | अनृणां | ३ | ६ |
| ार्थ | पर्याय | १० | १ |
| केकस्वरस्वभाव | विकल्पकारिस्वभाव | १५ | ४ |
| । शक्यते | शक्यते | ,, | ६ |
| वपरिकल्पने | स्वल्परिकल्पने | ,, | ० |
| वरहकार्य | विरहे कार्यं | १६ | १ |
| कथारूप | कथापूर्वरूप | १८ | १ |
| मतोन्द्रियादि | मतीन्द्रियेन्द्रियादि | २५ | ३ |
| विशेष: | विशेष इत्यभिप्राय: | ३२ | १५ |
| गाप्युप | णाप्युप | ३४ | १० |
| थमविवक्षा | प्रथमपक्षविवक्षा | ४४ | ९ |
| य सङ्ख्या | यासङ्ख्या | ,, | १४ |
| ेकभाव | रेकभाव | ४५ | १६ |
| नाथ: | नाथ: पक्ष: | ५६ | १५ |
| पि सर्वदा | र्पि कर्तव्ये सर्वदा | ५७ | १८ |
| किंञ्चिदपेक्ष: | किं निरपेक्ष: | ५८ | २ |
| द्विपर्णस्य | द्विपर्यायस्य | ६० | २३ |
| य: पटा | भेद: पटा | ९८ | १५ |
| शेष: | विशेष: | ,, | ,, |
| सद्भाव | सद्भाव | १०३ | ८ |
| प्रथान | प्रथन | १२१ | १४ |
| प्रतिबन्धे | प्रतिबन्धो | १२७ | १० |
| णेऽयोऽन्य | णेऽन्य | १२९ | २५ |
| तद्बोध: तद्बोध | त्तद्बोधातद्बोध | १३३ | ६ |
| भाव: ननु | भाव:। उपाधीति। धर्मधर्मिणोर्भेद: साधयिष्यत इत्यभिप्राय:। ननु | १३४ | ८ |
| मातिकस्य | मौतिकस्य | १४१ | १४ |
| स: ननु | स: मनुमनु | १४५ | ५ |
| स्वव्यव | स्व तेनैव व्यव | १६७ | १० |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| गोशब्दग्रहस | गोशब्दस | १७४ | ३ |
| तनयो: | तनय: | १८० | २५ |
| क्षेपस्य च | क्षेपस्य च तस्य | १८२ | ३ |
| विपर्यनिर्वि | विषयनिरन्तरानि | १८५ | ६ |
| तथाहीति भक्ष | तथाहीति। अयमर्थ: भक्ष | ,, | १५ |
| वर्धार्य | वधारयेद्धि | १८६ | २० |
| थिनं | थिना | १९१ | १६ |
| स्वादिति | स्वमिति | १९२ | १६ |
| भूताना | मूताना | १९३ | १० |
| पाति। पार | पाति। नौकादीनां पार | १९८ | ११ |
| मिध्यति सदस्फुरणेपीति | सिध्यति। एव ग्राह्यग्राहकय भेदाप्रथने दोषमुक्त्वा भेदमात्राप्रथने दोषमाह तदस्फुरणेपीति। | १९९ | १२ |
| ति प्रकाश | ति यथाप्रकाश | ,, | १४ |
| नियामकाभावेपि | नियामकान्तराभावेपि | २०१ | २ |
| तीन्द्रियतु | तीन्द्रियैहिकतु | २१९ | ७ |
| ग्राहक | ग्रहण | २२४ | ७ |
| कारापेक्षा | कारान्तरापेक्षा | २२५ | ५ |
| बाधेति द्वयो | बाधेति सांवृत: नो चेदेवमिति द्वयो | २२६ | ९ |
| प्रतिधातो | प्रतिपादनो | २३३ | १० |
| स्वाभिमतं | स्वाविनाभूतं | २३६ | ६ |
| लिङ्गमति | लिङ्गगति | ,, | २४ |
| पार्थं प्रति | पार्थंप्रति | २३७ | २६ |
| चत् यदि | चेत् न यदि | २४० | ७ |
| तत्रायस्त | स [illegible] | २४१ | ६ |
| हनिषे | हनहिनिषे | ,, | १८ |

